श्रीबुद्धिचन्द्रगुरुभ्यो नमः

कलिकालसर्वज्ञ श्रीहेमचन्द्राचार्य प्रणीतम्—

# योगशास्त्रम्

( स्वोपज्ञ विवरण सहितम् )




श्रीमद्विजयधर्मसूरीश्वर सुशिष्य पन्यास भक्तिविजय सदुपदेशात्

विविध धनिकदत्तार्थिक—

साहाय्येन मुद्रापितम्–श्रीभावनगरस्थ श्रीजैनधर्मप्रसारकसभा कार्यवाहकेन.

संवत् १९८२ वीर संवत् २४५२ इस्वीसन १९२६

भावनगर–धी आनंद प्रिन्टींग प्रेसमां शाह गुलाबचंद लल्लुभाइए छाप्युं

# । आर्थिकसाहाय्यकनामानि ।

| | | |
|---|---|---|
| १२५) | शा. हरिचंद मीठाभाइ | भावनगर |
| १०१) | शा. लल्लुभाइ पदमशी | वळा |
| १०१) | शा. कल्याणजी माणेकचंद | तळाजा |
| १०१) | शा. माणेकचंद जेचंद | भावनगर |
| १००) | भावसार आणंदजी भाणाभाइ | " |
| ७५) | शा. ताराचंद कस्तुरचंद ह. अमृतलाल खुशालचंद | पंचासर |
| ५१) | शा. मोतीलाल जूठाभाइ | भावनगर |
| ५१) | शा. हरगोविंददास दाह्याभाइ | " |
| ५१) | शा. मूळजीभाइ हंसराज | " |
| ५१) | शा. वीरचंद करशन | कामलोल |
| ५०) | शा. उमेदभाइ भूराभाइ | अमदावाद |
| ५०) | शा. मोहनलाल करमचंद | " |
| ५०) | बेन मोंघी—शा. अमृतलाल पुरुषोत्तमनी पुत्री | भावनगर |
| २५) | बेन रामबेन—आणंदजी पुरुषोत्तमनी पुत्री | " |
| २५) | त्रण श्राविका. ह. बेन हरकोर | " |
| २५) | शा. तलकचंद नारणजीनी विधवा बाइ मोतीबाइ | " |
| २५) | वडवानी श्राविका. ह. भावसार त्रिभोवन प्रागजी | " |
| १२॥ | बाइ सूरज—शा. लल्लुभाइ आणंदजीनी विधवा | " |
| १०) | शा. वस्ताचंद प्रागजी. ह. झवेरी हीराचंद कस्तुरचंद | समी. |
| १०७६॥ | | |

# ॥ प्रस्तावना ॥

---

अवधारयन्तु धारणानिपुणा भव्या' ।

इह किल जन्मजराव्याधिमरणादिदु खबहुले चातुर्गतिकससारे परिभ्रमन्त सर्वे जीवा सुखाभिलाषिण एव । तच सर्वकर्मक्षयेणानन्तचतुष्टयप्राप्तावेव लभ्यतेऽनैकान्तिकमव्याबाध च । तत्प्राप्तिश्च जीवात्मन परमात्मतादशायामेव । तल्लाभे च कारणतया चत्वार एवानुयोगा अनुयुक्तास्तीर्थकरादिभिराप्तै —कथानुयोगो गणितानुयोगो द्रव्यानुयोगश्चरण-करणानुयोगश्चेति । तत्रापि चरणकरणानुयोगोऽनान्तरीयक कारण स्पष्टमेव " ज्ञानदर्शनचारित्राणि मोक्षमार्ग " "ज्ञान-क्रियाभ्या मोक्ष " इत्यादिवचनप्रामाण्यादनुयोगस्यास्य तद्विषयकत्वात्, अन्येषामनुयोगानामेतदर्थत्वाच्च । अत्र चानुयोगे बहूनि शास्त्राण्यागमात्समुध्धृत्य रचितानि रचनाचतुरैराचार्यवर्यै स्वपरोपकारकरणैककर्मठै तत्तद्विषयविशेषपोषकाणि, न हि विना प्रपञ्चप्रपञ्चनेनानादिमिथ्यात्वकुवासनावासितान्त'करणा ऐदयुगीना जीवा अल्पमेधासत्त्वायुष्मन्त' सक्षिप्त-गभीरार्थागमवचनमात्रेण शक्या बोधयितु सुबुद्धेनापीति । तत्रेद शास्त्र चरणकरणानुयोगेऽवतरति योगशास्त्र योगस्य शास्त्रमिति कृत्वा । किंस्वरूपो योगः ? इत्यपेक्षायाम्—

" चतुर्वर्गेऽग्रणीर्मोक्षो, योगस्तस्य च कारणम् । ज्ञानश्रद्धानचारित्ररूप रत्नत्रय च सः ॥ १५ ॥ "

इति प्रथमप्रकाश एव ग्रन्थग्रथितृभी रत्नत्रयस्वरूपो योगो मुख्यतया विवक्षित । " योगश्चित्तवृत्तिनिरोध " इति

(पातञ्जलयोग० पाद १ सूत्र २)। "संयोगं योगमित्याहुर्जीवात्मपरमात्मनोः" इति चान्यैरुक्तं योगलक्षणमप्यविरोधि। तथा—" यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टावङ्गानि " ( पात० पाद २ सू० २९ ) इत्यस्यापि ज्ञानदर्शनचारित्रेषु यथासंभवमन्तर्भावात्केषांचिश्च देहारोग्याद्यर्थत्वादुपयुक्तत्वादत्र शास्त्रे निरूपणं कृतमस्तीति मूलग्रन्थ एव स्फुटीभविष्यति। पुरा किलानेके महर्षयो योगबलेन त्रिकालदर्शिनः जीवादिसूक्ष्मार्थानश्रद्दधानान् साक्षादिव दर्शितवन्तः, स्वं परांश्चाध्यात्मविषयास्वादमग्नान् कुर्वाणाः पुनर्जन्मादिविषये श्रद्धालून् कृतवन्तः, किं बहुना ? स्वयं जन्मोदधिं तरन्तः परांश्च तारयन्तः परोपकारकरणैकबद्धकक्षास्ते स्वं जन्म कृतार्थितवन्तः। अधुना तु तादृग्विचाराभावाद् धनकलत्रपुत्रादिप्राप्तिसाधनगवेषकाः पाश्चिमात्यानार्यजनसंसर्गेण सांसारिकक्षणिकतुच्छबीभत्सविषयलोलुपाः मधुबिन्दु-दृष्टान्तदार्ष्टान्तिककल्पा जडविद्योपासका ज्ञानचक्षुर्विकला बाह्यवस्तुबद्धममताश्च नराभासाः पशुतुल्या निरर्थकमेव जन्म गमयन्तो बहवो दरीदृश्यन्ते इति शोचनीयमेतत्। अतो भव्यप्राणिनां महोपकारायैवैतदादिशास्त्राणि शासितवन्तो हितशासनैकनिपुणाः

शास्त्रस्यास्य प्रणेतारः श्रीहेमचन्द्रसूरिपादाः सुप्रसिद्धाः। ते च धंधुकानगरं स्वजनुषा पावितवन्तः संवत् ११४५ वर्षे कार्तिक्यां पूर्णिमायां स्थिरवासरे चाचश्रेष्ठिनो मोढान्वयस्य पाहिनीनाम्न्या गेहिन्याः कुक्षिभुवः चिन्तामणिस्वप्नसूचिताः चंगदेवनामानः। पञ्चवर्षीयाश्च बाल्यवयस एव संवत् ११५० वर्षे माघसितचतुर्दश्यां स्थिरवासरे श्रीदेवचन्द्रसूरिपादानां श्रीप्रद्युम्नसूरिशिष्याणामन्तिके प्रव्रज्यां गृहीतवन्तो गुरुदत्तसोमचन्द्रनामधारकाः। ततः संवत् ११६६ वर्षे वैशाखशुक्लतृतीयादिने सूरिपदारूढाः श्रीहेमचन्द्रनाम्ना प्रसिद्धिमागताः। अन्ते च संवत् १२२९ वर्षे

स्वारमणीरमणा जाता, तथा हि

" शरवेदेश्वरे ११४५ वर्षे कार्तिके पूर्णिमानिशि । जन्माभवत्प्रभोर्व्योमबाणशम्भौ ११५० व्रत तथा ॥ ८४८ ॥
रसषट्केश्वर ११६६ सूरिप्रतिष्ठा समजायत । नन्दद्वयरवौ वर्षे १२२९ ऽवसानमभवत् प्रभोः ॥ ८४९ ॥ "

इति सर्वं प्रभावकचरितादवसीयते । स्वपरसर्वशास्त्रनदीष्णातैरेभि प्रभुभि अनेकार्थकोषा–नेकार्थशेषा–भिधानाचिन्तामणि–अलङ्कारचूडामणि–उणादिसूत्रवृत्ति–काव्यानुशासन–छन्दोऽनुशासनवृत्ति–सटीकदेशीयनाममाला –सटीकद्व्याश्रयकाव्य–सटीकधातुपाठ–सटीकधातुपारायण–धातुमाला–नाममालाशेष-निघण्टुशेष-सटीकप्रमाणमीमासा–बलाबलसूत्रबृहद्वृत्ति–बालभाषाव्याकरणसूत्रवृत्ति–विभ्रमसूत्र–सटीकलिङ्गानुशासन सटीकशब्दानुशासन- शेषसङ्ग्रह-शेषसङ्ग्रहसारोद्धार–त्रिषष्टिशलाकापुरुषचरित्र–परिशिष्टपर्व–नाभेयनेमिद्विसन्धानमहाकाव्य–अर्हन्नीति–अन्ययोगव्यवच्छेदद्वात्रिंशिका–अयोगव्यवच्छेदद्वात्रिंशिका–वीतरागस्तोत्राद्यनेकग्रन्था काव्यालङ्कारकोषव्याकरणतर्काध्यात्मदर्शनसबन्धिनानाविषया निबद्धा प्रसिद्धा अप्रसिद्धाश्च दृश्यन्ते ।

इद च योगशास्त्रस्यास्य रचने ऐतिह्य–किलैकदा भुञ्जानस्य श्रीकुमारपालनृपतेर्भोज्यवस्तुसादृश्येन धर्मप्राप्ते पूर्वं भुक्तस्य मासस्य स्मरणे खिन्नस्य प्रायश्चित्तपदेऽस्य शास्त्रस्य द्वादश प्रकाशा वीतरागस्तवस्य विंशति प्रकाशाश्च द्वात्रिंशदन्तशुद्धिकृते समर्पिता, ताश्च राजा प्रत्यह गुणयामास । अपि चास्य शास्त्रस्य प्रान्ते " श्रीचौलुक्यकुमारपालनृपतेरत्यर्थमभ्यर्थना–दाचार्येण निवेशिता पथि गिरा श्रीहेमचन्द्रेण सा ॥ " इति स्पष्टाक्षरेण रचनाहेतु प्रकटित प्राप्तसाक्षात्सरस्वतीप्रसादैरेभि ।

सिद्धसूरिमन्त्राः कलिकालसर्वज्ञाबिरुदधारकाश्चेमेऽध्यात्मरसास्वादमग्नास्तथा बभूवुर्यथाऽऽधुनिका विद्वांसोऽपि तद्दर्शितपथं ज्ञातुमप्यसमर्था इत्येतद्ग्रन्थविलोकने स्पष्टं ज्ञायते, ईदृग्विद्योपदेशकगुरुवर्गाभावेन च शोचनीयं विद्वद्भिरित्यपि। तथापि " यथाशक्ति शुभे यतनीयम् " इतिन्यायादस्य शास्त्रस्य पठनपाठनादिविषय आत्महितेप्सुभिरत्यादरः कर्तव्यः, येनास्य संस्कारो जन्मान्तरेऽपि श्रेयःसाधनतामधिगच्छेत्।

शास्त्रकर्त्राऽस्मिन् ग्रन्थे द्वादश प्रकाशाः प्रकाशिताः। तत्राद्ये प्रकाशचतुष्के सविस्तृता टीका स्वेनैव कृताऽस्ति, प्रासङ्गिककथानकान्यपि नातिविस्तृतानि आगमानुसारीणि दर्शितानि यथास्थाने। उपरितनप्रकाराष्टकेऽतीव संक्षिप्ता वृत्तिरपि स्वेनैव रचितास्ति।

**तत्र प्रथमे प्रकाशे**—मङ्गलपूर्वकं स्तुतिगर्भितमहावीरचरितं योगस्य स्वरूपं फलं माहात्म्यं च सदृष्टान्तम्, सम्यग्ज्ञानदर्शनचारित्रस्वरूपं, सर्वविरतीनां मूलोत्तरगुणस्वरूपं, मार्गानुसारिश्रावकस्वरूपं च विस्तरेण कथितम्॥ १॥

**द्वितीये प्रकाशे**—सम्यक्त्वमिथ्यात्वयोः स्वरूपं पञ्चाणुव्रतस्वरूपं च सविस्तरं प्रासङ्गिककथासहितं च दर्शितम्॥ २॥

**तृतीये प्रकाशे**—त्रयाणां गुणव्रतानां चतुर्णां शिक्षाव्रतानां च स्वरूपं, तत्र भोगोपभोगव्रते भक्ष्याभक्ष्यादिस्वरूपं सयुक्तिकं सशास्त्रं च दर्शितम्। तथा द्वादशानां व्रतानामतिचाराः, तत्रापि भोगोपभोगव्रतातिचारप्रसङ्गे पञ्चदशकर्मादानस्वरूपम्, महाश्रावकत्वस्वरूपं, सप्तक्षेत्रस्वरूपं, श्रावकदिनचर्यादिस्वरूपं, ईर्यापथिकी–नमुत्थुणं–अरिहंतचेइयाणंप्रमु-

ससूत्राणामर्थ, गुरुवन्दन-देववन्दन-गुर्वाशातना-कायोत्सर्ग-प्रत्याख्यान-श्राद्धप्रतिमा-समाधिमरणादीना स्वरूपमित्याद्यनेकविषया विवेचिता सविस्तर यथावसर कथासहिता ॥

चतुर्थे प्रकाशे—आत्मनो रत्नत्रयेण सहैक्य, कषाय-इन्द्रिय-तद्विषयस्वरूप, मन शुद्धिस्वरूप, रागद्वेषस्वरूप, तज्जयोपाय, द्वादशभावनास्वरूप, ध्यानस्वरूप, मैत्र्यादिभावनास्वरूप, पर्यङ्काद्यासनस्वरूप फलसहित, कायोत्सर्गस्वरूप चेत्यादि निरूपितम् ॥

पञ्चमे प्रकाशे—प्राणायामस्वरूप, तत्र रेचकादीना फलसहित स्वरूप, ध्यान-धारणा-भौमादिमण्डल-वायुप्रभृतीना स्वरूप, विविधप्रकारै कालज्ञानादिस्वरूप, परकायप्रवेशविद्या चेत्यादि विस्तृतम् ॥

षष्ठे प्रकाशे—परपुरप्रवेशस्यापरमार्थत्व, ध्यानसिद्धौ प्राणायामे चित्तव्याक्षेप, चित्तस्थैर्योपायश्चेत्यादि प्रकाशितम् ॥

सप्तमे प्रकाशे—ध्यानध्येयस्वरूप, आग्नेय्यादिधारणास्वरूप पिण्डस्थध्येयमाहात्म्य चेत्यादि दर्शितम् ॥

अष्टमे प्रकाशे—पदस्थध्येयस्य लक्षणफले, पदमय्या देवतायाः स्वरूप, प्रकारान्तरेण तत्स्वरूप, मन्त्रराजफलमित्यादि ख्यापितम् ॥

नवमे प्रकाशे—रूपस्थध्येयद्वैविध्य, तत्फल चेत्यादि ॥

दशमे प्रकाशे—रूपातीतध्येयस्वरूप, आज्ञाविचयादिधर्मध्यानस्वरूप, आत्मसवेद्यसुखस्वरूप चेत्यादि ॥

एकादशे प्रकाशे—शुक्लध्यान-घातिकर्म-तीर्थंकरातिशयादिस्वरूपम् ॥

द्वादशे प्रकाशे—योगिस्वरूपकथनपूर्वकमेतद्ग्रन्थरचनहेतुरित्यादिप्रदर्शनपुरस्सरं ग्रन्थसमाप्तिः ॥

अधिकजिज्ञासुना सविस्तरानुक्रमणिका विलोक्या ग्रन्थश्चैष एकाग्रचित्तेन हृदि धार्य इति प्रार्थना।

अस्य शास्त्रस्य मुद्रापणे श्रीमद्विजयधर्मसूरीश्वरसुशिष्यपंन्यासश्रीभक्तिविजयसदुपदेशेन **श्रीपाटणनिवासि-शेठ-करमचन्दात्मजनगीनदासस्य** अन्येषां च धनिकानामार्थिकसाहाय्येन संजातमतो विनामूल्येनाल्पमूल्येनापि इदं लभ्यते ग्राहकैः। ततश्च सर्वेषां धनदातॄणां प्रयासकारिणां च प्रयासोऽयं फलेग्रहिः स्यात्।

कृतेऽपि यथाशक्ति प्रयत्ने बुद्धिमान्द्यादिना क्वचिदशुद्धत्वं दृश्येतास्मिन्, तत्कृपालुभिर्विद्वद्भिः शोध्यं वयं च बोध्या येन पुनः समये यत्यते। इति शम्। शुभं भूयात्।

संवत् १९८२ माघ कृष्णचतुर्दशी.

**श्रीजैनधर्मप्रसारक सभा**
**भावनगर.**

# । अनुक्रमणिका ।

द्वितीयः प्रकाशः

## तृतीयः प्रकाशः

## चतुर्थः प्रकाशः

## पञ्चमः प्रकाशः

## अष्टमः प्रकाशः



## नवमः प्रकाशः



## दशमः प्रकाशः



## एकादशः प्रकाशः

द्वादशः प्रकाशः

अर्हम्

श्रीवृद्धिचन्द्रगुरुभ्यो नमः।

कलिकालसर्वज्ञश्रीहेमचन्द्राचार्य्यप्रणीत

# योगशास्त्रम्।

## स्वोपज्ञविवरणसहितम्।

प्रणम्य सिद्धाद्भुतयोगसम्पदे श्रीवीरनाथाय विमुक्तिशालिने। स्वयोगशास्त्रार्थविशेषनिर्णयो भव्यावबोधाय मया विधास्यते ॥१॥

तस्य चायमादिश्लोकः —

**नमो दुर्वाररागादिवैरिवारनिवारिणे। अर्हते योगिनाथाय महावीराय तायिने ॥ १ ॥**

अत्र महावीरायेति विशेष्यपदम्। विशेषेण ईरयति क्षिपति कर्म्माणीति वीरः।

विदारयति यत्कर्म्म तपसा च विराजते। तपोवीर्य्येण युक्तश्च तस्माद्वीर इति स्मृतः ॥ १ ॥

इति लक्षणान्निरुक्ताद्वा वीरः महांश्चासावितरवीरापेक्षया वीरश्च महावीरः इदं च जन्ममहोत्सवसमये तनुशरीरोऽयं कथं जलप्राग्भारं सोढेति शक्रशङ्काशङ्कुसमुद्धरणाय भगवता वामचरणाङ्गुष्ठनिपीडितसुमेरुशिखरप्रकम्पमानमहीतलोल्लसितसरित्पतिक्षोभशङ्कितब्रह्माण्डभाण्डोदरदर्शनप्रयुक्तावधिज्ञानज्ञातप्रभावातिशयविस्मितेन वास्तोष्पतिना नाम निर्ममे महावीरोऽयमिति । तत्पुनरनादिभवप्ररूढप्रौढकर्म्मसमुन्मूलनबलेन यथार्थीकृतं च भगवता। वर्द्धमान इति तु नाम मातरपितराभ्यां कृतम्। श्रमणो देवार्य इति च जनपदेन। तस्मै नम इति सम्बन्धः। शेषाणि विशेषणानि। तैस्तु सद्भूतार्थप्रतिपादनपरैश्चत्वारो भगवदतिशयाः प्रकाश्यन्ते, तत्र पूर्वार्द्धेनापायापगमातिशयः। अपायभूता हि रागादयस्तदपगमेन भगवतः स्वरूपलाभः १। अर्हते इत्यनेन च सकलसुरासुरमनुजजनितपूजाप्रकर्षवाचिना पूजातिशयः २। योगिनाथायेत्यनेन तु ज्ञानातिशयः, योगिनोऽवधिजिनादयस्तेषां नाथो विमलकेवलबलावलोकितलोकालोकस्वभावो भगवानेव ३। तायिने इत्यनेन तु वचनातिशयः ४। तायी सकलसुरासुरमनुजातिरश्चां पालकः। पालकत्वं च सकलभुवनाभयदानसमर्थसमग्रभाषापरिणामिधर्म्मदेशनाद्वारेण भगवत एव। पालकत्वमात्रं तु स्वापत्यादेर्व्याघ्रादीनामपि सम्भवति। तदेवं चतुरतिशयप्रतिपादनद्वारेण भगवतो महावीरस्य पारमार्थिकी स्तुतिरभिहितेति ॥ १ ॥

पुनर्योगगर्भां स्तुतिमाह—

**पन्नगे च सुरेन्द्रे च कौशिके पादसंस्पृशि। निर्विशेषमनस्काय श्रीवीरस्वामिने नमः ॥२॥**

पन्नगस्य कौशिकत्वं पूर्वभवस्थितकौशिकगोत्रत्वेन बुध्यस्व कौशिकेति भगवता तथैव भाषितत्वेन च।

सुरेन्द्रस्य तु कौशिकत्वं कौशिकाभिधानात्। पादस्पर्शश्च पन्नगस्य दशनबुद्ध्या सुरेन्द्रस्य च भक्त्यतिशयेन। निर्विशेषमनस्कत्वं च भगवतो द्वेषरागविशेषरहितत्वेन माध्यस्थ्यात्॥

सम्प्रदायगम्यश्चायमर्थस्तथाहि—

श्रीवीरः प्राणतस्वर्गपुष्पोत्तरविमानतः। पूर्वजन्मार्जितौजस्वितीर्थकृन्नामकर्मकः॥ १॥ ज्ञानत्रयपवित्रात्मा सिद्धार्थनृपवेश्मनि। त्रिशलाकुक्षौ सरस्यां राजहंस इवागमत्॥ २॥ (युग्मं) सिंहो गजो वृषः साभिषेकश्रीः स्रक् शशी रविः। महाध्वजः पूर्णकुम्भः पद्मसरः सरित्पतिः॥ ३॥ विमानं रत्नपुञ्जश्च निर्धूमाग्निरिति क्रमात्। देवी चतुर्दश स्वप्नानपश्यत्तत्र गर्भगे॥ ४॥ त्रैलोक्योद्योतकृद्देवदानवासनकम्पकृत्। अपि नारकजन्तूनां क्षणाद् क्षणसुखासिकम्॥ ५॥ प्रभुः सुखसुखेनैव जन्म प्राप शुभे दिने। तत्कालं दिक्कुमार्यश्च सूतिकर्माणि चक्रिरे (युग्मम्)॥ ६॥ अथ जन्माभिषेकाय कृतोत्सङ्गे जगत्प्रभुम्। मेरुमूर्ध्नि सुधर्मेन्द्रः सिंहासनमशिश्रियत्॥ ७॥ इयन्तं नीरसम्भारं कथं स्वामी सहिष्यते?। इत्याशशङ्के शक्रेण भक्तिकोमलचेतसा॥ ८॥ तदाशङ्कानिरासाय लीलया परमेश्वरः। मेरुशैलं वामपादाङ्गुष्ठाग्रेण न्यपीडयत्॥ ९॥ शिरांसि मेरोरनमन्नमस्कर्तुमिव प्रभुम्। तदन्तिकमिवायातुमचलंश्च कुलाचलाः॥ १०॥ अतुच्छमुच्छलन्ति स्म स्नात्रं कर्तुमिवार्णवाः। विवेपे सत्वरं तत्र नर्त्तनाभिमुखेव भूः॥ ११॥ किमेतदिति सञ्चिन्त्यावधिज्ञानप्रयोगतः। लीलायितं भगवतो विदाञ्चक्रे बिडौजसा॥ १२॥ स्वामिन्ननन्यसामान्यं सामान्यो मादृशो जनः। विदाङ्करोतु माहात्म्यं कथङ्कारं तवेदृशम्॥ १३॥ तन्मिथ्यादुष्कृतं भूयाच्चिन्तितं यन्मयाऽन्यथा। इतीन्द्रेण ब्रुवाणेन प्रणेमे परमेश्वरः॥ १४॥ सानन्दं वादि-

तातोद्यं चक्रे शक्रैर्जगद्गुरोः । तीर्थगन्धोदकैः पुण्यैरभिषेकमहोत्सवः ॥ १५ ॥ अभिषेकजलं तत्तु सुरासुरनरोरगाः । ववन्दिरे मुहुः सर्वाङ्गीणं च परिचिक्षिपुः ॥ १६ ॥ प्रभुस्नातजलालीढा वन्दनीया मृदप्यभूत् । गुरूणां किल संसर्गाद्गौरवं स्याल्लघोरपि ॥ १७ ॥ निवेश्येशानशक्राङ्के सौधर्म्मेन्द्रोऽप्यथ प्रभुम् । स्नपयित्वाऽर्चयित्वारात्रिकं कृत्वेति तुष्टुवे ॥ १८ ॥ नमोऽर्हते भगवते स्वयम्बुद्धाय वेधसे । तीर्थङ्करायादिकृते पुरुषेषूत्तमाय ते ॥ १९ ॥ नमो लोकप्रदीपाय लोकप्रद्योतकारिणे । लोकोत्तमाय लोकाधीशाय लोकहिताय ते ॥ २० ॥ नमस्ते पुरुषवरपुण्डरीकाय शम्भवे । पुरुषसिंहाय पुरुषैकगन्धद्विपाय ते ॥ २१ ॥ चक्षुर्दायाभयदाय बोधिदायाध्वदायिने । धर्म्मदाय धर्म्मदेष्ट्रे नमः शरणदाय ते ॥ २२ ॥ धर्म्मसारथये धर्म्मनेत्रे धर्म्मैकचक्रिणे । व्यावृत्तच्छद्मने सम्यग्ज्ञानदर्शनधारिणे ॥ २३ ॥ जिनाय ते जापकाय तीर्णाय तारकाय च । विमुक्ताय मोचकाय नमो बुद्धाय बोधिने ॥ २४ ॥ सर्व्वज्ञाय नमस्तुभ्यं स्वामिने सर्वदर्शिने । सर्व्वातिशयपात्राय कर्म्माष्टकनिषूदिने ॥ २५ ॥ तुभ्यं क्षेत्राय पात्राय तीर्थाय परमात्मने । स्याद्वादवादिने वीतरागाय मुनये नमः ॥ २६ ॥ पूज्यानामपि पूज्याय महद्भ्योऽपि महीयसे । आचार्याणामाचार्याय ज्येष्ठानां ज्यायसे नमः ॥ २७ ॥ नमो विश्वभुवे तुभ्यं योगिनाथाय योगिने । पावनाय पवित्रायानुत्तरायोत्तराय च ॥ २८ ॥ योगाचार्याय सम्प्रक्षालनाय प्रवराय च । अग्र्याय वाचस्पतये मङ्गल्याय नमोऽस्तु ते ॥ २९ ॥ नमः पुरस्तादुदितायैकवीराय भास्वते । ॐ भूर्भुवःस्वरितिवाक्स्तवनीयाय ते नमः ॥ ३० ॥ नमः सर्व्वजनीनाय सर्व्वार्थायामृताय च । उदितब्रह्मचर्यायाप्ताय पारगताय ते ॥३१॥

(१) अर्चयित्वाथ कृत्वारात्रिकमस्तवीत् ।

ह्यन्यान् पृष्ठमारुह्य वाहयेत् ॥ ४८ ॥ आरुह्यावाहद्वाहानिव वीरः कुमारकान् । आरुरोह सुरस्यापि पृष्ठं प्रष्ठो महौजसाम् ॥ ४९ ॥ ततः करालं वेतालरूपमाधाय दुष्टधीः । भूधरानप्यधरयन् प्रारब्धो वर्धितुं सुरः ॥ ५० ॥ वक्त्रे पातालकल्पेऽस्य जिह्वया तक्षकायितम् । पिङ्गैस्तुङ्गे शिरःशैले केशैर्दावानलायितम् ॥ ५१ ॥ तस्यातिदारुणे दंष्ट्रे अभूतां क्रकचाकृती । जाज्वल्यमाने अङ्गारशकट्याविव लोचने ॥५२॥ घोणारन्ध्रे महाघोरे महीधरगुहे इव । भृकुटीभङ्गुरे भीमे महोरग्याविव भ्रुवौ ॥ ५३ ॥ व्यरंसीद्वर्धनान्नासौ यावत्तावन्महौजसा । आहत्य मुष्टिना पृष्ठे स्वामिना वामनीकृतः ॥ ५४ ॥ एवं च भगवद्धैर्यं साक्षात्कृत्येन्द्रवर्णितम् । प्रभुं नत्वात्मरूपेण निजं धाम जगाम सः ॥ ५५ ॥ मातापितृभ्यामन्येद्युः प्रारब्धेऽध्यापनोत्सवे । आः सर्व्वज्ञस्य शिष्यत्वमितीन्द्रस्तमुपास्थित ॥ ५६ ॥ उपाध्यायासने तस्मिन्वासवेनोपवेशितः । प्रणम्य प्रार्थितः स्वामी शब्दपारायणं जगौ ॥ ५७ ॥ इदं भगवतेन्द्राय प्रोक्तं शब्दानुशासनम् । उपाध्यायेन तच्छ्रुत्वा लोकेष्वैन्द्रमितीरितम् ॥ ५८ ॥ मातापित्रोरनुरोधादष्टाविंशतिवत्सरीम् । कथञ्चिद्गृहवासेऽस्थात्प्रव्रज्योत्कण्ठितः प्रभुः ॥ ५९ ॥ अथ पूर्णायुषोः पित्रोर्देवभूयमुपेयुषोः । ईहाञ्चक्रे परिव्रज्यां निरीहो राज्यसम्पदः ॥ ६० ॥ भगवन्मा च्वते चारं क्षैप्सीरिति सगद्गदम् । भ्रात्रोक्त्वा ज्यायसा नन्दिवर्द्धनेनोपरोधितः ॥ ६१ ॥ भावतो यतिरेवाथ नानाभरणभूषितः । कायोत्सर्गे श्रयंश्चित्रशालिकायामवस्थितः ॥ ६२ ॥ एषणीयप्रासुकान्नपानवृत्तिर्महामनाः । वर्षमेकं कथमपि भगवानत्यवाहयत् ॥ ६३ ॥ तीर्थं प्रवर्त्तयेत्यभ्यर्थितो लोकान्तिकामरैः । यथाकामीनमर्थिभ्यो दानं दातुं प्रचक्रमे ॥ ६४ ॥ द्वैतीयीकेन वर्षेण विनिर्मायानृणां भुवम् । औज्झद्राज्यश्रियं स्वामी मन्यमानस्तृणाय ताम् ॥ ६५ ॥ सर्व्वैर्देवनिकायैश्च कृतनिष्क्रमणोत्सवः ।

सहस्रवाद्यामारुह्य शिबीं चन्द्रप्रभाभिधाम् ॥ ६६ ॥ ज्ञातखण्डवने गत्वा सर्वसावद्यवर्ज्जनात् । प्रव्रज्यामग्रहीद श्चतुर्थप्रहरे प्रभुः ॥ ६७ ॥ जगन्मनोगतान् भावान् प्रकाशयदथ प्रभोः । ज्ञान तुरीय सजज्ञे मन पर्ययसञ्ज्ञकम् ॥ ६८ ॥ ततश्च गत्वा सन्ध्यायां कुम्मारग्रामसन्निधौ । गिरीन्द्र इव निष्कम्पः कायोत्सर्गं व्यधाद्विभु ॥ ६९ ॥ गोपालेनाथ यामिन्यां निष्कारणकृतक्रुधा । उपद्रोतु समारेभे भगवानात्मवैरिणा ॥ ७० ॥ अथेन्द्रेणावधिज्ञाना- ज्ज्ञे प्रभुमुपद्रवन् । स दुःशीलो महाशैलमाखुश्चिखनिषन्निव ॥ ७१ ॥ कल्याणीभक्तिरागाच्च शक्रः प्रभुपदा- न्तिकम् । नष्टो मत्कुणनाश च स गोपहतकः क्वचित् ॥ ७२ ॥ ततः प्रदक्षिणीकृत्य त्रिर्मूर्ध्ना प्रणिपत्य च । इति विज्ञपयाञ्चक्रे प्रभु' प्राचीनबर्हिषा ॥ ७३ ॥ भविष्यति द्वादशाब्दान्युपसर्गपरम्परा । ता निषेधितुमिच्छामि भगवन् पारिपार्श्विक. ॥ ७४ ॥ समाधि पारयित्वेन्द्र भगवानूचिवानिति । नापेक्षाञ्चक्रिरेऽर्हन्त' परसाहाय्यक क्वचित् ॥ ७५ ॥ ततो जगद्गुरुः शीतलेश्य' शीतमयूखवत् । तपस्तेजोदुरालोकोऽधिपतिस्तेजसामिव ॥ ७६ ॥ शौण्डी र्यवान् गज इव सुमेरुरिव निश्चल' । सर्व्वस्पर्शान् सहिष्णुश्च यथैव हि वसुन्धरा ॥ ७७ ॥ अम्भोधिरिव गम्भीरो मृगेन्द्र इव निर्भय' । मिथ्यादृशां दुरालोकः सुहुतो हव्यवाडिव ॥ ७८ ॥ खड्गिशृङ्गमिवैकाकी जातस्थामा महो- क्षवत् । गुप्तेन्द्रियः कूर्म्म इवाहिरिवैकान्तदत्तदृक् ॥ ७९ ॥ निरञ्जन शङ्ख इव जातरूपः सुवर्णवत् । विप्रमुक्तः खग इव जीव इवास्खलद्गतिः ॥ ८० ॥ व्योमेवानाश्रयो भारुण्डपक्षीवाप्रमद्वर । अम्भोजिनीदलमिवोपलेपपरि- वर्जित ॥ ८१ ॥ शत्रौ मित्रे तृणे स्त्रैणे स्वर्णेऽश्मनि मणौ मृदि । इहामुत्र सुखे दु खे भवे मोक्षे समाशय. ॥ ८२ ॥ निष्कारणैककारुण्यपरायणमनस्तया । मज्जद्भवोदधौ मुग्धमुद्दिधीर्पुरिद जगत् ॥ ८३ ॥ प्रभुः प्रभञ्जन

इवाप्रतिबद्धोऽब्धिमेखलाम् । नानाग्रामपुरारण्यां विजहार वसुन्धराम् ॥ ८४ ॥ देशं दक्षिणचावालमवाप्य प्रभुरन्यदा । श्वेतम्बीं नगरीं गच्छन्नित्यूचे गोपदारकैः ॥८५॥ देवार्यायमृजुः पन्थाः श्वेतम्बीमुपतिष्ठते । किन्त्वन्तरेऽस्य कनकखलाख्यस्तापसाश्रमः ॥ ८६ ॥ स हि दृग्विषसर्पेणाधिष्ठितो वर्त्ततेऽधुना । वायुमात्रैकसञ्चारोऽप्रचारः पक्षिणामपि ॥ ८७ ॥ विहाय तदमुं मार्गं वक्रेणाप्यमुना व्रज । सुवर्णेनापि किं तेन कर्णच्छेदो भवेद्यतः ॥ ८८ ॥ तं चाहिं प्रभुरज्ञासीद्यदसौ पूर्वजन्मनि । क्षपकः पारणार्थं निहर्त्तु वसतेरगात् ॥ ८९ ॥ गच्छता तेन मण्डूकी पादपाताद्विराधिता । आलोचनार्थमेतस्य दर्शिता क्षुल्लकेन सा ॥ ९० ॥ सोऽथ प्रत्युत मण्डूकीर्दर्शयन् लोकमारिताः । ऊचे क्षुल्लं मया क्षुद्र किमेता अपि मारिताः ॥ ९१ ॥ तूष्णीकोऽभूत्ततः क्षुल्लोऽमंस्त चैवं विशुद्धधीः । महानुभावो यदसौ सायमालोचयिष्यति ॥ ९२ ॥ आवश्यकेऽप्यनालोच्य यावदेष निषेदिवान् । क्षुल्लकोऽचिन्तयत्तावद्विस्मृतास्य विराधना ॥ ९३ ॥ असारयच्च तां भेकीमालोचयासि किं नहि । क्षपकोऽपि क्रुधोत्थाय क्षुल्लं हन्मीति धावितः ॥ ९४ ॥ कोपान्धश्च ततः स्तम्भे प्रतिफल्य व्यपद्यत । विराधितश्रामण्योऽसौ ज्योतिष्केषूदपद्यत ॥ ९५ ॥ स च्युत्वा कनकखले सहस्रार्द्धतपस्विनाम् । पत्युः कुलपतेः पत्न्याः पुत्रोऽभूत्कौशिकाह्वयः ॥ ९६ ॥ तत्र कौशिकगोत्रत्वादासन्नन्येऽपि कौशिकाः । अत्यन्तकोपनत्वाच्च स ख्यातश्चण्डकौशिकः ॥ ९७ ॥ श्राद्धदेवातिथित्वं च तस्मिन् कुलपतौ गते । असौ कुलपतिस्तत्र तापसानामजायत ॥ ९८ ॥ मूर्च्छया वनखण्डस्य सोऽन्तर्भ्राम्यन्नहर्निशम् । अदात्कस्यापि नादातुं पुष्पं मूलं फलं दलम् ॥ ९९ ॥ विशीर्णमपि योऽगृह्णाद्वने तत्र फलादिकम् । उत्पाट्य परशुं यष्टिं लोष्टं वा तं जघान सः ॥ १०० ॥ फलाद्यलभमानास्तु सीदन्तस्ते तपस्विनः ।

पतिते लगुडे काका इव जग्मुर्दिशोदिशम् ॥ १ ॥ अन्येद्यु कण्टिकाहेतोः कौशिके बहिरीयुषि । अभाङ्क्षुर्भङ्क्षु राजन्या श्वेतम्ब्या एत्य तद्वनम् ॥२॥ अथ व्यावर्त्तमानस्य गोपालस्य न्यवीविदन् । पश्य पश्य वन केश्चिद्भज्यते भज्यते तव ॥ ३ ॥ जाज्वल्यमान क्रोधेन हविषेव हुताशनः । अकुण्ठधारमुद्यम्य कुठार सोऽभ्यधावत ॥ ४ ॥ राजपुत्रास्ततो नेशुः श्येनादिव शकुन्तय' । स्खलित्वा च पपाताथ यमवक्त्र इवावटे ॥ ५ ॥ पतत पतितस्तस्य सम्मुख परशु' शित' । शिरो द्विधा कृत तेन ही विपाक कुकर्म्मणाम् ॥ ६ ॥ स विपद्य वनेऽत्रैव चण्डोऽहिर्दृग्विषोऽभवत् । क्रोधस्तीव्रानुबन्धो हि सह याति भवान्तरे ॥ ७ ॥ अवश्य चैष बोधार्ह इति बुद्धया जगद्गुरुः । आत्मपीडामगणयन्नृजुनैव पथा ययौ ॥ ८ ॥ अभवत्पदसञ्चारसुखमीभूतवालुकम् । उदपानावहत्कुल्य शुष्कजर्जरपादपम् ॥ ९ ॥ जीर्णपर्णचयास्तीर्ण कीर्ण वल्मीकपर्व्वतैः । स्थलीभूतोटज जीर्णारण्यं न्यविशत प्रभुः ॥ १० ॥ तत्र चाथ जगन्नाथो यक्षमण्डपिकान्तरे । तस्थौ प्रतिमया नासाप्रान्तविश्रान्तलोचनः ॥ ११ ॥ ततो दृष्टिविषः सर्प्पः सदर्प्पो भ्रमितु बहि । बिलान्निरसरज्जिह्वा कालरात्रिमुखादिव ॥ १२ ॥ भ्रमन् सोऽनुवन रेणुसङ्क्रामङ्को गलेखया । स्वाज्ञालेखामिव लिखन्नीचाञ्चक्रे जगद्गुरुम् ॥१३॥ अत मा किमविज्ञाय किमवज्ञाय कोऽप्यसौ । आः प्रविष्टो निराशङ्क निष्कम्पः शङ्कुवत् स्थित ॥ १४॥ तदेन भस्मसादद्य करोमीति विचिन्तयन् । आत्मागमान कोपेन फटाटोप चकार सः ॥ १५ ॥ ज्वालामालामुद्वमन्त्या निर्दहन्त्या लताद्रुमान् । भगवन्त दृशापश्यत्स्फारफूत्कारदारुणः ॥ १६ ॥ दृष्टिज्वालास्ततस्तस्य ज्वलन्त्यो भगवत्तनौ । निनिपेतुर्दुरालोका उल्का इव दिवो गिरौ ॥ १७॥ प्रभोर्महाप्रभावस्य प्रभवन्ति स्म नैव ता । महानपि मरुन्मेरु किं कम्पयितुमीश्वर. ॥ १८ ॥ दारुदाह न दग्धोऽ-

सावद्यापीति क्रुधा ज्वलन् । दर्शं दर्शं दिनकर दृग्ज्वालाः सोऽमुचत्पुनः ॥ १६ ॥ सम्पन्नासु प्रभौ वारिधारा-प्रायासु तास्वपि । ददंश दन्दशूकोऽसौ निःशूकः पादपङ्कजे ॥ २० ॥ दष्ट्वा दष्ट्वापचक्राम स्वविषोद्रेकदुर्म्मदः । यत्पतन्मद्विषाक्रान्तो मृद्नीयादेष मामपि ॥ २१ ॥ दशतोऽप्यसकृत्तस्य न विषं प्राभवत्प्रभौ । गोक्षीरधाराधवलं केवलं रक्तमक्षरत् ॥ २२ ॥ ततश्च पुरतः स्थित्वा किमेतदिति चिन्तयन् । वीक्षाञ्चके जगन्नाथं वीक्षापन्नः स पन्नगः ॥ २३ ॥ ततो निरूप्य रूपं तदनुरूपं जगद्गुरोः । कान्तिसौम्यतया मङ्क्षु विध्याते तद्विलोचने ॥ २४ ॥ उपसन्नं च तं ज्ञात्वा बभाषे भगवानिति । चण्डकौशिक बुध्यस्व बुध्यस्व ननु मा मुहः ॥ २५ ॥ श्रुत्वा तद्भगवद्वाक्यमू-हापोहं वितन्वतः । पन्नगस्य समुत्पेदे स्मरणं पूर्व्वजन्मनाम् ॥ २६ ॥ स त्रिः प्रदक्षिणीकृत्य ततश्च परमेश्वरम् । निष्कषायः सुमनसाऽनशनं प्रत्यपद्यत ॥ २७ ॥ कृतानशनकर्म्माणं निष्कर्माणं महोरगम् । प्रशमापन्नमज्ञासीदन्व-ज्ञासीच्च तं प्रभुः ॥ २८ ॥ कुत्राप्यन्यत्र मा यासीद्दृष्टिर्मे विषभीषणा । इति तुण्डं बिले क्षिप्त्वा पपौ स समता-मृतम् ॥ २६ ॥ तस्थौ तथैव तत्रैव स्वामी तदनुकम्पया । परेषामुपकाराय महतां हि प्रवृत्तयः ॥ ३० ॥ भगवन्तं तथा दृष्ट्वा विस्मयस्मेरलोचनाः । गोपाला वत्सपालाश्च तत्रोपससृपुर्द्रुतम् ॥ ३१ ॥ वृक्षान्तरे तिरोभूय यथेष्टं ग्रावलोष्टुभिः । प्रतिजघ्नुरनिघ्नास्ते पन्नगस्य महात्मनः ॥ ३२ ॥ तथाप्यविचलन्तं तं वीक्ष्य विश्रम्भभाजिनः । यष्टिभिर्घट्टयामासुर्निकटीभूय तत्तनुम् ॥ ३३ ॥ आख्यन् जनानां ते गोपास्ततस्तत्रागमन् जनाः । ववन्दिरे महावीरममहंश्च महोरगम् ॥ ३४ ॥ घृतविक्रयकारिण्यो गच्छन्त्यस्तेन वर्त्मना । नागं हैयङ्गवीनेनाभ्रक्षयन् पस्पृ-शुश्च तम् ॥ ३५ ॥ आगत्य घृतगन्धेन तीक्ष्णतुण्डाः पिपीलिकाः । चक्रिरे तितउप्रायमहेस्तस्य कलेवरम् ॥ ३६ ॥

मत्कर्म्मणां कियदेतदित्यात्मानं विनोधयन् । वेदनामधिसेहे तां दुःसहां सोऽहिपुङ्गवः ॥ ३७ ॥ वराक्यो मा स्म पीन्यन्त स्वल्पसारा' पिपीलिका । इत्यचीचलदङ्ग न मनागपि महोरग' ॥ ३८ ॥ सिक्त कृपासुधावृष्ट्या दृष्ट्या भगवतोरग' । पक्षान्ते पञ्चता प्राप्य सहस्रारदिव ययौ ॥ ३९ ॥ विदधति विविधोपसर्गबाधा फणिभृति दृष्टि-विपे दृशौ तु भक्तिम् । इति तुल्यमनस्कता शशंसे चरमजिनस्य जगत्त्रयैकवन्द्यो ॥ १४० ॥ २ ॥

प्रकारान्तरेण पुनर्योगगर्भामेव स्तुतिमाह—

कृतापराधेऽपि जने कृपामन्थरतारयो । ईषद्बाष्पार्द्रयोर्भद्रं श्रीवीरजिननेत्रयो ॥ ३ ॥

विहितविप्रियेऽपि जने सङ्गमकादौ कृपया मन्थरे ईषन्नते तारे कनीनिके ययो ईषद्बाष्पश्चक्षुर्जलं स च करुणाकृत एव तेन आर्द्रे क्लिन्ने भगवतो नेत्रे तयोर्भद्रमिति सामर्थ्यान्नमस्कारप्रतीतिः ।

तथाहि—

अनुग्राममनुपुरं विहरन् निशुरन्यदा । दृढभूमिमनुप्राप बहुम्लेच्छकुलाकुलाम् ॥ १ ॥ पेढालग्रामं निकषा पेढालाराममन्तरा । कृताष्टमतप.कर्म्मा पोलासं चैत्यमाविशत् ॥ २ ॥ जन्तूपरोधरहितमधिष्ठाय शिलातलम् । आजानुलम्बितभुजो दरावनतविग्रहः ॥ ३ ॥ स्थिरीकृतान्तःकरणो निर्निमेषविलोचन । तस्थौ तत्रैकरात्रिक्या महाप्रतिमया प्रभु ॥ ४ ॥ तदा शक्रः सुधर्म्मायां सभायां परिवारित । सहस्रैश्चतुरशीत्या सामानिकादिवौकसाम् ॥ ५ ॥ त्रयस्त्रिंशत्त्रायस्त्रिंशै पर्षद्भिस्तिसृभिस्तथा । चतुर्भिर्लोकपालैश्च सङ्ख्यातीतै प्रकीर्णकै ॥ ६ ॥ प्रत्येकं चतुरशीत्या सहस्रैरङ्गरक्षकैः । दृढाबद्धपरिकरैः ककुप्सु चतसृष्वपि ॥ ७ ॥ सेनाधिपतिभिः सेनापरिवीतैश्च

सप्तभिः । देवदेवीगणैराभियोग्यैः किल्बिषिकादिभिः ॥ ८ ॥ तूर्य्यत्रयादिभिः कालं विनोदैरतिवाहयन् । गोसा दक्षिणलोकार्द्धं शक्रः सिंहासने स्थितः ॥ ९ ॥ अवधिज्ञानतो ज्ञात्वा भगवन्तं तथास्थितम् । उत्थाय पादुके त्यक्त्वोत्तरासङ्गं विधाय च ॥ १० ॥ जान्वसव्यं भुवि न्यस्य सव्यं च न्यञ्च्य किञ्चन । शक्रस्तवेनावन्दिष्ट भूतलन्यस्तमस्तकः ॥ ११ ॥ समुत्थाय च सर्व्वाङ्गोदञ्चद्रोमाञ्चकञ्चुकः । शचीपतिरुवाचेदमुद्दिश्य सकलां सभाम् ॥ १२ ॥ भो भोः सर्वेऽपि सौधर्म्मवासिनस्त्रिदशोत्तमाः । शृणुत श्रीमहावीरस्वामिनो महिमाद्भुतम् ॥ १३ ॥ दधानः पञ्च समितीर्गुप्तित्रयपवित्रितः । क्रोधमानमायालोभानभिभूतो निराश्रवः ॥ १४ ॥ द्रव्ये क्षेत्रे च काले च भावे चाप्रतिबद्धधीः । रुक्षैकपुद्गलन्यस्तनयनो ध्यानमास्थितः ॥ १५ ॥ अमरैरसुरैर्यक्षै रक्षोभिरुरगैर्नरैः । त्रैलोक्येनापि शक्येत ध्यानाच्चालयितुं न हि ॥ १६ ॥ इत्याकर्ण्य वचः शाक्रं शक्रसामानिकः सुरः । ललाटपट्टघटितभ्रूकुटीभङ्गभीषणः ॥ १७ ॥ कम्पमानाधरः कोपाल्लोहितायितलोचनः । अभव्यो गाढमिथ्यात्वसङ्गः सङ्गमकोऽवदत् ॥ १८ ॥ मर्त्यः श्रमणमात्रोऽयं यदेव देव वर्ण्यते । स्वच्छन्दं सदसद्वादे प्रभुत्वं तत्र कारणम् ॥ १९ ॥ देवैरपि न चाल्योऽयं ध्यानादित्युद्भटं प्रभोः । कथं धार्य्येत हृदये धृते वा प्रोच्यते कथम् ॥ २० ॥ रुद्धान्तरिक्षः शिखरैर्मूलै रुद्धरसातलः । यः किलोदस्यते दोष्णा सुमेरुर्लोष्टलीलया ॥ २१ ॥ सकुलाचलमेदिन्याः प्लावनव्यक्तवैभवः । येषामेषोऽपि गण्डूषसुकरो मकराकरः ॥ २२ ॥ अप्येकभुजदण्डेन प्रचण्डां छत्रलीलया । उद्धरन्ति महानेकभूधरां ये वसुन्धराम् ॥ २३ ॥ तेषामसमऋद्धीनां सुराणाममितौजसाम् । इच्छासम्पन्नसिद्धीनां मर्त्यमात्रः कियानयम् ॥ २४ ॥ एषोऽहं चालयिष्यामि तं ध्यानादित्युदीर्य्य सः । करेण भूमिमाह-

त्योदस्थादास्थानमण्डपात् ॥ २५ ॥ अर्हन्तः परसाहाय्यात्तपः कुर्वन्त्यखण्डितम् । मा ज्ञासीदिति दुर्बुद्धेः शक्रश्च स उपेक्षितः ॥ २६ ॥ ततो वेगानिलोत्पातपतापतघनाघनः । रौद्राकृतिदुरालोको भयापसरदप्सराः ॥ २७ ॥ विकटोरःस्थलाघातपुञ्जितग्रहमण्डल । स पापस्तत्र गतवान् यत्रासीत्परमेश्वरः ॥ २८ ॥ निष्कारणजगद्बन्धु निराबाध तथास्थितम् । श्रीवीर पश्यतस्तस्य मत्सरो ववृधेऽधिकम् ॥ २९ ॥ गीर्वाणपासनः पांशुवृष्टिं दुष्टोऽतनिष्ट स । अकाण्डघटितारिष्टापुपरिष्टाज्जगत्प्रभो ॥ ३० ॥ विधुर्विधुन्तुदेनेव दुर्दिनेनेव भास्कर' । पिदधे पांशुपूरेण सर्व्वाङ्गीण जगत्प्रभुः ॥ ३१ ॥ समन्ततोऽपि पूर्णानि तथा श्रोतांसि पांशुभिः । यथा समभवत्स्वामी निश्वासोच्छ्वासवर्जितः ॥ ३२ ॥ तिलमात्रमपि ध्यानान्न चचाल जगद्गुरु' । कुलाचलश्चलति किं गजै परिणतैरपि ॥ ३३ ॥ अपनीय ततः पांशु वज्रतुण्डा पिपीलिका । स समुत्पादयामास प्रभोः सर्व्वाङ्गपीलिकाः ॥ ३४ ॥ प्राविशन्नेकतोऽङ्गेषु स्वैरं निर्ययुरन्यतः । विध्यन्त्यस्तीक्ष्णतुण्डाग्रैः सूच्यो निवसनेष्विव ॥ ३५ ॥ निर्भाग्यस्येव वाञ्छासु मोघीभूतासु तास्वपि । स दशान् रचयामास नाकृत्यान्तो दुरात्मनाम् ॥ ३६ ॥ तेषामेकप्रहारेण रक्तैर्गोक्षीरसोदरैः । क्षरद्भिरभवन्नाथ' सनिर्झर इवाद्रिराट् ॥ ३७ ॥ तैरप्यक्षोभ्यमाणेऽथ जगन्नाथे स दुर्मति' । चक्रे प्रचण्डतुण्डाग्रा दुर्निवारा घृतेलिकाः ॥ ३८ ॥ शरीरे परमेशस्य निमग्नमुखमण्डलाः । ततस्ताः समलक्ष्यन्त रोमाणीव सहोत्थिताः ॥ ३९ ॥ ततोऽप्यनिश्चलचित्ते योगचित्ते जगद्गुरौ । स महावृश्चिकाश्चक्रे ध्यानभञ्जननिश्चयी ॥ ४० ॥ प्रलयाग्निस्फुलिङ्गाभास्तप्ततोमरदारुणैः । तेऽभिन्दन् भगवद्देह लाङ्गूलाङ्कुटकण्टकैः ॥४१॥ तैरप्यनाकुले नाथे कूटसङ्कल्पसङ्कुलः । सोऽनल्पान् कल्पयामास नकुलान्

दशनाकुलान् ॥४२॥ खिखीति रममानास्ते दंष्ट्राभिर्भगवत्तनुम् । खण्डखण्डैस्त्रोटयन्तो मांसखण्डान्यपातयन् ॥४३॥ तैरप्यकृतकृत्योऽसौ यमदोर्दण्डदारुणान् । अत्युत्कटफटाटोपान् कोपात्प्रायुङ्क्त पन्नगान् ॥ ४४ ॥ आशिरःपादमापीड्य महावीरं महोरगाः । अवेष्टयन्महावृत्तं कपिकच्छुलता इव ॥४५॥ प्रजघ्नुस्त तथा तत्र स्फुटन्ति स्म फटा यथा । तथा दशन्ति स्म यथाऽभज्यन्त दशना अपि ॥ ४६ ॥ उद्वान्तगरलेष्वेषु लम्बमानेषु रज्जुवत् । स वज्रदशनानाशु मूषकानुदपीपदत् ॥ ४७ ॥ स्वाम्यङ्गं खनकाश्चख्नुर्नखैर्दन्तैर्मुखैः खरैः । मोमूत्र्यमाणास्तत्रैव क्षते क्षारं निचिक्षिपुः ॥ ४८ ॥ तेष्वप्यकिञ्चिद्भूतेषु भूतीभूत इव क्रुधा । उद्दण्डदन्तमुसलं हस्तिरूपं ससर्ज सः ॥ ४९ ॥ सोऽधावत्पादपातेन मेदिनीं नमयन्निव । उद्धून्युदस्तहस्तेन नभस्तस्त्रोटयन्निव ॥ ५० ॥ कराग्रेण गृहीत्वा च दुर्वारेण स वारणः । दूरमुल्लालयामास भगवन्तं नभस्तले ॥ ५१ ॥ विशीर्य कणशो गच्छत्वसाविति दुराशयः । दन्तावुन्नम्य स व्योम्नः पतन्तं स प्रतीच्छति ॥ ५२ ॥ पतितं दन्तघातेन विध्यति स्म मुहुर्मुहुः । वक्षसो वज्रकठिनात् समुत्तस्थुः स्फुलिङ्गकाः ॥ ५३ ॥ न शशाक वराकोऽसौ कर्त्तुं किञ्चिदपि द्विपः । यावत्तावत्सुरश्चक्रे करिणीं वैरिणीमिव ॥ ५४ ॥ अखण्डशुण्डदन्ताभ्यां भगवन्तं बिभेद सा । स्वैरं शरीरनीरेण विषेणेव सिषेच च ॥ ५५ ॥ करेणौ रेणुसाद्भूते तस्याः सारे सुराधमः । पिशाचरूपमकरोन्मकरोत्कटदंष्ट्रकम् ॥ ५६ ॥ ज्वालाजालाकुलं व्यात्तं व्यायतं वक्त्रकोटरम् । अभवद्वीपणं तस्य वह्निकुण्डमिव ज्वलत् ॥ ५७ ॥ यमौकस्तोरणस्तम्भाविव प्रोत्तम्भितौ भुजौ । अभूच्च तस्य जङ्घोरु तुङ्गं तालद्रुमोपमम् ॥ ५८ ॥ स साट्टहासः फेत्कुर्वन् स्फूर्जत्किलकिलारवः । कृत्तिवासाः कर्त्रिकाभृद्भगवन्तमुपाद्रवत् ॥ ५९ ॥ तस्मिन्नपि हि विध्याते क्षीणतैलप्रदीप-

वत् । व्याघ्ररूप क्रुधाघातः शीघ्र चक्रे स निर्घृण ॥ ६० ॥ अथ पुच्छच्छटाच्छोटैः पाटयन्निव मेदिनीम् । फूत्कारप्रतिशब्दैश्च रोदसी रोदयन्निव ॥ ६१ ॥ दंष्ट्राभिर्वज्रधाराभिर्नखरैः शूलसोदरैः । अव्यग्र व्याधिपार्श्वे स्म व्याघ्रो भुवनभर्त्तरि ॥ ६२ ॥ तत्र विच्छायता प्राप्ते दवदग्ध इव द्रुमे । सिद्धार्थराजत्रिशलादेव्यो रूप व्यधत्त स ॥ ६३ ॥ किमेतद्भवता तात प्रक्रान्तमतिदुष्करम् । प्रव्रज्या मुञ्च मास्माक प्रार्थनामवजीगण ॥ ६४ ॥ वृद्धावशरणावावां त्यक्तवान्नन्दिवर्द्धन. । त्रायस्वेति स्वरैर्दीनदीनैर्व्यलपता च तौ ॥६५॥ ( युग्म ) ततस्तयोर्विला पैरप्यालिप्तमनसि प्रभौ । आवासित दुराचार. स्कन्धावारमकल्पयत् ॥ ६६ ॥ तत्रानासाद्य दृषद सूद' सादर ओदने । चुल्लीपदे प्रभोः पादौ कृत्वा स्थालीमकल्पयत् ॥ ६७ ॥ तत्काल ज्वालितस्तेन जज्वाल ज्वलनोऽधि कम् । पादमूले जगद्भर्त्तुर्गिरेरिव दवानलः ॥ ६८ ॥ तप्तस्यापि प्रभोः स्वर्णस्येव न श्रीरहीयत । ततः सुराधम श्चक्र पक्कण दारुणकणम् ॥ ६९ ॥ पक्कणोऽपि प्रभो' कण्ठे कर्णयोर्भुजदण्डयोः । जङ्घयोश्च क्षुद्रपक्षिपञ्जराणि व्यलम्बयत् ॥ ७० ॥ खगैश्चञ्चुनखाघातैस्तथा दद्रे प्रभोस्तनुः । यथा च्छिद्रशताकीर्णा तत्पञ्जरनिभाभवत् ॥७१॥ तत्राप्यसारता प्राप्ते पक्कणे पक्कपत्रवत् । उत्पादितमहोत्पात खरवातमजीजनत् ॥ ७२ ॥ अन्तरिक्षे महावृक्षास्तृ- णोत्क्षेप समुत्क्षिपन् । विक्षिपन् पांशुविक्षेप दिक्षु च ग्रावशर्करान् ॥ ७३ ॥ सर्वतो रोदसीगर्भे भस्त्रापूर च पूरयन् । उत्पाट्योत्पाट्य वातोऽसौ भगवन्तमपातयत् ॥ ७४ ॥ (युग्म) तेनापि खरवातेनापूर्णकामो जिनिर्ममे । द्युसत्कुलकलङ्कोऽसौ द्राकुल कलिकानिलम् ॥ ७५ ॥ भूभृतोऽपि भ्रमयितुमलङ्कर्मीणविक्रमः । भ्रमयामास चक्रस्थमृत्पिण्डमिव स प्रभुम् ॥ ७६ ॥ भ्रम्यमाणोऽर्णवावर्त्तेनेव तेन नभस्वता । तदेकतानो न ध्यान मनागपि

जहौ प्रभुः ॥ ७७ ॥ वज्रसारमनस्कोऽयं बहुधाऽपि कदर्थितः । न क्षोभ्यते कथमहं भग्नागूर्यामि तां सभाम् ॥ ७८ ॥ तदस्य प्राणनाशेन ध्यानं नश्यति नान्यथा । चिन्तयित्वेति चक्रे स कालचक्रं सुराधमः ॥ ७९ ॥ आदाय तदयोभारसहस्रघटितं ततः । उद्धार सुरः शैलं कैलासमिव रावणः ॥ ८० ॥ पृथिवीं सम्पुटीकर्त्तुं कृतं मन्ये पुटान्तरम् । उत्पत्य कालचक्रं स प्रचिक्षेपोपरि प्रभोः ॥ ८१ ॥ ज्वालाजालैरुच्छलद्भिर्दिशः सर्व्वाः करालयन् । उत्पपात जगद्धर्त्तुं यौर्वानल इवार्णवे ॥८२॥ कुलक्षितिधरक्षोदक्षमस्यास्य प्रभावतः । ममज्जाजानु भगवानन्तर्वसुमतीतलम् ॥ ८३ ॥ एवम्भूतोऽपि भगवानशोचदिदमस्य यत् । तितारयिषवो विश्वं वयं संसारकारणम् ॥ ८४ ॥ कालचक्रहतोऽप्येष प्रपेदे पञ्चतां न यत् । अगोचरस्तदस्त्राणामुपायः क इहापरः ॥ ८५ ॥ अनुकूलैरुपसर्गैः क्षुभ्येद्यदि कथञ्चन । इति बुद्ध्या विमानस्थः स पुरोऽस्थादुवाच च ॥ ८६ ॥ महर्षे तव तुष्टोऽस्मि सत्त्वेन तपसौजसा । प्राणानपेक्षभावेनारब्धनिर्वहणेन च ॥ ८७ ॥ पर्याप्तं तपसानेन शरीरक्लेशकारिणा । ब्रूहि याचस्व मा कार्षीः शङ्कां यच्छामि किं तव ॥८८॥ इच्छामात्रेण पूर्य्यन्ते यत्र नित्यं मनोरथाः । किमनेनैव देहेन त्वां स्वर्गं प्रापयामि तम् ॥ ८९ ॥ अनादिभवसंरूढकर्म्मनिर्मोक्षलक्षणम् । एकान्तपरमानन्दं मोक्षं वा त्वां नयामि किम् ॥ ९० ॥ अशेषमण्डलाधीशमौलिलालितशासनम् । अथवा चैव यच्छामि साम्राज्यं प्राज्यमृद्धिभिः ॥ ९१ ॥ इत्थं प्रलोभनावाक्यैरक्षोभ्यमनसि प्रभौ । अप्राप्तप्रतिवाक्पापः पुनरेवमचिन्तयत् ॥९२॥ मोघीकृतमनेनैतन्मम शक्तिविजृम्भितम् । तदिदानीममोघं स्याद्यद्येकं कामशासनम् ॥ ९३ ॥ यतः कामास्त्रभूताभिः कामिनीभिः कटाक्षिताः । दृष्टा महापुमांसोऽपि लुम्पन्तः पुरुषव्रतम् ॥ ९४ ॥ इति निश्चित्य चित्तेन निर्दिदेश

सुराङ्गनाः। तद्विभ्रमसहायान् पद् प्रायुङ्क्त स ऋतूनपि ॥ ९५ ॥ कृतप्रस्तावना मत्तकोकिलाकलकूजितैः। कन्दर्पनाटकनटी वसन्तश्रीरशोभत ॥ ९६ ॥ मुखवास सज्जयन्ती विकसश्रीपरेणुभिः। सैरन्ध्रीव दिग्वधूनां ग्रीष्मलक्ष्मीरजृम्भत ॥ ९७ ॥ राज्याभिषेके कामस्य मङ्गल्यतिलकानिव । सर्वाङ्ग केतकन्याजात्कुर्वती प्रावृडाबभौ ॥ ९८ ॥ सहस्रनयनीभूय नवनीलोत्पलच्छलात्। स्वसम्पदमिवोद्दामां पश्यन्ती शुशुभे शरत् ॥ ९९ ॥ जयप्रशस्तिं कामस्य श्वेताच्चरसहोदरैः। हेमन्तश्रीर्लिलेखेव प्रत्यग्रैः कुन्दकुड्मलैः ॥ १०० ॥ गणिकेवोपजीवन्ती हेमन्तसुरभीसमम्। कुन्दैश्च सिन्दुवारैश्च शिशिरश्रीरचीयत ॥ १ ॥ एवमुज्जृम्भमाणेषु सर्व्वर्तुषु समन्ततः। मीनध्वजपताकिन्यः प्रादुरासन् सुराङ्गनाः ॥ २ ॥ सङ्गीतमविगीताङ्गय पुरो भगवतस्ततः। ताः प्रचक्रमिरे जैत्र मन्त्राख्यमिव मान्मथम् ॥ ३ ॥ तत्राधिक्षनितलय गान्धारग्रामबन्धुरम्। काभिश्चिदुदगीयन्ते जातय शुद्धवेसराः ॥ ४ ॥ क्रमव्युत्क्रमगैस्तानैर्व्यक्तैर्व्यञ्जनधातुभिः। प्रवीणावादयद्वीणां काचित्सकलनिष्कलाम् ॥ ५ ॥ स्फुटत्तकारधोङ्कारप्रकारैर्मेघनिस्वनान् काश्चिच्च वादयामासुर्मृदङ्गास्त्रिविधानपि ॥ ६ ॥ नभोभूगतचारीक विचित्रकरणोत्कटम्। दृष्टिभावैर्नैरनर्वः काश्चिदप्यनरीनृतु ॥ ७ ॥ दृढाङ्गहाराभिनयैः सद्यस्त्रुटितकञ्चुका। बध्नती श्लथधम्मिल्ल दोर्मूल काप्यदीदृशत् ॥ ८ ॥ दण्डपादाभिनयनच्छलात्कापि मुहुर्मुहु । चारुगोरोचनागौरमूरुमूलमदर्शयत् ॥ ९ ॥ श्लथचण्डातकग्रन्थिदृढीकरणलीलया। कापि प्राकाशयद्वापीसनाभिं नाभिमण्डलम् ॥ १० ॥ व्यपदिश्येभदन्ताख्यहस्तकाभिनय मुहुः। गाढमङ्गपरिष्वङ्गसञ्ज्ञां काचिच्च निर्म्ममे ॥ ११ ॥ सञ्चारयन्त्यन्तरीय

(१) तत्रातिसूत्रितलयम्। (२) सुन्दरम्। (३) स्फुटत्त्वकूपर० प्रत्यन्तरे

नीवीनिविडनच्छलात् । नितम्बबिम्बफलकं काचिदाविरभावयत् ॥१२॥ अङ्गभङ्गापदेशेन वक्षः पीनोन्नतस्तनम्। सुचिरं रोचयामास काचिद् रुचिरलोचना ॥ १३ ॥ यदि त्वं वीतरागोऽसि रागं तन्नस्तनोषि किम्। शरीरनिरपेक्षश्चेद्‌दत्से वक्षोऽपि किं न नः ॥ १४ ॥ दयालुर्यदि वासि त्वं तदानीं विषमायुधात् । अकाण्डाकृष्टकोदण्डादस्मान्न त्रायसे कथम् ॥ १५ ॥ उपेक्षसे कौतुकेन यदि नः प्रेमलालसाः । किञ्चिन्मात्रं हि तद्युक्तं मरणान्तं न युज्यते ॥ १६ ॥ स्वामिन् कठिनतां मुञ्च पूरयास्मन्मनोरथान् । प्रार्थनाविमुखो मा भूः काश्चिदित्यूचिरे चिरम् ॥ १७ ॥ एवं गीतातोद्यनृत्तैर्विकारैराङ्गिकैरपि । चाटुभिश्च सुरस्त्रीणां न चुक्षोभ जगत्प्रभुः ॥ १८ ॥ एवं रात्रौ व्यतीतायां ततो विहरतः प्रभोः । निराहारस्य षण्मासान् सुराधम उपाद्रवत् ॥ १९ ॥ भट्टारक सुखं तिष्ठ स्वैरं भ्रम गतोऽस्म्यहम् । षण्मासान्ते ब्रुवन्नेवं खिन्नः सङ्गमकोऽगमत् ॥ २० ॥ कर्म्मणैवंविधेनायं क वराको व्रजिष्यति। न शक्यते तारयितुमस्माभिरपि तारकैः ॥२१॥ एवं भगवतश्चिन्तां तन्वतस्तत्र गच्छति । दशावभूतां कृपयोद्बाष्पे मन्थरतारके ॥ १२२ ॥ ३ ॥

एवं देवतां नमस्कृत्य मुक्तिमार्गं योगमभिधित्सुस्तच्छास्त्रं प्रस्तौति।

**श्रुताम्भोधेरधिगम्य सम्प्रदायाच्च सद्गुरोः । स्वसम्वेदनतश्चापि योगशास्त्रं विरच्यते ॥ ४ ॥**

इह नानिर्णीतस्य योगस्य पदवाक्यप्रबन्धेन शास्त्रविरचना कर्त्तुमुचितेति योगस्य त्रिहेतुको निर्णयः ख्याप्यते। शास्त्रतो गुरुपारम्पर्य्यात् स्वानुभवाच्च । तं त्रिविधमपि क्रमेणाह। श्रुताम्भोधेः सकाशादधिगम्य निर्णीय

योगमिति शेषः । तथा गुरुपारम्पर्य्यात् तथा स्वसम्वेदनादेव त्रिधा योग निश्चित्य तच्छास्त्र विरच्यते । एतदेव निर्व्वहणे वक्ष्यति ।

या शास्त्रात्स्वगुरोर्मुखादनुभवाच्चाज्ञायि किञ्चित् क्वचित् योगस्योपनिषद्विवेकिपरिषच्चेतश्चमत्कारिणी । श्रीचौलुक्यकुमारपालनृपतेरत्यर्थमभ्यर्थनादाचार्य्येण निवेशिता पथि गिरा श्रीहेमचन्द्रेण सा ॥ १ ॥ ४ ॥

योगस्यैव माहात्म्यमाह—

**योग सर्व्वविपद्वल्लीविताने परशु शित । अमूलमन्त्रतन्त्र च कार्म्मण निर्वृतिश्रिय ॥५॥**

सर्व्वा विपद आध्यात्मिक–आधिभौतिक–आधिदैविकलक्षणाः ताश्चातिविततत्वाद्वल्लीरूपास्तासा वितान समूहस्तत्र तीक्ष्ण परशुर्योग इत्यनर्थपरिहारो योगस्य फलम् । उत्तरार्द्धेनार्थप्राप्तिर्मोक्षलक्ष्म्याः परमपुरुषार्थरूपाया मूलमन्त्रतन्त्रपरिहारेण कार्म्मण सवनन योग । कार्म्मण हि मूलमन्त्रतन्त्रैर्विधीयते । योगस्तु मूलादिरहित एव मोक्षलक्ष्मीवशीकरणहेतुरिति ॥ ५ ॥

कारणोच्छेदमन्तरेण न विपल्लक्षणस्य कार्य्यस्योच्छेद शक्यक्रिय इति विपत्कारणपापनिर्घातहेतुत्व योगस्याह—

**भूयांसोऽपि हि पाप्मानः प्रलय यान्ति योगत । चण्डवाताद्घनघना घनाघनघटा इव ॥६॥**

बहून्यपि पापानि योगात्प्रलयमुपयान्ति प्रचण्डवातोद्धूता अतिघना मेघघटा इव ॥ ६ ॥

स्यादेतदेकजन्मोपार्ज्जित पाप योग क्षिणुयादपि अनेकभवपरम्परोपात्तपापस्य तु निर्मूलन योगादसम्भावनीयमित्याह—

क्षिणोति योगः पापानि चिरकालार्जितान्यपि । प्रचितानि यथैधांसि क्षणादेवाशुशुक्षणिः ॥७॥

यथा चिरकालमीलितान्यपीन्धनानि क्षणमात्रप्रचितोऽप्यकृशः कृशानुर्भस्मसात्करोति । एवं योगः क्षणमात्रेणैव चिरसञ्चितपापसंचयक्षमो भवतीति ॥ ७ ॥

योगस्य फलान्तरमाह—

कफविप्रुण्मलामर्शसर्व्वौषधिमहर्द्धयः । सम्भिन्नश्रोतोलब्धिश्च यौगं ताण्डवडम्बरम् ॥ ८ ॥

महर्द्धिशब्दः प्रत्येकमपि सम्बध्यते । कफः श्लेष्मा विप्रुडुच्चारः पुरीषमिति यावत् । मलः कर्णदन्तनासिकानयनजिह्वोद्भवः शरीरसम्भवश्च । आमर्शो हस्तादिना स्पर्शः सर्व्वे विण्मूत्रकेशनखादय उक्ता अनुक्ताश्च औषधयो योगप्रभावान्महर्द्धयो भवन्ति । अथवा महर्द्धयो विभिन्ना एवाणुत्वादयः तथा श्रोतांसीन्द्रियाणि संभिन्नानि सङ्गतानि एकैकशः सर्व्वविषयैस्तेषां लब्धिर्योगस्येदं यौगं ताण्डवडम्बरं दर्शितम् ।

तथाहि योगमाहात्म्याद्योगिनां कफविन्दवः । सनत्कुमारादेरिव जायन्ते सर्व्वरुक्छिदः ॥ १ ॥ सनत्कुमारो हि पुरा चतुर्थश्चक्रवर्त्यभूत् । षट्खण्डपृथिवीभोक्ता नगरे हस्तिनापुरे ॥ २ ॥ कदाचिच्च सुधर्म्मायां सभायां जातविस्मयः । रूपं तस्याप्रतिरूपं वर्णयामास वासवः ॥ ३ ॥ राज्ञः सनत्कुमारस्य कुरुवंशशिरोमणेः । यद्रूपं न तदन्यत्र देवेषु मनुजेषु वा ॥ ४ ॥ इति प्रशंसां रूपस्याश्रद्दधानावुभौ सुरौ । विजयो वैजयन्तश्च पृथिव्यामव-

( १ ) पि कृशः प्रत्यन्तरे । ( २ ) विलसितम् ।

तेरतु ॥ ५ ॥ ततस्तौ विप्ररूपेण रूपान्वेषणहेतवे । प्रासादद्वारि नृपतेस्तस्थतुर्द्वाःस्थसन्निधौ ॥ ६ ॥ आसीत् सनत्कुमारोऽपि तदा प्रारब्धमज्जनः । मुक्तानि शेषनेपथ्य सर्वाङ्गाभ्यङ्गमुद्वहन् ॥ ७ ॥ द्वारस्थौ द्वारपालेन द्विजाती तौ निवेदितौ । न्यायवर्ती चक्रवर्त्ती तदानीमप्यवीविशत् ॥ ८ ॥ सनत्कुमारमालोक्य विसयस्मेरमानसौ । धूनयामासतुर्मौलिं चिन्तयामासतुश्च तौ ॥ ९ ॥ ललाटपट्टः पर्यस्ताष्टमीरजनिजानिक । नेत्रे कर्णान्तविश्रान्ते जितनीलोत्पलत्विषी ॥ १० ॥ दन्तच्छदौ पराभूतपक्वबिम्बीफलच्छवी । निरस्तशुक्तिकौ कर्णौ कण्ठोऽस्य पाञ्चजन्यजित् ॥ ११ ॥ करिराजकराकारतिरस्कारकरौ भुजौ । स्वर्णशैलशिलालक्ष्मीविलुण्टाकमुरःस्थलम् ॥ १२ ॥ मध्यभागो मृगारातिकिशोरोदरसोदर. । किमन्यदस्य सर्वाङ्गलक्ष्मीर्वाचां न गोचरः ॥ १३ ॥ अहो कोऽप्यस्य लावण्यसरित्पूरो निरर्गल । येनाभ्यङ्ग न जानीमो ज्योत्स्नयोडुप्रभामिव ॥ १४ ॥ यथेन्द्रो वर्णयामास तथैव भाति नान्यथा । मिथ्या न खलु भाषन्ते महात्मानः कदाचन ॥ १५ ॥ किं निमित्तमिहायातौ भवन्तौ द्विजसत्तमौ । इत्थ सनत्कुमारेण पृष्टौ तावेवमूचतुः ॥ १६ ॥ लोकोत्तरचमत्कारकारक सचराचरे । भुवने भवतो रूप नरशार्दूल गीयते ॥ १७ ॥ दूरतोऽपि तदाकर्ण्य तरङ्गितकुतूहलौ । विलोकयितुमायातावावामवनिवासव ॥ १८ ॥ वर्ण्यमान यथा लोके शुश्रुवेऽस्माभिरद्भुतम् । रूप नृप ततोऽप्येतत्सविशेष निरीक्ष्यते ॥ १९ ॥ ऊचे सनत्कुमारोऽपि स्मितविस्फुरिताधरः । इय हि कियती कान्तिरङ्गेऽभ्यङ्गतरङ्गिते ॥ २० ॥ इतो भूत्वा प्रतीक्षेथा क्षणमात्र द्विजोत्तमौ । यावन्निवर्त्यतेऽस्माभिरेष मज्जनकक्षण' ॥ २१ ॥ विचित्ररचिताकल्प भूरिभूषणभूषितम् । रूप पुनर्निरीक्षेथां सरत्नमिव काञ्चनम् ॥ २२ ॥ ततोऽवनिपतिः स्नात्वा कल्पिताकल्पभूषणः । साडम्बरः सदोऽध्यास्तामररत्नमि-

वाग्वरम् ॥ २३ ॥ अनुज्ञातौ ततो विप्रौ पुरोभूय महीपतेः । निदध्यतुश्च तद्रूपं विषण्णौ दध्यतुश्च तौ ॥ २४ ॥ क्व तद्रूपं क्व सा कान्तिः क्व तल्लावण्यमप्यगात् । क्षणेनाप्यस्य मर्त्यानां क्षणिकं सर्वमेव हि ॥ २५ ॥ नृपः प्रोवाच तौ कस्मादुद्दृष्ट्वा मां मुदितौ पुरा । कस्मादकस्मादधुना विषादमलिनाननौ ॥ २६ ॥ ततस्तावूचतुरिदं सुधामधुरया गिरा । महाभाग सुरावावां सौधर्म्मस्वर्गवासिनौ ॥ २७ ॥ मध्ये सुरसभं शक्रश्चक्रे त्वद्रूपवर्णनम् । अश्रद्दधानौ तद्द्रष्टुं मर्त्यमूर्त्यागताविह ॥ २८ ॥ शक्रेण वर्णितं यादृक् तादृशं वपुरीक्षितम्[1] । रूपं नृप तवेदानी-मन्यादृशमजायत ॥ २९ ॥ अधुना व्याधिभिरयं कान्तिसर्व्वस्वतस्करैः । देहः समन्तादाक्रान्तो निःश्वासैरिव दर्पणः ॥ ३० ॥ यथार्थमभिधायेति द्राक्तिरोहितयोस्तयोः । विच्छायं स्वं नृपोऽपश्यद्धिमग्रस्तमिव द्रुमम् ॥ ३१ ॥ अचिन्तयच्च धिगिदं सदा गदपदं वपुः । मुधैव मुग्धाः कुर्व्वन्ति तन्मूर्च्छां तुच्छबुद्धयः ॥ ३२ ॥ शरीरमन्तरुत्प-न्नैर्व्याधिभिर्विविधैरिदम् । दीर्य्यते दारुणैर्दारु दारुकीटगणैरिव ॥ ३३ ॥ बहिः कथञ्चिद्यद्येतत्प्ररोच्येत तथापि हि । नैयग्रोधं फलमिव मध्ये कृमिकुलाकुलम् ॥ ३४ ॥ रुजा लुम्पति कायस्य तत्कालं रूपसम्पदम् । महासरो-वरस्येव वारिसेवालवल्लरी ॥ ३५ ॥ शरीरं श्लथते नाशा रूपं याति न पापधीः । जरा स्फुरति न ज्ञानं धिग् स्वरूपं शरीरिणाम् ॥ ३६ ॥ रूपं लवणिमा कान्तिः शरीरं द्रविणान्यपि । संसारे तरलं सर्वं कुशाग्रजलबिन्दुवत् ॥ ३७ ॥ अवश्यीनविनाशस्य शरीरस्य शरीरिणाम् । सकामनिर्ज्जरासारं तप एव महत्फलम् ॥ ३८ ॥ इति सञ्जातवैराग्यभावनः पृथिवीपतिः । प्रव्रज्यां स्वयमादित्सुः सुतं राज्ये न्यवीविशत् ॥ ३९ ॥ गत्वोद्याने सविनयं

[1] ख. ग. तादृगेव पुरेक्षितम् ।

विनयन्धरसूरितः । सर्वसावद्यविरतिप्रधान सोऽग्रहीत्तपः ॥ ४० ॥ महाव्रतधरस्यास्य दधानस्योत्तरान् गुणान् । ग्रामाद्ग्राम विहरतः समतैकाग्रचेतस ॥ ४१ ॥ गाढानुरागबन्धेन सर्वं प्रकृतिमण्डलम् । पृष्ठतोऽगात्करिकुल महायूथपतेरिव ॥ ४२ ॥ ( युग्म ) निष्कषायमुदासीन निर्ममं निष्परिग्रहम् । त पर्युपास्य षण्मासान् कथञ्चि न्न्यवर्त्तत ॥ ४३ ॥ यथानिष्यात्तभिक्षाभिरकालापथ्यभोजनै । व्याधयोऽस्य ववृधिरे सम्पूर्णैर्दोहदैरिव ॥ ४४ ॥ कच्छ्रशोषज्वरश्वासारुचिकुक्ष्यक्षिवेदना. । सप्ताधिसेहे पुण्यात्मा सप्तवर्षशतानि सः ॥ ४५ ॥ दु सहान् सहमानस्य तस्याशेषपरीषहान् । उपायनिरपेक्षस्य समपद्यन्त लब्धय' ॥ ४६ ॥ अत्रान्तरे सुरपतिः समुद्दिश्य दिवौकस । हृदि जातचमत्कारश्चकारेत्यस्य वर्णनम् ॥ ४७ । चक्रवर्त्तिश्रिय त्यक्त्वा प्रज्वलत्तृणपूलवत् । अहो सनत्कुमारोऽय तप्यते दुस्तप तप ॥ ४८ ॥ तपोमाहात्म्यलब्धासु सर्वास्वपि हि लब्धिषु । शरीरनिरपेक्षोऽय स्वरोगान्न चिकित्सति ॥ ४९ ॥ अश्रद्दधानौ तद्वाक्य वैद्यरूपधरौ सुरौ । विजयो वैजयन्तश्च तत्समीपमुपेयतुः ॥ ५० ॥ ऊचतुश्च महाभाग किं रोगै परिताम्यसि । वैद्यावावां चिकित्सावो विश्व स्वैरेव भेषजैः ॥ ५१ ॥ यदि त्वमनुजानासि रोगग्रस्तशरीरक' । तदह्नाय निगृह्णीवो रोगानुपचितास्तव ॥ ५२ ॥ तत' सनत्कुमारोऽपि प्रत्यूचे भोश्चिकित्सकौ' द्विविधा देहिना रोगा द्रव्यतो भावतोऽपि च ॥ ५३ ॥ क्रोधमानमायालोभा भावरोगा. शरीरिणाम् । जन्मान्तरसहस्रानुगामिनोऽनन्तदु खदाः ॥ ५४ ॥ तांश्चिकित्सितुमीशौ चेद्युवा तर्हि चिकित्सतम् । अथो चिकित्सथो द्रव्य रोगास्तद्धन पश्यतम् ॥ ५५ ॥ ततोऽङ्गुलीं गलत्पामां शीर्णां स्वकफविप्रुषा । लिप्ता शुल्व रसेनेव द्राक् सुवर्णी-

(१) तौ।

चकार सः ॥ ५६ ॥ ततस्तामङ्गुलीं स्वर्णशलाकामिव भास्वतीम् । आलोक्य पादयोस्तस्य पेततुः प्रोचतुश्च तौ ॥ ५७ ॥ निरुरूपयिषू रूपं यौ त्वामायातपूर्व्विणौ । तावेव त्रिदशावावां सम्प्रत्यपि समागतौ ॥ ५८ ॥ सिद्ध-लब्धिरपि व्याधिबाधां सोढा तपस्यति । सनत्कुमारो भगवानितीन्द्रस्त्वामवर्णयत् ॥ ५९ ॥ आवाभ्यां तदिहागत्य प्रत्यक्षेण परीक्षितम् । इत्युदित्वा च नत्वा च त्रिदशौ तौ तिरोहितौ ॥ ६० ॥ एतन्निदर्शनमात्रं कफलब्धेः प्रद-र्शितम् । लब्ध्यन्तरकथा नोक्ता ग्रन्थगौरवभीरुभिः ॥ ६१ ॥ योगिनां योगमाहात्म्यात्पुरीषमपि कल्पते । रोगिणां रोगनाशाय कुमुदामोदशालि च ॥ ६२ ॥ मलः किल समाम्नातो द्विविधः सर्व्वदेहिनाम् । कर्णनेत्रादिजन्मैको द्वितीयस्तु वपुर्भवः ॥ ६३ ॥ योगिनां योगसम्पत्तिमाहात्म्याद्द्विविधोऽपि सः । कस्तूरिकापरिमलो रोगहा सर्व्व-रोगिणाम् ॥ ६४ ॥ योगिनां कायसंस्पर्शः सिञ्चन्निव सुधारसैः । क्षिणोति तत्क्षणं सर्वानामयानामयाविनाम् ॥ ६५ ॥ नखाः केशा रदाश्चान्यदपि योगिशरीरगम् । भजते भेषजीभावमिति सर्व्वौषधिः स्मृता ॥ ६६ ॥ तथाहि तीर्थनाथानां योगभृच्चक्रवर्त्तिनाम् । देहास्थिसकलस्तोमः सर्व्वस्वर्गेषु पूज्यते ॥ ६७ ॥

किञ्च—

मेघमुक्तमपि वारि यदङ्गसङ्गमात्रान्नदीवाप्यादिगतमपि सर्व्वरोगहरं भवति । तथा विषमूर्च्छिता अपि सदी-याङ्गसङ्गिवातस्पर्शादेव निर्विषा भवन्ति । विषसंपृक्तमप्यन्नं यन्मुखप्रविष्टमविषं भवति । महाविषव्याधिबाधिता अपि यद्वचःश्रवणमात्राद्यद्दर्शनाच्च वीतविकारा भवन्ति । एष सर्वोऽपि सर्वौषधिप्रकारः । एते कफादयो महर्द्धि-रूपाः । अथवा महर्द्धयो विभिन्ना एव । वैक्रियलब्धयोऽनेकधा अणुत्व—महत्त्व—लघुत्व—गुरुत्व—प्राप्ति—प्राका-

म्य-ईशित्व-वशित्व-अप्रतिघातित्व-अन्तर्द्धान-कामरूपित्वादिभेदात् ।

अणुत्वमणुशरीरविकरणम् । येन बिसच्छिद्रमपि प्रविशति तत्र च चक्रवर्त्तिभोगानपि भुङ्क्ते । महत्त्व मेरोरपि महत्तरशरीरकरणसामर्थ्यम् । लघुत्व वायोरपि लघुतरशरीरता । गुरुत्व वज्रादपि गुरुतरशरीरतया इन्द्रादिभिरपि प्रकृष्टबलैर्दुःसहता । प्राप्तिर्भूमिस्थस्य अङ्गुल्यग्रेण मेरुपर्व्वताग्रप्रभाकरादिस्पर्शसामर्थ्यम् । प्राकाम्यमप्सु भूमाविव प्रविशतो गमनशक्तिः तथा अप्स्विव भूमावुन्मज्जननिमज्जने । ईशित्व त्रैलोक्यस्य प्रभुता तीर्थकरत्रिदशेश्वरर्द्धिविकरणम् । वशित्व सर्व्वजीववशीकरणलब्धिः । अप्रतिघातित्व अद्रिमध्येऽपि निःसङ्ग-गमनम् । अन्तर्द्धानमदृश्यरूपता । कामरूपित्व युगपदेव नानाकाररूपविकरणशक्तिः । इत्येवमादयो महर्द्धयः । अथवा प्रकृष्टश्रुतावरणवीर्यान्तरायक्षयोपशमाविर्भूतासाधारणमहाप्रज्ञर्द्धिलाभा अनधीतद्वादशाङ्गचतुर्दशपूर्वा अपि सन्तो यमर्थं चतुर्दशपूर्व्वी निरूपयति तस्मिन् विचारकृच्छ्रेऽप्यर्थेऽतिनिपुणप्रज्ञाः प्राज्ञश्रमणाः । अन्येऽधीतदश-पूर्व्वा रोहिणीप्रज्ञप्त्यादिमहाविद्यादिभिरङ्गुष्ठप्रसेनिकाभिरल्पविद्यादिभिश्चोपनतानां भूयसीनामृद्धीनां अवशगा विद्यावेगधारणात् विद्याधरश्रमणाः । केचिद्बीजकोष्ठपदानुसारिबुद्धिविशेषर्द्धियुक्ता । सुकृष्टक्षसुमतीकृते क्षेत्रे क्षित्युदकाद्यनेककारणविशेषापेक्ष बीजमनुपहत यथानेकबीजकोटीप्रद भवति तथैव ज्ञानावरणादिक्षयोपशमाति शयप्रतिलम्भादेकार्थबीजश्रवणे सति अनेकार्थबीजानां प्रतिपत्तारो बीजबुद्धयः । कोष्ठागारिकस्थापितानामसङ्कीर्णानामविनष्टानां भूयसां धान्यबीजाना यथा कोष्ठेऽवस्थान तथा परोपदेशादवधारितानां श्रौतानामर्थग्रन्थबीजानां भूयसामनुस्मरणमन्तरेणाविनष्टानामवस्थानात्कोष्ठबुद्धय । पदानुसारिणोऽनुश्रोतःपदानुसारिण प्रतिश्रोत पदा-

नुसारिण उभयपदानुसारिणश्च । तत्रादिपदस्यार्थं ग्रन्थं च परत उपश्रुत्य आअन्त्यपदादर्थग्रन्थविचारणासमर्थ-
पटुतरमतयोऽनुश्रोतःपदानुसारिबुद्धयः । अन्त्यपदस्यार्थं ग्रन्थं च परत उपश्रुत्य ततः प्रातिकूल्येनादिपदादा-
अर्थग्रन्थविचारपटवः प्रतिश्रोतःपदानुसारिबुद्धयः । मध्यपदस्यार्थं ग्रन्थं च परकीयोपदेशादधिगम्याद्यन्ताव-
धिपरिच्छन्नपदसमूहप्रतिनियतार्थग्रन्थोदधिसमुत्तरणसमर्थासाधारणातिशयपटुविज्ञाननियता उभयपदानुसारिबु-
द्धयः । बीजबुद्धिरेकपदार्थावगमादनेकार्थानामवगन्ता पदानुसारी त्वेकपदावगमात्पदान्तराणामवगन्तेति विशेषः ।
तथा मनोवाक्कायबलिनः । तत्र प्रकृष्टज्ञानावरणवीर्यान्तरायक्षयोपशमविशेषेण वस्तूद्धृत्यान्तर्मुहूर्त्तेन सकलश्रुतोद-
ध्यवगाहनावदातमनसो मनोबलिनः । अन्तर्मुहूर्त्तेन सकलश्रुतवस्तूच्चारणसमर्था वाग्बलिनः । अथवा पदवाक्या-
लङ्कारोपेतां वाचमुच्चैरुच्चारयन्तो ऽविरहितवाक्क्रमाहीनकण्ठा वाग्बलिनः । वीर्यान्तरायक्षयोपशमाविर्भूतासाधा-
रणकायबलत्वात्प्रतिमयावतिष्ठमानाः श्रमक्लमविरहिता वर्षमात्रप्रतिमाधरा बाहुबलिप्रभृतयः कायबलिनः । तथा
क्षीरमधुसर्पिरमृतास्रविणो येषां पात्रपतितं कदन्नमपि क्षीरमधुसर्पिरमृतरसवीर्यविपाकं जायते वचनं वा शरीर-
मानसदुःखप्राप्तानां देहिनां क्षीरादिवत्सन्तर्पकं भवति ते क्षीरास्रविणो मध्वास्रविणः सर्पिरास्रविणोऽमृतास्रविणश्च।
केचिदक्षीणर्द्धियुक्तास्ते च द्विविधा अक्षीणमहानसा अक्षीणमहालयाश्च । येषामसाधारणान्तरायक्षयोपशमादल्प-
मात्रमपि पात्रपतितमन्नं गौतमादीनामिव बहुभ्यो दीयमानमपि न क्षीयते तेऽक्षीणमहानसाः । अक्षीणमहालय-
र्द्धिप्राप्ताश्च यत्र परिमितभूप्रदेशेऽवतिष्ठन्ते तत्रासंख्याता अपि देवास्तिर्यञ्चो मनुष्याश्च सपरिवाराः परस्परबाधार-
हितास्तीर्थकरपर्षदीव सुखमासते । इति प्रज्ञाश्रमणादिषु महाप्रज्ञादयो महर्द्धयो दर्शिताः ।

सर्वेन्द्रियाणां विषयान् गृह्णात्येकमपीन्द्रियम् । यत्प्रभावेन सम्भिन्नश्रोतोलब्धिस्तु सा मता ॥ १ ॥८॥

तथा—

चारणाशीविषावधिमनःपर्यायसम्पदः । योगकल्पद्रुमस्यैता विकासिकुसुमश्रियः ॥ ९ ॥

अतिशयचरणाच्चारणा अतिशयगमनादित्यर्थः । तत्सम्पन्नलब्धिरित्यर्थः । आशीविषलब्धिर्निग्रहानुग्रहसामर्थ्यम् । अवधिज्ञानलब्धिर्मूर्त्तद्रव्यविषयं ज्ञानम् । मनःपर्य्यायज्ञानलब्धिर्मनोद्रव्यप्रत्यक्षीकरणशक्तिः । एता लब्धयो योगकल्पद्रुमस्य कुसुमभूताः । फलं तु केवलज्ञानं मोक्षो वा । भरतमरुदेव्युदाहरणाभ्यां वक्ष्यते ।

तथाहि—

द्विविधाश्चारणा ज्ञेया जङ्घाविद्योत्थशक्तितः । तत्राद्या रुचकद्वीपं यान्त्येकोत्पातलीलया ॥ १ ॥ वलन्तो रुचकद्वीपादेकेनोत्पतनेन ते । नन्दीश्वरे समायान्ति द्वितीयेन यतो गताः ॥ २ ॥ ते चोर्ध्वगत्यामेकेन समुत्पतनकर्म्मणा । गच्छन्ति पाण्डुकवनं मेरुशैलशिरःस्थितम् ॥ ३ ॥ ततोऽपि वलिता एकोत्पातेनायान्ति नन्दनम् । उत्पातेन द्वितीयेन प्रथमोत्पातभूमिकाम् ॥४॥ विद्याचारणास्तु गच्छन्त्येकेनोत्पातकर्म्मणा । मानुषोत्तरमन्येन द्वीपं नन्दीश्वराह्वयम् ॥५॥ तस्मादायान्ति चैकेनोत्पातेनोत्पतिता यतः। यान्त्यायान्त्यूर्द्धमार्गेऽपि तिर्य्यग्यानक्रमेण ते ॥६॥

अन्येऽपि बहुभेदाश्चारणा भवन्ति । तद्यथा आकाशगामिनः पर्य्यङ्कावस्थानिषण्णाः कायोत्सर्गशरीरा वा पादोत्क्षेपनिक्षेपक्रमाद्विना व्योमचारिणः । केचित्तु जलजङ्घाफलपुष्पपत्रश्रेण्यग्निशिखाधूमनीहारावश्यायमेघवारिधारामर्कटकतन्तुज्योतीरश्मिपवनाद्यालम्बनगतिपरिणामकुशलाः । जलमुपेत्य वापीनिम्नगासमुद्रादिष्वप्कायिक-

दिक्कुमार्य्यः सूतिकर्म्म प्रचक्रिरे ॥ ९ ॥ मेरुमूर्ध्नि विभुं नीत्वा कृत्वोत्सङ्गे दिवस्पतिः । तीर्थोदकैरभ्यषिञ्चत्स्वं च हर्षाश्रुवारिभिः ॥१०॥ वासवेन ततो मातुरर्पितस्य जगद्गुरोः । धात्रीकर्म्माणि सर्व्वाणि विदधुर्विबुधस्त्रियः ॥ ११ ॥ निरीक्ष्य ऋषभाकारं लक्ष्मोरौ दक्षिणे प्रभोः । चक्रतुः पितरौ नाम ऋषभेति प्रमोदतः ॥ १२ ॥ अमन्दं ददानन्दं सुधारश्मिरिव प्रभुः । त्रिदशाहारयोगेन पोषितो ववृधे क्रमात् ॥ १३ ॥ अन्येद्युर्द्युसदामीश उपासितुमुपागतः । अचिन्तयद्भगवतो वंशः क इह कल्प्यताम् ॥ १४ ॥ अवगत्य तदाकूतमवधिज्ञानतो विभुः । तत्करेक्षुलतां लातुं करीव करमक्षिपत् ॥ १५ ॥ तां समर्प्य जगद्भर्तुः प्रणम्य च बिडौजसा । इक्ष्वाकुरिति वंशस्य तदा नाम प्रतिष्ठितम् ॥ १६ ॥ बाल्यं कल्यमिवोल्लङ्घ्य मध्यन्दिनमिवार्य्यमा । विभुर्विभक्तावयवं द्वितीयं शिश्रिये वयः ॥ १७ ॥ यौवनेऽपि मृदू रक्तौ कमलोदरसोदरौ । उष्णावकम्प्रावस्वेदौ पादौ समतलौ प्रभोः ॥ १८ ॥ नतार्त्तिच्छेदनायेव प्रपेदे चक्रमीशितुः । सदास्थितश्रीकरेणोरिव दामाङ्कुशध्वजाः ॥ १९ ॥ स्वामिनः पादयोर्लक्ष्मीलीलासदनयोरिव । शङ्खकुम्भौ तले पार्ष्णौ स्वस्तिकश्च विरेजिरे ॥ २० ॥ मांसलो वर्त्तुलस्तुङ्गो भुजङ्गमफणोपमः । अङ्गुष्ठः स्वामिनो वत्स इव श्रीवत्सलाञ्छितः ॥ २१ ॥ प्रभोर्निर्वातनिष्कम्पाः स्निग्धदीपशिखोपमाः । नीरन्ध्रा ऋजवोऽङ्गुल्यो दलानीव पदाब्जयोः ॥ २२ ॥ नन्दावर्त्ता जगद्भर्त्तुः पादाङ्गुलितलेष्वभान् । यद्बिम्बानि क्षितौ धर्म्मप्रतिष्ठाहेतुतां ययुः ॥ २३ ॥ यवाः पर्वस्वङ्गुलीनामधोवापीभिराबभुः । उप्ता इव जगल्लक्ष्मीविवाहाय जगत्प्रभोः ॥ २४ ॥ कन्दः पादाम्बुजस्येव पार्ष्णिर्वृत्तायतः पृथुः । अङ्गुष्ठाङ्गुलिफणिनां फणामणिनिभा नखाः ॥ २५ ॥ हेमारविन्दमुकुलकर्णिकागोलकश्रियम् । गूढौ गुल्फौ वितेनाते नितान्तं स्वामिपादयोः ॥ २६ ॥ प्रभोः

पादावुपर्यानुपूर्व्या कूर्म्मवदुन्नतौ । अभ्रकाशसिरौ स्निग्धच्छवी लोमविवर्जितौ ॥ २७॥ अन्तर्मग्नास्थिपिशितपुष्कले क्रमवर्त्तुले । एणीजङ्घाविडम्बिन्यौ जङ्घे गौर्यौ जगत्पतेः ॥ २८ ॥ जानुनी स्वामिनोऽधातां वर्त्तुले मांसपूरिते । तूलपूर्णपिधानान्तःक्षिप्तदर्पणरूपताम् ॥ २९ ॥ ऊरू च मृदुलौ स्निग्धावानुपूर्व्येण पीवरौ । बिभराञ्चक्रतुः प्रौढ-कदलीस्तम्भविभ्रमम् ॥ ३० ॥ स्वामिनः कुञ्जरस्येव मुष्कौ गूढौ समस्थितौ । अतिगूढं च पुंश्चिह्नं कुलीनस्येव वाजिनः ॥ ३१ ॥ तत्रासिरमनिम्नोच्चमह्रस्वादीर्घमश्लथम् । सरलं मृदु निर्लोम वर्त्तुलं सुरभीन्द्रियम् ॥ ३२ ॥ शीतप्रदक्षिणावर्त्तशब्दयुक्तैकधारकम् । अबीभत्सावर्त्ताकारकोशस्थं पिञ्जरं तथा ॥ ३३ ॥ आयता मांसला स्थूला विशाला कठिना कटिः । मध्यभागस्तनुत्वेन कुलिशोदरसोदरः ॥ ३४ ॥ नाभिर्बभार गम्भीरा सरिदावर्त्तविभ्रमम् । कुक्षी स्निग्धौ मांसवन्तौ कोमलौ सरलौ समौ ॥३५॥ अधाद्वक्षःस्थलं स्वर्णशिलापृथुलमुन्नतम् । श्रीवत्सरत्नपीठाङ्कं श्रीलीलावेदिकाश्रियम् ॥ ३६ ॥ दृढपीनोन्नतौ स्कन्धौ ककुद्मत्ककुदोपमौ । अल्परोमोन्नते कक्षे गन्धस्वेदमलो-ज्झिते ॥ ३७ ॥ पीनौ पाणिफणिच्छत्रौ भुजावाजानुलम्बितौ । चञ्चलाया नियमने नागपाशाविव श्रियः ॥३८॥ नवाम्रपल्लवाताम्रतलौ निष्कर्मकर्कशौ । अस्वेदनावपच्छिद्रावुष्णौ पाणी जगत्पतेः ॥ ३९ ॥ दण्डचक्रधनु-र्मत्स्यश्रीवत्सकुलिशाङ्कुशैः । ध्वजाब्जचामरच्छत्रशङ्खकुम्भाब्धिमन्दरैः ॥ ४० ॥ मकरर्षभसिंहाश्वरथस्वस्तिकदि-ग्गजैः । प्रासादतोरणद्वीपैः पाणी पादाविवाङ्कितौ ॥४१॥ अङ्गुष्ठाङ्गुलयः शोणाः सरलाः शोणपाणिजाः । प्ररोहा इव कल्पद्रोः प्रान्तमाणिक्यपुष्पिताः ॥ ४२ ॥ यवाः स्पष्टमशोभन्त स्वामिनोऽङ्गुष्ठपर्व्वसु । यशो-वरतुरङ्गस्य पुष्टिवैशिष्ट्यहेतवः ॥ ४३ ॥ अङ्गुलीमूर्द्धसु विभोः सर्वसम्पत्तिशंसिनः । दधुः प्रदक्षिणावर्त्ता

दक्षिणावर्त्तशङ्खताम् ॥ ४४ ॥ कृच्छ्रादुद्धरणीयानि जगन्ति त्रीण्यपीत्यभान्। संख्यालेखा इव तिस्रो लेखा मूले कराब्जयोः ॥४५॥ वर्त्तुलोऽनतिदीर्घश्च लेखात्रयपवित्रितः। गम्भीरध्वनिराधत्ते कण्ठः कम्बुविडम्बनाम् ॥ ४६ ॥ विमलं वर्त्तुलं कान्तितरङ्गि वदनं विभोः। पीयूषदीधितिरिवापरो लाञ्छनवर्जितः ॥ ४७ ॥ मसृणौ मांसलौ स्निग्धौ कपोलफलकौ प्रभोः। दर्प्पणाविव सौवर्णौ वाग्लक्ष्म्योः सहवासयोः ॥ ४८ ॥ अन्तरावर्त्तसुभगौ कर्णौ स्कन्धान्तलम्बितौ। प्रभोर्मुखप्रभासिन्धुतीरस्थे शुक्तिके इव ॥ ४९ ॥ ओष्ठौ बिम्बोपमौ दन्ता द्वात्रिंशत्कुन्दसोदराः। क्रमस्फारा क्रमोत्तुङ्गवंशा नासा महेशितुः ॥ ५० ॥ अह्रस्वदीर्घं चिबुकं मांसलं वर्त्तुलं मृदु। मेचकं बहुलं स्निग्धं कोमलं श्मश्रु तायिनः ॥ ५१ ॥ प्रत्यग्रकल्पविटपिप्रवालारुणकोमला। प्रभोर्जिह्वानतिस्थूला द्वादशाङ्गागमार्थसूः ॥५२॥ अन्तरा कृष्णधवले प्रान्तरक्ते विलोचने। नीलस्फटिकशोणाश्ममणिन्यासमये इव ॥५३॥ ते च कर्णान्तविश्रान्ते कज्जलश्यामपक्ष्मणी। विकस्वरे तामरसे निलीनालिकुले इव ॥ ५४ ॥ बिभराञ्चक्रतुर्भर्त्तुः श्यामले कुटिले भ्रुवौ। दृष्टिपुष्करिणीतीरसमुद्भिन्नलताश्रियम् ॥ ५५ ॥ विशालं मांसलं वृत्तं मसृणं कठिनं समम्। भालस्थलं जगद्भर्त्तुरष्टमीसोमसोदरम् ॥ ५६ ॥ भुवनस्वामिनो मौलिरानुपूर्व्या समुन्नतः। दधावधोमुखीभूतच्छत्रसब्रह्मचारिताम् ॥ ५७ ॥ मौलिच्छत्रे महेशस्य जगदीशत्वशंसिनि। वृत्तमुत्तुङ्गमुष्णीषं शिश्रिये कलशश्रियम् ॥ ५८ ॥ केशाश्चकाशिरे मूर्ध्नि प्रभोर्भ्रमरमेचकाः। कुञ्चिताः कोमलाः स्निग्धाः कालिन्द्या इव वीचयः ॥ ५९ ॥ गोरोचनागर्भगौरी स्निग्धस्वच्छा त्वगाबभौ। स्वर्णद्रवविलिप्तेव तनौ त्रिजगदीशितुः ॥ ६० ॥ मृदूनि भ्रमरश्यामान्यद्वितीयोद्गमानि च। बिसतन्तुतनीयांसि लोमानि स्वामिनस्तनौ ॥ ६१ ॥ उत्फुल्लकुमुदामोदः

श्वासो विस्रेतरत्पलम् । गोक्षीरधाराधवलं रुधिरं च जगत्पते' ॥ ६२ ॥ इत्यसाधारणैर्नानालक्षणैर्लक्षितः प्रभुः । रत्नै रत्नाकर इव सेव्य' कस्येह नाभवत् ॥ ६३ ॥ अन्येद्युः क्रीडया क्रीडद्बालभावानुरूपया । मिथो मिथुनकं किञ्चित्तले तालतरोरगात् ॥ ६४ ॥ तदैव दैवदुर्योगात्तन्मध्यान्नरमूर्द्धनि । तडिद्दण्ड इवैरण्डेऽपतत्तालफलं महत् ॥ ६५ ॥ प्रहतः काकतालीयन्यायेनाश्वेव मर्म्मणि । विपन्नो दारकस्तत्र प्रथमेनापमृत्युना ॥ ६६ ॥ कालधर्म्मं गते तस्मिंस्तद्द्वितीया नितम्बिनी । यूथभ्रष्टा कुरङ्गीव किंकर्त्तव्यजडाभवत् ॥ ६७ ॥ अकाण्डमुद्गराघातेनेव तेनापमृत्युना । बभूवुर्मूर्च्छितानीव मिथुनान्यपराण्यपि ॥ ६८ ॥ तानि तामग्रतः कृत्वा नारीं पुरुषवर्जिताम् । किंकर्त्तव्यविमूढानि श्रीनाभेरुपनिन्यिरे ॥ ६९ ॥ एषा वृषभनाथस्य धर्म्मपत्नी भवत्विति । प्रतिजग्राह तां नाभिर्नेत्रकैरवकौमुदीम् ॥ ७० ॥ अन्यदा तु 'विभोरुद्यत्प्राग्भोगफलकर्म्मणः । आगादिन्द्रो विवाहार्थं वृन्दारकगणान्वितः ॥ ७१ ॥ तत' स्वर्णमयस्तम्भभ्राजिष्णुमणिपुत्रिकम् । अनेकनिर्गमद्वारमकार्षुर्मण्डपं सुराः ॥ ७२ ॥ श्वेतादिव्यांशुकोल्लोचच्छलेन गगनस्थया । गङ्गयेवाश्रितः सोऽभूद्भूरिशोभादिदृक्षया ॥ ७३ ॥ तोरणानि चतुर्दिक्षु सन्तानतरुपल्लवैः । तत्राभूवन् धनूंषीव सज्जितानि मनोभुवा ॥ ७४ ॥ चतस्रो रत्नकलशश्रेणयोऽभ्रलिहाग्रगाः । पर्य्यस्थाप्यन्त देवीभिर्निधानानि रतेरिव ॥ ७५ ॥ ववृषुर्मण्डपद्वारे चेलोत्क्षेपं पयोमुचः । चक्रे मध्ये सुरीभिर्भूः पङ्किला यक्षकर्दमैः ॥ ७६ ॥ वाद्यमानेषु तूर्य्येषु गीयमाने च मङ्गले । अवादयन्नगायंश्च प्रतिशब्दैर्दिगङ्गनाः ॥ ७७ ॥ सुमङ्गलासुनन्दाभ्यां कुमारीभ्यामकारयत् । वासवः परमेशस्य पाणिग्रहमहोत्सवम् ॥ ७८ ॥ ततः

(१) विभोरभ्युद्यद्भोगफलकर्म्मणः । (२) अभ्रलिहाग्रका ।

सुमङ्गलादेवी देवैः प्रकृतमङ्गला । अपत्ये भरतब्राह्म्यौ युग्मरूपे अजीजनत् ॥ ७९ ॥ त्रैलोक्यजनितानन्दा सुनन्दा सुषुवे युगम् । सुबाहुं बाहुबलिनं सुन्दरीं चातिसुन्दरीम् ॥ ८० ॥ पुनरेकोनपञ्चाशत्पुंयुगानि सुमङ्गला । असूत बलिनो मूर्त्तान् द्वैरूप्येणेव मारुतान् ॥ ८१ ॥ अन्येद्युरन्याय इति पूत्कारोऽध्धृतबाहुभिः । नाभिर्न्यङ्गापि सम्भूय सर्वैर्मिथुनकैरिदम् ॥ ८२ ॥ तिस्रो हकारमकारधिक्काराख्याः सुनीतयः । न गण्यन्तेऽधुना पुम्भिः कुर्व्वद्भिरसमञ्जसम् ॥ ८३ ॥ ततः कुलकरोऽप्यूचे त्राताऽस्मादसमञ्जसात् । एष वो वृषभः स्वामी तद्वर्त्तध्वं तदाज्ञया ॥ ८४ ॥ तदा कुलकराज्ञातः कर्त्तुं राज्यस्थितिं स्फुटाम् । प्रभुर्ज्ञानत्रयमयो मिथुनान्येवमन्वशात् ॥ ८५ ॥ राजा भवति मर्य्यादाव्यतिक्रमनिरोधकः । तस्योच्चासनदानेनाभिषेकः क्रियते जलैः ॥ ८६ ॥ आकर्ण्य वचनं भर्त्तुस्ते सर्व्वे युग्मधर्म्मिणः । तच्छिक्षया ययुः पत्रपुटैर्जलजिघृक्षया ॥ ८७ ॥ तदा चासनकम्पेनावधिज्ञानप्रयोगतः । विज्ञातभगवद्राज्यसमयः शक्र आययौ ॥ ८८ ॥ रत्नसिंहासनेऽध्यास्य वासवः परमेश्वरम् । साम्राज्येऽभिषिषेचालञ्चक्रे च मुकुटादिभिः ॥ ८९ ॥ इतश्चाम्भोजिनीपत्रपुटैरञ्जलिधारितैः । निजं मन इव स्वच्छमानिन्ये मिथुनैर्जलम् ॥ ९० ॥ उदयाद्रिमिवार्केण मुकुटेनोपशोभितम् । अत्यन्तविमलैर्वस्त्रैर्व्योमेव शरदम्बुदैः ॥ ९१ ॥ हंसैरिव शरत्कालं सञ्चरच्चारुचामरैः । कृताभिषेकं नाभेयं ददृशुस्तानि विस्मयात् ॥ ९२ ॥ ( युग्मं ) नैतद्युक्तं प्रभोर्मूर्ध्नि क्षेप्तुमेवं विमर्शिभिः । विनीतैर्मिथुनैर्वारि निदधे पादपद्मयोः ॥ ९३ ॥ योजनान्यथ विस्तीर्णा नव द्वादश चायताम् । विनीताख्यां पुरीं कर्त्तुं श्रीदमुक्त्वा हरिर्ययौ ॥ ९४ ॥ सोऽपि रत्नमयीं भूमेर्माणिक्यमुकुटोपमाम् । व्यधात् द्विषामयोध्येति तामयोध्यापराभिधाम् ॥ ९५ ॥ तां च निर्माय निर्मायः पूरयामास यत्नराद् । अक्षय्य-

रत्नवसनधनधान्यैर्निरन्तरम् ॥ ९६ ॥ वज्रेन्द्रनीलवैडूर्यहर्म्यकिर्म्मीररश्मिभिः । भित्तिं विनापि खे तत्र चित्रकर्म्म विरच्यते ॥ ९७ ॥ तद्वप्रे दीप्रमाणिक्यकपिशीर्षपरम्परा । अयत्नादर्शतां यान्ति चिरं खेचरयोषिताम् ॥ ९८ ॥ तस्यां गृहाङ्गणभुवि स्वस्तिकन्यस्तमौक्तिकैः । स्वैरं कर्करकक्रीडां कुरुते बालिकाजनः ॥ ९९ ॥ तत्रोद्यानोच्चवृक्षाग्रस्खल्यमानान्यहर्निशम् । खेचरीणां विमानानि क्षणं यान्ति कुलायताम् ॥ १०० ॥

तत्र दृष्ट्वाऽट्टहर्म्येषु रत्नराशीन् समुच्छ्रितान् । तदवकरकूटोऽयं तर्क्यते रोहणाचलः ॥ १ ॥ जलकेलिरतस्त्रीणां त्रुटितैर्हारमौक्तिकैः । ताम्रपर्णीश्रियं तत्र दधते गृहदीर्घिकाः ॥ २ ॥ तत्रेभ्याः सन्ति ते येषां कस्याप्येकतमस्य सः । व्यवहर्तुं गतो मन्ये वणिक्पुत्रो धनाधिपः ॥ ३ ॥ नक्तमिन्दुदृषद्भित्तिमन्दिरस्यन्दिवारिभिः । प्रशान्तपांशवो रथ्याः क्रियन्ते तत्र सर्व्वतः ॥ ४ ॥ वापीकूपसरोलक्षैः सुधासोदरवारिभिः । नागलोकं नवसुधाकुण्डं परिबभूव सा ॥ ५ ॥ नगरीं तामलङ्कुर्व्वन्नरेन्द्रो वृषभध्वजः । अपत्यानि निजानीव प्रजाश्चिरमपालयत् ॥ ६ ॥ तत उत्पादयामास लोकानुग्रहकाम्यया । एकैकशो विंशतिधा पञ्च शिल्पानि नाभिभूः ॥ ७ ॥ राज्यस्थितिनिमित्तं चाऽग्रहीद्गास्तुरगान् गजान् । सामाद्युपायसारां च नीतिरीतिमदर्शयत् ॥ ८ ॥ द्वासप्ततिकलाकाण्डं भरतं चाध्यजीगपत् । भरतोऽपि निजान् भ्रातॄस्तनयानितरानपि ॥ ९ ॥ नाभेयो बाहुबलिनं बिभ्रमानान्यनेकशः । लक्षणानि च हस्त्यश्वस्त्रीपुंसानामजिज्ञपत् ॥ १० ॥ अष्टादशलिपीर्ब्राह्म्या अपसव्येन पाणिना । दर्शयामास सव्येन सुन्दर्या गणितं पुनः ॥ ११ ॥ वर्णव्यवस्थां रचयन् न्यायमार्गं प्रवर्त्तयन् । त्र्यशीतिं पूर्वलक्षाणि नाभिभूरत्यवाहयत् ॥ १२ ॥ प्रभुः स्मरकृतावासे मधुमासे समेयुषि । प्रागादन्ये-

द्युरुद्याने परिवारानुरोधतः ॥ १३ ॥ गुञ्जद्भिः फुल्लमाकन्दमकरन्दोन्मदालिभिः । मधुलक्ष्मीर्बभूव स्वागतिकीव जगत्प्रभोः ॥१४॥ पूर्व्वरङ्ग इवारब्धे पञ्चमोच्चारिभिः पिकैः । अदर्शयल्लतालास्यं मलयानिललासकः ॥ १५ ॥ प्रतिशाखं विलग्नाभिः पुष्पोच्चयकुतूहलात् । स्त्रीभिस्तत्राभवन् वृक्षाः सञ्जातस्त्रीफला इव ॥ १६ ॥ पुष्पवासगृहासीनः पुष्पाभरणभूषितः । पुष्पगेन्दुकहस्तोऽभान्मधुर्मूर्त्त इव प्रभुः ॥ १७ ॥ तत्र खेलायमानेषु निर्भरं भरतादिषु । दध्यौ स्वामी किमीदृक्षा क्रीडा दोगुन्दगेष्वपि ॥१८॥ जज्ञेऽथावधिना स्वामी स्वःसुखान्युत्तरोत्तरम् । अनुत्तरस्वर्गसुखं भुक्तपूर्व्वं स्वयं च तत् ॥१९॥ भूयोऽप्यचिन्तयादिदं विगलन्मोहबन्धनः । धिगेष विषयाक्रान्तो वेत्ति नात्महितं जनः ॥ २० ॥ अहो संसारकूपेऽस्मिन् जीवाः कुर्वन्ति कर्म्मभिः । अरघट्टघटीन्यायेनैहिरेयाहिरां क्रियाम् ॥ २१ ॥ इत्यासीन्मनसा यावद्विभुर्भवपराङ्मुखः । तावल्लोकान्तिका देवा एयुः सारस्वतादयः ॥ २२ ॥ बद्धैरञ्जलिभिर्मूर्ध्नि कृतान्यमुकुटा इव । प्रणम्य ते व्यज्ञपयन् स्वामिंस्तीर्थं प्रवर्त्तय ॥ २३ ॥ गतेषु तेषु भगवानुद्यानान्नन्दनाभिधात् । व्यावृत्य गत्वा नगरीमाजुहावावनीपतीन् ॥ २४ ॥ राज्येऽभ्यपिञ्चद्भरतं ज्येष्ठपुत्रं ततो विभुः । बाहुबल्यादिपुत्राणां विभज्य विषयान् ददौ ॥ २५ ॥ सांवत्सरिकदानेन ततोऽतर्पीत्तथा भुवम् । देहीति दीनवाक्यश्च कश्चिदासीद्यथा नहि ॥२६॥ अथासनप्रकम्पेन सर्वेऽप्यभ्येत्य वासवाः । अभिषेकं प्रभोश्चक्रुर्गिरेरिव पयोमुचः ॥ २७ ॥ माल्याङ्गरागैर्देवेशन्यस्तैर्वासितविष्टपैः । स्वयशोभिरिवाशोभि परितः परमेश्वरः ॥ २८ ॥ विचित्रैरर्चितो वस्त्रै रलङ्कृतैश्च भूषणैः । विभुर्बभासे सन्ध्याभ्रधिष्ण्यैरिव मरुत्पथः ॥ २९ ॥ दिवि दुन्दुभिनादं च

( १ ) दोलायमानेषु ।

कारयामास वासव । जगतो ददानन्दमसन्मान्तमिवात्मनि ॥ ३० ॥ सुरासुरनरोद्वाह्यामारोहच्छिबिकां विभुः । ऊर्द्ध्वलोकगतेर्मार्गं जगतो दर्शयन्निव ॥३१॥ एव सदेवैर्देवेशैश्चक्रे निष्क्रमणोत्सवः । य पश्यद्भिर्निजदृशां नैर्निमेष्य कृतार्थितम् ॥ ३२ ॥ गत्वा सिद्धार्थकोद्याने मुमोच परमेश्वरः । कुसुमाभरणादीनि कषायानिव सर्वतः ॥ ३३ ॥ चतुर्भिर्मुष्टिभिः केशानुद्दधार जगद्गुरुः । जिघृत्तु[1] पञ्चमीं मुष्टिं वासवेनेति याचितः ॥ ३४ ॥ देवांसयो स्वर्णरुचोर्वाचातीतातिशोभते । केशवल्लर्य्येसावास्तामिति तां स्वाम्यधारयत् ॥ ३५ ॥ प्रतीच्छतश्च सौधर्म्माधिपतेः सिचयाञ्चले । स्वामिकेशा दधुर्दत्तवर्णान्तरगुणश्रियम् ॥ ३६ ॥ क्षीरोदधौ सुधर्मेशः केशान् चिक्षराभ्युपेत्य च । रङ्गाचार्य इवारच्चतुमुल मुष्टिसञ्ज्ञया ॥ ३७ ॥ सर्व्वं सावद्य प्रत्याख्यामीति चारित्रमुच्चकैः । मोक्षाध्वनो रथमिवाभ्यारुरोह जगत्पतिः ॥ ३८॥ सर्वत सर्वजन्तूनां मनोद्रव्याणि दर्शयत् । जज्ञे ज्ञान प्रभोस्तुर्य्यं मन पर्य्ययसञ्ज्ञकम् ॥ ३९ ॥ राज्ञा सहस्राश्चत्वारोऽनुयान्तस्त निजप्रभुम् । व्रतमाददिरे भक्त्या कुलीनाना क्रमो ह्यसौ ॥४०॥ ततः सर्वेष्वपीन्द्रेषु गतेषु स्व स्वमालयम् । व्यहरत्तैर्वृतः स्वामी यूथनाथ इव द्विपैः ॥४१॥ लोकैर्भिक्षास्वरूपाज्ञैर्भिक्षार्थं भ्रमतः प्रभोः । अढौकि कन्येभाश्वादि धिगार्ज्जवमपि कचित् ॥४२॥ न्याय्यामप्राप्नुवन् भिक्षां सहमान परीषहान् । अदीनमानस स्वामी मौनव्रतमुपाश्रितः ॥४३॥ श्रमणाना सहस्रैस्तैश्चतुर्भिरपि नाभिभूः । क्षुधार्तैर्मुमुचे को वा संसत्त्रो भगवानिव ॥४४॥ वने मूलफलाहारा जज्ञिरे ते तु तापसाः । भवाटवीपथज्ञुषो धिक्कान्मोक्षपथच्युतान् ॥४५॥ अथ कच्छमहाकच्छपुत्रावाज्ञागतौ कचित् । ईयतुर्नमिविनमी स्वामिन प्रतिमास्थितम् ॥४६॥ प्रणम्य तौ विज्ञपयाम्बभूव-

(१) सत्त्ववान् ।

तुरिति प्रभुम्। आवयोर्नापरः स्वामी स्वामिन् राज्यप्रदो भव ॥४७॥ न किञ्चिदूचे भगवांस्तदा तौ सेवकावपि। निर्ममा हि न लिप्यन्ते कस्याप्यैहिकचिन्तया ॥ ४८ ॥ तौ कृष्टासी सिषेवाते स्वामिनं पारिपार्श्विकौ। अहर्निशं मेरुगिरिं सूर्याचन्द्रमसाविव ॥ ४९ ॥ अथ तौ धरणेन्द्रेण प्रभुं वन्दितुमेयुषा। कौ युवामिह को हेतुरित्युक्तावेवमूचतुः ॥ ५० ॥ भृत्यावावामसौ भर्त्ता क्वचिदप्यादिदेश च। राज्यं विभज्य सर्वेषां स्वपुत्राणामदत्त च ॥५१॥ अपि प्रदत्तसर्वस्वो दातासौ राज्यमावयोः। अस्ति नास्तीति का चिन्ता कार्या सेवैव सेवकैः ॥ ५२ ॥ याचेथां भरतं स्वामी निर्ममो निष्परिग्रहः। किमद्य दद्यादिति तौ तेनोक्ताविल्यवोचताम् ॥ ५३ ॥ विश्वस्वामिनमाप्यामुं कुर्वः स्वाम्यन्तरं नहि। कल्पपादपमासाद्य कः करीरं निषेवते ॥ ५४ ॥ आवां याचावहे नान्यं विहाय परमेश्वरम्। पयोमुचं विमुच्यान्यं याचते चातकोऽपि किम् ॥ ५५ ॥ स्वस्त्यस्तु भरतादिभ्यः किं तवास्मद्विचिन्तया। स्वामिनोऽस्माद्यद्भवति तद्भवत्वपरेण किम् ॥ ५६ ॥ तदुक्तिमुदितोऽवादीदथेदं पन्नगेश्वरः। पातालपतिरेषोऽस्मि स्वामिनोऽस्यैव किङ्करः ॥ ५७ ॥ सेव्यः स्वाम्ययमेवेति प्रतिज्ञा साधु साधु वः। स्वामिसेवाफलं विद्याधरैश्वर्यं ददामि तत् ॥ ५८ ॥ स्वामिसेवाप्तमेवैतद्बुध्येथां हन्त नान्यथा। सम्बोध्येति ददौ विद्याः प्रज्ञप्तीप्रमुखास्तयोः ॥५९॥ ईयतुस्तदनुज्ञातौ पञ्चाशद्योजनीपृथुम्। तौ वैताढ्याद्रिमुत्सेधं पञ्चविंशतियोजनम् ॥ ६० ॥ दशयोजनविस्तारदक्षिणश्रेणिमध्यगाः। तत्र विद्याबलाच्चक्रे नमिः पञ्चाशतं पुरीः ॥ ६१ ॥ दशयोजनविस्तारोत्तरश्रेण्यां न्यवीविशत्। विद्याधरपतिः षष्टिं पुराणि विनमिः पुनः ॥ ६२ ॥ चक्राते चक्रवर्त्तित्वं चिरा(१)द् विद्याधरेषु तौ।

(१) चिरम्।

तादृशः स्वामिसेवायाः किं नाम स्याद्दुरासदम् ॥ ६३ ॥ वर्षं मौनी निराहारो विहरन् भगवानपि । पुरं गजपुरं नाम प्रययौ पारणेच्छया ॥ ६४ ॥ तदा च सोमयशसः श्रेयांसः स्वप्नमैक्षत । मेरुं श्यामं सुधाकुम्भैः क्षालयित्वोज्ज्वलं व्यधात् ॥ ६५ ॥ सुबुद्धिश्रेष्ठिनाप्यैक्षि गोसहस्रं रवेश्च्युतम् । श्रेयांसेनाहितं तत्र ततोऽसौ भासुरोऽभवत् ॥ ६६ ॥ अदर्शि सोमयशसा राजैको बहुभिः परैः । रुद्धः समन्ताच्छ्रेयांससाहाय्याज्जयमीयिवान् ॥ ६७ ॥ त्रयस्ते सदसि स्वप्नानन्योऽन्यस्य न्यवीविदन् । ते निर्णयमजानन्त स्वं स्वं स्थानं पुनर्ययुः ॥ ६८ ॥ प्रादुर्भावयितुमिव तदा तत्स्वप्ननिर्णयम् । श्रेयांसस्य ययौ वेश्म भिक्षार्थी भगवानपि ॥ ६९ ॥ भगवन्तं समायान्तं शशाङ्कमिव सागरः । आलोक्य श्रेयसां पात्रं श्रेयांसः शिश्रिये मुदम् ॥ ७० ॥ ऊहापोहं वितन्वानः श्रेयांसः स्वामिदर्शनात् । अवाप जातिस्मरणं पूर्वनष्टनिधानवत् ॥ ७१ ॥ चक्रभृद्वज्रनाभोऽसौ प्राग्भवेऽस्यास्मि सारथिः । अनुप्रव्राजितश्चास्मि तदेत्यादि विवेद सः ॥ ७२ ॥ ततो विज्ञातनिर्दोषभिक्षादानविधिः सुधीः । स्वामिने प्रासुकायातेक्षुरसं मुदितो ददौ ॥ ७३ ॥ भूयानपि रसं पाणिपात्रे भगवतो ममौ । श्रेयांसस्य तु हृदये ममुर्नहि मुदस्तदा ॥ ७४ ॥ स्त्यानोऽनुस्तम्भितोऽन्वासीद् व्योम्नि लग्नशिखो रसः । अञ्जलौ स्वामिनोऽचिन्त्यप्रभावाः प्रभवः खलु ॥ ७५ ॥ ततो भगवता तेन रसेनाकारि पारणम् । सुरासुरनृणां नेत्रैः पुनस्तद्दर्शनामृतैः ॥ ७६ ॥ कुर्वद्भिर्दुन्दुभिध्वानं देवैर्दिवि घनैरिव । वृष्टयो रत्नपुष्पाद्या चक्रिरे वारिवृष्टिवत् ॥ ७७ ॥ अथ तक्षशिलां स्वामी ययौ बाहुबलेः पुरीम् । बाह्योद्याने प्रपेदे च प्रतिमामेकरात्रिकीम् ॥ ७८ ॥ प्रभाते पावयिष्यामि स्वं लोकं स्वामिदर्शनात् । इतीच्छतो बाहुबलेः साभून्मासोपमा निशा ॥७९॥ स प्रातः प्रययौ यावत्तावत्स्वाम्यन्यतोऽगमत् । तत्रास्वामि-

कमुद्यानं व्योमेवाचन्द्रमैक्षत ॥ ८० ॥ मनोरथो विलीनो मे हृदि बीजमिवोषरे । हा धिक् प्रमद्वरोऽस्मीति बह्वात्मानं निनिन्द सः ॥ ८१ ॥ यत्रास्थातां प्रभोः पादौ रत्नैस्तत्रार्षभिर्व्यधात् । धर्म्मचक्रं सहस्रारं सहस्रांशुमिवापरम् ॥ ८२ ॥ विविधाभिग्रहः स्वामी म्लेच्छदेशेष्वधर्मसु । विजहार यथार्येषु समभावा हि योगिनः ॥ ८३ ॥ तदा प्रभृत्यनार्याणामपि पापैककर्म्मणाम् । धर्मास्तिक्यधिया जज्ञे दृढानुष्ठानचेष्टितम् ॥ ८४ ॥ एवं विहरमाणस्तु सहस्रे शरदां गते । पुरं पुरिमतालाख्यमाजगाम जगद्गुरुः ॥ ८५ ॥ तत्पूर्वोत्तरदिग्भागे कानने शकटानने । वटस्याधोऽष्टमभक्तेनास्थात्प्रतिमया प्रभुः ॥ ८६ ॥ आरुह्य क्षपकश्रेणिमपूर्वकरणक्रमात् । शुक्लध्यानान्तरं शुद्धमध्यासीच्च जगत्पतिः ॥ ८७ ॥ ततश्च घातिकर्म्माणि व्यलीयन्त घना इव । स्वामिनः केवलज्ञानरविराविर्बभूव च ॥ ८८ ॥ विमानान्यतिसम्मर्दाद् घट्टयन्तः परस्परम् । एयुरिन्द्राश्चतुःषष्टिः समं देवगणैस्तदा ॥ ८९ ॥ त्रैलोक्यभर्त्तुः समवसरणस्थानभूतलम् । अमृजन्वायुकुमाराः स्वयं मार्जितमानिनः ॥९०॥ गन्धाम्बुवृष्टिभिर्मेघकुमाराः सिषिचुः क्षितिम् । सुगन्धिबाष्पैः सोत्क्षिप्तधूपार्घैर्वैष्यतः प्रभोः ॥ ९१ ॥ पुष्पोपहारमृतवो जानुदघ्नं व्यधुर्भुवि । अप्येषत्पूज्यसंसर्गः पूजायै खलु जायते ॥ ९२ ॥ स्निग्धधूमशिखास्तोमवासितव्योममण्डलाः । चक्रुर्धूपघटीस्तत्र तत्र वह्निकुमारकाः ॥ ९३ ॥ इन्द्रचापशतालीढमिव नानामणित्विषा । ततः समवसरणं चक्रे शक्रादिभिः सुरैः ॥ ९४ ॥ रजतस्वर्णमाणिक्यवप्रास्तत्र त्रयो बभुः । भुवनाधिपतिज्योतिर्वैमानिकसुरैः कृताः ॥ ९५ ॥ असौ स्वर्गमसौ मोक्षं गच्छत्यध्वेति देहिनाम् । शंसन्त्य इव वल्गन्त्यः पताकास्तेषु रेजिरे ॥९६॥ विद्याधर्य्यो रत्नमय्यो वप्रोपरि चकाशिरे । कृतप्रवेशनिष्काशा विमानाशङ्कया सुरैः ॥ ९७ ॥ माणिक्यकपिशीर्षाणि मुग्धामरवधूजनैः ।

आलोक्यन्त चिरं हर्षाद्रतताडङ्कशङ्कया ॥ १९८ ॥ प्रतिवप्रं च चत्वारि गोपुराणि बभासिरे । चतुर्विधस्य धर्मस्य क्रीडावातायना इव ॥ १९९ ॥ चक्रे समवसरणान्तरेऽशोकतरुः सुरैः । क्रोशत्रयोदयो रत्नत्रयोदयमिवोदिशन् ॥ २०० ॥ तस्याधःपूर्वदिग्भागे रत्नसिंहासनं सुराः । सपादपीठं विदधुः सारं स्वर्गश्रियामिव ॥ १ ॥ प्रविश्य पूर्वद्वारेण नत्वा तीर्थं तमश्छिदे । स्वामी सिंहासनं भेजे पूर्वाचलमिवार्यमा ॥ २ ॥ रत्नसिंहासनस्थानि दिक्त्वन्यास्वपि तत्क्षणम् । भगवत्प्रतिबिम्बानि त्रीणि देवा विचक्रिरे ॥ ३ ॥ वराकीकृतराकेन्दुमण्डलं परमेशितुः । त्रैलोक्यस्वामिताचिह्नमिव च्छत्रत्रयं बभौ ॥ ४ ॥ भगवानेक एवायं स्वामीत्यूर्ध्वीकृतो भुजः । इन्द्रेणेव प्रभोरग्रे रेजे रत्नमयो ध्वजः ॥ ५ ॥ चकाशे केवलज्ञानिचक्रवर्तित्वसूचकम् । अत्यद्भुतप्रभाचक्रं धर्मचक्रं प्रभोः पुरः ॥ ६ ॥ रेजतुर्जाह्नवीवीचिसोदरे चारुचामरे । हंसाविवानुधावन्तौ स्वामिनो मुखपङ्कजम् ॥ ७ ॥ आविर्बभूवानुवपुस्तदा भामण्डलं विभोः । खद्योतपोतवद्यस्य पुरो मार्तण्डमण्डलम् ॥ ८ ॥ प्रतिध्वानैश्चतस्रोऽपि दिशो मुखरयन् भृशम् । अम्भोद इव गम्भीरो दिवि दध्वान दुन्दुभिः ॥ ९ ॥ अधोवृन्ता सुमनसो विष्वग्ववृषिरे सुरैः । शान्तीभूते जने त्यक्तान्यस्त्राणीव मनोभुवा ॥ १० ॥ पञ्चत्रिंशदतिशयान्वितया भगवान् गिरा । त्रैलोक्यानुग्रहायाथ प्रारेभे धर्मदेशनाम् ॥ ११ ॥ भगवत्केवलज्ञानोत्सवं चारा अचीकथन् । भरतस्य तदा चक्ररत्नमप्युदपद्यत ॥१२॥ उत्पन्नकेवलस्तातः इतश्चक्रमितोऽभ्यगात् । आदौ करोमि कस्यार्चामिति दध्यौ क्षणं नृपः ॥१३॥ क्व विश्वाभयदस्तातः क्व चक्रं प्राणिघातकम् । विमृश्येति स्वामिपूजाहेतोः स्वानादिदेश सः ॥ १४ ॥ सूनोः परीषहोदन्तदुःखाश्रूत्पन्नदृग्रुजम् । मरुदेवामथोपेत्य नत्वा चासौ न्यजिज्ञपत् ॥ १५ ॥ आदिश

सर्व्वदापीदं यन्मे सूनुस्तयात्यये। पद्मखण्ड इव मृदुः सहते वारिविद्रवम् ॥ १६ ॥ हिमर्त्तौ हिमसम्पातपरिक्लेशवशां दशाम्। अरण्ये मालतीस्तम्ब इव याति निरन्तरम् ॥ १७ ॥ उष्णर्त्तावुष्णकिरणकिरणैरतिदारुणैः। सन्तापं चानुभवति स्तम्बेरम इवाधिकम् ॥ १८ ॥ तदेवं सर्व्वकालेषु वनवासी निराश्रयः। पृथग्जन इवैकाकी वत्सो मे दुःखभाजनम् ॥१६॥ त्रैलोक्यस्वामिताभाजः स्वसूनोस्तस्य सम्प्रति। पश्य सम्पदमित्युक्त्वारोहयामास तां गजे ॥ २० ॥ सुवर्णवज्रमाणिक्यभूषणैस्तुरगैर्गजैः। पत्तिभिः स्यन्दनैर्मूर्त्तश्रीमयैः सोऽचलत्ततः ॥२१॥ सैन्यैर्भूषणभाःपुञ्जकृतजङ्गमतोरणैः। गच्छन् दूरादपि नृपोऽपश्यद्रत्नध्वजं पुरः ॥ २२ ॥ मरुदेवामथावादीद्भरतः पुरतो ह्यदः। प्रभोः समवसरणं देवि देवैर्विनिर्मितम् ॥ २३ ॥ अयं जयजयारावतुमुलस्त्रिदिवौकसाम्। श्रूयते तातपादान्ते सेवोत्सवमुपेयुषाम् ॥ २४ ॥ मालवकैशिकीमुख्यग्रामरागपवित्रिता। कर्णामृतमियं वाणी स्वामिनो देशनाकृतिः ॥ २५ ॥ मयूरसारसक्रौञ्चहंसाद्यैः स्वस्वराधिका। आकर्ण्यते दत्तकर्णैः स्वामिनो गीः सविस्मयम् ॥ २६ ॥ तातस्य तोयदस्येव ध्वनावायोजनादिह। श्रुते मनो बलाकेव बलवद्देवि धावति ॥ २७ ॥ त्रैलोक्यभर्त्तुर्गम्भीरां वाणीं संसारतारिणीम्। निर्वातदीपनिस्पन्दा मरुदेवा मुदाऽशृणोत् ॥ २८ ॥ शृण्वन्त्यास्तां गिरं देव्या मरुदेव्या व्यलीयत। आनन्दाश्रुपयःपूरैः पङ्कवत्पटलं दृशोः ॥ २९ ॥ साऽपश्यत्तीर्थकृल्लक्ष्मीं तस्याऽतिशयशालिनीम्। तस्यास्तद्दर्शनानन्दस्थैर्यात्कर्म व्यशीर्यत ॥ ३० ॥ भगवद्दर्शनानन्दयोगस्थैर्यमुपेयुषी। केवलज्ञानमम्लानमाससाद तदैव सा ॥ ३१ ॥ करिस्कन्धाधिरूढैव प्राप्तायुःकर्मसङ्क्षया। अन्तकृत्केवलित्वेन निर्वाणं मरुदेव्यगात् ॥ ३२ ॥ एतस्यामवसर्प्पिण्यां सिद्धोऽसौ प्रथमस्ततः। क्षीराब्धौ तद्वपुः क्षिप्त्वा चक्रे मोक्षोत्सवः सुरैः ॥ ३३ ॥

ततो विज्ञाततन्मोक्षो हर्षशुग्भ्यां सम नृप । अभ्रच्छायार्कतापाभ्यां शरत्काल इवानशे ॥ ३४ ॥ सन्त्यज्य राज्यचिह्नानि पदातिः सपरिच्छदः । ततः समवसरणं प्रविवेश विशाम्पतिः ॥ ३५ ॥ चतुर्भिर्देवनिकायैः स्वामी परिवृतस्तदा । ददृशे भरतेशेन दृक्चकोरनिशाकरः ॥ ३६ ॥ त्रिश्च प्रदक्षिणीकृत्य भगवन्तं प्रणम्य च । मूर्ध्नि बद्धाञ्जलिः स्तोतुमिति चक्री प्रचक्रमे ॥ ३७ ॥ जयाखिलजगन्नाथ जय विश्वाभयप्रद । जय प्रथमतीर्थेश जय ससारतारण ॥ ३८ ॥ अद्यावसर्पिणीलोकपद्माकरदिवाकर । त्वयि दृष्टे प्रभात मे प्रनष्टतमसोऽभवत् ॥ ३९ ॥ भव्यजीवमनोवारिनिर्मलीकारकर्मणि । वाणी जयति ते नाथ कतकक्षोदसोदरा ॥ ४० ॥ तेषां दूरे न लोकाग्र कारुण्यक्षीरसागर । समारोहन्ति ये नाथ त्वच्छासनमहारथम् ॥ ४१ ॥ लोकाग्रतोऽपि संसारमग्रिम देव मन्महे । निष्कारणजगद्बन्धुर्यत्र साक्षात्त्वमीक्ष्यसे ॥ ४२ ॥ त्वद्दर्शनमहानन्दस्यन्दनिष्यन्दलोचनैः । स्वामिन् मोक्षसुखास्वाद ससारेऽप्यनुभूयते ॥ ४३ ॥ रागद्वेषकषायाद्यैरुद्ध जगदरातिभिः । इदमुद्वेष्टयते नाथ त्वयैवाभयसत्रिणा ॥ ४४ ॥ स्वय ज्ञापयसे तत्त्व मार्गं दर्शयसि स्वयम् । स्वय च त्रायसे विश्व त्वत्तो नाथामि नाथ किम् ॥ ४५ ॥ इति स्तुत्वा जगन्नाथ महीनाथशिरोमणिः । देशनावाक्सुधां पूर्वं कर्णाञ्जलिपुटं पपौ ॥ ४६ ॥ तदा ऋषभसेनादीन् भगवान्वृषभध्वजः । दीक्षयामास चतुरशीतिं गणधरान् स्वयम् ॥ ४७ ॥ अदीक्षयत्ततो ब्राह्मीं भरतस्य च नन्दनान् । शतानि पञ्च नप्तॄंश्च शतानि सप्त नाभिभूः ॥४८॥ साधवः पुण्डरीकाद्याः साध्व्यो ब्राह्म्यादयोऽभवन् । श्रेयासाद्याः श्रावकाश्च श्राविकाः सुन्दरीमुखाः ॥ ४९ ॥ एव चतुर्विधः सङ्घः स्थापितः स्वामिना तदा । ततःप्रभृति सङ्घस्य तथैवेय व्यवस्थितिः ॥ ५० ॥ स्वाम्यथो भव्यबोधायान्यतोऽ

गात्सपरिच्छदः । तं नत्वा भरताधीशोऽप्ययोध्यां नगरीं ययौ ॥ ५१ ॥ तत्र नाभ्यङ्गभूर्वंशरत्नाकरनिशाकरः । यथाविधि जुगोपोर्वीं न्यायो विग्रहवानिव ॥ ५२ ॥ चतुःषष्टिः सहस्राणि बभूवुस्तस्य वल्लभाः । अनुचर्यः श्रियो यासां जज्ञिरे रूपसम्पदा ॥ ५३ ॥ तस्मिन्नर्द्धासनासीने वासवस्य दिवौकसः । द्वयोर्भेदमजानन्तः पेतुः प्रणतिसंशये ॥ ५४ ॥ प्रारब्धदिग्जयः पूर्वं पूर्वस्यां भानुमानिव । सोऽगाज्जितान्यतेजोभिस्तेजोभिर्द्योतयन् जगत् ॥५५॥ उत्क्षिप्तार्घमिवोद्वीचिहस्तविन्यस्तविद्रुमैः । गङ्गासम्भेदसुभगं स प्रापत् पूर्वसागरम् ॥ ५६ ॥ मागधतीर्थकुमारं देवं मनसिकृत्य च । प्रपेदेऽष्टमभक्तं सोऽर्थसिद्धेर्द्वारमादिमम् ॥ ५७ ॥ यादांसि त्रासयन्नाशु रथेनारुह्य रंहसा । जलधिं मन्दरेणेव जगाहे स महाभुजः ॥ ५८ ॥ रथनाभ्युदये तोये स्थित्वा द्वादशयोजनीम् । बाणं दूतमिव प्रैषीन्नामाङ्कं मागधाय सः ॥ ५९ ॥ अथ मागधतीर्थस्य पतिर्निपतिते शरे । चुकोप विकटाटोपभृकुटीभङ्गभीषणम् ॥ ६० ॥ शरे मन्त्राक्षराणीव तस्य नामाक्षराण्यसौ । दृष्ट्वा नागकुमारोऽभून्नितान्तं शान्तमानसः ॥ ६१ ॥ प्रथमश्चक्रवर्त्त्येष उत्पन्न इति चिन्तयन् । उपतस्थे स भरतं विजयो मूर्त्तिमानिव ॥ ६२ ॥ नरचूडामणेरग्रे निजं चूडामणिं फणी । चिरार्जितं तेज इवोपानयत्तच्छरं च सः ॥ ६३ ॥ तवाहं पूर्वदिक्पालः किङ्करः करवाणि किम् । इति विज्ञपयन् राज्ञा सोऽनुजज्ञे महौजसा ॥ ६४ ॥ जयस्तम्भमिवारोप्य तत्र तं मागधाधिपम् । पूर्वनीरनिधेस्तीरान्नरदेवो न्यवर्त्तत ॥ ६५ ॥ उर्व्वीमनुर्व्वीं कुर्वाणश्चलयन्नचलानपि । चतुरङ्गबलेनाथ प्रपेदे दक्षिणोदधिम् ॥ ६६ ॥ एलालवङ्गलवलीकक्कोलबहले तटे । सैन्यान्यावासयामास स दोर्वीर्यपुरन्दरः ॥ ६७ ॥ तेजसा स दुरालोको द्वितीय इव भास्करः । महावाहं महाबाहुरारुरोह महारथम् ॥ ६८ ॥ तरङ्गैरिव

रङ्गद्भिस्तवस्तुरङ्गैस्तुरङ्गमै॰ । रथनाभ्युदय तोय ललङ्घे स महोदधिम् ॥ ६९ ॥ वरदामाभिमुख च सज्जीकृतशरा-
मनः । धनुर्वेदोङ्कारमिव ज्यानिर्घोष ततान सः ॥ ७० ॥ सौवर्णकर्णताडङ्कपद्मनालतुलास्पृशम् । काञ्चन सन्दधे
बाणमाकर्णाकृष्टकार्मुके ॥ ७१ ॥ वरदामाख्यतीर्थेशमभि श्रीभरतस्तत॰ । मुमोच नमुचिर्द्वेषिस्थामा नामाङ्कित
शरम् ॥ ७२ ॥ वरदामपतिर्बाण प्रेक्ष्य च प्रतिगृह्य च । भरत प्रत्युपायज्ञ उपायनमुपानयत् ॥ ७३ ॥ ऊचे च
भरताधीश धन्योऽस्मि यदिहागम॰ । नाथेन भवता नाथ सनाथोऽहमत परम् ॥ ७४ ॥ ततस्तमात्मसात्कृत्वा
कृत्यविद्भरतेश्वरः । प्रति प्रतीचीमचलचलयन्नचला ययौ ॥ ७५ ॥ अपरार्णवमासाद्य प्रभासाभिमुख शरम् ।
जाज्वल्यमान भरतस्तडिद्दण्डमिवाक्षिपत् ॥ ७६ ॥ दण्ड प्रयच्छ कुर्वाज्ञा जिजीविषसि चेत्सुखम् । इत्यक्षराणि
तद्बाणे प्रभासपतिरैक्षत ॥ ७७ ॥ प्राज्यानि प्रगुणीकृत्य प्राभृतान्यद्भुतानि सः । चचाल शरमादाय प्रसादयि-
तुमार्षभिम् ॥ ७८ ॥ हारान्नीहारहारिणानाजहारातिहारिण॰ । चिरकालार्जितानात्मयशोराशीनिवाखिलान् ॥७९॥
येषामग्रे दृषत्कल्पो रमारमणहृन्मणि । तांस्तान्विश्राणयामास मणीन्नरशिरोमणे॰ ॥ ८० ॥ कटकानि कटीसूत्र
चूडामणिमुरोमणिम् । निष्कादि चार्पयद्राज्ञे मूर्त्त तेज इव स्वकम् ॥ ८१ ॥ इति प्रसादितस्तेनाच्छद्मना भक्ति-
सद्मना। भरतोऽगान्नदीं सिन्धुमुत्तरद्वारदेहलीम् ॥८२॥ निकषा सिन्धुभवन निदधे शिबिर नृपः। सिन्धुदेवीं समुद्दिश्य
विदधे चाष्टम तपः॥८३॥ सिन्धुरासनकम्पेन ज्ञात्वा चक्रिणमागतम्। उपेत्योपायनैर्दिव्यैरानर्चे पृथिवीपतिम् ॥८४॥
तामुरीकृतसेवा च विसृज्य कृतपारण॰ । अष्टाह्निकोत्सव तस्य विदधे [1]वसुधाधवः ॥ ८५ ॥ सोऽथ चक्रानुगो

( १ ) वसुधाधिप॰ ।

गच्छन् ककुभोत्तरपूर्वया । भरतार्द्धद्वयाघाटं वैताढ्याद्रिमवाप च ॥ ८६ ॥ नितम्बे दक्षिणे तस्य विन्य-
स्तशिबिरस्ततः । अधिवैताढ्यकुमारं नृपतिर्विदधेऽष्टमम् ॥ ८७ ॥ विज्ञायावधिना सोऽपि दिव्यैस्तैस्तैरुपायनैः ।
उपतस्थे महीपालं सेवां च प्रत्यपद्यत ॥ ८८ ॥ तं विसृज्य नृपश्चक्रेऽष्टमभक्तान्तपारणम् । अष्टाह्निकोत्सवं तस्य
विदधे च यथाविधि ॥ ८९ ॥ गुहां तमिस्रामभितस्तमिस्रारिरिव त्विषा । जगाम तद्दूरे च स्कन्धावारं न्यधा-
न्नृपः ॥ ९० ॥ कृतमालामरं तत्र स उद्दिश्याष्टमं न्यधात् । सोऽपि ज्ञात्वासनकम्पादानेचोपेत्य भूपतिम् ॥ ९१ ॥
विसृज्य तमपि क्ष्मापः कृत्वा चाष्टमपारणम् । विदधेऽष्टाह्निकां तस्य महोत्सवपुरःसरम् ॥ ९२ ॥ सुषेणो भरता-
देशात्सिन्धुमुत्तीर्य चर्मणा । तरसा साधयामास दक्षिणं सिन्धुनिष्कुटम् ॥ ९३ ॥ करं ततस्त्यम्लेच्छानामादाय
स्वेच्छयाथ सः । उत्तीर्य चर्मणा सिन्धुमाययौ भरतेश्वरम् ॥ ९४ ॥ वैताढ्ये तमिस्रां वज्रकपाटपिहितां गुहाम् ।
उद्घाटयितुमादिक्षत् सुषेणमृषभात्मजः ॥ ९५ ॥ सुषेणोऽपि प्रभोराज्ञां शेषावन्मूर्ध्नि धारयन् । प्रदेशेऽगात्तमि-
स्राया गुहाया अदवीयसि ॥ ९६ ॥ तदधिष्ठातृदेवं च कृतमालमनुस्मरन् । तस्थौ पौषधशालायामष्टमेन विशु-
द्धधीः ॥ ९७ ॥ स्नात्वा चाष्टमभक्तान्ते बाह्याभ्यन्तरशौचभृत् । पर्यधाच्छुचिवस्त्राणि विविधाभरणानि च
॥ ९८ ॥ होमकुण्डोपमे धूपदहने ज्वलदग्निके । धूपमुष्टीः क्षिपन् स्वार्थसाधनीराहुतीरिव ॥ ९९ ॥ ततः
स्थानादसौ तस्या गुहाया द्वारमभ्यगात् । कोशद्वारं तदायुक्त इवोद्घाटयितुं त्वरी ॥ ३०० ॥ दृष्टमात्रं तत्कपाट-
युगलं प्रणनाम च । नेतारमिव तदन्तःप्रवेशः स्यात्कुतोऽन्यथा ॥ १ ॥ गुहाद्वारे ततोऽष्टाष्टमङ्गलालेखपूर्वकम् ।

( १ ) ततस्तमृषभात्मजः ।

सोऽष्टाह्निकामहिमानं चक्रे स्वमहिमोचितम् ॥ २ ॥ दण्डरत्नं वज्रसारं सर्वशत्रुविनाशनम् । अथ सेनापतिर्वज्र वज्रपाणिरिवाददे ॥ ३ ॥ पदानि कतिचित्सोऽपसृत्य वक्र इव ग्रहः । दण्डरत्नेन झटिति कपाटौ त्रिरताडयत् ॥४॥ पक्षाविवाद्रेर्वज्रेण दण्डरत्नेन ताडितौ । तडत्तडिति कुर्वाणौ विश्लिष्टौ तौ बभूवतु' ॥५॥ तद्गुहाद्वारवृत्तसद्यः सविकाशमुखो भृशम् । सुषेणो भरतायेद गत्वा नत्वा व्यजिज्ञपत् ॥ ६ ॥ अथाभूत्तत्प्रभावेण गुहाद्वारमपार्गलम् । यतेर्निःश्रेयसद्वारं तपसेवातिभूयसा ॥ ७ ॥ मघवैरावणमिवाधिरूढो गन्धवारणम् । तत्कालं भरताधीशो गुहाद्वारमुपाययौ ॥ ८ ॥ अन्धकारापहाराय मणिरत्नं न्यधान्नृपः । दक्षिणे कुम्भिनः कुम्भे पूर्वाद्राविव भास्करम् ॥९॥ ततोऽनुगचमूचक्रश्चक्रमार्गानुगो गुहाम् । प्रविवेश विशामीशो मेघमध्यमिवार्यमा ॥ १० ॥ गोमूत्रिकाक्रमेणानुयोजनान्तं तमश्छिदे । पार्श्वयोः काकिणीरत्नेनालिखन्मण्डलानि सः ॥ ११ ॥ दीप्रैरेकोनपञ्चाशन्मण्डलैः काकिणीकृतैः । मार्त्तण्डमण्डलोद्योतैस्तद्ग्राहिन्योऽवहन्सुखम् ॥ १२ ॥ भूपोऽथापश्यदुन्मग्ननिमग्ने निम्नगे ययोः । एकत्रोन्मज्जति ग्रावान्यस्यां मज्जत्यलाब्वपि ॥ १३ ॥ अतिदुस्तरताभाजोरपि सारणिलीलया । तयोर्न घोरनद्यो पद्या व्यधित वर्द्धकिः ॥ १४ ॥ पद्यया ते समुत्तीर्य तद्गुहाकुहरान्नृपः । निरगच्छन्महामेघमण्डलादिव भास्कर' ॥ १५ ॥ भरतो भरतक्षेत्रोत्तरखण्डं प्रविष्टवान् । अयुध्यत ततो म्लेच्छैर्दानवैरिव वासव ॥ १६ ॥ जिता राज्ञा मंहेशेन म्लेच्छाः प्रतिजयेच्छवः । उपासाञ्चक्रिरे मेघमुखान् स्वकुलदेवताः ॥ १७ ॥ मुसलाकारधाराभिरारादासारदारुणम् । ते प्रावर्त्तन्त संवर्त्त इव निष्पक् प्रवर्षितुम् ॥ १८ ॥ चर्मरत्नमधस्तेने राज्ञा द्वादशयोज-

(१) महेच्छेन ।

नीम् । तद्वदूर्ध्वं छत्ररत्नं मध्ये च निदधे चमूः ॥ १९ ॥ मणिरत्नमुरुध्वान्तध्वंसाय वसुधाधिपः । पूर्वाचल इवादित्यं छत्रदण्डे न्ययोजयत् ॥ २० ॥ तरदण्ड इवाराजत्तद्रत्नद्वयसम्पुटम् । ततस्तदादिलोकेऽभूद्ब्रह्माण्डमिति कल्पना ॥ २१ ॥ पूर्वाह्णे वापितान् शालीनपराह्णे च पक्त्रिमान् । प्रत्यावासं गृहपतिर्भोजनार्थमपूरयत् ॥ २२ ॥ वर्षं वर्षं च निर्विण्णैरूचे मेघकुमारकैः । किराताश्चक्रवर्त्येष न साध्योऽस्मादृशामपि ॥ २३ ॥ भग्नेच्छास्तद्गिरा म्लेच्छाः शरणं भरतं ययुः । अग्निना किल दग्धानामग्निरेव महौषधम् ॥ २४ ॥ ततश्चाजय्यमजयत्सिन्धोरुत्तरनिष्कुटम् । स्वाम्यादेशेन सेनानीः संसारमिव योगवित् ॥ २५ ॥ कैश्चित्प्रयाणकैर्गच्छन् गजेन्द्र इव लीलया । नितम्बं दक्षिणं क्षुद्रहिमाद्रेः प्राप भूपतिः ॥ २६ ॥ उद्दिश्य क्षुद्रहिमवत्कुमारं तत्र चार्षभिः । चक्रेऽष्टमं कार्यसिद्धेस्तपो मङ्गलमादिमम् ॥ २७ ॥ गत्वाष्टमान्ते हिमवत्पर्वतं त्रिरताडयत् । साटोपो रथशीर्षेण शीर्षण्यः पृथिवीभुजाम् ॥२८॥ भरतेशस्ततः क्षुद्रहिमवद्गिरिमूर्द्धनि । द्वासप्ततिं योजनानि नामाङ्कं बाणमक्षिपत् ॥ २९ ॥ बाणमालोक्य हिमवत्कुमारो ऽभ्येत्य[1] सत्वरम् । भरताज्ञां स्वशिरसा शिरस्त्राणमिवाग्रहीत् ॥ ३० ॥ गत्वा ऋषभकूटाद्रिमृषभस्वामिभूस्ततः । जघान रथशीर्षेण त्रिर्दन्तेनेव दन्तिराट् ॥ ३१ ॥ अवसर्पिण्यां तृतीयारप्रान्ते भरतेऽस्म्यहम् । चक्रीति वर्णान् काकिण्या तत्पूर्वकटकेऽलिखत् ॥ ३२ ॥ ततो व्यावृत्त्य सद्वृत्तः स्कन्धावारं निजं ययौ । चकाराष्टमभक्तान्तपारणं च महीपतिः ॥ ३३ ॥ ततश्च क्षुद्रहिम-वत्कुमारस्य नरेश्वरः । अष्टाहिकोत्सवं चक्रेऽनुरूपं चक्रिसम्पदः ॥ ३४ ॥ ततो निववृते चक्रवर्ती चक्रपथानुगः ।

( १ ) अभ्येत्य ।

सिन्धुगङ्गान्तर कुर्वन् सङ्कट विपुलैर्बलैः ॥ ३५ ॥ नितम्बमुत्तरमथ वैताढ्याद्रेरवाप सः । तत्र स्वस्थपरीवार स्कन्धावारं न्यधत्त च ॥ ३६ ॥ ततो नमिविनम्याख्यौ विद्याधरपती प्रति । आदिदेश विशामीशो मार्गण दण्डमार्गणम् ॥३७॥ वैताढ्यशृङ्गादुत्तीर्य कुपितौ दण्डयाचनात् । आजग्मतुर्युयुत्सू तौ विद्याधरबलावृतौ ॥ ३८ ॥ कुर्वन्मणिविमानैर्द्यां बहुसूर्यमयीमिव । प्रज्वलद्भिः प्रहरणैस्तडिन्मालामयीमिव ॥ ३९ ॥ उद्दामदुन्दुभिध्वानैर्मेघघोषमयीमिव । विद्याधरबल व्योमन्यपश्यद्भरतस्तत ॥ ४० ॥ दण्डार्थिन् दण्डमस्मत्तस्त्व गृहाणेति भाषिणौ । आह्वायाह्वयेतां तौ विद्याद्दसौ महीपतिम् ॥ ४१ ॥ अथ ताभ्या ससैन्याभ्या प्रत्येक युगपच्च सः । युयुधे विविधैर्युद्धैर्युद्धाज्यौ यज्जयश्रियः ॥ ४२ ॥ युधा द्वादशवार्षिक्या विद्याधरपती जितौ । प्राञ्जली प्रणिपत्यैव भरताधीशमूचतुः ॥४३॥ रवेरुपरि किं तेजो वायोरुपरि को जवी । मोक्षस्योपरि किं सौख्य कश्च शूरस्त्वयोपरि ॥ ४४ ॥ ऋषभो भगवान् साक्षादद्य दृष्टस्त्वमार्षभे । अज्ञानाद्योधितोऽस्माभिः कुलस्वामिन् सहस्व तत् ॥ ४५ ॥ किरीट इव नो मूर्ध्नि मण्डन तव शासनम् । कोशो वपुरपत्यानि सर्वमन्यच्च तावकम् ॥ ४६ ॥ भक्तिगर्भमिति प्रोच्य भरतेशाय दत्तवान् । विनम्रो निनभिर्नारीरत्न रत्नोच्चय नमिः ॥ ४७ ॥ ततो राज्ञा विसृष्टौ तौ राज्यान्यारोप्य सूनुषु । विरक्तावृषभेशांह्रिमूले जगृहतुर्व्रतम् ॥ ४८ ॥ ततोऽपि चलितवतश्चक्ररत्नस्य पृष्ठत । गच्छन्नासादयामास राजा मन्दाकिनीतटम् ॥ ४९ ॥ उत्तर निष्कुट गाङ्ग सुषेणोऽप्यभिषेणयन् । तरसा साधयामास किमसाध्य महात्मनाम् ॥५०॥ राजाप्यष्टमभक्तेन गङ्गादेवीमसाधयत् । आनर्च भरत सापि देवतार्हैरुपायनै ॥ ५१ ॥ ततो गङ्गानदीकूले कमलामोदमालिनि । वासागार इवोवास वसुमत्येकवासवः ॥ ५२ ॥ भरत रूपला-

वण्यकिङ्करीकृतमन्मथम् । तत्रावलोक्य गङ्गापि प्राप क्षोभमयीं दशाम् ॥ ५३ ॥ विराजमाना सर्वाङ्गं मुक्तामयविभूषणैः । वदनेन्दोरनुगतैस्तारैस्तारागणैरिव ॥ ५४ ॥ वस्त्राणि कदलीगर्भत्वक्सगर्भाणि बिभ्रती । स्वप्रवाहपयांसीव तद्रूपपरिणामतः ॥५५॥ रोमाञ्चकञ्चुकोदञ्चत्कुचस्फुटितकञ्चुका । सद्यस्तरङ्गितापाङ्गा गङ्गा भरतमभ्यगात् ॥५६॥ (त्रिभिर्विशेषकम्) प्रेमगद्‌गदवादिन्या गाढमभ्यर्थ्य पार्थिवः । रिरंसमानया निन्ये तया निजनिकेतनम् ॥५७॥ भुञ्जानो विविधान् भोगांस्तया सह महीपतिः । एकाहमिव वर्षाणां सहस्रं सोऽत्यवाहयत् ॥ ५८ ॥ गुहां खण्डप्रपाताख्यामखण्डितपराक्रमः । ततः स्थानान्नृपः प्राप करटीव वनाद्वनम् ॥ ५९ ॥ कृतमालकवत्तत्र नाट्यमालमसाधयत् । अष्टमेन नृपस्तद्वत्तस्य चाष्टाह्निकां व्यधात् ॥६०॥ सुषेणोद्‌घाटितद्वारकपाटां तां गुहां नृपः । प्राविशद्दक्षिणं तस्या द्वारमुज्जघटे स्वयम् ॥ ६१ ॥ निर्ययौ तद्‌गुहामध्यात्केशरीव नरेश्वरः । स्कन्धावारं च निदधे गाङ्गे रोधसि पश्चिमे ॥ ६२ ॥ नवापि निधयो नागकुमाराधिष्ठितास्तदा । गङ्गाकूलमनुप्राप्तं राजानमुपतस्थिरे ॥ ६३ ॥ इत्यूचुस्ते वयं गङ्गामुखमागधवासिनः । आगतास्त्वां महाभाग भवद्भाग्यैर्वशीकृताः ॥ ६४ ॥ यथाकाममविश्रान्तमुपभुङ्क्ष्व प्रयच्छ च । अपि क्षीयेत पाथोऽब्धौ न तु क्षीयामहे वयम् ॥ ६५ ॥ सहस्रैर्नवभिर्यक्षैः किङ्करैरिव तावकैः । आपूर्यमाणाः सततं चक्राष्टकप्रतिष्ठिताः ॥ ६६ ॥ द्वादशयोजनायामा नवयोजनविस्तृताः । भूमध्ये सञ्चरिष्यामो देव त्वत्पारिपार्श्विकाः ॥ ६७ ॥ ( युग्मम् ) सेनापतिः सुषेणोऽपि गङ्गादक्षिणनिष्कुटम् । महावनं महावायुरिवोन्मूल्य समाययौ ॥ ६८ ॥ समासहस्रैः षड्भिरेवं जित्वा षट्खण्डमेदिनीम् । चक्रमार्गानुगोऽयोध्यां जगाम जगतीपतिः ॥ ६९ ॥ ततो द्वादशभिर्वर्ष-

रागत्यागत्य पार्थिवः। प्रचक्रे चक्रवर्त्तित्वाभिषेको भरतेशितुः ॥ ७० ॥ कुर्वता स्वकुटुम्बस्य सारां च ददृशे कृशाम्। सुन्दरीं चास्थिभूता च चुकोप भरतेश्वरः ॥ ७१ ॥ ऊचे प्राहरिकान् किं रे मद्गेहे नास्ति भोजनम्। यदेवमीदृशी जाता अस्थिचर्ममयी कथम् ॥ ७२ ॥ स्वामिन् विजययात्राभूत्तव तावत्प्रभृत्यपि।' आचामाम्लान्यविश्रान्तमकार्षीत्सुन्दरी यतः ॥ ७३ ॥ अत्रान्तरे च भगवान् विहृत्य वसुधातले। भगवान् समवासार्षीदष्टापदगिरौ तत' ॥ ७४ ॥ श्रुत्वा च भरताधीश स्वामिवन्दनहेतवे। आगात्तद्देशनां श्रुत्वा व्रत जग्राह सुन्दरी ॥ ७५ ॥ भ्रातॄननागतान् ज्ञात्वा तस्मिन्नपि महोत्सवे। तेषामेकैकशो दूतान् प्राहिणोद्भरतेश्वर ॥ ७६ ॥ राज्यानि चेत्समीहध्वे सेवध्व भरत ततः। दूतैरित्युदिता सर्वेऽप्यालोच्यैवावदन्निदम् ॥ ७७ ॥ विभज्य राज्यं दत्त नस्तातेन भरतस्य च। ससेव्यमानो भरतोऽधिक किं नः करिष्यति ॥ ७८ ॥ समापतन्त किं काले काल प्रस्खलयिष्यति। किं जराराक्षसीं देहग्राहिणीं निग्रहीष्यति ॥ ७९ ॥ बाधाविधायिनः किं वा व्याधिव्याधान् हनिष्यति। यथोत्तर वर्द्धमानां तृष्णां वा दलयिष्यति ॥ ८० ॥ ईदृक्सेवाफल दातु न चेद्भरत ईश्वरः। मनुष्यभावे सामान्ये तर्हि क केन सेव्यताम् ॥ ८१ ॥ प्राज्यराज्योऽप्यसन्तोषादस्मद्राज्य जिघृक्षति। स्थाज्ञा चेत्तद्वय मपि तस्य तातस्य सूनवः ॥ ८२ ॥ अविज्ञपय्य तात तु सोदर्येणाग्रजन्मना। दूत त्वत्स्वामिना योध्दु न वय प्रोत्सहामहे ॥ ८३ ॥ ते दूतानभिधायैवमृषभस्वामिन ययुः। नत्वा भरतसन्दिष्ट तेच सर्व्वं व्यजिज्ञपन् ॥ ८४ ॥ अम्लानकेवलादर्शसक्रान्ताशेषविष्टप। कृपावान् भगवानादिनाथोऽपीत्यादिदेश तान् ॥ ८५ ॥ अनेकयोनिस-

(१) तत्स्वरूप व्यजिज्ञपन्।

म्पातानन्तबाधानिबन्धनम् । अभिमानफलैवेयं राज्यश्रीः सापि नश्वरी ॥ ८६ ॥ किञ्च या स्वःसुखैस्तृष्णा नात्रुट्यत्प्राग्भवेषु वः । साङ्गारकारकस्येव मर्त्यभोगैः कथं त्रुटेत् ॥ ८७ ॥ अङ्गारकारकः कश्चिदादाय पयसो दृतिम् । जगाम कर्तुमङ्गारानरण्ये रीणवारिणि ॥ ८८ ॥ सोऽङ्गारानलसन्तापान्मध्याह्नातपपोपितात् । उद्भूतया तृषाक्रान्तः सर्व्वं दृतिपयः पपौ ॥ ८९ ॥ तेनाप्यच्छिन्नतृष्णः सन् सुप्तः स्वप्ने गृहं गतः । आलूकलशनन्दाना- मुदकान्यभितोऽप्यपात् ॥ ९० ॥ तज्जलैरप्यशान्तायां तृष्णायामग्नितैलवत् । वापीकूपतडागानि पायंपायमशोष- यत् ॥ ९१ ॥ तथैव तृषितोऽथापात्सरितः सरितां पतीन् । न तु तस्य तृषात्रुट्यन्नारकस्येव वेदना ॥ ९२ ॥ मरुकूपे ततो यातः कुशपूलं स रज्जुभिः । बध्वा चिक्षेप पयसे किमार्त्तः कुरुते न हि ॥ ९३ ॥ दूराम्बुत्वेन कूपस्य मध्येऽपि गलिताम्बुकम् । निश्चोत्य पूलं द्रमकः स्नेहप्रोतमिवापिवत् ॥९४॥ न च्छिन्ना यार्णवाद्यैस्तृट् छेद्या पूलाम्भसा न सा । तद्वद्वः स्वःसुखाच्छिन्ना छेद्या राज्यश्रिया किमु ॥९५॥ अमन्दानन्दनिःस्यन्दिनिर्वाणप्राप्तिकार- णम् । वत्साः संयमराज्यं तद्युज्यते वो विवेकिनाम् ॥९६॥ तत्कालोत्पन्नवैराग्यवेगा भगवदन्तिके । तेऽष्टानवतिरप्याशु प्रव्रज्यां जगृहुस्ततः ॥९७॥ अहो धैर्यमहो सत्त्वमहो वैराग्यधीरिति । चिन्तयन्तस्तत्स्वरूपं दूता राज्ञे व्यजिज्ञपन् ॥९८॥ तत् श्रुत्वा भरतस्तेषां राज्यानि जगृहे स्वयम् । लाभाद्विवर्द्धितो लोभो राजधर्मो ह्यसौ सदा ॥९९॥ अथ विज्ञपयामास सेनानीर्भरतेश्वरम् । न चक्रं चक्रशालायां विशत्यद्यापि नः प्रभो ॥ ४०० ॥ स्वामिन् दिग्विजये कश्चिदाज्ञाबाह्यो नृपः कश्चित् । विवर्त्तते डोल इव घरट्टे भ्रमति प्रभो ॥ १ ॥ आ ज्ञातं भरतोऽवादील्लोकोत्तरपराक्रमः । अस्मद्ब- न्धुर्महाबाहुरेको बाहुबलिर्बली ॥२॥ एकतो गरुडश्चैकोऽन्यतोऽप्यहिकुलानि च । मृगारिको गलकुर्य्यान्मृगकुलाः

॥ ३ ॥ एकत: सहताः सर्वे देवदानवमानवाः । तथान्यतो बाहुबलिः प्रतिमल्लो न विद्यते ॥ ४ ॥ एकतश्च-क्रशालायां चक्र न प्रविशत्यदः । नेच्छत्याज्ञामन्यतो (मितो) बाहु॰ सङ्कटे पतितोऽस्म्यहम् ॥५॥ किंवा बाहुबलिः सोऽप्यमाज्ञां कस्यापि मन्यते । सहते नाम पर्याण केसरी किं कदाचन ॥ ६ ॥ एव विमृशतस्तस्य सेनानीर्जगदे हृदः । स्वामिंस्त्वद्ब (स्तव च) लस्याग्रे त्रैलोक्य च तृणायते ॥ ७ ॥ वैमात्रेय कनीयासमथ बाहुबलिं प्रति । दूत तक्षशिलापुर्यां प्रेषयामास पार्थिवः ॥८॥ शैलशृङ्गे सिंहमिवोत्तुङ्गसिंहासने स्थितम् । नत्वा बाहुबलिं दूतो युक्ति-स्यूतमवोचत ॥९॥ त्वमेकः श्लाघ्यसे यस्य ज्येष्ठो भ्राता जगज्जयी । षट्खण्डभरताधीशो लोकोत्तरपराक्रमः ॥१०॥ सूर्योदय इवाम्भोज-खण्डस्य भरतोदयः । श्रिये तवैव किन्त्वस्याभिषेके न त्वमागमः ॥ १२ ॥ ततः कुमार भवतोऽसमागमनकारणम् । त्वद्भ्रातुश्चक्रवर्तित्वाभिषेके के महीभुजः । मङ्गल्योपायनकराः करदीभूय नाययु ॥ ११ ॥ ज्ञातु राज्ञा नयज्ञेनाज्ञापितोऽहमिहागमम् ॥ १३ ॥ नागा यद्यार्जवेनापि तत्र कोऽपि जनः पुनः । तवाविनीततां ब्रूते यच्छिद्रान्वेषिणः खला[1] ॥ १४ ॥ पिशुनाना प्रवेश तद्यत्नाद्रोपयितु तव । आगन्तु युज्यते तत्र का त्रपा स्वाम्युपासने ॥ १५ ॥ भ्रातेति यदि निर्भीको नागास्तदपि नोचितम् । आज्ञासारा न गृह्णन्ते ज्ञातेयेन महीभुज ॥ १६ ॥ अयस्कान्तैरिवायासि देवदानवमानवाः । कृष्टास्तेजोभिरधुना ह्येक भरतमन्वगुः ॥ १७ ॥ यमर्द्धा-सनदानेन वासवोऽपि सखीयति । सेवामात्रेण त हन्तानुकूलयसि किं नहि ॥ १८ ॥ वीरमानितया यद्वा राजा-नमवमन्यसे । त्व हि तस्मिन् ससैन्योऽपि समुद्रे सक्तुमुष्टिवत् ॥ १९ ॥ लक्षाश्चतुरशीतिस्तद्गजाः शक्रेभसन्निभाः ।

---

१ मृगारिरेको यत्कुर्यात्कुर्यान्मृगकुल न तत् ॥ इति सभवति

सह्याः केणाभिसर्प्पन्तः पर्व्वता इव जङ्गमाः ॥ २० ॥ तावतोऽश्वान् रथांश्चास्य विष्वक् प्लावयतो महीम् । कल्लोलानिव कल्पान्तोदधेः कः स्खलयिष्यति ॥ २१ ॥ तस्य षण्णवतिग्रामकोटिभर्त्तुः पदातयः । कोट्यः षण्णवतिः सिंहा इव त्रासाय कस्य न ॥ २२ ॥ एकः सुषेणसेनानीर्दण्डपाणिः समापतन् । कृतान्त इव किं शक्यः सोढुं देवासुरैरपि ॥ २३ ॥ अमोघं बिभ्रतश्चक्रं चक्रिणो भरतस्य तु । सूर्यस्यैव तमस्तोमः स्तोकिकैव त्रिलोक्यपि ॥ २४ ॥ तेजसा वयसा ज्येष्ठो नृपश्रेष्ठः स सर्वथा । राज्यजीवितकामेन सेव्यो बाहुबले त्वया ॥ २५ ॥ अथ बाहुबलिर्बाहुबलापास्तजगद्बलः । ऊचे भ्रूभङ्गभृद्धीरध्वानोऽर्णव इवापरः ॥ २६ ॥ युक्तं यदुक्तं भवता लोभेन क्षोभणं वचः । दूताः खलु यथावस्थस्वामिवाचिकवाचिनः ॥ २७ ॥ सुरासुरनरेन्द्रार्च्यो न तातोत्तमविक्रमः[1] । श्लाघाहेतुर्मे भरतः कीर्त्तितो दूत नूतनः ॥ २८ ॥ करदीभूय भूपाला नागच्छन्तु कथं नु तम् । दृश्यते न त्वसौ यस्य भ्राता बाहुबलिर्बली ॥ २९ ॥ आवयोर्ननु मार्त्तण्डपङ्करुट्खण्डयोरिव । किं न स्याद्व्यवहितयोरपि प्रीतिः परस्परम् ॥ ३० ॥ सदा मनसि तिष्ठामस्तस्य भ्रातुरहो वयम् । गत्वा किमतिरिच्येत प्रीतिर्नैसर्गिकी हि नः ॥ ३१ ॥ आर्ज्जवान्नागताः सत्यं कौटिल्यं भरतेन किम् । विमृश्यकारिणः सन्तो दूयन्ते किं खलोक्तिभिः ॥३२॥ एक एवावयोः स्वामी भगवानादितीर्थकृत् । तस्मिन्विजयिनि स्वामी कथङ्कारं ममापरः ॥ ३३ ॥ भ्रातास्म्यभीः स चाज्ञेश भ्राज्ञापयतु यद्यलम् । ज्ञातिस्नेहेन किं वज्रं वज्रेण न विदार्यते ॥ ३४ ॥ सुरासुरनरोपास्त्या प्रीतोऽस्त्वेष मयास्य किम् । मार्ग एव क्षमः स्तम्बे रथः सज्जोऽपि भज्यते ॥ ३५ ॥ तातभक्तो महेन्द्रश्चेज्ज्येष्ठं तं तातनन्दनम् । आसयत्यासनस्यार्द्धे स किं तेनापि दृप्यति ॥ ३६ ॥ तेऽन्ये तस्मिन् समुद्रे ये ससैन्याः सक्तुमुष्टिवत् ।

---

१ न तातो न च विक्रमः ।

तेजोभिर्दु'सहोऽहं तु हन्त स्यां वडवानलः ॥ ३७ ॥ पत्तयोऽश्वा रथा नागाः सेनानीर्भरतोऽपि च । मयि सर्व्वे प्रलीयन्ता तेजासीवार्कतेजसि ॥ ३८ ॥ याहि दूत स एवैतु राज्यजीवितकाम्यया । तातदत्तांशतुष्टेन मयैवोपेक्षितास्य भूः ॥ ३६ ॥ दूतेनागत्य विज्ञप्ते यथार्थे तेन तत्क्षणम् । युयुत्सुर्बाहुबलिना भरतोऽथाभ्यषेणयत् ॥ ४० ॥ छादयन्मेदिनीं सैन्यैर्घनत्तुर्द्या घनैरिव । महाबाहुस्ततो बाहुबलिर्भरतमभ्यगात् ॥ ४१ ॥ उभयोरपि वाहिन्योर्महासुभटयादसोः । अन्योऽन्यास्फालितास्त्रोर्म्मि' सम्फेटोऽभूद्भयानकः ॥ ४२ ॥ तत्सैनिकानामन्योऽन्य कुन्ताकुन्ति शराशरि । आमन्त्रितश्राद्धदेवः प्रावर्त्तत रणक्षण ॥ ४३ ॥ पर्यस्याशेषसैन्यानि तूलानीव महाबलः । अभ्येत्य भरत बाहुबलिरेवमवोचत ॥ ४४ ॥ हस्त्यश्वपत्तिघातेन किं मुधा पापदायिना । यद्यल तत्त्वमेकाकी युद्ध्यस्वैकाकिना मया ॥ ४५ ॥ एकाङ्गाजिं प्रतिज्ञाय द्वाभ्यामपि निवारिताः । सैनिका उभयेऽप्यस्थुः पश्यन्तः साक्षिणो यथा ॥ ४६ ॥ ततो दृग्युद्ध आरब्धे निर्निमेषविलोचनौ । देवैरपि नृदेवौ तौ देवाविति वितर्कितौ ॥ ४७ ॥ भरते निर्जिते तत्र साक्षीभूतामर तयोः । वाग्युद्धमभवत्पक्षप्रतिपक्षपरिग्रहात् ॥ ४८ ॥ तत्रापि हीनवादित्व भरते समुपेयुषि । भूभुजौ भुजयुद्धेन युयुधाते महाभुजौ ॥ ४९ ॥ भरतो लम्बमानोऽथ बाहौ बाहुबले' स्थिरे । शाखामृगो महाशाखिशाखायामिव वीक्षितः ॥ ५० ॥ भरतस्य महाबाहोरपि बाहुबलिर्बली । एकेन बाहुना बाहु लतानालमनामयत् ॥ ५१ ॥ आरब्धे मुष्टियुद्धेऽथ येतुर्भरतमुष्टयः । बाहुबलौ समुद्रोर्म्मिघाता इव तटाचले ॥ ५२ ॥ आहतो बाहुबलिना वज्रकल्पेन मुष्टिना । पपात भरतः पृथ्व्यां स्वसैन्याऽश्रुजलै सह ॥ ५३ ॥

( १ ) सम्यीभूतामर तयो ।

मूर्च्छान्ते भरतो बाहुबलिं दण्डेन दर्प्पतः । ताडयामास दन्तीव तिर्यग्दन्तेन पर्वतम् ॥ ५४ ॥ दण्डेन बाहुबलिना निहतो भरतस्ततः । भूम्यामाजानुमग्नोऽस्थान्निखात इव कीलकः ॥ ५५ ॥ किमेष चक्रवर्त्तीति भरतः कृतसंशयः । यावत्संस्मृतवांश्चक्रं तावदागात्करेऽस्य तत् ॥ ५६ ॥ भूमेर्निःसृत्य कोपेन महता भरतेश्वरः । चिक्षेप प्रज्वलच्चक्रं कृतहाहारवं बलैः ॥ ५७ ॥ तच्चक्रं पार्श्वतो बाहुबलेर्भ्रान्त्वा न्यवर्त्तत । दैवतानि हि शस्त्राणि स्वगोत्रे प्रभवन्ति न ॥ ५८ ॥ अक्षत्रं प्रेक्ष्य तद्बाहुबलिः कोपारुणेक्षणः । सचक्रं चूर्णयाम्येनमिति मुष्टिमुदक्षिपत् ॥ ५९ ॥ असाविव कषायैर्धिगहं भ्रातृवधोद्यतः । विजित्य करणग्रामं कषायानेव हन्मि तान् ॥ ६० ॥ इति सञ्जातसंवेगस्तदा तेनैव मुष्टिना । केशानुत्पाटयामास सामायिकमथाददे ॥ ६१ ॥ साधु साध्विति सानन्दं व्याहरन्तः सुरासुराः । उपरिष्टाद्बाहुबलेः पुष्पवृष्टिं वितेनिरे ॥ ६२ ॥ गत्वा भगवतः पार्श्वे ज्ञानातिशयशालिनाम् । कनीयसां सोदराणां विधास्ये वन्दनां कथम् ॥ ६३ ॥ उत्पन्नकेवलज्ञानस्तत्तां यास्यामि पर्षदम् । इति तत्रैव मौनेन सोऽस्थात्प्रतिमया कृती ॥ ६४ ॥ ( युग्मम् ) भरतस्तं तथा दृष्ट्वा विचार्य स्वं कुकर्म च । बभूव न्यञ्चितग्रीवो विविक्षुरिव मेदिनीम् ॥ ६५ ॥ शान्तरसं मूर्त्तमिव भ्रातरं प्रणनाम च । नेत्रयोरश्रुभिः कोष्णैः कोपशेषमिवोत्सृजन् ॥ ६६ ॥ प्रणमन् भरतस्तस्याऽधिकोपास्तिविधित्सया । नखादर्शेषु संक्रान्त्या नानारूप इवाभवत् ॥ ६७ ॥ सुनन्दानन्दनमुनेर्गुणस्तवनपूर्विकाम् । स्वनिन्दामित्यथाकार्षीत्स्वापवादगदौषधीम् ॥ ६८ ॥ धन्यस्त्वं तत्यजे येन राज्यं मदनुकम्पया। पापोऽहं यदसन्तुष्टो दुर्मदस्त्वामुपाद्रवम् ॥ ६९ ॥ स्वशक्तिं ये न जानन्ति ये चान्यायं प्रकुर्वते । जीयन्ते ये च लोभेन तेषामस्मि धुरन्धरः ॥ ७० ॥ राज्यं भवतरोर्बीजं ये न जानन्ति तेऽधमाः । तेभ्योऽप्यहं

विशिष्ये यत्तदमुञ्चन् विदन्नपि ॥ ७१ ॥ त्वमेव पुत्रस्ताताय यस्तातपथमन्वगः । पुत्रोऽहमपि तस्य स्यां चेद्भवामि भवादृशः ॥ ७२ ॥ विषादपङ्कमुत्मार्य पश्चात्तापजलैरिति । तत्पुत्र सोमयशसं तद्राज्ये स न्यवीविशत् ॥ ७३ ॥ तदादिसोमयशोऽभूच्छाखाशतसमाकुलः । तत्तत्पुरुषरत्नानामेकमुत्पत्तिकारणम् ॥ ७४ ॥ ततो बाहुबलिं नत्वा भरतः सपरिच्छदः । पुरीमयोध्यामगमत्स्वराज्यश्रीसहोदराम् ॥ ७५ ॥ दुस्तपं तप्यमानोऽथ तपो बाहुबलिर्मुनिः । वर्षमेकं व्यतीयाय सह प्राग्जन्मकर्मभिः ॥ ७६ ॥ ततश्चामूढलक्ष्येण स्वामिना नाभिसूनुना । ब्राह्मी च सुन्दरी चानुज्ञाते तत्पार्श्वमीयतुः ॥ ७७ ॥ ऊचतुश्च महासत्त्व समस्तर्षाशमनस्तव । न युक्तं त्यक्तसङ्गस्य करिस्कन्धाधिरोहणम् ॥ ७८ ॥ एवम्भूतस्य ते हन्त कथं ज्ञानं प्ररोहति । अधःस्थितकरीषाग्नेः पादपस्येव पल्लवः ॥ ७९ ॥ आत्मनैव विचार्य त्वमुत्तितीर्षुर्भवोदधिम् । हस्तिनोऽस्मादवतर तरण्डादायसादिव ॥ ८० ॥ ततोऽसौ चिन्तयामास कुतस्त्यो हस्तिसङ्गमः । पादपारोहमारूढवल्लीकवपुषो मम ॥ ८१ ॥ त्यजेन्मुद्रां समुद्रोऽपि चलेयुरचला अपि । इमे तु भगवच्छिष्ये भाषेते न मृषा क्वचित् ॥ ८२ ॥ आः ज्ञातमथवाऽस्त्येष मान एव मतङ्गजः । स एव मे ज्ञानफलं बभञ्ज विनयद्रुमम् ॥ ८३ ॥ कथं कनीयसो भ्रातॄन्वन्दे धिगिति चिन्तितम् । तपसा ज्यायसा तेषां मिथ्यादुष्कृतमस्तु मे ॥८४॥ सुरासुरनमस्यस्य गत्वा भगवतोऽन्तिके । वन्दे कनिष्ठानपि तांस्तच्छिष्यपरमाणुवत् ॥ ८५ ॥ अचलत्पादमुत्पाट्य यावत्तावदसौ मुनिः । अवाप केवलज्ञानं द्वारं निर्वाणवेश्मनः ॥ ८६ ॥ करामलकवद्विश्वं कलयन् केवलश्रिया । समीपे स्वामिनोऽध्यास्त सदः केवलभास्वताम् ॥ ८७ ॥ भरतोऽपि महारत्नैश्चतुर्दशभिराश्रितः । चतुःषष्टिसहस्रान्तःपुरो नवनिधीश्वरः ॥ ८८ ॥ धर्मार्थ-

कामान् साम्राज्यसम्पद्वल्लेः फलोपमान् । परस्पराविरोधेन यथाकालमसेवत ॥ ८६ ॥ अन्यदा विहरन् स्वामी जगामाष्टापदाचलम् । भरतोऽपि ययौ तत्र स्वामिपादान्विवन्दिषुः ॥ ६० ॥ सुरासुरार्च्यं समवसरणस्थं जगत्पतिम् । स त्रिः प्रदक्षिणीकृत्य नमस्कृत्येति तुष्टुवे ॥ ६१ ॥ विश्वासमिव मूर्त्तिस्थं सद्वृत्तमिव पिण्डितम् । प्रसादमिव निःशेषजगतामेकतः स्थितम् ॥ ६२ ॥ ज्ञानराशिमिवाध्यक्षं पुण्यस्येव समुच्चयम् । सर्वलोकस्य सर्वस्वमिवैकत्र समाहृतम् ॥ ६३ ॥ वपुःस्थं संयममिवोपकारमिव रूपिणम् । शीलमिव पादचारि क्षमामिव वपुष्मतीम् ॥ ६४ ॥ रहस्यमिव योगस्य विश्ववीर्यमिवैकगम् । सिद्ध्युपायमिवावन्ध्यं कौशल्यमिव केवलम् ॥ ६५ ॥ मैत्रीमिव मूर्त्तिमतीं सदेहां करुणामिव । मुदितामिव पिण्डस्थामुपेक्षामिव रूपिणीम् ॥ ६६ ॥ तपःप्रशमसज्ज्ञानयोगमेकमिवाहृतम् । साक्षाद्वैनयिकमिव सिद्धिं साधारणीमिव ॥ ६७ ॥ व्यापकं हृदयमिव सर्वासां श्रुतसम्पदाम् । नमःस्वस्तिस्वधास्वाहावषडर्थमिवापृथक् ॥ ६८ ॥ विशुद्धधर्म्मनिर्म्माणप्रकर्षमिव केवलम् । समस्ततपसां पिण्डीभूतं फलमिवाखिलम् ॥ ६६ ॥ परभागमिवाशेषगुणराशेरनश्वरम् । उपघ्नमिव निर्विघ्नं श्रेयो निःश्रेयसश्रियः ॥ ५०० ॥ प्रभावस्यैकधामेव मोक्षस्य प्रतिमामिव । कुलवेश्मेव विद्यानां फलं सर्वाशिषामिव ॥ १ ॥ आर्यवर्यचरित्राणामात्मदर्शमिवामलम् । कूटस्थं प्रशममिव जगतो दत्तदर्शनम् ॥ २ ॥ दुःखशान्तेरिव द्वारं ब्रह्मचर्यमिवोज्ज्वलम् । पुण्यैरुपनतं जीवलोकस्यैवैकजीवितम् ॥ ३ ॥ मृत्युव्याघ्रमुखादेतदाक्रष्टुमखिलं जगत् । बाहुं प्रसारितमिव निर्वाणेन कृपालुना ॥ ४ ॥ ज्ञानमन्दरसंक्षुब्धज्ञेयाम्भोधेः समुत्थितम् । अपरं पीयूषमिव देहभाजाममृत्यवे ॥ ५ ॥ विश्वाभयप्रदानेन समाश्वासितविष्टपम् । शरणं त्वां प्रपन्नोऽस्मि प्रसीद परमेश्वर ॥ ६ ॥ तत्र च त्रिज-

गणाथमृषभस्वामिन तत[1]। एकाग्रमनसोपासाश्चक्रे चक्रधरश्चिरम् ॥ ७ ॥ अथाद्रौ तत्र साधूना सहस्रैर्दशभिर्वृत। दीर्घाकालाद्गते पूर्वलक्षे मोक्ष ययौ प्रभुः ॥ ८ ॥ तदा निर्वाणमहिमा चक्रे शक्रादिभिः सुरैः। अस्तोकशोकः शक्रेण भरतेशोऽप्यबोध्यत ॥ ६ ॥ चक्रेऽथ भरतो[2] रत्नमयमष्टापदोपरि। सिंहनिषद्याप्रासादमष्टापदमिवापरम् ॥ १० ॥ तत्र च स्वामिनो मानवर्णसस्थानशोभितम्। रत्नोपलमय बिम्ब स्थापयामास चक्रभृत् ॥ ११ ॥ स्वामिशिष्टनयोर्विंशभावितीर्थकृतामपि। यथावन्मानसस्थानवर्णैर्बिम्बान्यसन्नयत् ॥ १२ ॥ भ्रातॄणां नवनवतेरपि तत्र महात्मनाम्। रचयामास रत्नाश्मस्तूपाननुपमान्नृपः ॥ १३ ॥ पुनरेत्य निजा राजधानीं राजशिरोमणिः। यथावद्राज्यमशिषत्प्रजारक्षणदीक्षितः ॥ १४ ॥ स कर्मभिर्भोगफलैः प्रेर्यमाणो निरन्तरम्। बुभुजे विविधान्भोगान् साक्षादिव दिवस्पतिः ॥ १५ ॥ नेपथ्यकर्म्म निर्म्मातुमपरेद्युरगादसौ। मध्ये शुद्धान्तनारीणा ताराणामिव चन्द्रमा[·] ॥ १६ ॥ तत सर्व्वाङ्गविन्यस्तरत्नाभरणबिम्बितैः। स्त्रीजनैर्युगपत्प्रेम्णा परिरब्ध इवाभवत् ॥ १७ ॥ पश्यन्नसौ स्वमादर्शेऽपश्यत्स्रस्ताङ्गुलीयकाम्। अङ्गुलिं गलितज्योत्स्ना दिवा शशिकलामिव ॥ १८ ॥ ततः प्रोन्निन्ननिर्वेदात्प्रत्यङ्गोज्झितभूषणम्। स्वमपश्यद्गतश्रीक शीर्णपर्णमिव द्रुमम् ॥ १९ ॥ अचिन्तयच्च धिगहो वपुषो भूषणादिभिः। श्रीराहार्येव कुड्यस्य पुस्ताद्यैरिव कर्म्मभिः ॥ २० ॥ अन्तःक्लिन्नस्य विष्टाद्यैर्मलैः स्रोतोभवैर्बहिः। चिन्त्यमान किमप्यस्य शरीरस्य न शोभनम् ॥ २१ ॥ इद शरीरं कर्पूरकस्तूरीप्रभृतीन्यपि। दूषयत्येन पाथोदपयास्यूषरभूरिव ॥ २२ ॥ विरज्य विषयेभ्यो यैस्तेपे मोक्षफल तप। तैरेव फलमेतस्य जगृहे तत्त्व-

(१) प्रभोश्चक्रे सुरासुरै। (२) ततोऽसौ विदधे।

वेदिभिः ॥ २३ ॥ इति चिन्तयतस्तस्य शुक्लध्यानमुपेयुषः । उत्पेदे केवलज्ञानमहो योगस्य जृम्भितम् ॥ २४ ॥ रजोहरणमुख्यानि मुनिचिह्नानि तत्क्षणात् । विनीत उपनीयास्मै नमश्चक्रे दिवस्पतिः ॥ २५ ॥ तद्राज्येऽकृत तत्पुत्रमादित्ययशसं तदा । यदाद्यादित्यवंशोऽयमद्याप्यस्ति महीभुजाम् ॥ ५२६ ॥ १० ॥

स्यान्मतं युक्तं भरतस्य पूर्वजन्मार्जितयोगसमृद्धिबलक्षपिताशुभकर्म्मणः कर्मलेशक्षपणाय योगप्रभाववर्णनम्। यस्तु जन्मान्तरेषु अलब्धरत्नत्रयोऽत एवाक्षपितकर्मा मानुषत्वमात्रमप्यप्राप्तवान्, स कथमनन्तकालप्रचितशुभाशुभकर्मनिर्मूलनमनुभवेत् ।

तत्राह—

**पूर्वमप्राप्तधर्मापि परमानन्दनन्दिता । योगप्रभावतः प्राप मरुदेवा परं पदम् ॥ ११ ॥**

मरुदेवा हि स्वामिनी आसंसारं त्रसत्वमात्रमपि नानुभूतवती किं पुनर्मानुषत्वं तथापि योगबलसमृद्धेन शुक्लध्यानाग्निना चिरसञ्चितानि कर्म्मेन्धनानि भस्मसात्कृतवती ।

यदाह—" जह एगा मरुदेवा अच्चंतं थावरा सिद्धा "[1] । मरुदेवाचरितं चोक्तप्रायम् ॥ ११ ॥

ननु जन्मान्तरेऽपि अकृतक्रूरकर्मणां मरुदेवादीनां योगबलेन युक्तः कर्म्मक्षयः ये त्वत्यन्तक्रूरकर्माणस्तेषु योगः कुण्ठतामप्यासादयेत् । इत्याह—

---

१ यथा एका मरुदेवाऽत्यन्तं स्थावरा सिद्धा.

ब्रह्मस्त्रीभ्रूणगोघातपातकान्नरकातिथेः । दृढप्रहारिप्रभृतेर्योगो हस्तावलम्बनम् ॥ १२ ॥

ब्रह्मणो ब्राह्मणस्य स्त्रिया वनिताया भ्रूणस्य गर्भस्य गर्भिण्याश्च गोर्धेनोस्तेषां घातः स एव पातक तस्मात् । यद्यपि समदर्शिनां ब्राह्मणाब्राह्मणयोः स्त्रीपुरुषयोर्भ्रूणाभ्रूणयोर्गवागवोर्घातेऽविशेषेण पापबन्धः । यदाह—

सव्वो न हिंसियव्वो जह महिपालो तहा उदयपालो । न य अभयदाणवइणा जणोवमाणेण होयव्व ॥ १ ॥

तथापि लोकप्रसिद्ध्यनुरोधेन ब्रह्मेत्याद्युक्तम् । ये हि लौकिका सर्वस्या हिंसायाः पापफल न मन्यन्ते । तेऽपि ब्रह्मादिघातकस्य महापापीयस्ता मन्यन्त एवेति । नरकातिथेर्दृढप्रहारिप्रभृतेर्योगो हस्तावलम्बनम्, तेनैव भवेन मोक्षगमनात् । प्रभृतिग्रहणादन्येऽपि पापकारिणो विदितजिनवचनास्तत एव प्राप्तयोगसम्पदो नरकप्राप्तियोग्यानि कर्माणि निर्मूल्य परमसम्पदमासादितवन्तो द्रष्टव्याः । यदाह—

कूरा वि सहावेण विसयविसवसाणुगा वि होऊण । भावियजिणवयणमणा तेलुक्कसुहावहा होंति ॥ १ ॥ इति ।

तथाहि—

कस्मिंश्चिन्नगरे कश्चिदासीद्द्विजातिरुद्भटः । प्रजासु कर्तुमन्यायान् प्रावर्त्तत स पापधीः ॥ १ ॥ आरक्षपुरुषैरेष ततो निर्वासितः पुरात् । व्याधहस्तमिव श्येनश्चौरपल्लीं जगाम च ॥ २ ॥ नृशंसचरितैस्तैस्तैरात्मनस्तुल्य इत्यसौ ।

---

( १ ) सर्वो न हिंसितव्यो यथा महीपालस्तथा उदयपाल । न च अभयदानव्रतिना जनोपमानेन भवितव्यम् ॥ १ ॥

( २ ) क्रूरा अपि स्वभावेन विषयविषवशानुगा अपि भूत्वा । भावितजिनवचनमनस त्रैलोक्यसुखावहा भवन्ति ॥१॥

चौरसेनाधिपतिना पुत्रत्वेनान्वमन्यत ॥ ३ ॥ चौरसेनापतौ तस्मिन्नवसानमुपेयुषि । तत्पुत्र इति तत्स्थाने स बभूव महाभुजः ॥ ४ ॥ निष्कृपं प्रहरत्येष सर्वेषां प्राणिनां यतः । ततो दृढप्रहारीति नाम्ना निजगदे जनैः ॥ ५ ॥ अन्येद्युर्विश्वकुट्टाकलुण्टाकभटपेटकैः । स कुशस्थलनामानं ग्रामं लुण्टयितुं ययौ ॥ ६ ॥ ब्राह्मणो देवशर्मेति तत्र दारिद्र्यविद्रुतः । अवकेशीफलमिव क्षीरान्नं याचितोऽर्भकैः ॥७॥ पर्यटच्य सकले ग्रामे क्वापि क्वापि स तन्दुलान् । क्वापि क्वापि पयोऽभ्यर्थ्य परमान्नमपीपचत् ॥ ८ ॥ नद्यां स्नातुं ययावेष यावत्तावत् तदोकसि । ते क्रूरतस्कराः पेतुर्दैवं दुर्बलघातकम् ॥ ९ ॥ तेषामेकतमो दस्युरपश्यत्तस्य पायसम् । क्षुधातुरः प्रेत इव तदादाय पलायितः ॥ १० ॥ आच्छिद्यमाने तस्मिंस्तु पायसे जीवितव्यवत् । क्रन्दन्ति डिम्भरूपाणि गत्वा पितरमूचिरे ॥ ११ ॥ व्यात्ताननानामस्माकं दस्युवृन्देन पायसम् । जह्रे प्रसारितदृशामनिलेनेव कज्जलम् ॥ १२ ॥ तदाकर्ण्य वचो विप्रः क्षिप्रं दीप्रः क्रुदग्निना । यमदूत इवादाय परिघं पर्यधावत ॥ १३ ॥ सरोषराक्षसावेशात्समुत्पादितदोर्बलः । हन्तुं प्रववृते दस्यून् परिघेण पशूनिव ॥ १४ ॥ तेनावकरवत्साक्षात्क्षिप्यमाणानवेक्ष्य तान् । वित्रस्यतास्तिरस्कुर्व्वन् दधावे तस्करेश्वरः ॥ १५ ॥ तस्यापि धावतो दैवाद्गतिविघ्नविधायिनी । निरोद्धुं दुर्गतिमिव मार्गे गौरन्तरेऽभवत् ॥१६॥ करालकरवालैकप्रहारेण वराकिकाम् । जघान नृजघन्यस्तां चण्डाल इव निर्घृणः ॥ १७॥ तस्याभ्यापततो रोराद्द्विजातेः स शिरो भुवि । पनसद्रोः फलमिवापातयत्खड्गयष्टिना ॥ १८ ॥ आः पाप निष्कृप कृतं किमेतदिति वादिनी। बाला मासवती तं चाभ्यगात् द्विजकुटुम्बिनी ॥१९॥ तस्या वृक इव च्छाग्या गुर्विण्याः सोऽतिदारुणः। कुष्माण्डदारमुदरं दारयित्वा द्विधाकरोत् ॥ २० ॥ ततो जरायुमध्यस्थं तस्या गर्भं द्विधाकृतम् । स स्फुरन्तं

निरैक्षिष्ट लताया इव पल्लवम् ॥ २१ ॥ तथा सम्पश्यमानस्य तस्य विह्वलचेतसः । कृपा गतकृपस्यापि जज्ञे वल्कमिवाश्मन ॥ २२ ॥ ततो हा तात तातेति हा मातर्मातरित्यपि । विलपन्त समाजग्मुस्तत्काल द्विजबालकाः ॥ २३ ॥ नग्नान् भुग्नानतिक्षामान् श्यामानतिमलेन च । दृष्ट्वा दृढप्रहारी तान् सानुतापमचिन्तयत् ॥ २४ ॥ हहा भ्रता निर्घृणेन दरिद्रौ दम्पती मया । अमी बाला हतास्तोयशोषे जीवन्ति किं झषाः ॥ २५ ॥ क्रूरेण कर्म्मणानेन नेष्यमाणस्य दुर्गतिम् । अघभीतस्य मे क स्यादुपायः शरणं च कः ॥ २६ ॥ इति सञ्चिन्तयन्नेव वैराग्यावेगभागसौ । एनोगदागदङ्कारान्साधूनुद्यान ऐक्षत ॥ २७ ॥ नत्वोवाचेत्यहं पाप्मा भाष्यमाणोऽपि पाप्मने । पङ्किल' स्पृश्यमानोऽपि पङ्किलीकुरुते परम् ॥ २८ ॥ येषामेकतरमपि नरकायैव तान्यहम् । ब्रह्मस्त्रीभ्रूणगोघातपातकान्यकृपो व्यधात्(म्)॥२९॥ मामीदृशमपि त्रातु साधवो यूयमर्हथ। मेघाना वर्षतां स्थानमस्थान वा न किञ्चन ॥ ३० ॥ अथ ते साधवस्तस्मै यतिधर्ममुपादिशन् । सोऽथ च्छायामिवोष्णालुः पापभीरुस्तमाददे ॥ ३१ ॥ न भोक्ष्ये तत्र यत्राह्नि स्मरिष्याम्यस्य पाप्मनः । करिष्ये सर्वथा क्षान्तिं सोऽग्रहीदित्यभिग्रहौ ॥ ३२ ॥ पूर्वावस्कन्दिते तस्मिन्नेव ग्रामे कुशस्थले । कर्मक्षयं चिकीर्षुः स विजहार महामनाः ॥ ३३ ॥

स एवाय कृतच्छद्मा पापः पापीयसामहो । इत्यतर्ज्यत लोकेन स महात्मा दिवानिशम् ॥ ३४ ॥ गोभ्रूणद्विजघात्येष इति लोकेन जल्पता । विशन् गृहेषु भिक्षार्थं श्वेव लोष्टैरकुट्यत ॥ ३५ ॥ स्मार्यमाणः स तत्पापं प्रतिवासरमप्यसौ । शान्तस्वान्तो न भुङ्क्ते स्म किंवा सत्त्वस्य दुष्करम् ॥ ३६ ॥ क्वचित्प्रात क्वचिन्मध्यदिने

( १ ) दिग्धानतिमलेन च ।

सायमपि क्वचित् । स्मार्यमाणः स तत्पापं कुत्राप्यह्नि न भुक्तवान् ॥ ३७ ॥ लोष्टुभिर्यष्टिभिः पांशुवृष्टिभिर्मुष्टिभिर्जनाः । यज्जघ्नुः सोऽधिसेहे तत्सम्यक् चैवमभावयत् ॥ ३८ ॥ आत्मन् यादृक्कृतं कर्म्म तादृशं फलमाप्नुहि । यादृगुप्यते बीजं फलं तादृगवाप्यते ॥ ३९ ॥ यदमी निरनुक्रोशमाक्रोशान्मयि तन्वते । अयत्नेनैव सिद्धा तन्ममेयं कर्म्मनिर्ज्जरा ॥ ४० ॥ मय्याक्रोशाः प्रमोदाय यथैषां मे तथैव हि । यत्प्रीत्या सहमानस्य कर्म्मक्षयविधायिनः ॥ ४१ ॥ यन्मां भर्त्सयतामेषां सुखमुत्पद्यतेऽत्र तत् । उत्पद्यतां भवे हन्त दुर्ल्लभः सुखसङ्गमः ॥ ४२ ॥ अमी मदीयं दुष्कर्म्मग्रन्थिं परुषभाषितैः । क्षारैरिव चिकित्सन्तो नितान्तं सुहृदो मम ॥ ४३ ॥ कुर्व्वन्तु ताडनं हन्त ममैते यदिदं किल । स्वर्णस्येवाग्निसन्तापो मलिनत्वमपोहति ॥ ४४ ॥ कर्षन् दुर्गतिगुप्तेर्मां स्वं प्रक्षिपति तत्र यः । कथं कुप्याम्यहं तस्मै प्रहारानपि कुर्वते ॥ ४५ ॥ मत्पापानि व्यपोहन्ति निजपुण्यव्ययेन ये । कथङ्कारमिवैतेभ्योऽपरः परमबान्धवः ॥ ४६ ॥ वधबन्धादि हर्षाय यन्मे संसारमोचनम् । तदेवानन्तसंसारहेतुरेषां दुनोति माम् ॥ ४७ ॥ केचित्परेषां तोषाय त्यजन्त्यर्थान्वपूंष्यपि । एषां प्रीतिदमाक्रोशहननादि कियन् मम ॥ ४८ ॥ तर्जितोऽहं हतो नाऽस्मि हतो वा नास्मि मारितः । मारितो वा न मे धर्मोऽपहृतो बान्धवैरिव ॥ ४९ ॥ आक्रोशवागधिक्षेपो बन्धनं हननं मृतिः । सह्यं श्रेयोऽर्थिना सर्वं श्रेयो हि बहुविघ्नकम् ॥ ५० ॥ एवं भावयता तेन गर्हता स्वं च दुष्कृतम् । निर्दग्धः सर्वतः कर्म्मराशिः कक्ष इवाग्निना ॥ ५१ ॥ अम्लानं केवलज्ञानमथ लेभे सुदुर्लभम् । अयोगिकेवलिगुणस्थानस्थो मोक्षमाप च ॥ ५२ ॥ योगप्रभावेण दृढप्रहारी यथैष मुक्त्वा नरकातिथि-

(१) स दुर्लभम् ।

त्वम् । पद प्रपेदे परम तथान्योऽप्यसशयानः प्रयतेत योगे ॥ ५२ ॥ १२ ॥

पुनरुदाहरणान्तरेण योगश्रद्धामेव वर्द्धयति ।

**तत्कालकृतदुष्कर्मकर्मठस्य दुरात्मन । गोप्त्रे चिलातीपुत्रस्य योगाय स्पृहयेन्न क ॥१३॥**

तत्कालं तत्क्षण कृत यद्दुष्कर्म स्त्रीवधलक्षण तेन कर्म्मठः कर्मशूरस्तस्य दुरात्मन इति पापकरणकालापेक्ष चिलातीपुत्राभिधानस्य गोप्त्रे दुर्गतिपातरक्षकाय योगाय को न स्पृहयेत् सर्व एव स्पृहयेदित्यर्थः ।

तथाहि—

*क्षितिप्रतिष्ठे नगरे यज्ञदेवोऽभवद्द्विजः । निनिन्द पण्डितम्मन्यः स सदा जिनशासनम् ॥ १ ॥ असहिष्णुश्च तां निन्दा जिगीषु कोऽपि चेल्लकः । गुरुणा वार्यमाणोऽपि त वादार्थमवीवदत् ॥ २ ॥ ईदृशी च प्रतिज्ञा भूद्वादाधिष्ठितयोस्तयोः । येन यो जेष्यते तस्य शिष्यत्व स करिष्यति ॥ ३ ॥ आनीतो निग्रहस्थान बुद्धिकौशलशालिना । विवदन्वादिना तेन यज्ञदेवः पराजितः ॥ ४ ॥ चेल्लको जितकाशी तु यज्ञदेवद्विजन्मना । तदा पूर्वप्रतिज्ञाता परिव्रज्यामजिग्रहत् ॥ ५ ॥ ततः शासनदेव्यैव यज्ञदेवो व्यबोध्यत । चारित्र प्रतिपन्नोऽसि ज्ञानश्रद्धानवान्भव ॥ ६ ॥ व्रत तत प्रभृत्येप यथावत्पालयन्नपि । निनिन्द वस्त्राङ्गमल प्राक्सस्कारो हि दुस्त्यज ॥ ७ ॥ अशाम्यन् ज्ञातयोऽप्यस्य ससर्गेण महात्मन' । प्रावृषेण्याभ्रसम्पर्केणाहिमांशोरिवांशव ॥ ८ ॥ अस्य पाणिगृहीती तु नितान्तमनुरागिणी । उज्झाञ्चकार नो राग नीलीरक्तेव शाटिका ॥ ९ ॥ वश्यो मेऽस्त्विति सा तस्मै पारणे*

कार्म्मणं ददौ । सत्यं रक्ता विरक्ताश्च मारयन्त्येव योषितः ॥ १० ॥ क्षीयमाणः कृष्णपक्षेणेव कार्म्मणकर्म्मणा । स मुनीन्दुर्ययौ स्वर्गं मण्डलं तरणेरिव ॥ ११ ॥ तस्यावसानात् सञ्जातनिर्वेदा सापि गेहिनी । प्रव्रज्यामग्रहीदेकं मानुष्यकतरोः फलम् ॥ १२ ॥ अनालोच्यैव सा पापं पतिव्यसनसम्भवम् । कालं कृत्वा दिवं प्राप दुष्प्रापं तपसा हि किम् ॥ १३ ॥ यज्ञदेवस्य जीवोऽथ च्युत्वा राजगृहे पुरे । धनसार्थपतेश्चेट्याश्चिलात्यास्तनयोऽभवत् ॥ १४ ॥ चिलात्याः पुत्र इत्येष चिलातीपुत्रसंज्ञया । आहूयते स्म लोकेन नाम नान्यत्प्रकाल्पितम् ॥ १५ ॥ यज्ञदेवप्रियाजीवश्च्युत्वाऽनुसुतपञ्चकम् । भद्राया धनभार्यायाः सुसुमेति सुताऽभवत् ॥ १६ ॥ धनो नियोजयामास चिलातीतनयं च तम् । सुसुमायाः स्वदुहितुः बालग्राहककर्म्मणि ॥ १७ ॥ लोकेष्वागांसि चक्रेऽसौ श्रेष्ठ्यभैषीच्च राजतः । स्वामी भृत्यापराधेन यतः स्याद्दण्डभाजनम् ॥ १८ ॥ मन्त्रवित्तं धनश्रेष्ठी सदोपद्रवकारिणम् । गृहान्निर्वासयामास दासेरं दन्दशूकवत् ॥ १९ ॥ सोऽथ सिंहगुहां चौरपल्लीं वल्लीं महागसाम् । ययौ प्रियागाः प्रीतिर्हि तुल्यव्यसनशीलयोः ॥ २० ॥ स नृशंसो नृशंसेन दस्युवृन्देन सङ्गतः । वायुनेवाग्निरभवद्दारुणोऽप्यतिदारुणः ॥ २१ ॥ ततः सिंहगुहाधीशे चौरसेनापतौ मृते । चौरसेनापतिः सोऽभूत्तदर्थमिव निर्मितः ॥ २२ ॥ यौवनं सुसुमाप्याप्ता रूपादिगुणशालिनी । कलाकलापपूर्णाभूत् खेचरीव महीचरी ॥ ॥ २३ ॥ चैलातेयोऽन्यदोचे स्वानस्ति राजगृहे पुरे । श्रेष्ठी धनो ऽनन्तधनो दुहिता चास्य सुसुमा ॥ २४ ॥ तस्करास्तत्र गच्छामो धनं वः सुसुमा तु मे । इति व्यवस्थामास्थाय सोऽगाद्धनगृहं निशि ॥ २५ ॥ प्रयोज्य स्वापनीं विद्यां कीर्त्तयित्वा स्वमागतम् । स धनं ग्राहयामास सुसुमां स्वयमग्रहीत् ॥ २६ ॥ सुप्ताशेषपरीवारः स्नुभिः

पञ्चभिः समम् । अपसृत्य धनस्तस्थौ नयो नयवतां ह्यसौ ॥ २७ ॥ जीवग्राह गृहीत्वा च हृदयेन स सुसुमाम् । चैलातेय' पलायिष्ट सलोप्त्रैर्दस्युभि' सह ॥ २८ ॥ आहूयारक्षपुरुषान् धनश्रेष्ठीत्यभाषत । चौरापहृतवित्तं च प्रत्यानयत सुसुमाम् ॥ २९ ॥ ततो धनः सहारक्षैः पुत्रैश्चायुधपाणिभिः । पुरोगस्त्वमनःस्पर्द्धयेव त्वरितमन्वगात् ॥ ॥ ३० ॥ जल स्थल लता वृक्षानन्यदप्यखिल पथि । पीतोन्मत्तो हैममिव सोऽपश्यत्सुसुमामयम् ॥ ३१ ॥ इतः पीतमितो भुक्तमितः स्थितमितो गतम् । एव वदद्भिः पादिकैः स दस्यूनिकषा ययौ ॥ ३२ ॥ हत हतेति गृह्णीत गृह्णीतेति च भाषिणः । मलिम्लुचानाममिलन्नारक्षपुरुषास्ततः ॥ ३३ ॥ दिशो दिशि प्रणेशुस्ते वित्त त्यक्त्वान्यतस्कराः । सुसुमां स तु नामुञ्चच्चौरो व्याघ्रो मृगीमिव ॥ ३४ ॥ आरक्षपुरुषास्ते तु तद्वित्त प्राप्य पुष्कलम् । व्यावर्त्तन्त कृतार्थो हि सर्वः स्यादन्यथामति ॥ ३५ ॥ उद्वहन् सुसुमामसे लतामिव मतङ्गजः । प्रविवेश महारण्य चिलातीतनयस्ततः ॥ ३६ ॥ सूनुभि पञ्चभिः पञ्चाननैरिव धनोऽन्वगात् । कर्ष्टुं पुत्रीं मुखाद्दस्यो राहोरिन्दुकलामिव ॥३७॥ धने स सविधीभूते मा भवत्वस्य सा मम । सुसुमेति धिया तस्याः शिर'कमलमच्छिनत् ॥३८॥ आकृष्टकरवालोऽसौ हस्तविन्यस्तमस्तकः । तदा यमपुरीद्वारक्षेत्रपाल इवाबभौ ॥ ३९॥ सुसुमायाः कबन्धस्यान्तिके स्थित्वा रुदन् धन' । वारीव बाष्पपूरेण नयनाञ्जलिभिर्ददौ ॥ ४० ॥ तस्याः कबन्धमुत्सृज्य व्यावृत्तःससुतो धनः । शल्यितः शोकशल्येन महाटव्यामथापतत् ॥४१॥ ललाटन्तपतपनतेजस्तापभयादिव । विष्वक् सङ्कुचितच्छायो मध्याह्नश्च ततोऽभवत् ॥ ४२ ॥ शोकश्रमक्षुधातृष्णामध्याह्नातपवह्निभिः । धनः सुताश्च पञ्चाग्निसाधका

---

( १ ) व । (२) सुसुमेति पाठ सर्वत्र साधु । (३) मा ।

इव तेपिरे ॥ ४३ ॥ न जलं न फलं नान्यद्ददृशुर्जीवनौषधम् । मृत्यवे प्रत्युतापश्यंस्ते हिंस्रश्वापदान् पथि ॥
॥ ४४ ॥ आत्मनस्तनयानां च तां पश्यन्विषमां दशाम् । धनश्रेष्ठी पथ्यतुच्छे गच्छन्नेवमचिन्तयत् ॥ ४५ ॥ मम
सर्वस्वनाशोऽभूत्पुत्री प्राणप्रिया मृता । मृत्युकोटिं वयं प्राप्ता धिगहो दैवजृम्भितम् ॥ ४६ ॥ न यत्पुरुषकारेण
साध्यं धीसम्पदा न च । तदेकं दैवमेवेह बलिभ्यो बलवत्तरम् ॥ ४७ ॥ प्रसाद्यते न दानेन विनयेन न गृह्यते ।
सेवयावर्ज्यते नैव केयं दुःसाध्यता विधेः ॥ ४८ ॥ विबुधैर्बोध्यते नैव बलवद्भिर्न रुध्यते । न साध्यते तपस्यद्भिः
प्रतिमल्लोऽस्तु को विधेः ॥४९॥ अहो दैवं मित्रमिव कदाचिदनुकम्पते । कदाचित्परिपन्थीव निःशङ्कं प्रणिहन्ति
च ॥ ५० ॥ विधिः पितेव सर्वत्र कदाचित्परिरक्षति । कदाचित्पीडयत्येव दायाद इव [1]दुर्दमः ॥ ५१ ॥ विधि-
र्नयति मार्गेणामार्गस्थमपि कर्हिचित् । कदाचिन्मार्गगमपि विमार्गेण प्रवर्त्तयेत् ॥ ५२ ॥ आनयेदपि दूरस्थं कर-
स्थमपि नाशयेत् । मायेन्द्रजालतुल्यस्य विचित्रा गतयो विधेः ॥ ५३ ॥ अनुकूले विधौ पुंसां विषमप्यमृतायते ।
विपरीते पुनस्तत्रामृतमेव विषायते ॥ ५४ ॥ स एवं चिन्तयन्नेव प्राप राजगृहं पुरम् । सशोकः सुसुमापुत्र्या
विदधे चौर्ध्वदेहिकम् ॥५५॥ वैराग्याद्व्रतमादाय श्रीवीरस्वामिनोऽन्तिके । दुस्तपं स तपस्तेपे पूर्णायुश्च दिवं ययौ
॥ ५६ ॥ चैलातेयोऽप्यनुरागात्सुसुमाया मुहुर्मुहुः । मुखं पश्यन्नविज्ञातश्रमो याम्यां दिशं ययौ ॥ ५७ ॥ सर्व-
सन्तापहरणं छायावृक्षमिवाध्वनि । साधुमेकं ददर्शासौ कायोत्सर्गजुषं पुरः ॥ ५८ ॥
स स्वेन कर्मणा तेन किञ्चिदुद्विग्नमानसः । तमुवाच समाख्याहि धर्मं संक्षेपतो मम ॥ ५९ ॥ अन्यथा कदली-

(१) दुर्मदः ।

लाव लविष्यामि शिरस्तव । अनेनैव कृपाणेन सुसुमाया इव क्षणात् ॥ ६० ॥ स ज्ञानान्मुनिरज्ञासीद्बोधिबीजमिहाहितम् । अवश्य यास्यति स्फाति पल्वले शालिबीजवत् ॥ ६१ ॥ कार्यः सम्यगुपशमो विवेकः सवरोऽपि च । इत्युक्त्वा चारणमुनिः स पक्षीव खमुद्ययौ ॥ ६२ ॥ पदानि मन्त्रवत्तानि परावर्त्तयतस्ततः । जज्ञे चिलातीपुत्रस्य तदर्थोल्लेख ईदृशः ॥६३॥ क्रोधादीनां कषायाणां कुर्यादुपशम सुधीः ॥ इहा तैरहमाक्रान्तश्चन्दनः पन्नगैरिव ॥ ६४ ॥ चिकित्साम्यद्य तादिमान्महारोगानिवात्मनः । क्षमामृदुत्वऋजुतासन्तोषपरमौषधैः ॥ ६५ ॥ धनधान्यहिरण्यादिसर्वस्वत्यागलक्षणम् । विवेकमेक कुर्वीत बीज ज्ञानमहातरोः ॥ ६६ ॥ तदिद सुसुमाशीर्षं कृपाण च करस्थितम् । सर्वस्वभूत मुञ्चामि केतन पापसम्पदः ॥६७॥ सवरश्चाक्षमनसा विषयेभ्यो निवर्त्तनम् । स मया प्रतिपन्नोऽद्य सयमश्रीशिरोमणि ॥ ६८ ॥ पदार्थं भावयन्नेव सरुद्धसकलेन्द्रियः । समाधिमधिगम्याभून्मनोमात्रैकचेतनः ॥६९॥ ततोऽस्य विस्रगन्धासृक्छटाकवचित वपु । कीटिकाभिः शतच्छिद्र चक्रे दारु घुणैरिव ॥ ७० ॥ पिपीलिकोपसर्गेऽपि स स्तम्भ इव निश्चलः । सार्द्धाहोरात्रयुग्मेन जगाम त्रिदशालयम् ॥७१॥यदाह—

जो तिहिँ पएहिँ धम्म समभिगओ सजम समारूढो । उवसमविवेयसवरचिलाइपुत्त नमसामि ॥ ७२ ॥ अहिसरिया पाएहिँ सोणियगधेण जस्स कीडीओ । खायति उत्तमग त दुक्करकारय वदे ॥७३॥ धीरो चिलाइपुत्तो

---

( १ ) यस्त्रिभि पदै धर्म समभिगत सयम समारूढ । उपशमविवेकसवरचिलातीपुत्र नमस्यामि ॥

( २ ) अधिसृता पादै शोणितगन्धेन यस्य हीनाङ्गच ( कीटिका ) । खादन्ति उत्तमाङ्ग त दुष्करकारक वन्दे ॥

( ३ ) धीरश्चिलातीपुत्र पिपीलिकाभिश्चालनीव कृत । यस्तथापि खाद्यमान प्रतिपन्न उत्तममर्थम् ॥

मुयङ्गलीयाहिं चालणिव्व कश्रो । जो तहवि खज्जमाणो पडिवन्नो उत्तमं अट्ठं ॥ ७४ ॥ अड्ढाइज्जेहिं राइंदिएहिं पत्तं चिलाइपुत्तेण । देविंदामरभवणं अच्छरगणसङ्कुलं रम्मम् ॥ ७५ ॥ चरित्रैरापन्नः श्वपच इव धिक्कारपदवीम्, चिलातीपुत्रोऽसावाधिनरकमासन्नितगतिः । समालम्ब्यैवं यत्रिदिवसदनातिथ्यमगमत्, स एवायं योगः सकलसुखमूलं विजयते ॥ ७६ ॥ १३ ॥

पुनरेव योगमेव स्तौति—

**तस्याजननिरेवास्तु नृपशोर्मोघजन्मनः । अविद्धकर्णो यो योग इत्यक्षरशलाकया ॥ १४ ॥**

न जननमजननिः "नञोऽनिः शापे" ॥ (सिद्धहेमसू०) ५ । ३ । १२७ ॥ इत्यनिः । अस्तु भूयात् । ना चासौ पशुश्च नृपशुस्तस्य नृपशोः । पशुप्रायपुरुषस्य मोघजन्मन इति निष्फलजननस्य, यः, किं? योऽविद्धकर्णः कया अक्षरशलाकया—अक्षराण्येव शलाका कर्णवेधजननी अक्षरशलाका । केनोल्लेखेन यान्यक्षराणि अत एव आह । योग इति योग इत्यक्षरलक्षणशलाकया योऽविद्धकर्णः लोहादिमयशलाकाविद्धकर्णोऽपि । तस्य नृपशोर्वरमजननिर्युक्ता न पुनर्विडम्बनाप्रायं जननमिति ॥ १४ ॥

पुनरपि पूर्वार्द्धेन योगं स्तुत्वा उत्तरार्द्धेन तत्स्वरूपमाह—

**चतुर्वर्गेऽग्रणीर्मोक्षो योगस्तस्य च कारणम् । ज्ञानश्रद्धानचारित्ररूपं रत्नत्रयं च सः ॥१५॥**

---

( ४ ) सार्द्धद्विभिः रात्रिदिनैः प्राप्तं चिलातीपुत्रेण । देवेन्द्रामरभवनं अप्सरोगणसङ्कुलं रम्यम्

चतुर्वर्गोऽर्थकामधर्ममोक्षलक्षणः तस्मिन्नग्रणीः प्रधान मोक्ष । अर्थो हि अर्जनरक्षणनाशव्ययहेतुकदुःखानुषङ्गदूषितत्वान्न चतुर्वर्गेऽग्रणीर्भवति । कामस्तु सुखानुषङ्गलेशाद्यद्यप्यर्थादुत्कृष्यते तथापि विरसावसानत्वात् दुर्गतिसाधनत्वाच्च नाग्रणी । धर्मस्तु ऐहिकामुष्मिकसुखसाधनत्वेन अर्थकामाभ्यां यद्यप्युत्कृष्यते तथापि कनकनिगडरूपपुण्यकर्मबन्धननिबन्धनत्वाद्भवभ्रमणहेतुरिति नाग्रणीः । मोक्षस्तु पुण्यपापक्षयलक्षणो न क्लेशबहुलो न वा विषसम्पृक्तान्नवदापातरमणीयः परिणामदुःखदायी न वा ऐहिकामुष्मिकफलाशंसादोषदूषित इति भवति परमानन्दमयश्चतुर्वर्गेऽग्रणीः य' । तस्य च कारण साधकतम करण योग । तस्य किं रूपमित्याह । रत्नत्रय मरकतादिव्यवच्छेदेनाह । ज्ञानश्रद्धानचारित्ररूपमिति ॥ १५ ॥

रत्नत्रये प्रथम ज्ञानस्वरूपमाह—

**यथावस्थिततत्त्वानां सङ्क्षेपाद्विस्तरेण वा। योऽवबोधस्तमत्राहुः सम्यग्ज्ञानं मनीषिणः ॥१६॥**

यथावस्थितानि नयप्रमाणप्रतिष्ठितस्वरूपाणि यानि तत्त्वानि जीवाजीवाश्रवसंवरनिर्जराबन्धमोक्षलक्षणानि तेषां योऽवबोधस्तत्सम्यग्ज्ञान, स चावबोधः क्षयोपशमविशेषात्कस्यचित्सङ्क्षेपेण कर्मक्षयात् कस्यचिद्विस्तरेण ।

तथाहि—

जीवाजीवावाश्रवश्च संवरो निर्जरा तथा । बन्धो मोक्षश्चेति सप्त तत्त्वान्याहुर्मनीषिणः ॥ १ ॥ तत्र जीवा द्विधा ज्ञेया मुक्तसंसारिभेदत । अनादिनिधनाः सर्वे ज्ञानदर्शनलक्षणाः ॥ २ ॥ मुक्ता एकस्वभावाः

स्युर्जन्मादिक्लेशवर्जिताः । अनन्तदर्शनज्ञानवीर्यानन्दमयाश्च ते ॥३॥ संसारिणो द्विधा जीवाः स्थावरत्रसभेदतः । द्वितयेऽपि द्विधा पर्याप्तापर्याप्तविशेषतः ॥ ४ ॥ पर्याप्तयस्तु षडिमाः पर्याप्तत्वनिबन्धनम् । आहारो वपुरक्षाणि प्राणा भाषा मनोऽपि च ॥ ५ ॥ स्युरेकाक्षविकलाक्षपञ्चाक्षाणां शरीरिणाम् । चतस्रः पञ्च षड्वापि पर्याप्तयो यथाक्रमम् ॥ ६ ॥ एकाक्षाः स्थावरा भूम्यप्तेजोवायुमहीरुहः । तेषां तु पूर्वे चत्वारः स्युः सूक्ष्मा बादरा अपि ॥ ७ ॥ प्रत्येकाः साधारणाश्च द्विप्रकारा महीरुहः । तत्र पूर्वे बादराः स्युरुत्तरे सूक्ष्मबादराः ॥ ८ ॥ त्रसा द्वित्रिचतुष्पञ्चेन्द्रियत्वेन चतुर्विधाः । तत्र पञ्चेन्द्रिया द्वेधा संज्ञिनोऽसंज्ञिनोऽपि च ॥६॥ शिक्षोपदेशालापान्ये जानते तेऽत्र संज्ञिनः । संप्रवृत्तमनःप्राणास्तेभ्योऽन्ये स्युरसंज्ञिनः ॥ १० ॥ स्पर्शनं रसनं घ्राणं चक्षुः श्रोत्रमितीन्द्रियम् । तस्य स्पर्शो रसो गन्धो रूपं शब्दश्च गोचरः ॥ ११ ॥ द्वीन्द्रियाः कृमयः शङ्खा गण्डूपदजलौकसः । कपर्दाः शुक्तिकाद्याश्च विविधाकृतयो मताः ॥ १२ ॥ यूकामत्कुणमत्कोटलिक्षाद्यास्त्रीन्द्रिया मताः । पतङ्गमक्षिकाभृङ्गदंशाद्याश्चतुरिन्द्रियाः ॥ १३ ॥ तिर्यग्योनिभवाः शेषा जलस्थलखचारिणः । नारका मानवा देवाः सर्वे पञ्चेन्द्रिया मताः ॥ १४ ॥ मनोभाषाकायबलत्रयमिन्द्रियपञ्चकम् । आयुरुच्छ्वासनिःश्वासमिति प्राणा दश स्मृताः ॥ १५ ॥ सर्वजीवेषु देहायुरुच्छ्वासा इन्द्रियाणि च । विकलासंज्ञिनां भाषा पूर्णानां संज्ञिनां मनः ॥ १६ ॥ उपपादभवा देवा नारका गर्भजाः पुनः । जरायुपोताण्डभवाः शेषाः सम्मूर्च्छनोद्भवाः ॥ १७॥ सम्मूर्च्छिनो नारकाश्च जीवाः पापा नपुंसकाः । देवास्तु स्त्रीपुंवेदाः स्युर्वेदत्रयजुषः परे ॥ १८ ॥ सर्वे जीवा व्यवहार्यव्यवहारितया द्विधा ।

(१) मनुजाः । (२) देवनारकाः । (३) देवाः स्त्रीपुंसवेदाः ।

सूक्ष्मनिगोदा एवान्त्यांस्तेभ्योऽन्ये व्यवहारिणः ॥ १९ ॥ सचित्त संवृत शीतस्तदन्यो मिश्रितोऽपि वा । विभेदैरान्तरैर्भिन्नो नवधा योनिरङ्गिनाम् ॥ २० ॥ प्रत्येक सप्त लक्षाणि पृथ्वीवार्यग्निवायुषु । प्रत्येकानन्तकायेषु क्रमाद्दश चतुर्दश ॥ २१ ॥ षट् पुनर्विकलाक्षेषु मनुष्येषु चतुर्दश । स्युश्चतस्रश्चतस्रश्च श्वभ्रतिर्यक्सुरेषु तु ॥ २२ ॥ एव लक्षाणि योनीनामशीतिश्चतुरुत्तरा । सर्वज्ञोपज्ञमुक्तानि सर्वेषामपि जन्मिनाम् ॥ २३ ॥ एकाक्षा बादराः सूक्ष्मा पञ्चाक्षा सञ्ज्यसञ्ज्ञिन । स्युर्द्वित्रिचतुरक्षाश्च पर्याप्ता इतरेऽपि च ॥ २४ ॥ एतानि जीवस्थानानि जिनोक्तानि चतुर्दश । मार्गणा अपि तावन्त्यो ज्ञेयास्ता नामतो यथा ॥ २५ ॥ गतीन्द्रियवपुर्योगवेदज्ञानकुदादयः । सयमाहारदृग्लेश्याभव्यसम्यक्त्वसञ्ज्ञिनः ॥ २६ ॥ मिथ्यादृष्टिः सास्वादनसम्यग्मिथ्यादृशावपि । अविरतसम्यग्दृष्टिर्विरताविरतोऽपि च ॥ २७ ॥ प्रमत्तश्चाप्रमत्तश्च निवृत्तिबादरस्ततः । अनिवृत्तिबादरश्चाथ सूक्ष्मसपरायक ॥ २८ ॥ ततः प्रशान्तमोहश्च क्षीणमोहश्च योगवान् । अयोगवानिति गुणस्थानानि स्युश्चतुर्दश ॥ २९ ॥ मिथ्यादृष्टिर्भवेन्मिथ्यादर्शनस्योदये सति । गुणस्थानत्वमेतस्य भद्रकत्वाद्यपेक्षया ॥ ३० ॥ मिथ्यात्वस्यानुदयेऽनन्तानुबन्ध्युदये सति । सास्वादनः सम्यग्दृष्टिः स्यादुत्कर्षात् षडावलीः ॥ ३१ ॥ सम्यक्त्वमिथ्यात्वयोगान्मुहूर्त मिश्रदर्शनः । अविरतसम्यग्दृष्टिरप्रत्याख्यानकोदये ॥ ३२ ॥ विरताविरतस्तु स्यात्प्रत्याख्यानोदये सति । प्रमत्तसयतः प्राप्तसयमो य प्रमाद्यति ॥ ३३ ॥ सोऽप्रमत्तसयतो यः सयमी न प्रमाद्यति । उभावपि परावृत्त्या स्यातामान्तर्मुहूर्त्तिकौ ॥ ३४ ॥ कर्मणां स्थितिघातादीनपूर्वान् कुरुते यत । तस्मादपूर्वकरणः क्षपकः शमकश्च स

( १ ) तेऽन्येऽपि व्यवहारिण ।

॥३५॥ यद्बादरकषायाणां प्रविष्टानामिमं मिथः। परिणामा निवर्त्तन्ते निवृत्तिबादरोऽपि तत् ॥ ३६ ॥ परिणामा निवर्त्तन्ते मिथो यत्र न यत्नतः । अनिवृत्तिबादरः स्यात्क्षपकः शमकश्च सः ॥ ३७ ॥ लोभाभिधः सम्परायः सूक्ष्मः किट्टीकृतो यतः। स सूक्ष्मसम्परायः स्यात्क्षपकः शमकोऽपि च ॥ ३८ ॥ अथोपशान्तमोहः स्यान्मोहस्योपशमे सति । मोहस्य तु क्षये जाते क्षीणमोहं प्रचक्षते ॥ ३९ ॥ सयोगिकेवली घातिक्षयादुत्पन्नकेवलः । योगानां तु क्षये जाते स एवायोगिकेवली ॥ ४० ॥ ॥ इति जीवतत्त्वम् ॥

अजीवाः स्युर्धर्म्माधर्म्मविहायःकालपुद्गलाः । जीवेन सह पञ्चापि द्रव्याण्येते निवेदिताः ॥ ४१ ॥ तत्र कालं विना सर्वे प्रदेशप्रचयात्मकाः । विना जीवमचिद्रूपा अकर्त्तारश्च ते मताः ॥ ४२ ॥ कालं विनास्तिकायाः स्युरमूर्त्ताः पुद्गलं विना । उत्पादविगमध्रौव्यात्मानः सर्वेऽपि ते पुनः ॥ ४३ ॥ पुद्गलाः स्युः स्पर्शरसगन्धवर्णस्वरूपिणः । तेऽणुस्कन्धतया द्वेधा तत्राऽबद्धाः किलाणवः ॥ ४४ ॥ बद्धाः स्कन्धा गन्धशब्दसौक्ष्म्यस्थौल्याकृतिस्पृशः । अन्धकारातपोद्योतभेदच्छायात्मका अपि ॥ ४५ ॥ कर्मकायमनोभाषाचेष्टितोच्छ्वासदायिनः । सुखदुःखजीवितव्यमृत्यूपग्रहकारिणः ॥ ४६ ॥ प्रत्येकमेकद्रव्याणि धर्म्माधर्म्मौ नभोऽपि च । अमूर्त्तानि निष्क्रियाणि स्थिराण्यपि च सर्व्वदा ॥ ४७ ॥ एकजीवपरीमाणसंख्यातीतप्रदेशकौ । लोकाकाशमभिव्याप्य धर्म्माधर्म्मौ व्यवस्थितौ ॥ ४८ ॥ स्वयं गन्तुं प्रवृत्तेषु जीवाजीवेषु सर्वतः । सहकारी भवेद्धर्म्मः पानीयमिव यादसाम् ॥ ४९ ॥ जीवानां पुद्गलानां च प्रपन्नानां स्वयं स्थितिम् । अधर्मः सहकार्येषु यथा च्छायाऽध्वयायिनाम् ॥ ५० ॥ सर्वगं स्वप्रतिष्ठं स्यादाकाशमवकाशदम् । लोकालोकौ स्थितं व्याप्य तदनन्तप्रदेशभाक् ॥ ५१ ॥ लोकाकाशप्रदेशस्था

भिन्नाः कालाणवस्तु ये । भावानां परिवर्त्ताय मुख्यः कालः स उच्यते ॥ ५२ ॥ ज्योतिःशास्त्रे यस्य मानमुच्यते समयादिकम् । स व्यावहारिकः कालः कालवेदिभिरामत ॥५३॥ नवजीर्णादिरूपेण यदमी भुवनोदरे। पदार्थाः परिवर्त्तन्ते तत्कालस्यैव चेष्टितम् ॥ ५४ ॥ वर्त्तमाना अतीतत्वं भाविनो वर्त्तमानताम् । पदार्थाः प्रतिपद्यन्ते कालक्रीडाविडम्बिताः ॥ ५५ ॥

॥ इति अजीवतत्त्वम् ॥

मनोवचनकायानां यत्स्यात्कर्म्म स आश्रव । शुभः शुभस्य हेतुः स्यादशुभस्त्वशुभस्य च ॥ ५६ ॥

॥ इति आश्रवः ॥

सर्वेषामाश्रवाणां यो रोधहेतुः स संवरः । कर्मणां भवहेतूनां जरणादिह निर्जरा ॥ ५७ ॥

॥ इति संवरनिर्जरे ॥

वक्ष्यन्ते भावनास्वेवाश्रवसंवरनिर्जराः । तन्नात्र विस्तरेणोक्ताः पुनरुक्तत्वभीरुभिः ॥ ५८ ॥ सकषायतया जीवः कर्म्मयोग्यांस्तु पुद्गलान् । यदादत्ते स बन्धः स्याज्जीवास्वातन्त्र्यकारणम् ॥ ५९ ॥ प्रकृतिस्थित्यनुभागप्रदेशा विषयोऽस्य तु । प्रकृतिस्तु स्वभावः स्यात् ज्ञानावृत्यादिरष्टधा ॥ ६० ॥ ज्ञानदृष्ट्यावृती वेद्य मोहनीयायुषी अपि। नामगोत्रान्तरायाश्च मूलप्रकृतयो मताः ॥ ६१ ॥ निकर्षोत्कर्षतः कालनियमः कर्म्मणां स्थितिः । अनुभागो विपाकः स्यात्प्रदेशोऽशप्रकल्पनम् ॥ ६२ ॥ मिथ्यादृष्टिरविरतिप्रमादौ च क्रुदादयः । योगेन सह पञ्चैते विज्ञेया बन्धहेतवः ॥ ६३ ॥

॥ इति बन्धतत्त्वम् ॥

अभावे बन्धहेतूनां घातिकर्म्मक्षयोद्भवे । केवले सति मोक्षः स्याच्छेषाणां कर्म्मणां क्षये ॥ ६४ ॥ सुरासुर-

नरेन्द्राणां यत्सुखं भुवनत्रये । स स्यादनन्तभागोऽपि न मोक्षसुखसम्पदः ॥ ६५ ॥ स्वस्वभावजमत्यक्षं यदस्मिन् शाश्वतं सुखम् । चतुर्वर्गाग्रणीत्वेन तेन मोक्षः प्रकीर्त्तितः ॥ ६६ ॥

॥ इति मोक्षतत्त्वम् ॥

मतिश्रुतावधिमनःपर्याया: केवलं तथा । अमीभिः सान्वयैर्भेदैर्ज्ञानं पञ्चविधं मतम् ॥ ६७ ॥ अवग्रहादिभिर्भिन्नं बह्वाद्यैरितरैरपि । इन्द्रियानिन्द्रियभवं मतिज्ञानमुदीरितम् ॥ ६८ ॥ विस्तृतं बहुधा पूर्वैरङ्गोपाङ्गैः प्रकीर्णकैः । स्याच्छब्दलाञ्छितं ज्ञेयं श्रुतज्ञानमनेकधा ॥ ६९ ॥ देवनैरयिकाणां स्यादवधिर्भवसम्भवः । षड्विकल्पस्तु शेषाणां क्षयोपशमलक्षणः ॥ ७० ॥ ऋजुर्विपुल इत्येवं स्यान्मनःपर्ययो द्विधा । विशुद्ध्यप्रतिपाताभ्यां तद्विशेषोऽवगम्यताम् ॥ ७१ ॥ अशेषद्रव्यपर्यायविषयं विश्वलोचनम् । अनन्तमेकमत्यक्षं केवलज्ञानमुच्यते ॥ ७२ ॥ एवं च पञ्चभिर्ज्ञानैर्ज्ञाततत्त्वसमुच्चयः । अपवर्गहेतुरत्नत्रयस्याद्याङ्गभाग्भवेत् ॥ ७३ ॥ भवविटपिसमूलोन्मूलने मत्तदन्ती, जडिमतिमिरनाशे पद्मिनीप्राणनाथः । नयनमपरमेतद्विश्वतत्त्वप्रकाशे, करण[1]हरिणबन्धे वागुरा ज्ञानमेव ॥ ७४ ॥ १६ ॥

द्वितीयं रत्नमाह—

**रुचिर्जिनोक्ततत्त्वेषु सम्यक्श्रद्धानमुच्यते । जायते तन्निसर्गेण गुरोरधिगमेन वा ॥ १७ ॥**

जिनोक्तेषु तत्त्वेषु जीवादिषूक्तस्वरूपेषु या रुचिस्तत् श्रद्धानम् । न हि ज्ञानमित्येव रुचिं विना फलसिद्धिः ।

१ करणानि—इन्द्रियाणि.

शाकाभादिस्वरूपवेदिनाऽपि रुचिरहितेन न सौहित्यंलक्षण फलमवाप्यते । श्रुतज्ञानवतोऽप्यङ्गारमर्दकादेरभव्यस्य दूरभव्यस्य वा जिनोक्ततत्त्वेषु रुचिरहितस्य न विवक्षित फलमुपश्रूयते । तस्य चोत्पादे द्वयी गतिः निसर्गोऽधिगमश्च । निसर्गे स्वभावो गुरूपदेशादिनिरपेक्षः सम्यक्श्रद्धानकारणम् । तथाहि—

अनाद्यनन्तसंसारावर्त्तवर्तिषु देहिषु । ज्ञानदृष्ट्यावृतिवेदनीयान्तरायकर्मणाम् ॥ १ ॥ सागरोपमकोटीनां कोट्यस्त्रिंशत्परा स्थितिः । विंशतिर्गोत्रनाम्नोश्च मोहनीयस्य सप्ततिः ॥ २ ॥ ततो गिरिसरिद्ग्रावघोलनान्यायतः स्वयम् । एकाब्धिकोटिकोट्यूना प्रत्येकं क्षीयते स्थितिः ॥ ३ ॥ शेषाब्धिकोटिकोट्यन्तःस्थितौ सकलजन्मिनः । यथाप्रवृत्तिकरणाद्ग्रन्थिदेशं समियति ॥ ४ ॥ रागद्वेषपरीणामो दुर्भेदो ग्रन्थिरुच्यते । दुरुच्छेदो दृढतरः काष्ठादेरिव सर्वदा ॥ ५ ॥ ग्रन्थिदेशं तु संप्राप्ता रागादिप्रेरिताः पुनः । उत्कृष्टबन्धयोग्याः स्युश्चतुर्गतिजुषोऽपि ते ॥ ६ ॥ तेषां मध्ये तु ये भव्या भाविभद्राः शरीरिणः । आविष्कृत्य परं वीर्यमपूर्वकरणे कृते ॥ ७ ॥ अतिक्रामन्ति सहसा तं ग्रन्थिं दुरतिक्रमम् । अतिक्रान्तमहाध्वानो घट्टभूमिमिवाध्वगाः ॥ ८ ॥ अथानिवृत्तिकरणादन्तरकरणे कृते । मिथ्यात्वं विरलीकुर्युर्वेदनीयं यदग्रतः ॥९॥ आन्तर्मुहूर्त्तिकं सम्यग्दर्शनं प्राप्नुवन्ति यत् । निसर्गहेतुकमिदं सम्यक्श्रद्धानमुच्यते ॥ १० ॥ गुरूपदेशमालम्ब्य सर्वेषामपि देहिनाम् । यत्तु सम्यक्श्रद्धानं तत्स्यादधिगमजं परम् ॥ ११ ॥ यमप्रशमजीवातुर्बीजं ज्ञानचरित्रयोः । हेतुस्तपःश्रुतादीनां सद्दर्शनमुदीरितम् ॥ १२ ॥ श्लाघ्यं हि चरणज्ञानवियुक्तमपि दर्शनम् । न पुनर्ज्ञानचारित्रे मिथ्यात्वविषदूषिते ॥ १३ ॥ ज्ञानचारित्रहीनोऽपि श्रूयते

१ तृप्तिलक्षणम्. २ नदीतीरभूमिम्.

श्रेणिकः किल । सम्यग्दर्शनमाहात्म्यात्तीर्थकृत्त्वं प्रपत्स्यते ॥१४॥ अधृतचरणबोधाः प्राणिनो यत्प्रभावा-दसमसुखनिधानं मोक्षमासादयन्ति । भवजलनिधिपोतं दुःखकान्तारदावम्, अयत तदिह सम्यग्दर्शनं रत्नमेकम् ॥१५॥१७॥

तृतीयं रत्नमाह—

**सर्वसावद्ययोगानां त्यागश्चारित्रमिष्यते । कीर्त्तितं तदहिंसादिव्रतभेदेन पञ्चधा ॥ १८ ॥**

सर्वे न तु कतिपये ये सावद्ययोगाः सपापव्यापारास्तेषां त्यागो ज्ञानश्रद्धानपूर्वकं परिहारः स सम्यक्चारित्रं ज्ञानदर्शनविनाकृतस्य चारित्रस्य सम्यक्चारित्रत्वानुपपत्तेः । सर्वग्रहणं देशचारित्रव्यवच्छेदार्थम् । इदं च चारित्रं मूलोत्तरगुणभेदेन द्विविधं कीर्त्तितमित्यादिना मूलगुणरूपं चारित्रमाह । पञ्चधेति व्रतभेदेन, न तु स्वरूपतः ॥१८॥

मूलगुणानेव कीर्त्तयति—

**अहिंसासूनृतास्तेयब्रह्मचर्यापरिग्रहाः । पञ्चभिः पञ्चभिर्युक्ता भावनाभिर्विमुक्तये ॥ १९ ॥**

अहिंसादयश्च पञ्चापि प्रत्येकं पञ्चविधभावनाभ्यर्हिताः सन्तः स्वकार्यजननं प्रति अप्रतिबद्धसामर्थ्या भवन्तीति पञ्चभिरित्याद्युक्तम् ॥ १९ ॥ प्रथमं मूलगुणमाह—

**न यत्प्रमादयोगेन जीवितव्यपरोपणम् । त्रसानां स्थावराणां च तदहिंसाव्रतं मतम् ॥२०॥**

प्रमादोऽज्ञानसंशयविपर्ययरागद्वेषस्मृतिभ्रंशयोगदुष्प्रणिधानधर्मानादरभेदादष्टविधः । तद्योगात्त्रसानां स्थावराणां च जीवानां प्राणव्यपरोपणं हिंसा । तन्निषेधादहिंसा प्रथमं व्रतम् ॥ २० ॥

द्वितीयमाह—

**प्रिय पथ्य वचस्तथ्य सूनृतव्रतमुच्यते। तत्तथ्यमपि नो तथ्यमप्रिय चाहित च यत् ॥ २१॥**

तथ्य वचोऽमृषारूपमुच्यमान सूनृतव्रतमुच्यते। कि विशिष्ट तथ्य ? प्रिय पथ्य च, तत्र प्रिय यत् श्रुतमात्र प्रीणयति, पथ्य यदायतौ हितम्। ननु तथ्यमेवैक विशेषणमस्तु सत्यव्रताधिकारात् प्रियपथ्ययोस्तु कोऽधिकारः? अत आह–तत्तथ्यमपीति व्यवहारापेक्षया तथ्यमपि यदप्रिय यथा चौर प्रति चौरस्त्व कुष्ठिन प्रति कुष्ठी त्वमिति तदप्रियत्वान्न तथ्यम्। तथ्यमप्यहित यथा मृगयुभिः पृष्टस्यारण्ये मृगान् दृष्टवतो मया मृगा दृष्टा इति तज्जन्तुघातहेतुत्वान्न तथ्यम् ॥ २१ ॥

तृतीयमाह—

**अनादानमदत्तस्यास्तेयव्रतमुदीरितम्। बाह्याः प्राणा नृणामर्थो हरता तं हता हि ते ॥२२॥**

वित्तस्वामिना अदत्तस्य वित्तस्य यदनादान तदस्तेयव्रतम्। तच्च स्वामिजीवतीर्थकरगुर्वदत्तभेदेन चतुर्विधम्। तत्र स्वाम्यदत्त तृणोपलकाष्ठादिक तत्स्वामिना यददत्तम्। जीवादत्त यत्स्वामिना दत्तमपि जीवेनादत्त यथा प्रव्रज्यापरिणामविकलो मातापितृभ्यां पुत्रादिर्गुरुभ्यो दीयते। तीर्थकरादत्त यत्तीर्थकरैः प्रतिषिद्धमाधाकर्मिकादि गृह्यते। गुर्वदत्त नाम स्वामिना दत्तमाधाकर्म्मिकादिदोषरहित गुरूननुज्ञाप्य यद्गृह्यते। नन्वहिंसापरिकरत्व सर्व्वव्रतानामदत्तादाने तु केव हिंसा येनाहिंसापरिकरत्व स्यादित्युक्त बाह्या प्राणा इत्यादि। यदि स्तेयस्य प्राणहरणस्वरूप मृग्यते तदा तदस्त्येव ॥ २२ ॥

चतुर्थमाह—

**दिव्यौदारिककामानां कृतानुमतिकारितैः । मनोवाक्कायतस्त्यागो ब्रह्माष्टादशधा मतम् ॥२३॥**

दिवि भवा दिव्याः ते च वैक्रियशरीरसम्भवाः । औदारिकाश्च औदारिकतिर्यग्मनुष्यदेहप्रभवास्ते च ते काम्यन्त इति कामाश्च तेषां त्यागो ऽब्रह्मनिषेधात्मकं ब्रह्मचर्यव्रतम् । तच्चाष्टादशधा मनसा अब्रह्म न करोमि न कारयामि कुर्वन्तमपि परं नानुमन्ये । एवं च वचसा कायेन वेति दिव्ये ब्रह्मणि नव भेदाः । एवमौदारिकेऽपीत्यष्टादश । यदाह—

दिव्यात्कामरतिसुखात् त्रिविधं त्रिविधेन विरतिरिति नवकम् ।
औदारिकादपि तथा तद्ब्रह्माष्टादशविकल्पम् ॥ १ ॥ इति ॥

कृतानुमतिकारितैरिति मनोवाक्कायत इति च मध्ये कृतत्वात्पूर्वोत्तरेष्वपि महाव्रतेषु सम्बन्धनीयम् ॥ २३ ॥

पञ्चममाह—

**सर्वभावेषु मूर्च्छायास्त्यागः स्यादपरिग्रहः । यदसत्स्वपि जायेत मूर्च्छया चित्तविप्लवः ॥२४॥**

सर्वभावेषु द्रव्यक्षेत्रकालभावरूपेषु यो मूर्च्छाया गार्द्ध्यस्य त्यागो न तु द्रव्यादित्यागमात्रं सोऽपरिग्रहव्रतम् । ननु परिग्रहत्यागोऽपरिग्रहव्रतं स्यात् किं मूर्छात्यागलक्षणेन तल्लक्षणेन ? अत आह—यदसत्स्वपीति । यस्मादसत्स्वप्यविद्यमानेष्वपि द्रव्यक्षेत्रकालभावेषु मूर्च्छया चित्तविप्लवः स्यात् । चित्तविप्लवः प्रशमसौख्यविपर्यासः ।

असत्यपि धने धनगर्द्धवतो राजगृहनगरद्रमकस्येव चित्तसंक्लेशो दुर्गतिपातनिबन्धनं भवति । सत्यपि वा द्रव्यक्षेत्रकालभावलक्षणे सामग्रीविशेषे तृष्णाकृष्णाहिनिरुपद्रवमनसां प्रशमसुखप्राप्त्या चित्तविप्लवाभावः । अत एव धर्म्मोपकरणधारिणां यतीनां शरीरे उपकरणे च निर्ममत्वानामपरिग्रहत्वम् । यदाह—

यद्वत्तुरगः सत्स्वप्याभरणभूषणेष्वनभिषक्तः । तद्वदुपग्रहवानपि न सङ्गमुपयाति निर्ग्रन्थः ॥ १ ॥

यथा च धर्म्मोपकरणवतामपि मूर्च्छारहितानां मुनीनां न परिग्रहग्रहित्वदोषस्तथा व्रतिनीनामपि गुरूपदिष्टधर्म्मोपकरणधारिणीनां रत्नत्रयवतीनां, तेन तासां धर्म्मोपकरणपरिग्रहमात्रेण मोक्षापवादः प्रलापमात्रम् ॥२४॥

पञ्चभिः पञ्चभिर्युक्ता भावनाभिर्विमुक्तये इत्युक्तं तत्प्रस्तौति—

**भावनाभिर्भावितानि पञ्चभिः पञ्चभिः क्रमात् । महाव्रतानि नो कस्य साधयन्त्यव्ययं पदम् ।२५।**

भाव्यन्ते वास्यन्ते गुणविशेषमारोप्यन्ते महाव्रतानि यकाभिस्ता भावनाः ॥ २५ ॥

अथ प्रथमव्रतस्य भावना आह—

**मनोगुप्त्येषणादानेर्याभिः समितिभिः सदा । दृष्टान्नपानग्रहणेनाहिंसां भावयेत् सुधीः ॥२६॥**

मनोगुप्तिर्वक्ष्यमाणलक्षणा तयेत्येका भावना । एषणा विशुद्धपिण्डग्रहणलक्षणा तस्यां या समितिः । आदानग्रहणेन निक्षेप उपलक्ष्यते । तेन पीठादेर्ग्रहणे स्थापने च या समितिः । ईरणमीर्या गमनं तत्र या समितिः । आभिरेषणादानेर्य्यासमितिभिर्दृष्टयोरन्नपानयोर्ग्रहणेनोपलक्षणत्वात् तद्ग्रासेनाहिंसां भावयेदिति सम्बन्धः । इह

च गुप्तिसमितीनां महाव्रतभावनात्वेन गतार्थानामपि अथवा पञ्चसमितीत्यादिग्रन्थेन पुनरुत्कीर्त्तनं गुप्तिसमितीनामुत्तरगुणत्वज्ञापनार्थम् । यदाह—

पिण्डस्स जा विसोही समिईओ भावणा तवो दुविहो । पडिमा अभिग्गहो चिय उत्तरगुणमोविहाणाहिं ॥१॥

इह च मनोगुप्तेर्भावनात्वं हिंसायां मनोव्यापारस्य प्राधान्यात् । श्रूयते हि प्रसन्नचन्द्रराजर्षिर्मनोगुप्त्याऽभाविताहिंसाव्रतो हिंसामकुर्व्वन्नपि सप्तमनरकपृथ्वीयोग्यं कर्म्म निर्ममे । एषणादानेर्यासमितयस्तु अहिंसायां नितरामुपकारिण्य इति युक्तं भावनात्वम् । दृष्टान्नपानग्रहणं च संसक्तान्नपानपरिहारेणाहिंसाव्रतोपकारायेति पञ्चमी भावना ॥ २६ ॥ द्वितीयव्रतस्य भावना आह—

**हास्यलोभभयक्रोधप्रत्याख्यानैर्निरन्तरम् । आलोच्य भाषणेनापि भावयेत्सूनृतव्रतम् ॥२७॥**

हसन् हि मिथ्या ब्रूयात्, लोभपरवशश्चार्थाकाङ्क्षया, भयार्त्तः प्राणादिरक्षणेच्छया, क्रुद्धः क्रोधतरलितमनस्कतया मिथ्या ब्रूयादिति हास्यादिप्रत्याख्यानानि चतस्रो भावनाः । आलोच्य भाषणं सम्यग्ज्ञानपूर्व्वकं पर्य्यालोच्य मृषा मा भूदिति मोहतिरस्कारद्वारेण भाषणं पञ्चमी भावना । मोहस्य च मृषावादहेतुत्वं प्रतीतमेव । यदाह—" रागाद्वा द्वेषाद्वा मोहाद्वा वाक्यमुच्यते ह्यनृतमिति " ॥ २७ ॥

तृतीयव्रतस्य भावना आह—

---

१ पिण्डस्य या विशोधिः समितयो भावनास्तपो द्विविधम् । प्रतिमा अभिग्रहश्चैव उत्तरगुणविधानानि (प्रकाराः) ॥१॥

आलोच्यावग्रहयाश्चाभीक्ष्णावग्रहयाचनम् । एतावन्मात्रमेवैतदित्यवग्रहधारणम् ॥ २८ ॥
समानधार्मिकेभ्यश्च तथावग्रहयाचनम् । अनुज्ञापितपानान्नाशनमस्तेयभावनाः ॥२९॥ (युग्मम्)

आलोच्य मनसा विचिन्त्यावग्रह याचेत । देवेन्द्रराजगृहपतिशय्यातरसाधर्मिकभेदाद्धि पञ्चावग्रहाः । अत्र च पूर्व पूर्वो बाध्य उत्तर उत्तरो बाधकः । तत्र देवेन्द्रावग्रहो यथा सौधर्म्माधिपतेर्दक्षिणलोकार्धं ईशानाधिपते रुत्तरलोकार्धम् । राजा चक्रवर्त्ती तस्यावग्रहो भारतादिवर्षम् । गृहपतिर्मण्डलाधिपतिस्तस्यावग्रहस्तन्मण्डलादि । शय्यातरो वसतिस्वामी तदवग्रहो वसतिरेव । साधर्मिकाः साधवस्तेषामवग्रहः शय्यातरप्रदत्त गृहादि । एतानव ग्रहान् ज्ञात्वा यथायथमवग्रह याचेत । अस्वामियाचेन हि परस्परविरोधेन अकाण्डघाटनादय ऐहिका दोषाः परलोकेऽपि अदत्तपरिभोगजनित पापकर्म्म । इति प्रथमा भावना । सकृद्दत्तेऽप्यवग्रहे स्वामिना अभीक्ष्ण भूयो भूयोऽवग्रहयाचन कार्यं पूर्व्वलब्धेऽवग्रहे ग्लानाद्यवस्थामूत्रपुरीषोत्सर्गपात्रकरचरणप्रक्षालनस्थानानि दातृचित्त पीडापरिहारार्थं याचनीयानि । इति द्वितीयभावना । एतावन्मात्रमेव एतावत्परिमाणमेवैतत् क्षेत्रादि ममोपयोगि नाधिकमिति अवग्रहस्य धारण व्यवस्थापनम् । एवमवग्रहधारणे हि तदभ्यन्तरवर्त्तिनीमूर्ध्वस्थानादिक्रियामासेवमानो न दातुरुपरोधकारी भवति । याच्ञाकाल एवावग्रहानवधारणे विपरिणतिरपि दातुश्चेतसि स्यादात्मनोऽपि चादत्तपरिभोगजनितकर्म्मबन्धः स्यादिति तृतीयभावना । धर्मं चरन्तीति धार्मिकाः समानास्तुल्याः प्रतिपन्नैक-शासना, साधवस्तेभ्यः पूर्वपरिगृहीतक्षेत्रेभ्योऽवग्रहो याच्यस्तदनुज्ञानाद्धि तत्रासितव्य, अन्यथा स्तेय स्यादिति

चतुर्थी भावना। अनुज्ञापिते अनुज्ञया स्वीकृते ये पानान्ने तयोरशनं सूत्रोक्तेन हि विधिना प्रासुकमेषणीयं कल्पनीयं च पानान्नं लब्धमानीयालोचनापूर्वं गुरवे निवेद्यानुज्ञातो गुरुणा मण्डल्यामेकको वाऽश्नीयात्। उपलक्षणमेतत् यत्किञ्चिदौघिकौपग्राहिकभेदमुपकरणं धर्मसाधनं तत्सर्वं गुरुणाऽनुज्ञातं परिभोक्तव्यम्। एवं विदधानो नातिक्रामत्यस्तेयव्रतमिति पञ्चमी भावना।

चतुर्थव्रतभावना आह—

**स्त्रीषण्ढपशुमद्वेश्मासनकुड्यान्तरोज्झनात्। सरागस्त्रीकथात्यागात्प्राग्रतस्मृतिवर्जनात्॥३०॥**

**स्त्रीरम्याङ्गेक्षणस्वाङ्गसंस्कारपरिवर्जनात्। प्रणीतात्यशनत्यागाद् ब्रह्मचर्यं तु भावयेत्॥३१॥**

**( युग्मम् )**

स्त्रियो देवमानुषभेदाद्द्विविधाः एताश्च सचित्ताः। अचित्तास्तु पुस्तलेप्यचित्रकर्मादिनिर्मिताः। पण्ढास्तृतीयवेदोदयवर्त्तिनो महामोहकर्माणः स्त्रीपुंससेवनाभिरताः। पशवास्तिर्यग्योनिजाः। तत्र गोमहिषीवडवावालेयी[1]अजाऽविकादयः सम्भाव्यमानमैथुनाः। एभ्यः कृतद्वन्द्वेभ्यो मतुः स्त्रीषण्ढपशुमती च ते वेश्मासने च वेश्म-वसतिः, आसनं-संस्तारकादि, कुड्यान्तरं यत्रान्तरस्थोऽपि कुड्यादौ दम्पत्योर्मोहनादिशब्दः श्रूयते ब्रह्मचर्यभङ्गभयादेषामुज्झनं त्यागः। इति प्रथमा भावना। सरागस्य मोहोदयवतो या स्त्रीभिः कथा स्त्रीणां वा कथा सरागाश्च ताः

१ बालेयी—गर्दभी.

स्त्रियश्च ताभिस्तासां वा कथा तस्यास्त्यागः। रागानुबन्धिनी हि देशजातिकुलनेपथ्यभाषागतिविभ्रमेङ्गितहास्यलीलाकटाक्षप्रणयकलहशृङ्गाररसानुविद्धा कथा वात्येव चित्तोदधेरवश्य विक्षोभमादधातीति द्वितीया भावना। प्राक् प्रव्रज्याब्रह्मचर्यात् पूर्वं गृहस्थावस्थाया यद्वृत्त स्त्रीभिः सह निधुवन तस्य स्मृतिस्तस्या वर्जन, प्राग्रतस्मरणेन्धनाद्धि कामाग्निः सन्धुक्ष्यते। इति तृतीया भावना। स्त्रीणामविवेकिजनापेक्षया यानि रम्याणि स्पृहणीयान्यङ्गानि मुखनयनस्तनजघनादीनि तेषामीक्षणमपूर्वविस्मयरसनिर्भरतया विस्फारिताक्षस्य विलोकनम्। ईक्षणमात्र तु रागद्वेषरहितस्यादुष्टमेव। यदाह—

अशक्य रूपमद्रष्टु चक्षुर्गोचरमागतम्। रागद्वेषौ तु यौ तत्र तौ बुधः परिवर्जयेत्॥ १॥ इत्यादि॥

तथा स्वस्यात्मनोऽङ्ग शरीर तस्य सस्कारः स्नानविलेपनधूपननखदन्तकेशसम्मार्जनादिः, स्त्रीरम्याङ्गेक्षण च स्वाङ्गसस्कारश्च तयोः परिवर्जनात्। स्त्रीरम्याङ्गेक्षणतरलितविलोचनो हि दीपशिखाया शलभ इव विनाशमुपयाति। अशुचिशरीरसस्कारमूढो हि तत्तदुत्कलिकामयैर्विकल्पैर्वृथात्मानमायासयतीति चतुर्थी भावना। प्रणीतो वृष्यः[1] स्निग्धमधुरादिरसः। अत्यशनमप्रणीतस्याऽपि रूक्षभैक्षस्याकण्ठमुदरपूरण तयोस्त्यागो निरन्तरवृष्यमधुरस्निग्धरसप्रणीतो हि प्रधानधातुपरिपोषेण वेदोदयादब्रह्माऽपि सेवेत। अत्यशनस्य तु न केवल ब्रह्मक्षतिकारित्वाद्वर्जन शरीरपीडाकारित्वादपि। यदाह—

अद्धमसणस्स सव्वजणस्स कुज्जा दगस्स दो भागे। वाउपवियारणट्ठा छब्भाय ऊणग कुज्जा॥ १॥[2]

---

१ वीर्यवर्धकः २ अर्धमशनस्य सव्यञ्जनस्य कुर्यादुदकस्य द्वौ भागौ। वायुप्रविचारणार्थं षष्ठभागमूनक कुर्यात्॥१॥

इति पञ्चमी भावना। एवं नवविधब्रह्मचर्यगुप्तिसंग्रहेण ब्रह्मचर्यव्रतस्य पञ्च भावनाः ॥ ३० ॥ ३१ ॥

पञ्चमव्रतस्य भावना आह—

**स्पर्शे रसे च गन्धे च रूपे शब्दे च हारिणि। पञ्चस्वितीन्द्रियार्थेषु गाढं गार्द्ध्यस्य वर्जनम् ॥३२॥**

**एतेष्वेवामनोज्ञेषु सर्वथा द्वेषवर्ज्जनम्। आकिञ्चन्यव्रतस्यैवं भावनाः पञ्च कीर्त्तिताः ॥३३॥**

**( युग्मम् )**

स्पर्शादिषु मनोहारिषु विषयेषु यद्गाढं गार्द्ध्यस्याभिष्वङ्गस्य वर्जनम्। स्पर्शादिष्वेवामनोज्ञेष्विन्द्रियप्रतिकूलेषु यो द्वेषोऽप्रीतिलक्षणस्तस्य वर्जनम्। गार्द्ध्यवान् हि मनोज्ञे विषयेऽभिष्वङ्गवानमनोज्ञान्विषयान्विद्वेष्टि मध्यस्थस्य तु मूर्च्छारहितस्य न क्वचित्प्रीतिरप्रीतिर्वा, रागानान्तरीयकतया च द्वेषस्योपादानम्। किञ्चन बाह्याभ्यन्तरपरिग्रहरूपं नास्यास्तीत्यकिञ्चनस्तद्भाव आकिञ्चन्यमपरिग्रहता। आकिञ्चन्यं च तद्व्रतं च तस्यैताः पञ्च भावनाः ॥ ३२ ॥ ३३ ॥

मूलगुणरूपचारित्रमभिधायोत्तरगुणरूपं तदाह—

**अथवा पञ्चसमितिगुप्तित्रयपवित्रितम्। चरित्रं सम्यक्चारित्रमित्याहुर्मुनिपुङ्गवाः ॥३४॥**

समितिरिति पञ्चानां चेष्टानां तान्त्रिकी संज्ञा। अथवा सं सम्यक् प्रशस्ता अर्हत्प्रवचनानुसारेण इतिः चेष्टा समितिः पञ्चानां समितीनां समाहारः पञ्चसमिति। गुप्तिरात्मनः संरक्षणं मुमुक्षोर्योगनिग्रह इत्यर्थः। गुप्तीनां त्रयं गुप्तित्रयं पञ्चसमिति च गुप्तित्रयं च ताभ्यां पवित्रितं यच्चरित्रं यतीनां चेष्टा सा सम्यक्चारित्रमुच्यते। सम्यक्प्र-

वृत्तिलक्षणा समितिः प्रवृत्तिनिवृत्तिलक्षणा गुप्तिरित्यनयोर्विशेषः ॥ ३४ ॥

अथ समितीर्गुप्तीश्च नामत आह—

**ईर्याभाषैषणादाननिक्षेपोत्सर्गसञ्ज्ञिकाः। पञ्चाहुः समितीस्तिस्रो गुप्तीस्त्रियोगनिग्रहात् ॥३५॥**

ईर्यासमितिर्भाषासमितिरेषणासमितिरादाननिक्षेपसमितिरुत्सर्गसमितिरित्येता पञ्च समितीर्ब्रुवते तीर्थकराः। त्रिसंख्या योगास्त्रियोगा मनोवाक्कायव्यापारास्तेषां निग्रहो निरोधः प्रवचनविधिना मार्गेव्यवस्थापनमुन्मार्गनिवारणं च। निग्रहादिति हेतौ पञ्चमी तेन मनोगुप्तिर्वचनगुप्तिः कायगुप्तिरिति तिस्रो गुप्तीर्ब्रुवते ॥३५॥—ईर्यालक्षणमाह—

**लोकातिवाहिते मार्गे चुम्बिते भास्वदंशुभिः। जन्तुरक्षार्थमालोक्य गतिरीर्या मता सताम् ॥३६॥**

त्रसस्थावरजन्तुजाताभयदानदीक्षितस्य मुनेरावश्यके प्रयोजने गच्छतो जन्तुरक्षानिमित्तं स्वशरीररक्षानिमित्तं च पादाग्रादारभ्य युगमात्रक्षेत्रं यावत् निरीक्ष्य ईरणमीर्या गतिस्तस्यां समितिरीर्यासमितिः। यदाहुः—

पुरओ जुगमायाए पेहमाणो महिं चरे। वज्जंतो बीयहरियाइं पाणे य दगमट्टियं ॥ १ ॥

ओवायं विसमं खाणुं विजलं परिवज्जए। सङ्कमेण न गच्छेज्जा विज्जमाणे परक्कमे ॥ २ ॥

गतिश्च मार्गे भवति तस्य विशेषणं लोकातिवाहिते लोकैरतिवाहिते अत्यन्तक्षुण्णे स्पृष्टे चुम्बिते आदित्यकिरणैः।

---

(१) पुरतो युगमात्रया प्रेक्षमाणो महीं चरेत्। वर्जयन् बीजहरितानि प्राणान् च दकमृत्तिकाम् ॥

(२) अवपातं विषमं स्थाणुं विजलं परिवर्जयेत्। सङ्क्रमेण न गच्छेत् विद्यमाने पराक्रमे ॥

प्रथमविशेषणेन परैर्विराधिते मार्गे गच्छतो यतेः षड्जीवनिकायविराधना न भवति उन्मार्गेण न गन्तव्यमिति चाह । तथाविधेऽपि मार्गे रात्रौ गच्छतः सम्पातिमसत्त्वविराधना भवेदिति तत्परिहारार्थं द्वितीयविशेषणम् । एवं विधोपयोगवतश्च गच्छतो मुनेः कथंचित् प्राणिवधेऽपि प्राणिवधपापं न भवति । यदाह—

उच्चालियम्मि पाए इरियासमियस्स सङ्कमट्ठाए । वावज्जेज्ज कुलिङ्गी मरिज्ज तं जोगमासज्ज ॥ १ ॥

न य तस्स तन्निमित्तो बंधो सुहुमो वि देसिओ समए । अणवज्जो उपओगेण सव्वभावेण सो जम्हा ॥२॥

तथा—

जिअदु व मरदु व जीवो अजदाचारस्स निच्छओ हिंसा । पयदस्स णत्थि बंधो हिंसामित्तेण समिदस्स ॥३॥३६॥

भाषासमितिमाह—

**अवद्यत्यागतः सर्वजनीनं मितभाषणम् । प्रिया वाचंयमानां सा भाषासमितिरुच्यते ॥३७॥**

अवद्यानि भाषादोषा वाक्यशुद्ध्यध्ययनप्रतिपादिताः धूर्त्तकामुकक्रव्यादचौरचार्वाकादिभाषितानि च तेषां निर्दम्भतया त्यागस्ततः सर्वजनीनं सर्वजनेभ्यो हितं, मितं स्वल्पमप्यातिबहुप्रयोजनसाधकं तच्च तद्भाषणं च । यदाह—

---

(१) उच्चालिते पादे ईर्यासमितस्य (तेन) संक्रमार्थेन । व्यापद्येत कुलिङ्गी (द्वीन्द्रियादिः) म्रियेत तं योगमासाद्य ॥१॥

(२) न च तस्य तन्निमित्तो बन्धः सूक्ष्मोऽपि दर्शितः समये । अनवद्य उपयोगेन सर्वभावेन स यस्मात् ॥ २ ॥

(३) जीवतु वा म्रियतां वा जीवोऽसदाचारस्य निश्चयतो हिंसा । प्रयतस्य नास्ति बन्धो हिंसामात्रेण समितस्य ॥३॥

महुर निउण थोव कज्जावडिय अगव्वियमतुच्छं । पुव्विं मइसंकलिय भणंति जं धम्मसंजुत्तं ॥ १ ॥

एवंविधं यद्भाषणं सा भाषासमितिः । भाषायां सम्यगितिर्भाषासमितिः । सा च प्रिया अभिमता वाचयमानां मुनीनाम् । यदाहुः—

जा य सच्चा न वत्तव्वा सच्चामोसा य जा मुसा । जा य बुद्धेहिं णाइण्णा ण त भासेज्ज पण्णवं ॥१॥ इति ॥३७॥

एषणासमितिमाह—

द्विचत्वारिंशता भिक्षादोषैर्नित्यमदूषितम् । मुनिर्यदन्नमादत्ते सैषणासमितिर्मता ॥ ३८ ॥

द्वाभ्यामधिका चत्वारिंशत् द्विचत्वारिंशद्भिक्षादोषाः उद्गमोत्पादनैषणालक्षणाः तत्रोद्गमदोषा गृहस्थप्रभवाः षोडश यद्यथा—

आहाकम्मुद्देसियपूईकम्मे अ मीसजाए य । ठवणा पाहुडियाए पाओयरकीयपामिच्चे ॥ १ ॥

परिअट्टिए अभिहडे उब्भिण्णे मालोहडे इय । अच्छिज्जे अणिसिट्ठे अज्झोयरए य सोलसमे ॥ २ ॥

---

( १ ) मधुर निपुण स्तोक कार्यापतितमगर्वितमतुच्छम् । पूर्वं मतिसङ्कलित भणन्ति यद्धर्मसंयुक्तम् ॥

( २ ) या च सत्या न वक्तव्या सत्यामृषा च या मृषा । या च बुद्धैरनाचीर्णा न ता भाषेत प्रज्ञावान् ॥

( ३ ) आधाकर्मौद्देशिकपूतिकर्म च मिश्रजात च । स्थापना प्राभृतिका प्रादुष्कारक्रीतप्रामित्यम् ॥

(४) परिवर्त्तितमभ्याहृतमुद्भिन्न मालापहृतमिति । आच्छेद्यमनिसृष्ट अध्यवपूरकश्च षोडश ॥

आधाय विकल्प्य यतिं मनसि कृत्वा सचित्तस्याचित्तीकरणमचित्तस्य वा पाको निरुक्तादाधाकर्म ॥ १ ॥

उद्देशः साध्वर्थं सङ्कल्पः स प्रयोजनमस्य औद्देशिकं यत्पूर्वकृतमोदनमोदकक्षोदादि तत्साधूद्देशेन दध्यादिना गुडपाकेन च संस्कुर्व्वतो भवति ॥ २ ॥

आधाकर्म्मिकावयवसम्मिश्रं शुद्धमपि यत्तत्पूतिकर्म शुचिद्रव्यमिवाशुचिद्रव्यसम्मिश्रम् ॥ ३ ॥

यदात्मार्थं साध्वर्थं चादित एव मिश्रं पच्यते तन्मिश्रम् ॥ ४ ॥

साधुयाचितस्य क्षीरादेः पृथक्कृत्य स्वभाजने स्थापनं स्थापना ॥ ५ ॥

कालान्तरभाविनो विवाहादेरिदानीं सन्निहिताः साधवः सन्ति तेषामप्युपयोगे भवत्विति बुद्ध्या इदानीमेव करणं समयपरिभाषया प्राभृतिका, सन्निकृष्टस्य विवाहादेः कालान्तरे साधुसमागमनं सञ्चिन्त्योत्कर्षणं वा ॥ ६ ॥

यदन्धकारव्यवस्थितस्य द्रव्यस्य वह्निप्रदीपमण्यादिना भित्त्यपनयनेन वा, बहिर्निष्कास्य द्रव्यधारणेन वा, प्रकटकरणं तत्प्रादुष्करणम् ॥ ७ ॥

यत्साध्वर्थं मूल्येन क्रीयते तत्क्रीतम् ॥ ८ ॥

यत्साध्वर्थमन्नादि उद्यतेकं गृहीत्वा दीयते तत्प्रामित्यकम् ॥ ९ ॥

स्वद्रव्यमर्पयित्वा परद्रव्यं तत्सदृशं गृहीत्वा यद्दीयते तत्परिवर्त्तितम् ॥ १० ॥

गृहग्रामादेः साध्वर्थं यदानीतं तदभ्याहृतम् ॥ ११ ॥

---

(१) दूरनयनम्, विलम्बेन करणमिति यावत् ॥ (२) उद्धारके ॥

कुतुपादिस्थस्य घृतादेर्दानार्थं यत् मृत्तिकाद्यपनयन तदुद्भिन्नम् ॥ १२ ॥
यदुपरिभूमिकातः शिक्यादेर्भूमिगृहाद्वा आकृष्य साधुभ्यो दान तन्मालापहृतम् ॥ १३ ॥
यदाच्छिद्य परकीय हठात् गृहीत्वा स्वामी प्रभुश्चौरो वा ददाति तदाच्छेद्यम् ॥ १४ ॥
यद्गोष्ठीभक्तादि सर्वैरदत्तमननुमत वा एकः कश्चित्साधुभ्यो ददाति तदनिसृष्टम् ॥ १५ ॥
स्वार्थमधिश्रयणे सति साधुसमागमश्रवणात्तदर्थं पुनर्यो धान्यादिवापः सोऽध्यवपूरकः ॥ १६ ॥
उत्पादनादोषा अपि षोडश ते च साधुप्रभवाः । तद्यथा—
धाई दूई निमित्ते आजीववणीवगे तिगिच्छा य । कोहे माणे माया लोभे अ हवन्ति दस एए ॥ १ ॥
पुव्विंपच्छासथवविज्जामन्ते अ चुण्णजोए य । उप्पायणाइ दोसा सोलसमे मूलकम्मे य ॥ २ ॥
बालस्य चीरमज्जनमण्डनक्रीडनाङ्कारोपणकर्मकारिण्यः पञ्च धात्र्यः एतासां कर्म भिक्षार्थं कुर्वतो मुनेर्धात्रीपिण्डः ॥ १ ॥
मिथः सन्देशकथन दूतीत्वं तत्कुर्वतो भिक्षार्थं दूतीपिण्ड' ॥ २ ॥
अतीतानागतवर्तमानकालेषु लाभालाभादिकथन निमित्त तद्भिक्षार्थं कुर्वतो निमित्तपिण्डः ॥ ३ ॥
जातिकुलगणकर्मशिल्पादिप्रधानेभ्य आत्मनस्तत्तद्गुणत्वारोपणा भिक्षार्थमाजीवपिण्डः ॥ ४ ॥

---

(१) धात्री दूती निमित्त आजीववनीपके चिकित्सा च । क्रोधो मानो माया लोभश्च भवन्ति दश एते ॥
(२) पूर्वपश्चात्सस्तवविद्यामन्त्र च चूर्णयोगश्च । उत्पादनाया दोषा षोडशो मूलकर्म च ॥

श्रमणब्राह्मणकृपणातिथिश्वानादिभक्तानां पुरतः पिण्डार्थमात्मानं तत्तद्भक्तं दर्शयतो वनीपकपिण्डः ॥ ५ ॥

वमनविरेचनबस्तिकर्म्मादि कारयतो वैद्यभैषज्यादि सूचयतो वा पिण्डार्थं चिकित्सापिण्डः ॥ ६ ॥

विद्यातपःप्रभावज्ञापनं राजपूजादिख्यापनं क्रोधफलदर्शनं वा भिक्षार्थं कुर्वतः क्रोधपिण्डः ॥ ७ ॥

लब्धिप्रशंसोत्तानस्य परेणोत्साहितस्यावमतस्य वा गृहस्थाभिमानमुत्पादयतो मानपिण्डः ॥ ८ ॥

नानावेषभाषापरिवर्त्तनं भिक्षार्थं कुर्वतो मायापिण्डः ॥ ९ ॥

अतिलोभाद् भिक्षार्थं पर्यटतो लोभपिण्डः ॥ १० ॥

पूर्वसंस्तवं जननीजनकादिद्वारेण पश्चात्संस्तवं श्वश्रूश्वशुरादिद्वारेणात्मपरिचयाऽनुरूपं सम्बन्धं भिक्षार्थं घटयतः पूर्वपश्चात्संस्तवपिण्डः ॥ ११ ॥

विद्यां मन्त्रं चूर्णं योगं च भिक्षार्थं प्रयुञ्जानस्य चत्वारो विद्यादिपिण्डाः—

मन्त्रजपहोमादिसाध्या स्त्रीदेवताधिष्ठाना वा विद्या ॥ १२ ॥

पाठमात्रप्रसिद्धः पुरुषाधिष्ठानो वा मन्त्रः ॥ १३ ॥

चूर्णानि नयनाञ्जनादीनि अन्तर्द्धानादिफलानि ॥ १४ ॥

पादप्रलेपादयः सौभाग्यदौर्भाग्यकरा योगाः ॥ १५ ॥

गर्भस्तम्भगर्भाधानप्रसवस्नपनकमूलरक्षाबन्धनादि भिक्षार्थं कुर्वतो मूलकर्म्मपिण्डः ॥ १६ ॥

गृहिसाधूभयप्रभवा एषणादोषा दश । तद्यथा—

संङ्कियमक्खियनिक्खित्तपिहियसाहरिअदायगुम्मीसे । अपरिणयलित्तछड्डिय एसणदोसा दस हवन्ति ॥१॥
आधाकर्म्मकादिशङ्काकलुषितो यदन्नाद्याददत्ते तच्छङ्कित य च दोष शङ्कते तमापद्यते ॥ १ ॥
पृथिव्युदकवनस्पतिभिः सचित्तैरचित्तैरपि मध्वादिभिर्गर्हितैराश्लिष्ट यदन्नादि तन्म्रक्षितम् ॥ २ ॥
पृथिव्युदकतेजोवायुवनस्पतिषु त्रसेषु च यदन्नाद्यचित्तमपि स्थापित तन्निक्षिप्तम् ॥ ३ ॥
सचित्तेन फलादिना स्थगित पिहितम् ॥ ४ ॥
दानभाजनस्थमयोग्य सचित्तेषु पृथिव्यादिषु निक्षिप्य तेन भाजनेन ददतः संहृतम् ॥ ५ ॥
बालवृद्धपण्डकवेपमानज्वरितान्धमत्तोन्मत्तच्छिन्नकरचरणनिगडितपादुकारूढकण्डकपेषकभर्जककर्त्तकलोठकवीं-खकपिञ्जकदलकव्यालोडकभोजकषड्कायविराधका दातृत्वेन प्रतिषिद्धा या च स्त्री वेलामासवती गृहीतबाला बाल-वत्सा वा एभ्यो अन्नादि गृहीतु साधोर्न कल्पते ॥ ६ ॥
देयद्रव्य खण्डादि सचित्तेन धान्यकणादिना मिश्र ददत उन्मिश्रम् ॥ ७ ॥
देयद्रव्य मिश्रमचित्तत्वेनापरिणमनादपरिणतम् ॥ ८ ॥
वसादिना संसृष्टेन हस्तेन पात्रेण वा ददतोऽन्नादि लिप्तम् ॥ ९ ॥
घृतादि च्छर्दयन् यद्ददाति तत् छर्दित, छर्यमाने घृतादौ तत्रस्थस्यागन्तुकस्य वा सर्वस्य जन्तोर्मधुबिन्दू-दाहरणेन विराधनासम्भवात् ॥ १० ॥

(१) शङ्कितम्रक्षितनिक्षिप्तपिहितसंहृतदायकोन्मिश्रम् । अपरिणतलिप्तछर्दित एषणादोषा दश भवन्ति ॥

तदेवमुद्गमोत्पादनैषणादोषाः संहता द्विचत्वारिंशद्भवन्ति, ते च भिक्षादोषास्तैरदूषितमन्नमशनखाद्यस्वाद्यभेदमुपलक्षणत्वात्पानं सौवीरादि, तथा रजोहरणमुखवस्त्रचोलपट्टपात्रादिस्थविरकल्पिकयोग्यश्चतुर्दशविधो, जिनकल्पिकयोग्यश्च द्वादशविध औधिक उपधिः, आर्यिकायोग्यश्च पञ्चविंशतिविधः। औपग्रहिकश्च शय्यापीठफलकचर्मदण्डादिरुपलक्षणादेव परिगृह्यते। न ह्यौधिकरजोहरणाद्यन्तरेण औपग्रहिकपीठफलकाद्यन्तरेण च वर्षासु हेमन्तग्रीष्मयोरपि जलकणिकाकुलायामनूपभूमौ महाव्रतसंरक्षणं कर्तुं क्षमम्। एतद्दोषविशुद्धमन्नादि यन्मुनिरादत्ते सा एषणा-मेषणा यथागममन्नादेरन्वेषणम्। अत्र "इषोऽनिच्छायाम्" ॥ ५। ३। ११२ ॥ इति स्त्रियामनस्तस्यां च समितिरेषणासमितिः। इयं गवेषणारूपा एषणा, ग्रासैषणाप्यनयोपलक्ष्यते तस्यां च पञ्च दोषाः। तद्यथा—

संयोजना १ प्रमाणातिरिक्तता २ अङ्गारो ३ धूमः ४ कारणाभावश्च ५। तत्र रसलोभाद्द्रव्यस्य मण्डकादेर्द्रव्यान्तरेण खण्डघृतादिना वसतेर्बहिरन्तर्वा योजनं संयोजना ॥ १ ॥ धृतिबलसंयमयोगा यावता न सीदन्ति तदाहारप्रमाणम्। अधिकाहारस्तु वमनाय मृत्यवे व्याधये चेति तं परिहरेदिति प्रमाणातिरिक्ततादोषः ॥ २ ॥ स्वाद्वन्नं तद्दातारं वा प्रशंसन् यद्भुंक्ते सरागाग्निना चारित्रेन्धनस्याङ्गारीकरणादङ्गारो दोषः ॥ ३ ॥ निन्दन् पुनश्चारित्रेन्धनं दहन् धूमकरणाद्धूमो दोषः ॥ ४ ॥ क्षुद्वेदनाया असहनं क्षामस्य च वैयावृत्त्याकरणमीर्यासमितेरविशुद्धिः प्रेक्षोत्प्रेक्षादेः संयमस्य चापालनं क्षुधातुरस्य प्रबलाग्न्युदयात्प्राणप्रहाणशङ्का आर्त्तरौद्रपरिहारेण धर्मध्यानास्थिरीकरणं चेति भोजनकारणानि तदभावे भुञ्जानस्य कारणाभावदोषः ॥ ५ ॥ यदाह—

(१) जलमयभूमौ

उत्पादनोद्गमैषणाधूमांगारप्रमाणकारणत । सयोजनाच्च पिण्ड शोधयतामेषणासमितिः ॥१॥ इति ॥३८॥

आदाननिक्षेपसमितिमाह—

**आसनादीनि संवीक्ष्य प्रतिलिख्य च यत्नतः। गृह्णीयान्निक्षिपेद्वा यत्सादानसमितिः स्मृता ।३९।**

आसन विष्टरः आदिशब्दाद्वस्त्रपात्रफलकदण्डादेः परिग्रहः। तान्यासनादीनि संवीक्ष्य चक्षुषा प्रतिलिख्य रजोहरणादिना यत्नत इत्युपयोगपूर्वकम्। अन्यथा सम्यक्प्रतिलेखना न स्यात्। यदाह—

पडिलेहण कुणतो मिहो कह कुणइ जणवयकह वा। देइ व पच्चक्खाण वाएइ सय पडिच्छइ वा ॥ १ ॥

पुढवीआउकाएतेऊवाऊवणस्सइतसाण। पडिलेहणापमत्तो छण्हपि विराहगो भणिओ ॥ २ ॥

यद्गृह्णीयादाददीत निक्षिपेत् स्थापयेत्संवीक्षितप्रतिलिखितभूमौ सा आदाननिक्षेपसमिति। भीमो भीमसेन इति न्यायादादानसमिति ॥ ३९ ॥ उत्सर्गसमितिमाह—

**कफमूत्रमलप्राय निर्जन्तुजगतीतले। यत्नाद्यदुत्सृजेत्साधुः सोत्सर्गसमितिर्भवेत् ॥ ४० ॥**

कफ॰ श्लेष्मा मुखनासिकासञ्चारी मूत्र प्रश्रवण मलो विष्ठा प्रायग्रहणादन्यदपि परिष्ठापनायोग्य वस्त्रपात्रभक्तपानादि गृह्यते। निर्जन्तुस्त्रसस्थावरजन्तुरहिता स्वय च निर्जन्तुर्या जगती तस्यास्तल स्थण्डिलमित्यर्थ। तत्र

---

(१) प्रतिलेखना कुर्वन् मिथ कथा करोति जनपदकथा वा। ददाति वा प्रत्याख्यान वाचयति स्वय प्रतीच्छति वा ॥

(२) पृथिव्यप्कायतेजोवायुवनस्पतित्रसानाम्। प्रतिलेखनाप्रमत्त षण्णामपि विराधको भणित ॥

यत्नादुपयोगपूर्वकं यदुत्सृजेत्साधुः सोत्सर्गसमितिः ॥ ४० ॥

अथ गुप्तीनामवसरः, तत्र मनोगुप्तिमाह—

**विमुक्तकल्पनाजालं समत्वे सुप्रतिष्ठितम् । आत्मारामं मनस्तज्ज्ञैर्मनोगुप्तिरुदाहृता ॥ ४१ ॥**

इह मनोगुप्तिस्त्रिधा । आर्त्तरौद्रध्यानानुबन्धिकल्पनाजालवियोगः प्रथमा । शास्त्रानुसारिणी परलोकसाधिका धर्म्मध्यानानुबन्धिनी माध्यस्थ्यपरिणतिर्द्वितीया । कुशलाकुशलमनोवृत्तिनिरोधेन योगनिरोधावस्थाभाविन्यात्मारामता तृतीया । ता एतास्तिस्रोऽपि विशेषणत्रयेणाह–विमुक्तकल्पनाजालमिति समत्वे सुप्रतिष्ठितमिति आत्मारामिति च एवंविधं मनो मनोगुप्तिः ॥ ४१ ॥

वाग्गुप्तिमाह—

**संज्ञादिपरिहारेण यन्मौनस्यावलम्बनम् । वाग्वृत्तेः संवृतिर्वा या सा वाग्गुप्तिरिहोच्यते ॥४२॥**

संज्ञा मुखनयनभ्रूविकाराङ्गुल्याच्छोटनादिका अर्थसूचिकाश्चेष्टाः आदिशब्दाल्लोष्टक्षेपोर्ध्वीभावकासितहुङ्कृतादीनि गृह्यन्ते । संज्ञादीनां यः परिहारस्तेन यन्मौनमभाषणं तस्यावलबनमभिग्रहः । संज्ञादिना हि प्रयोजनानि सूचयतो मौनं निष्फलमेवेत्येका वाग्गुप्तिः । वाचनप्रच्छनपृष्टव्याकरणादिषु लोकागमाविरोधेन मुखवस्त्रिकाच्छादितवक्त्रस्य भाषमाणस्यापि वाग्वृत्तेः संवृतिर्वाग्विनियन्त्रणं द्वितीया वाग्गुप्तिः । आभ्यां भेदाभ्यां वाग्गुप्तेः सर्वथा वाग्निरोधः सम्यग्भाषणं च स्वरूपं प्रतिपादितं भवति, भाषासमितौ तु सम्यग्वाक्प्रवृत्तिरेवेति वाग्गुप्तिभाषासमित्योर्भेदः ।

यदाहुः—

समिओ नियमा गुत्तो गुत्तो समियत्तणम्मि भयणिज्जो । कुसलवयमुईरंतो ज वइगुत्तो वि समिओ वि ॥ १ ॥८२॥

अथ कायगुप्तिः सा च द्विधा चेष्टानिवृत्तिलक्षणा यथासूत्र चेष्टानियमलक्षणा च, तत्राद्यामाह—

उपसर्गप्रसङ्गेऽपि कायोत्सर्गजुषो मुनेः । स्थिरीभावः शरीरस्य कायगुप्तिर्निगद्यते ॥ ४३ ॥

उपसर्गा देवमानुषतिर्यक्कृता उपद्रवाः । उपलक्षणत्वात् क्षुत्पिपासादय परीषहा अपि गृह्यन्ते तेषां प्रसङ्गः सन्निपातः । अपि शब्दात्तदभावेऽपि मुनेः साधो कायः शरीर तस्योत्सर्गस्त्यागस्तत्र निरपेक्षतालक्षणस्तं जुषते तस्य कायोत्सर्गजुषो यः स्थिरीभावो निश्चलता योगनिरोध कुर्वतः सर्वथा शरीरचेष्टापरिहारो वा यः, सा कायगुप्तिः ॥ ४३ ॥

द्वितीयामाह—

शयनासननिक्षेपादानचङ्क्रमणेषु यः । स्थानेषु चेष्टानियमः कायगुप्तिस्तु साऽपरा ॥ ४४ ॥

शयनमागमोक्तो निद्राकालः स च रात्रावेव न दिवा । अन्यत्र ग्लानाध्वश्रान्तवृद्धादेः । तत्रापि प्रथमयामेऽतिक्रान्ते गुरूनापृच्छय प्रमाणयुक्तायां वसतौ संवीक्ष्य प्रमृज्य च भूमिं संहत्यास्तीर्य च संस्तरणपट्टकद्वयमूर्ध्वमधश्च काय सपाद मुखवस्त्रिकारजोहरणाभ्या प्रमृज्यानुज्ञापितसंस्तारकावस्थानः पठितपञ्चनमस्कारसामायिकसूत्रः

१ समितो नियमाद्गुप्तो गुप्त समितत्वे भजनीय । कुशलवाचमुदीरयन् यत् वाग्गुप्तोऽपि समितोऽपि ॥ १ ॥

कृतवामबाहूपधान आकुञ्चितजानुकः कुक्कुटीवद्वियति प्रसारितजङ्घो वा प्रमार्जितक्षोणीतलन्यस्तचरणो वा भूयः सङ्कोचसमये प्रमार्जितसंदंशकः उद्वर्त्तनकाले च मुखवस्त्रिकाप्रमृष्टकायो नात्यन्ततीव्रनिद्रः शयीत । प्रमाणयुक्ता तु वसतिर्हस्तत्रयप्रमिते भूप्रदेशे प्रत्येकं सभाजनानां साधूनां यत्रावस्थानं सकलावकाशपूरणं च स्यात् । आसन-मुपवेशनं तद्यत्र प्रदेशे चिकीर्षितं तं चक्षुषा निरीक्ष्य प्रमृज्य च रजोहरणेन बहिर्निषद्यामास्तीर्योपविशेत् उपविष्टोऽप्याकुञ्चनप्रसारणादि तथैव कुर्वीत वर्षादिषु च वृषीपीठादिषूक्तयैव सामाचार्योपविशेत् । निक्षेपादाने च दण्डाद्युपकरणविषये ते अपि प्रत्यवेक्ष्य प्रमृज्य च विधेये । चंक्रमणं गमनं तदप्यावश्यकप्रयोजनवतः साधोः पुरस्ताद्युगमात्रप्रदेशसन्निवेशितदृष्टेरप्रमत्तस्य त्रसस्थावरभूतानि संरक्षतोऽत्वरया पदन्यासमाचरतः प्रशस्तं । स्थान-मूर्ध्वस्थितिलक्षणमवष्टम्भादि च प्रत्यवेक्षितप्रमार्जितप्रदेशविषयम् । एतेषु चेष्टानियमः स्वच्छन्दचेष्टापरिहारो यः सा अपरा द्वितीया कायगुप्तिरिति ॥ ४४ ॥

एतासामागमप्रसिद्धं मातृत्वमुपदर्शयति—

**एताश्चारित्रगात्रस्य जननात्परिपालनात्। संशोधनाच्च साधूनां मातरोऽष्टौ प्रकीर्त्तिताः ॥४५॥**

एताः समितिगुप्तयः शास्त्रेऽष्टौ मातर इति प्रसिद्धाः । मातृत्वे हेतूनाह । साधूनां सम्बन्धि चारित्रमेव गात्रमङ्गं तस्य जननादभूतस्य प्रादुर्भावनात् । जनितस्य च चारित्रगात्रस्य परिपालनात्सर्वोपद्रवनिवारणेन पोषणेन च वृद्धिनयनात् । चारित्रगात्रस्यैवातिचारमलिनस्य सतः संशोधनान्निर्मलीकरणादिति ॥ ४५ ॥

चारित्रं व्याख्यायोपसंहरति—

सर्वात्मना यतीन्द्राणामेतच्चारित्रमीरितम्। यतिधर्मानुरक्तानां देशतः स्यादगारिणाम् ॥४६॥

द्विधा चारित्र सर्वदेशभेदात् । सर्वात्मना चारित्र सर्वसावद्ययोगविरतिलक्षणम् । यतीन्द्राणामनगारिश्रेष्ठानामेतन्मूलगुणोत्तरगुणस्वरूपमीरितम्। धातूनामनेकार्थत्वात्प्रतिपादितम्। देशचारित्र तु केषामित्याह। अगारिणां गृहस्थानां देशत एकदेशविरतिलक्षणम् । किं विशिष्टानामगारिणां ? यतिधर्मानुरक्तानां यतिधर्मे सर्वविरतिचारित्र रूपे अनुरक्तानां सहननादिदोषादकुर्वतामपि प्रीतिमताम् । यदाह—सर्वविरतिलालसः खलु देशविरतिपरिणामः यतिधर्मानुरागरहितानां तु गृहस्थानां देशविरतिरपि न सम्यगिति देशतः स्यादगारिणामित्युक्तम् ॥ ४६ ॥

तत्र यादृशो गृहस्थो धर्माधिकारी तादृशमुपदर्शयितु तथाहीत्यनेन प्रस्तावनामाह, तथाहीत्युपदर्शने निपातसमुदायः—

न्यायसम्पन्नविभव शिष्टाचारप्रशंसक.। कुलशीलसमै. सार्द्धं कृतोद्वाहोऽन्यगोत्रजैः ॥४७॥
पापभीरु प्रसिद्ध च देशाचार समाचरन् । अवर्णवादी न क्वापि राजादिषु विशेषत.॥४८॥
अनतिव्यक्तगुप्ते च स्थाने सुप्रातिवेश्मिके । अनेकनिर्गमद्वारविवर्जितनिकेतनः ॥ ४६ ॥
कृतसङ्गः सदाचारैर्मातापित्रोश्च पूजकः । त्यजन्नुपप्लुतं स्थानमप्रवृत्तश्च गर्हिते ॥ ५० ॥
व्ययमायोचितं कुर्वन् वेषं वित्तानुसारतः। अष्टभिर्धीगुणैर्युक्तः शृण्वानो धर्ममन्वहम् ॥५१॥

अजीर्णे भोजनत्यागी काले भोक्ता च सात्म्यतः । अन्योऽन्याप्रतिबन्धेन त्रिवर्गमपि साधयन् ।५२।
यथावदतिथौ साधौ दीने च प्रतिपत्तिकृत् । सदानभिनिविष्टश्च पक्षपाती गुणेषु च ॥५३॥
अदेशाकालयोश्चर्यां त्यजन् जानन् बलाबलम् । वृत्तस्थज्ञानवृद्धानां पूजकः पोष्यपोषकः ॥५४॥
दीर्घदर्शी विशेषज्ञः कृतज्ञो लोकवल्लभः । सलज्जः सदयः सौम्यः परोपकृतिकर्मठः ॥ ५५ ॥
अन्तरङ्गारिषड्वर्गपरिहारपरायणः । वशीकृतेन्द्रियग्रामो गृहिधर्म्माय कल्पते ॥ ५६ ॥

( दशभिः कुलकम् )

स्वामिद्रोहमित्रद्रोहविश्वासितवञ्चनचौर्यादिगर्ह्यार्थोपार्जनपरिहारेणार्थोपार्जनोपायभूतः स्वस्ववर्णानुरूपः सदाचारो न्यायस्तेन सम्पन्न उत्पन्नो विभवः सम्पद्यस्य स तथा । न्यायसम्पन्नो हि विभव इहलोकहिताय । अशङ्कनीयतया स्वशरीरेण तत्फलभोगान्मित्रस्वजनादौ संविभागकरणाच्च । यदाह—

सर्व्वत्र शुचयो धीराः स्वकर्म्मबलगर्विताः । कुकर्म्मनिहतात्मानः पापाः सर्वत्र शङ्किताः ॥ १ ॥

परलोकहिताय च सत्पात्रेषु विनियोगाद्दीनादौ कृपया वितरणाच्च । अन्यायोपात्तस्तु लोकद्वयेऽप्यहितायैव । इहलोके हि लोकविरुद्धकारिणो वधबन्धादयो दोषाः परलोके नरकादिगमनादयः । यद्यपि कस्यचित्पापानुबन्धिपुण्यकर्म्मवशादैहलौकिकी विपन्न दृश्यते तथाप्यायत्यामवश्यम्भाविन्येव । यदाह—

पापेनैवार्थरागान्ध फलमाप्नोति यत् क्वचित् । बडिशामिषवत्तत्तमविनाश्य न जीर्यति ॥ १ ॥

न्याय एव परमार्थतोऽर्थोपार्जनोपायोपनिषत् । यदाह—

निपानमिव मण्डूकाः सरः पूर्णमिवाण्डजाः । शुभकर्माणमायान्ति विवशाः सर्वसम्पदः ॥ १ ॥

विभवश्च च गार्हस्थ्ये प्रधान कारणमित्यादौ न्यायसम्पन्नविभव इत्युक्तम् ॥ १ ॥

तथा शिष्टाचारप्रशसकः शिष्यन्ते स्म शिष्टा वृत्तस्थज्ञानवृद्धसेवोपलब्धविशुद्धशिक्षाः पुरुषविशेषास्तेषामाचारश्चरितम् । यथा—

लोकापवादभीरुत्व दीनाभ्युद्धरणादरः । कृतज्ञता सुदाक्षिण्य सदाचारः प्रकीर्त्तितः ॥ १ ॥ इत्यादि ।

तस्य प्रशसकः । यथा—

विपद्युच्चैः स्थेय पदमनुविधेय च महतां, प्रिया न्याय्या वृत्तिर्मलिनमसुभङ्गेऽप्यसुकरम् ॥
असन्तो नाभ्यर्थ्याः सुहृदपि न याच्यस्तनुधनः, सता केनोद्दिष्ट विषममसिधाराव्रतमिदम् ॥ १ ॥ २ ॥

तथा कुल पितृपितामहादिपूर्वपुरुषवश , शील मद्यमांसनिशाभोजनादिपरिहाररूपः समाचारस्ताभ्यां समास्तुल्याः समकुलशीला इत्यर्थः । गोत्र नाम तथाविधैकपुरुषप्रभवो वशस्तत्र जाता गोत्रजाः तेभ्योऽन्येऽन्यगोत्रजास्तैः सार्द्धं कृतोद्वाहो विहितविवाहः । अग्निदेवादिसाक्षिक पाणिग्रहण विवाहः । स च लोकेऽष्टविधः । तत्रालङ्कृत्य कन्यादान ब्राह्मो विवाहः १ । विभवविनियोगेन कन्यादान प्राजापत्यः २ । गोमिथुनदानपूर्वकमार्षः ३ । यत्र यज्ञार्थमृत्विजः कन्याप्रदानमेव दक्षिणा स दैवः ४ । एते धर्म्या विवाहाश्चत्वारः । मातुः पितुर्बन्धूनां

चाप्रामाण्यात्परस्परानुरागेण मिथः समवायाद्गान्धर्वः ५। पणबन्धेन कन्याप्रदानमासुरः ६। प्रसह्य कन्याग्रहणाद्राक्षसः ७। सुप्तप्रमत्तकन्याग्रहणात्पैशाचः ८। एते चत्वारोऽप्यधर्म्याः। यदि वधूवरयोः परस्परं रुचिरस्ति तदा अधर्म्या अपि धर्म्याः। शुद्धकलत्रलाभफलो विवाहः। अशुद्धभार्यादियोगेन नरक एव। तत्फलं वधूरक्षणमाचरतः सुजातसुतसन्ततिरनुपहता चित्तनिवृत्तिर्गृहकृत्यसुविहितत्वमाभिजात्याचारविशुद्धत्वं देवातिथिबान्धवसत्कारानवद्यत्वं चेति। वधूरक्षणोपायास्त्वेते—गृहकर्मविनियोगः १ परिमितोऽर्थसंयोगो २ ऽस्वातन्त्र्यम् ३ सदा च मातृतुल्यस्त्रीलोकावरोधन ४ मिति॥ ३॥

पापानि दृष्टादृष्टापायकारणानि कर्माणि तेभ्यो भीरुः। तत्र दृष्टापायकारणानि चौर्यपारदारिकत्वद्यूतरमणादीनि इहलोकेऽपि सकललोकप्रसिद्धविडम्बनास्थानानि। अदृष्टापायकारणानि मद्यमांससेवनादीनि शास्त्रनिरूपितनरकादियातनाफलानि॥ ४॥

प्रसिद्धः तथाविधापरशिष्टसम्मततया दूरं रूढिमागतः। देशाचारो भोजनाच्छादनादिचित्रक्रियात्मकः सकलमण्डलव्यवहारस्तं सम्यगाचरन्, तदाचारातिलङ्घने हि तद्देशवासिजनतया विरोधसम्भावनादकल्याणलाभः स्यात्।५।

अवर्णोऽश्लाघा तं वदतीत्येवंशीलोऽवर्णवादी न क्वापि जघन्योत्तममध्यमभेदेषु जन्तुषु। परावर्णवादी हि बहुदोषः। यदाह—

परपरिभवपरिवादादात्मोत्कर्षाच्च बध्यते कर्म्म। नीचैर्गोत्रं प्रतिभवमनेकभवकोटिदुर्मोचम्॥ १॥

तदेवं सकलजनगोचरोऽप्यवर्णवादो न श्रेयान्। किं पुना राजामात्यपुरोहितादिषु बहुजनमान्येषु। राजाद्य-

वर्णवादाद्धि वित्तप्राणनाशनादेरपि दोषः स्यात् ॥ ६ ॥

तथा अनेक बहु यन्निर्गमद्वारं उपलक्षणत्वात्तदेव च प्रवेशद्वारं तेन विवर्जितं निकेतनं यस्य स तथा। बहुषु हि निर्गमप्रवेशद्वारेष्वनुपलक्ष्यमाणनिर्गमप्रवेशानां दुष्टलोकानामापाते स्त्रीद्रविणादिविप्लवः स्यात्। अत्र चानेकद्वारतया प्रतिषेधेन विधिराक्षिप्यते। ततः प्रतिनियतद्वारसुरक्षितगृहो गृहस्थः स्यादिति लभ्यते। तथाविधमपि निकेतनं स्थान एव निवेशयितुं युक्तं नास्थाने। स्थानं तु शल्यादिदोषरहितं बहुलदूर्वाप्रवालकुशस्तम्बप्रशस्तवर्णगन्धमृत्तिकासुस्वादुजलोद्गमनिधानादिमच्च। स्थानगुणदोषपरिज्ञानं च शकुनस्वप्नोपश्रुतिप्रभृतिनिमित्तादिबलेन। स्थानमेव विशिनष्टि–अतिव्यक्तमतिप्रकटमातिगुप्तमतिप्रच्छन्नं तन्निषेधादनतिव्यक्तगुप्तम्। तत्र अतिव्यक्ते ह्यसान्निहितगृहान्तरतया परिपार्श्वतो निरावरणतया चौरादयोऽभिभवेयुः। अतिगुप्ते च सर्वतो गृहान्तरैर्निरुद्धत्वान्न स्वशोभां लभते, प्रदीपनकाद्युपद्रवेषु च दुःखनिर्गमप्रवेशं गृहं भवति। पुनः कथंभूते स्थाने? सुप्रातिवेश्मिके शोभना शीलादिसम्पन्नाः प्रातिवेश्मिका यत्र। कुशीलप्रातिवेश्मिकत्वे हि तदालापश्रवणतच्चेष्टादर्शनादिवशात् स्वतः सगुणस्यापि गुणहानिः स्यात्। दुष्प्रातिवेश्मिकास्त्वेते शास्त्रप्रतिषिद्धाः—

खरियातिरिक्खजोणीतालायरसमणमाहणसुसाणा। वग्गुरिअवाहगुम्मियहरिएसपुलिंदमच्छंधा ॥ १ ॥ ७ ॥

तथा कृतः सङ्गो येन स कृतसङ्गः सन् शोभन आचार इहपरलोकहिता प्रवृत्तिर्येषां ते सदाचारास्तैर्न तु कितववधूर्चविटभट्टमण्डनटादिभिस्तत्सङ्गे हि सदपि शीलं विलीयेत। यदाह—

१ खरिका (दासी) तिर्यग्योनितालाचरश्रमणब्राह्मणस्मशानाः। वागुरिकव्याधगौल्मिकहरिकेशपुलिन्द्रमत्स्यन्धाः ॥१॥

यदि सत्सङ्गनिरतो भविष्यसि भविष्यसि । अथासज्जनगोष्ठीषु पतिष्यसि पतिष्यसि ॥ १ ॥
सङ्गः सर्वात्मना त्याज्यः स चेत्त्यक्तुं न शक्यते । स सद्भिः सह कर्त्तव्यः सन्तः सङ्गस्य भेषजम् ॥ २ ॥
॥ इति च ॥ ८ ॥

तथा माता जननी पिता जनकस्तयोः पूजकस्त्रिसन्ध्यं प्रणामकरणेन परलोकहितानुष्ठाननियोजनेन सकलव्यापारेषु तदाज्ञया प्रवृत्त्या वर्णगन्धादिप्रधानस्य पुष्पफलादिवस्तुन उपढौकनेन तद्भोगे भोगेन चान्नादीनामन्यत्र तदनुचितादिति । माता च पिता च मातापितरौ " आ द्वन्द्वे " ॥ ३ । २ । ३९ ॥ इत्यात्वं मातुश्चाभ्यर्हितत्वात्पूर्वनिपातः । यन्मनुः—

उपाध्याया दशाचार्य आचार्याणां शतं पिता । सहस्रं तु पितुर्माता गौरवेणातिरिच्यते ॥ १ ॥ ९ ॥

तथा त्यजन् परिहरन् उपप्लुतं स्वचक्रपरचक्रविरोधाद्दुर्भिक्षमारीतिजनविरोधादेश्चास्वस्थीभूतं यत् स्थानं ग्रामनगरादि । अत्यज्यमाने हि तस्मिन् धर्म्मार्थकामानां पूर्वार्जितानां विनाशेन नवानां चानुपार्जनेनोभयलोकभ्रंश एव स्यात् ॥ १० ॥

तथा गर्हितं देशजातिकुलापेक्षया निन्दितं कर्म्म तत्राप्रवृत्तः । देशगर्हितं यथा—" सौवीरेषु कृषिकर्म्म । लाटेषु मद्यसन्धानम् ।

जात्यपेक्षया यथा—ब्राह्मणस्य सुरापानं तिललवणादिविक्रयश्च । कुलापेक्षया यथा—चौलुक्यानां मद्यपानम् गर्हितकर्म्मकारिणो हि शेषमपि धर्म्यं कर्मोपहासाय भवति ॥ ११ ॥

तथा व्ययो भर्त्तव्यभरणस्वभोगदेवतातिथिपूजनादिप्रयोजने द्रव्यविनियोग । आय कृषिपाशुपाल्यवाणिज्य-सेवादिजनितो द्रव्यलाभः तस्योचितमनुरूप व्यय कुर्वन् । यदाह—

" लाभोचियदाणे लाभोचियभोगे लाभोचियनिहिकरे सिया । "

आयोचितश्च व्ययश्चतुर्भागादितया कैश्चिदुच्यते । यदाह—

पादमायान्निधिं कुर्यात्पाद वित्ताय खट्टयेत् । धर्मोपभोगयोः पाद पाद भर्त्तव्यपोषणे ॥१॥ केचित्त्वाहुः—

आयादर्द्धं नियुञ्जीत धर्मे समधिक ततः । शेषेण शेष कुर्वीत यत्नतस्तुच्छमैहिकम् ॥ १ ॥

आयानुचितो हि व्ययो रोगमिव शरीर कृशीकृत्य विभवसारमखिलव्यवहारासमर्थं पुरुष कुर्वीत । उक्त च—

आयव्ययमनालोच्य यस्तु वैश्रवणायते । अचिरेणैव कालेन सोऽत्र वै श्रमणायते ॥ १ ॥ १२ ॥

तथा वेषो वस्त्रालङ्करणादिभोगः । वित्त विभव उपलक्षणाद्वयोऽवस्थादेशकालजात्यादिग्रहः । तदनुसारेण तदानुरूप्येण कुर्वन्निति सम्बध्यते । विभवाद्यननुसारेण वेष कुर्वतो जनोपहसनीयतातुच्छत्वान्यायसम्भावनादयो दोषाः । अथवा व्ययमायोचित कुर्वन्नेव वेष वित्तानुसारेण कुर्वन्नेवेत्यपरोऽर्थः । यो हि सत्यप्याये कार्पण्याद् व्यय न करोति सत्यपि वित्ते कुचेलत्वादिधर्मा भवति । स लोकगर्हितो धर्मेऽप्यनधिकारीति ॥ १३ ॥

तथा अष्टभिर्धीगुणैर्युक्तः धियो बुद्धेर्गुणाः शुश्रूषादयः । ते त्वमी—

शुश्रूषा श्रवण चैव ग्रहण धारण तथा । ऊहोऽपोहोऽर्थविज्ञान तत्त्वज्ञान च धीगुणा ॥ १ ॥

---

( १ ) लाभोचितदान लाभोचितभोगो लाभोचितनिधिकर स्यात् ।

तत्र शुश्रूषा श्रोतुमिच्छा । श्रवणमाकर्णनम् । ग्रहणं शास्त्रार्थोपादानम् । धारणमविस्मरणम् । ऊहो विज्ञातमर्थमवलम्ब्यान्येषु तथाविधेषु व्याप्त्या वितर्कणम् । अपोह उक्तियुक्तिभ्यां विरुद्धादर्थाद् हिंसादिकात् प्रत्यपायसम्भावनया व्यावर्त्तनम् । अथवा ऊहः सामान्यज्ञानमपोहो विशेषज्ञानम् । अर्थविज्ञानमूहापोहयोगान्मोहसन्देहविपर्यासव्युदासेन ज्ञानम् । तत्त्वज्ञानमूहापोहविज्ञानविशुद्धमिदमित्थमेवेति निश्चयः । शुश्रूषादिभिर्हि उपाहितप्रज्ञाप्रकर्षः पुमान्न कदाचिदकल्याणमाप्नोति । एते च बुद्धिगुणा यथासम्भवं द्रष्टव्याः ॥ १४ ॥

तथा शृण्वानस्ताच्छील्येन धर्ममभ्युदयनिःश्रेयसहेतुः शृण्वन् अन्वहं प्रतिदिनं धर्मश्रवणपरो हि मनःखेदापनोदादिकमाप्नोति । यदाह—

क्लान्तमपोज्झति खेदं तप्तं निर्वाति बुद्ध्यते मूढम् । स्थिरतामेति व्याकुलमुपयुक्तसुभाषितं चेतः ॥ १ ॥

प्रत्यहं धर्मश्रवणं चोत्तरोत्तरगुणप्रतिपत्तिसाधनत्वात्प्रधानमिति श्रवणमात्राद्बुद्धिगुणादस्य भेदः ॥ १५ ॥

तथा अजीर्णे अजरणे पूर्वभोजनस्य अथवा अजीर्णे परिपाकमनागते पूर्वभोजने नवं भोजनं त्यजतीत्येवंशीलः । अजीर्णभोजने हि सर्वरोगमूलस्याजीर्णस्य वृद्धिरेव कृता भवति । यदाह—"अजीर्णप्रभवा रोगा इति" अजीर्णं च लिङ्गतो ज्ञातव्यम् । यदाह—

मलवातयोर्विगन्धो विड्भेदो गात्रगौरवमरुच्यम् । अविशुद्धश्चोद्गारः षडजीर्णव्यक्तलिङ्गानि ॥ १ ॥ १६ ॥

तथा काले बुभुक्षासमये भोक्ता अबाध्युपजीवकः । भोक्तेति साधौ तृन्, तेन लौल्यपरिहारेण यथाग्निबलं मितं भुञ्जीत । अतिरिक्तभोजनं हि वमनविरेचनमरणादिना न साधु भवति, यो हि मितं भुङ्क्ते स बहु भुङ्क्ते ।

अबुभुक्षितेन ह्यमृतमपि भुक्तं भवति विषम् । तथा क्षुत्कालातिक्रमादन्नद्वेषो देहसादश्च भवति । विध्यातेऽग्नौ किं नामेन्धनं कुर्यादिति ।

पानाहारादयो यस्याविरुद्धाः प्रकृतेरपि । सुखित्वायावकल्पन्ते तत्सात्म्यमिति गीयते ॥ १ ॥

एवं लक्षणात्सात्म्यात् आजन्म सात्म्येन भुक्तं विषमपि पथ्यं भवति । परमसात्म्यमपि पथ्यं सेवेत न पुनः सात्म्यप्राप्तमप्यपथ्यम् । सर्वं बलवतः पथ्यमिति मत्वा न कालकूटं खादेत् । सुशिक्षितोऽपि विषतन्त्रज्ञो म्रियत एव कदाचिद्विषात् ॥ १७ ॥

तथा त्रिवर्गो धर्मार्थकामाः तत्र यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः । यतः सर्वप्रयोजनसिद्धिः सोऽर्थः । यत आभिमानिकरसानुविद्धा सर्वेन्द्रियप्रीतिः स कामः । ततोऽन्योऽन्यस्य परस्परं योऽप्रतिबन्धोऽनुपघातस्तेन त्रिवर्गमपि न त्वेकैकं साधयेत् । यदाह—

यस्य त्रिवर्गशून्यानि दिनान्यायान्ति यान्ति च । स लोहकारभस्त्रेव श्वसन्नपि न जीवति ॥ १ ॥

तत्र धर्मार्थयोरुपघातेन तादात्विकविषयसुखलुब्धो वनगज इव को नाम न भवत्यास्पदमापदाम् । न च तस्य धनं धर्म्मः शरीरं वा यस्य कामेऽत्यन्तासक्तिः । धर्मकामातिक्रमाद्धनमुपार्जितं परेऽनुभवन्ति स्वयं तु परं पापस्य भाजनं सिंह इव सिन्धुरवधात् । अर्थकामातिक्रमेण च धर्म्मसेवा यतीनामेव धर्मो न गृहस्थानाम् । न च धर्मबाधयाऽर्थकामौ सेवेत । बीजभोजिनः कुटुम्बिन इव नास्त्यधार्मिकस्यायत्यां किमपि कल्याणम् । स खलु सुखी योऽमुत्र सुखाविरोधेन इहलोकसुखमनुभवति । एवमर्थबाधया धर्मकामौ सेवमानस्य ऋणाधिकत्वम् । कामबाधया

धर्मार्थौ सेवमानस्य गार्हस्थ्याभावः स्यात्। एवं च तादात्विकमूलहरकदर्येषु धर्मार्थकामानामन्योऽन्यबाधा सुलभैव तथाहि—

यः किमप्यसञ्चिन्त्योत्पन्नमर्थमपव्ययति स तादात्विकः। यः पितृपैतामहमर्थमन्यायेन भक्षयति स मूलहरः। यो भृत्यात्मपीडाभ्यामर्थं सञ्चिनोति न तु क्वचिदपि व्ययते स कदर्यः। तत्र तादात्विकमूलहरयोरर्थभ्रंशेन धर्मकामयोर्विनाशान्नास्ति कल्याणं। कदर्यस्य त्वर्थसंग्रहो राजदायादतस्कराणां निधिर्न तु धर्म्मकामयोर्हेतुरिति। अनेन च त्रिवर्गबाधा गृहस्थस्य कर्तुमनुचितेति प्रतिपादितम्। यदा तु दैववशाद्बाधा सम्भवति, तदोत्तरोत्तरबाधायां पूर्वस्य पूर्वस्य बाधा रक्षणीया। तथाहि—कामबाधायां धर्मार्थयोर्बाधा रक्षणीया, तयोः सतोः कामस्य सुकरोत्पादकत्वात्। कामार्थयोस्तु बाधायां धर्मो रक्षणीयः धर्ममूलत्वादर्थकामयोः। उक्तं च—

धर्मश्चेन्नावसीदेत कपालेनापि जीवतः। आढ्योऽस्मीत्यवगन्तव्यं धर्मवित्ता हि साधवः ॥ १ ॥ १८ ॥

तथा न विद्यते सततप्रवृत्तातिविशदैकाकारानुष्ठानतया तिथ्यादिदिनविभागो यस्य सोऽतिथिः। यथोक्तम्—

तिथिपर्वोत्सवाः सर्वे त्यक्ता येन महात्मना। अतिथिं तं विजानीयाच्छेषमभ्यागतं विदुः ॥ १ ॥

साधुः शिष्टाचाररतः सकललोकाऽवगीतः। दीनो दीङ्च् क्षय इति वचनात् क्षीणसकलधर्म्मार्थकामाराधनशक्तिः तेषु प्रतिपत्तिकृत् प्रतिपत्तिरुपचारोऽन्नपानादिरूपः। कथं यथावत् औचित्यानतिक्रमेण। यदाह—

औचित्यमेकमेकत्र गुणानां कोटिरेकतः। विषायते गुणग्राम औचित्यपरिवर्जितः ॥ १ ॥ १६ ॥

तथा अनभिनिविष्टोऽभिनिवेशरहित । अभिनिवेशश्च नीतिपथमनागतस्यापि पराभिभवपरिणामेन कार्यस्यारम्भः । स च नीचाना भवति । यदाह—

दर्प्पं भ्रमयति नीचान्निष्फलनयनिर्गुणदुष्करारम्भैः । स्रोतोविलोमतरणव्यसनिभिरायास्यते मत्स्यैः ॥ १ ॥

अनभिनिविष्टत्व च कादाचित्क शाठ्यान्नीचानामपि सम्भवत्यत आह । सदेति ॥ २० ॥

तथा गुणेषु सौजन्यौदार्यदाक्षिण्यस्थैर्यप्रियपूर्वप्रथमाभिभाषणादिषु स्वपरयोरुपकारकारणेष्वात्मधर्मेषु पक्षपाती । पक्षपातस्तु बहुमानवत्प्रशसासाहाय्यकरणादिना अनुकूला प्रवृत्तिः । गुणपक्षपातिनो हि जीवा अवन्ध्यपुण्यबीजनिषेकेणेहामुत्र च गुणग्रामसम्पदमारोहन्ति ॥ २१ ॥

तथा प्रतिषिद्धो देशोऽदेशः प्रतिषिद्धः कालोऽकालः तयोरदेशाकालयोश्चर्या चरण तां त्यजन् परिहरन् अदेशकालचारी हि चौरादिभ्योऽवश्यमुपद्रवमाप्नोति ॥ २२ ॥

तथा जानन् विदन् बल शक्तिं स्वस्य परस्य वा द्रव्यक्षेत्रकालभावकृत सामर्थ्यम् । अबलमपि तथैव । बलाबलपरिज्ञाने हि सर्वं सफल आरम्भ अन्यथा तु विपर्ययः । यदाह—

स्थाने शमवतां शक्त्या व्यायामे वृद्धिरङ्गिनाम् । अयथाबलमारम्भो निदान क्षयसम्पदः ॥ १ ॥ इति ॥ २३ ॥

तथा वृत्तमनाचारपरिहारः सम्यगाचारपरिपालन च, तत्र तिष्ठन्तीति वृत्तस्था । ज्ञान हेयोपादेयवस्तुविनिश्चयस्तेन वृद्धा महान्तः । वृत्तस्थाश्च ते ज्ञानवृद्धाश्च तेषां पूजकः । पूजा च सेवाञ्जल्यासनाभ्युत्थानादिलक्षणा । वृत्तस्थज्ञानवन्तो हि पूज्यमाना नियमात्कल्पतरव इव सदुपदेशादिफलैः फलन्ति ॥ २४ ॥

तथा पोष्या अवश्यभर्त्तव्या मातृपितृगृहिण्यपत्यादयस्तान् योगक्षेमकरणेन पोषयतीति पोषकः ॥ २५ ॥

तथा दीर्घकालभावित्वाद्दीर्घमर्थमनर्थं च पश्यति पर्यालोचयतीत्येवंशीलो दीर्घदर्शी ॥ २६ ॥

तथा वस्त्ववस्तुनोः कृत्याकृत्ययोः स्वपरयोर्विशेषमन्तरं जानाति निश्चिनोतीति विशेषज्ञः, अविशेषज्ञो हि पुरुषः पशोर्नातिरिच्यते । अथवा विशेषमात्मन एव गुणदोषाधिरोहलक्षणं जानातीति विशेषज्ञः । यदाह—

प्रत्यहं प्रत्यवेक्षेत नरश्चरितमात्मनः । किं नु मे पशुभिस्तुल्यं किं नु सत्पुरुषैरिति ॥ १ ॥ २७ ॥

तथा कृतं परोपकृतं जानाति न निह्नुते कृतज्ञः, एवं हि तस्य कुशललाभो यदुपकारिणो बहु मन्यते, कृतघ्नस्य तु निष्कृतिरेव नास्ति । यदाह—

"कृतघ्ने नास्ति निष्कृतिरिति" ॥ २८ ॥

तथा लोकानां विशिष्टजनानां विनयादिगुणैर्वल्लभः प्रियः । को हि गुणवतः प्रति प्रीतो न भवति । यस्तु न लोकवल्लभः स न केवलमात्मानं स्वस्य धर्मानुष्ठानमपि परैर्दूषयन् परेषां बोधिलाभभ्रंशहेतुर्भवति ॥ २९ ॥

तथा लज्जा वैयात्याभावः सह लज्जया सलज्जः । लज्जावान् हि प्राणप्रहाणेऽपि न प्रतिज्ञातमपजहाति । यदाह—

लज्जां गुणौघजननीं जननीमिवार्यामत्यन्तशुद्धहृदयामनुवर्त्तमानाः ।
तेजस्विनः सुखमसूनपि सन्त्यजन्ति सत्यस्थितिव्यसनिनो न पुनः प्रतिज्ञाम् ॥ १ ॥ ३० ॥

तथा सह दयया दुःखितजन्तुदुःखत्राणाभिलाषेण वर्त्तत इति सदयः । धर्मस्य दया मूलमिति ह्यामनन्ति । तदवश्यं दयां कुर्वीत । यदाह—

प्राणा यथात्मनोऽभीष्टा भूतानामपि ते तथा । आत्मौपम्येन भूतानां दयां कुर्वीत मानवः ॥ १ ॥ ३१ ॥

तथा सौम्योऽक्रूराकारः, क्रूरो हि लोकस्योद्वेगकारणम् ॥ ३२ ॥

तथा परोपकृतौ परोपकारे कर्म्मठः कर्म्मशूरः कर्म्मणि घटते " तत्र घटते कर्म्मणष्ठः " ॥७।१।१३७॥ इति ठ, परोपकारपरो हि पुमान् सर्वस्य नेत्रामृताञ्जनम् ॥ ३३ ॥

तथा अन्तरङ्गश्चासावरिषड्वर्गस्तस्य परिहारोऽनासेवनं तत्र परायणस्तत्परः । तत्रायुक्तितः प्रयुक्ताः कामक्रोधलोभमानमदहर्षाः शिष्टगृहस्थानामन्तरङ्गोऽरिषड्वर्गः । तत्र परपरिगृहीतास्वनूढासु वा स्त्रीषु दुरभिसन्धिः कामः । परस्यात्मनो वा अपायमविचार्य कोपकरणं क्रोधः । दानार्हेषु स्वधनाप्रदानं निष्कारणं परधनग्रहणं च लोभः । दुरभिनिवेशारोहो युक्तोक्ताग्रहणं वा मानः । कुलबलैश्वर्यरूपविद्यादिभिरहङ्कारकरणं परप्रधर्षनिबन्धनं वा मदः । निर्निमित्तं परदुःखोत्पादनेन स्वस्य द्यूतपापर्द्ध्याद्यनर्थसंश्रयेण वा मनःप्रमोदो हर्षः । एतेषां च परिहार्यत्वमपायहेतुत्वात् । यदाह—

दाण्डक्यो नाम भोजः कामाद्ब्राह्मणकन्यामभिमन्यमानः सबन्धुराष्ट्रो विननाश करालश्च वैदेह १ । क्रोधाज्जनमेजयो ब्राह्मणेषु विक्रान्तस्तालजङ्घश्च भृगुषु २ । लोभादैलश्चातुर्वर्ण्यमभ्याहारयमाणः सौवीरश्चाजबिन्दुः ३ । मानाद्रावणः परदारानप्रयच्छन् दुर्योधनो राज्याद्भ्रंश च ४ । मदादम्भोद्भवो भूतावमानी हैहयश्चार्जुनः ५ । हर्षाद्वातापिरगस्त्यमभ्यासादयन् वृष्णिसङ्घश्च द्वैपायन ६ मिति ॥ ३४ ॥

तथा वशीकृतः स्वच्छन्दतां त्याजित इन्द्रियग्रामो हृषीकसमूहो येन स तथा। अत्यन्तासक्तिपरिहारेण स्पर्शनादीन्द्रियविकारनिरोधकः। इन्द्रियजयो हि पुरुषाणां परमसम्पदे भवति। यदाह—

आपदां कथितः पन्था इन्द्रियाणामसंयमः। तज्जयः सम्पदां मार्गो येनेष्टं तेन गम्यताम् ॥ १ ॥

इन्द्रियाण्येव तत्सर्वं यत् स्वर्गनरकावुभौ। निगृहीतविसृष्टानि स्वर्गाय नरकाय च ॥ २ ॥

सर्वथेन्द्रियनिरोधस्तु यतीनामेव धर्म्मे इह तु श्रावकधर्मोचितगृहस्थस्वरूपमेवाधिकृतमित्येवमुक्तम् ॥ ३५ ॥

एवंविधगुणसमग्रो मनुष्यो गृहिधर्म्माय कल्पते अधिकृतो भवतीति ॥ ५६ ॥

इति परमार्हतश्रीकुमारपालभूपालशुश्रूषिते आचार्यश्रीहेमचन्द्रविरचितेऽध्यात्मोपनिषन्नाम्नि सञ्जातपट्टबन्धे श्रीयोगशास्त्रे स्वोपज्ञं प्रथमप्रकाशविवरणम्।

---

अर्हम्

## द्वितीयः प्रकाशः ।



गृहिधर्म्माय कल्पत इत्युक्तं गृहिधर्म्मश्च श्रावकधर्म्मः स च सम्यक्त्वमूलानि द्वादश व्रतानि तान्येवाह—

**सम्यक्त्वमूलानि पञ्चाणुव्रतानि गुणास्त्रयः । शिक्षापदानि चत्वारि व्रतानि गृहमेधिनाम् ॥१॥**

सम्यक्त्वं मूलं कारणं येषां तानि सम्यक्त्वमूलानि । अणूनि महाव्रतापेक्षया लघूनि व्रतानि अहिंसादीनि पञ्च एतानि मूलगुणाः । गुणास्त्रय उत्तरगुणरूपा ते च गुणव्रतानि दिग्व्रतादीनि त्रीणि । शिक्षणं शिक्षा अभ्यासः शिक्षायै पदानि स्थानानि चत्वारि सामायिकादीनि प्रतिदिवसाभ्यसनीयानि तत एव गुणव्रतेभ्यो भेदः । गुणव्रतानि हि प्रायो यावज्जीविकानि गृहमेधिनां श्रावकाणाम् ॥ १ ॥

सम्यक्त्वमूलानीत्युक्तं तत्र सम्यक्त्वं विभजति—

**या देवे देवताबुद्धिर्गुरौ च गुरुतामतिः । धर्म्मे च धर्म्मधीः शुद्धा सम्यक्त्वमिदमुच्यते ॥२॥**

या देवे गुरौ धर्मे च वक्ष्यमाणलक्षणे देवत्वगुरुत्वधर्मत्वबुद्धिरयमेव देवो गुरुर्धर्म्म इति निश्चयपूर्वा रुचिः श्रद्धानमिति यावत्, शुद्धा अज्ञानसंशयविपर्यासनिराकरणेन निर्म्मला सा सम्यक्त्वम् । यद्यपि रुचिर्जिनोक्ततत्त्वेष्विति यतिश्रावकाणां साधारणं सम्यक्त्वलक्षणमुक्तम् । तथापि गृहस्थानां देवगुरुधर्मेषु पूज्यत्वोपास्यत्वानुष्ठेयत्व-

लक्षणोपयोगवशाद् देवगुरुधर्म्मतत्त्वप्रतिपत्तिलक्षणं सम्यक्त्वं पुनरभिहितम्। ननु तत्त्वार्थरुचिलक्षणे सम्यक्त्वे देवगुरुधर्माणां क तत्त्वेऽन्तर्भावः? उच्यते—देवा गुरवश्च जीवतत्त्वे, धर्म्मः शुभाश्रवे संवरे चान्तर्भवति। सम्यक्त्वं च त्रिधा–औपशमिकं क्षायोपशमिकं क्षायिकं च। तत्रोपशमो भस्मच्छन्नाग्निवत् मिथ्यात्वमोहनीयस्यानन्तानुबन्धिनां च क्रोधमानमायालोभानामनुदयावस्था। उपशमः प्रयोजनं प्रवर्त्तकमस्य औपशमिकं, तच्चानादिमिथ्यादृष्टेः करणत्रयपूर्वकमान्तर्मौहूर्त्तिकं चतुर्गतिगतस्यापि जन्तोर्भवतीत्युक्तप्रायम्। यद्वा उपशमश्रेण्यारूढस्य भवति। यदाह—

उवसामगसेढिगयस्स होइ उवसामियं तु सम्मत्तं। जो वा अकयतिपुंजो अ खवियामिच्छो लहइ सम्मं ॥ १ ॥

क्षयो मिथ्यात्वमोहनीयस्यानन्तानुबन्धिनां च उदितानां देशतो निर्मूलनाशः अनुदितानां चोपशमः, क्षयेण युक्त उपशमः क्षयोपशमः स प्रयोजनमस्य क्षायोपशमिकं, तच्च सत्कर्म्मवेदनाद्वेदकमप्युच्यते। औपशमिकं तु सत्कर्म्मवेदनारहितमित्यौपशमिकक्षायोपशमिकयोर्भेदः। यदाह—

वेएइ संतकम्मं खओवसामिएसु नाणुभावं सो। उवसंतकसाओ उण वेएइ न संतकम्मं वि।

एतस्य च स्थितिः षट्षष्टिः सागरोपमाणि साधिकानि। यदाह—

(१) उपशमकश्रेणिगतस्य भवति औपशमिकं तु सम्यक्त्वम्। यो वाऽकृतत्रिपुञ्जश्च क्षपितमिथ्यो लभते सम्यक्॥

(२) वेदयति सत्कर्म क्षायोपशमिकेषु नानुभावं सः। उपशान्तकषायः पुनर्वेदयति न सत्कर्मापि॥

दो वारे विजयाइसु गयस्स तिण्णच्चुए अहव ताइ। अइरेग नरभविय नाणाजीवाण सव्वद्ध ॥ १ ॥

क्षयो मिथ्यात्वमोहनीयस्यानन्तानुबन्धिनां च निर्मूलनाशः। क्षयः प्रयोजनमस्य क्षायिक तच्च साद्यनन्तम्।

अत्र चान्तरश्लोका —

मूल बोधिद्रुमस्यैतत् द्वार पुण्यपुरस्य च। पीठ निर्वाणहर्म्यस्य निधान सर्वसम्पदाम् ॥ १ ॥

गुणानामेक आधारो रत्नानामिव सागरः। पात्र चारित्रवित्तस्य सम्यक्त्व श्लाघ्यते न कैः ॥ २ ॥

अवतिष्ठेत नाज्ञान जन्तौ सम्यक्त्ववासिते । प्रचारस्तमसः कीदृक् भुवने भानुभासिते ॥ ३ ॥

तिर्यङ्नरकयोर्द्वारे दृढा सम्यक्त्वमर्गला । देवमानवनिर्वाणसुखद्वारैककुञ्चिका ॥ ४ ॥

भवेद्वैमानिकोऽवश्य जन्तुः सम्यक्त्ववासितः। यदि नोद्वान्तसम्यक्त्वो बद्धायुर्वापि नो पुरा ॥ ५ ॥

अन्तर्मुहूर्तमपि यः समुपास्य जन्तुः, सम्यक्त्वरत्नममल विजहाति सद्यः। बम्भ्रम्यते भवपथे सुचिर न सोऽपि, तद्विभ्रतश्चिरतर किमुदीरयामः ॥ ६ ॥ इति ॥

विपक्षज्ञाने सति विवक्षित सुज्ञान भवतीति सम्यक्त्वविपक्ष मिथ्यात्वमाह—

**अदेवे देवबुद्धिर्या गुरुधीरगुरौ च या। अधर्मे धर्म्मबुद्धिश्च मिथ्यात्वं तद्विपर्ययात् ॥ ३ ॥**

अदेवोऽगुरुरधर्म्मश्च वक्ष्यमाणलक्षणस्तत्र देवत्वगुरुत्वधर्म्मत्वप्रतिपत्तिलक्षण मिथ्यात्व तस्य लक्षण तद्वि-

(१) द्वौ वारौ विजयादिषु गतस्य त्रीन् अच्युतेऽथवा तान् । अतिरेक नरभविक नानाजीवाना सर्वाद्धम् ॥

पर्यायादिति तस्य सम्यक्त्वस्य विपर्ययः तस्माद्धेतोः सम्यक्त्वविपर्ययरूपत्वादित्यर्थः। तथा च इदमपि संगृहीतं—देवे अदेवत्वस्य गुरावगुरुत्वस्य धर्मे अधर्मत्वस्य प्रतिपत्तिरिति।

मिथ्यात्वं च पञ्चधा आभिग्रहिकमनाभिग्रहिकमाभिनिवेशिकं सांशयिकमनाभोगिकं च।

तत्राभिग्रहिकं पाखण्डिनां स्वस्वशास्त्रनियन्त्रितविवेकालोकानां परपक्षप्रतिक्षेपदक्षाणां भवति ॥ १ ॥

अनाभिग्रहिकं तु प्राकृतलोकानां सर्वे देवा वन्दनीया न निन्दनीया एवं सर्वे गुरवः सर्वे धर्म्मा इति ॥ २ ॥

आभिनिवेशिकं जानतोऽपि यथास्थितं वस्तु दुरभिनिवेशलेशविप्लावितधियो जमालेरिव भवति ॥ ३ ॥

सांशयिकं देवगुरुधर्मेष्वयमयं वेति संशयानस्य भवति ॥ ४ ॥

अनाभोगिकं विचारशून्यस्यैकेन्द्रियादेर्वा विशेषविज्ञानविकलस्य भवति ॥ ५ ॥ यदाह—

आभिग्गहियं अणभिग्गहं च तह अभिणिवेसियं चेव। संसइयमणाभोगं मिच्छत्तं पंचहा होइ ॥ १ ॥

अत्रान्तरश्लोकाः—

मिथ्यात्वं परमो रोगो मिथ्यात्वं परमं तमः। मिथ्यात्वं परमः शत्रुर्मिथ्यात्वं परमं विषम् ॥ १ ॥
जन्मन्येकत्र दुःखाय रोगो ध्वान्तं रिपुर्विषम्। अपि जन्मसहस्रेषु मिथ्यात्वमचिकित्सितम् ॥ २ ॥

---

(१) आभिग्रहिकमनभिग्रहं च तथा अभिनिवेशिकं चैव। सांशयिकमनाभोगं मिथ्यात्वं पञ्चधा भवति ॥
(२) अणभिग्गहियं।

मिथ्यात्वेनालीढचित्ता नितान्त, तत्त्वातत्त्व जानते नैव जीवा' ।
किं जात्यन्धाः कुत्रचिद्वस्तुजाते, रम्यारम्यव्यक्तिमासादयेयुः ॥ ३ ॥

देवादेवगुर्वगुरुधर्माधर्मेषु लक्षयितव्येषु देवलक्षणमाह—

**सर्वज्ञो जितरागादिदोषस्त्रैलोक्यपूजित । यथास्थितार्थवादी च देवोऽर्हन् परमेश्वर' ॥४॥**

देवस्य देवत्वे चतुरोऽतिशयानाचक्षते विचक्षणाः । तद्यथा—

ज्ञानातिशय' १ अपायापगमातिशय २ पूजातिशयः ३ वागतिशयश्च ४ । तत्र सर्वज्ञ इत्यनेन सकलजीवाजीवादितत्त्वज्ञतया ज्ञानातिशयमाह । न तु यथाहुर्विशृङ्खलवादिनः परे ।

सर्वं पश्यतु वा मा वा तत्त्वमिष्ट तु पश्यतु । कीटसख्यापरिज्ञान तस्य नः क्वोपयुज्यते ॥ १ ॥

दूर पश्यतु वा मा वा तत्त्वमिष्ट तु पश्यतु । प्रमाण दूरदर्शी चेदेतान् गृध्रानुपासहे ॥ २ ॥ इति ॥

न हि विवक्षितस्यैकस्यापीष्टस्यार्थस्य ज्ञानमशेषार्थज्ञानमन्तरेण भवति । सर्वे हि भावा भावान्तरैः साधारणासाधारणरूपा इत्यशेषज्ञानमन्तरेण सालक्षण्यवैलक्षण्याभ्यां नैकोऽपि ज्ञातो भवति । यदाहुः—

एको भाव' सर्वथा येन दृष्टः, सर्वे भावास्तत्त्वतस्तेन दृष्टाः ।
सर्वे भावा' सर्वथा येन दृष्टा, एको भावस्तत्त्वतस्तेन दृष्टः ॥ १ ॥

( १ ) इत्यशेषज्ञतामन्तरेण । ( २ ) लक्षणसहितस्य भाव सालक्षण्यम् ।

जितरागादिदोष इत्यनेनापायापगमातिशयमाह । तत्रेदं सर्वजनप्रतीतम् यथा सन्ति रागद्वेषादयः । ते च दोषास्तैरात्मनो दूषणात् । ते च जिताः प्रतिपक्षसेवनादिभिर्भगवतेति जितरागादिदोष इत्युक्तम् । सदा रागादि-रहित एव कश्चित्पुरुषविशेषोऽस्तीति तु वार्त्तामात्रम् । अजितरागादेश्चासदादिवन्न देवत्वमिति । त्रैलोक्यपूजित इत्यनेन पूजातिशयमाह । कतिपयप्रतारितमुग्धबुद्धिपूजायां हि न देवत्वं स्यात् । यदा तु चलितासनैः सुरासुरैर्ना-नादेशभाषाव्यवहारविसंस्थुलैर्मनुष्यैः परस्परनिरुद्धवैरैः सख्यमुपागतैस्तिर्यग्भिश्च समवसरणभूमिमभिपतद्भिरहमह-मिकया सेवाञ्जलिपूजागुणस्तोत्रधर्मदेशनामृतरसास्वादादिभिः पूज्यते भगवान् तदा देवत्वमिति । यथास्थितार्थ-वादीत्यनेन वागतिशयः यथास्थितं सद्भूतमर्थं वदतीत्येवंशीलो यथास्थितार्थवादी । यदाचक्ष्महि स्तुतौ—

अपक्षपातेन परीक्षमाणा द्वयं द्वयस्याप्रतिमं प्रतीमः । यथास्थितार्थप्रथनं तवैतदस्थाननिर्बन्धरसं परेषाम् ॥१॥

यथा वा

क्षिप्येत वाऽन्यैः सदृशीक्रियेत वा, तवांह्रिपीठे लुठनं सुरेशितुः । इदं यथावस्थितवस्तुदेशनं, परैः कथङ्कारम-पाकरिष्यते ॥ २ ॥

देव इति लक्ष्यपदं दीव्यते स्तूयते इति देवः स च सामर्थ्यादर्हन् परमेश्वरो नान्यः ॥ ४ ॥

चतुरतिशयवतो देवस्य ध्यानोपासनशरणगमनशासनप्रतिपत्तीः साधिक्षेपमुपदिशति—

**ध्यातव्योऽयमुपास्योऽयमयं शरणमिष्यताम् । अस्यैव प्रतिपत्तव्यं शासनं चेतनास्ति चेत् ॥५॥**

अयं देवो ध्यातव्यः पिण्डस्थपदस्थरूपस्थरूपातीतरूपतया श्रेणिकेनेव । श्रेणिको हि वर्णप्रमाणसंस्थानसंह-

ननचतुस्त्रिंशदतिशयादियोगिन भगवन्त श्रीमहावीरमनुध्यातवान् । तदनुभावाच्च तद्वर्णप्रमाणसस्थानसहननाति-शययुक्तः पद्मनामस्तीर्थकरो भविष्यति । यदाचन्द्रमाहि—

तेह तम्मएण मणसा वीरजिणो झाइयो तए पुव्वि । जह तारिसो च्चिय तुमं अहेसि ही जोगमाहप्प ॥ १ ॥

आगमश्च—

जस्सीलसमायारो अरिहा तित्थकरो महावीरो। तस्सीलसमायारो होहि हु अरिहा महापउमो ॥ २ ॥

उपास्यः सेवाञ्जलिसबन्धादिना अयमेव देव दुष्कृतगर्हासुकृतानुमोदनापूर्वकमयमेव देवो भवभयाच्छिदी शरणमिष्यताम् । अस्यैवोक्तलक्षणस्य देवस्य शासनमाज्ञा प्रतिपत्तव्य स्वीकरणीयम् । शासनान्तराणि हि निरतिशयपुरुषप्रणेतृकाणि न प्रतिपत्तियोग्यानि । चेतनास्ति चेदित्यधिक्षेप चेतनावत एव प्रत्युपदेशस्य सफलत्वात् । अचेतन तु प्रति विफल उपदेशप्रयासः । यदाह—

अरण्यरुदित कृत शवशरीरमुद्वर्तित, श्वपुच्छमवनामित बधिरकर्णजापः कृतः ।
स्थले कमलरोपण सुचिरमूषरे वर्षण, तदन्धमुखमण्डन यदबुधे जने भाषितम् ॥ १ ॥ ४ ॥

अदेवलक्षणमाह—

---

( १ ) तथा तन्मयेन मनसा वीरजिनो ध्यातस्त्वया पूर्वम् । यथा तादृश एव त्वमासी ही योगमाहात्म्यम् ॥
( २ ) यच्छीलसमाचारो अर्हन् तीर्थकरो महावीर । तच्छीलसमाचारो भविष्यति खलु अर्हन् महापद्म ॥

ये स्त्रीशस्त्राक्षसूत्रादिरागाद्यङ्ककलङ्किताः । निग्रहानुग्रहपरास्ते देवाः स्युर्न मुक्तये ॥ ६ ॥

स्त्री कामिनी, शस्त्रं शूलादि, अक्षसूत्रं जपमाला, तान्यादौ येषां नाट्याट्टहासादीनां ते स्त्रीशस्त्राक्षसूत्रादयः, राग आदिर्येषां ते रागादयः आदिशब्दाद् द्वेषमोहपरिग्रहः, रागादीनामङ्काश्चिह्नानि, स्त्रीशस्त्राक्षसूत्रादयश्च ते रागाद्यङ्काश्च तैः कलङ्किता दूषितास्तत्र स्त्री रागचिह्नं शस्त्रं द्वेषचिह्नं अक्षसूत्रं मोहचिह्नम् । वीतरागो हि नाङ्गनासङ्गभाग्भवति । वीतद्वेषो वा कथं शस्त्रं बिभृयात् । गतमोहो वा कथं विस्मृतिचिह्नं जपमालां परिगृह्णी-यात् । रागद्वेषमोहैः सर्वदोषाः संगृहीतास्तन्मूलत्वात्सर्वदोषाणाम् । निग्रहो वधबन्धादिः, अनुग्रहो वरप्रदानादिः, तौ परौ प्रकृष्टौ येषां ते तथा । निग्रहानुग्रहावपि रागद्वेषयोश्चिह्ने । ये एवंविधास्ते देवा न भवन्ति मुक्तये इति मुक्तिनिमित्तम् । देवत्वमात्रं तु क्रीडनादिकारिणां प्रेतपिशाचादीनामिव न वार्यते ॥ ६ ॥

मुक्तिनिमित्तत्वाभावमेव व्यनक्ति—

नाट्याट्टहाससङ्गीताद्युपप्लवविसंस्थुलाः । लम्भयेयुः पदं शान्तं प्रपन्नान् प्राणिनः कथम् ? ॥ ७ ॥

इह सकलसांसारिकोपप्लवरहितं शान्तं पदं मुक्तिकैवल्यादिशब्दाभिधेयमस्तीत्यत्र नास्ति विप्रतिपत्तिः । तत्तादृशं शान्तं पदं नाट्याट्टहाससङ्गीतादिविसंस्थुलाः स्वयमुपहतवृत्तयः कथमाश्रितजनान् प्रापयेयुः । न ह्येरण्ड-तरुः कल्पतरुलीलामुद्वहति । ततश्च रागद्वेषमोहदोषविवर्जितो जिन एको देवो मुक्तये नेतरे दोषदूषिताः । अत्रान्तरश्लोकाः—

न सर्व्वज्ञा न नीरागाः शङ्करब्रह्मविष्णव । प्राकृतेभ्यो मनुष्येभ्योऽप्यसमञ्जसदूषितः ॥ १ ॥ स्त्रीसङ्ग-कामभावष्टे द्वेषं चायुधसंग्रहः । व्यामोह चाक्षसूत्रादिरशौच च कमण्डलु' ॥ २ ॥ गौरी रुद्रस्य सावित्री ब्रह्मणः श्रीर्मुरद्विषः । शचीन्द्रस्य रवे रत्नादेवी दक्षात्मजा विधोः ॥ ३ ॥ तारा बृहस्पतेः स्वाहा वह्नेश्चेतोभुवो रतिः । धूमोर्णा श्राद्धदेवस्य दारा एव दिवौकसाम् ॥ ४ ॥ सर्वेषां शस्त्रसम्बन्धः सर्वेषां मोहजृम्भितम् । तदेव देवसन्दोहो न देवपदवीं स्पृशेत् ॥ ५ ॥ बुद्धस्यापि न देवत्व मोहाच्छून्याभिधायिनः । प्रमाणसिद्धे शून्यत्वे शून्यवादकथा वृथा ॥ ६ ॥ प्रमाणस्यैव सत्त्वेन न प्रमाणविवर्जिता । शून्यासिद्धिः परस्यापि न स्वपक्षस्थिति कथम् ? ॥ ७ ॥ सर्वथा सर्वभावेषु क्षणिकत्वे प्रतिश्रुते । फलेन सह सम्बन्धः साधकस्य कथ भवेत् ॥ ८ ॥ वधस्य वधको हेतु' कथ क्षणिकवादिनः । स्मृतिश्च प्रत्यभिज्ञा च व्यवहारकरी कथम् ॥ ९ ॥ निपत्य ददतो व्याघ्र्याः स्वकाय कृमिसङ्कुलम् । देयादेयविमूढस्य दया बुद्धस्य कीदृशी ॥ १० ॥ स्वजन्मकाल एवात्मजनन्यु-दरदारिण' । मांसोपदेशदातुश्च कथ शौद्धोदनेर्दया ॥ ११ ॥ यो ज्ञान प्रकृतेर्द्धर्म्म भाषते स निरर्थकम् । निर्गुणो निष्क्रियो मूढ स देव कपिलः कथम् ॥१२ ॥ आर्याविनायकस्कन्दसमीरणपुरस्सराः । निगद्यन्ते कथ देवाः सर्वदोषनिकेतनम् ॥ १३ ॥ या पशुर्गूथमश्नाति स्वपुत्र च वृषस्यति । शृङ्गादिभिर्घ्नती जन्तून् सा वन्द्यास्तु कथ नु गौः ॥ १४ ॥ पयःप्रदानसामर्थ्याद्वन्द्या चेन्महिषी न किम् ? । विशेषो दृश्यते नास्यां महिषीतो मनागपि ॥ १५ ॥ स्नान तीर्थपिंदेवानां सर्वेषामपि गौर्यदि । विक्रीयते दुह्यते च हन्यते च कथ ततः ॥ १६ ॥ मुसलोदूखले चुल्ली देहली पिप्पलो जलम् । निम्बोऽर्कश्चापि यैः प्रोक्ता देवास्तैः केऽत्र वर्जिताः ॥ १७ ॥

वीतरागस्तोत्रेऽप्युक्तमस्माभिः।

कृतार्था जठरोपस्थदुःस्थितैरपि दैवतैः। भवादृशान्निह्नुवते हहा देवास्तिकाः परे ॥ १८ ॥ ७ ॥

गुरुलक्षणमाह—

**महाव्रतधरा धीरा भैक्षमात्रोपजीविनः। सामायिकस्था धर्मोपदेशका गुरवो मताः ॥ ८ ॥**

महाव्रतानि अहिंसादीनि तानि धरन्तीति महाव्रतधराः। महाव्रतधारित्व एवायं हेतुः धीरा इति, धैर्यं ह्यापत्स्वप्यवैक्लव्यं तद्योगाद्धि अखण्डितमहाव्रतधरा भवन्ति। मूलगुणधारित्वमुक्त्वा उत्तरगुणधारित्वमाह— भैक्षमात्रोपजीविन इति, भिक्षाणां समूहो भैक्षं अन्नपानधर्मोपकरणरूपं तन्मात्रमेवोपजीवन्ति लोकान्न पुनर्द्धन-धान्यीहिरण्यग्रामनगरादि। मूलगुणोत्तरगुणधारणकारणभूतगुणवत्त्वमाह—सामायिकस्था इति, समो रागद्वेषविकल आत्मा समस्य आयो विशिष्टज्ञानादिगुणलाभः समायः स एव सामायिकं "विनयादित्वादिकण्" तत्र तिष्ठन्तीति सामायिकस्थाः। सामायिकस्थो हि मूलगुणोत्तरगुणभेदभिन्नं चारित्रं पालयितुं क्षमः। एतद्यतिमात्र-साधारणलक्षणम्। गुरोस्तु असाधारणलक्षणं—धर्मोपदेशका इति, धर्मं संवरनिर्जरारूपं यतिश्रावकसम्बन्धिभेदभिन्नं वा उपदिशन्तीति धर्मोपदेशकाः। यदुक्तमस्माभिरभिधानचिन्तामणौ—" गुरुर्धर्म्मोपदेशक " इति, गृणन्ति सद्भूतं शास्त्रार्थमिति गुरवः ॥ ८ ॥

अगुरुलक्षणमाह—

सर्वाभिलाषिण. सर्वभोजिन सपरिग्रहाः । अब्रह्मचारिणो मिथ्योपदेशा गुरवो न तु ॥९॥

सर्वंमुपदेश्यसम्बन्धिस्त्रीधनधान्यहिरण्यक्षेत्रवास्तुचतुष्पदाद्यभिलषन्तीत्येवशीलाः सर्वाभिलाषिण' । तथा सर्वं मद्यमधुमांसानन्तकायादि भुञ्जत इत्येवशीला सर्वभोजिनः । सह परिग्रहेण पुत्रकलत्रादिना वर्त्तन्ते सपरिग्रहाः । अत एवाब्रह्मचारिण , अब्रह्मणो महादोषतां कथयितुमब्रह्मचारिण इति पृथगुपन्यासः । अगुरुत्वे असाधारण कारणमाह–मिथ्योपदेशा इति, मिथ्या वितथ आप्तोपज्ञोपदेशरहितत्वादुपदेशो धर्मदेशन येषा ते तथा । न तु नैव एवविधा गुरव इति ॥ ६ ॥

ननु धर्मोपदेशदायित्व चेदस्ति तदास्तु गुरुत्व किं निष्परिग्रहित्वादिगुणगवेषणेन ? इत्याह—

परिग्रहारम्भमग्नास्तारयेयु कथं परान् ? । स्वय दरिद्रो न परमीश्वरीकर्त्तुमीश्वर ॥१०॥

परिग्रहस्त्र्यादिरारम्भो जन्तुहिंसानिबन्धन सर्वाभिलाषित्वसर्वभोजित्वादिः, ताभ्यां मग्ना भवाब्धौ त्रुडिता' कथ परानुपदेश्यान् भवाम्भोधेस्तारयेयुस्तारणसमर्थाः स्युः ? । साधक दृष्टान्तमाह–स्वयमित्यादि स्पष्टम् ॥ १० ॥

धर्मलक्षणमाह—

दुर्गतिप्रपतत्प्राणिधारणाद्धर्म उच्यते । सयमादिर्दशविधः सर्वज्ञोक्तो विमुक्तये ॥ ११ ॥

दुर्गतौ नरकतिर्यग्लक्षणायां प्रपतन्तो ये प्राणिनस्तेषां धारणाद्धेतोर्द्धर्म उच्यते। धर्मशब्दार्थोऽय। इदमेव च

लक्षणं धर्मस्य । धत्ते वा नरसुरमोक्षस्थानेषु जन्तूनिति निरुक्ताद्धर्म्मः । यदाह—

दुर्गतिप्रसृतान् जन्तून् यस्माद्धारयते ततः । धत्ते चैतान् शुभे स्थाने तस्माद्धर्म्म इति स्मृतः ॥ १ ॥

स तु वक्ष्यमाणैः संयमादिभिर्भेदैर्दशधा । सर्वज्ञोक्तत्वाद्विमुक्तये भवति । देवतान्तरप्रणीतस्त्वसर्वज्ञवक्तृकत्वान्न प्रमाणम् ॥ ११ ॥

ननु सर्वज्ञोक्तत्वाभावेऽप्यपौरुषेयवचनोपज्ञस्य धर्मस्य प्रामाणिकत्वमस्तु । यदाह—चोदना हि भूतं भवन्तं भविष्यन्तं सूक्ष्मं स्थूलं व्यवहितं विप्रकृष्टमेवंजातीयकमर्थमवगमयितुं शक्नोति नान्यत्किञ्चनेन्द्रियमिति । चोदना च अपौरुषेयत्वेन पुरुषगतानां दोषाणामप्रवेशात् प्रमाणमेव । यदाह—शब्दे दोषोद्भवस्तावद्वक्त्रधीन इति स्थितम् । तदभावः क्वचित्तावद्गुणवद्वक्तृकत्वतः ॥ १ ॥ तद्गुणैरपकृष्टानां शब्दे संक्रान्त्यसम्भवात् । यद्वा वक्तुरभावेन न स्युर्दोषा निराश्रयाः ॥ २ ॥ किञ्च—दोषाः सन्ति न सन्तीति पौरुषेयेषु युज्यते । वेदे कर्त्तुरभावाच्च दोषाशङ्कैव नास्ति नः ॥ ३ ॥ इत्याह—

**अपौरुषेयं वचनमसम्भवि भवेद्यदि । न प्रमाणं भवेद्वाचां ह्याप्ताधीना प्रमाणता ॥ १२ ॥**

पुरुषेण कृतं पौरुषेयं तत्प्रतिषेधादपौरुषेयम् । उच्यते स्थानकरणाभिघातपूर्वकं पुरुषेण प्रतिपाद्यते इति वचनम् । तदिदं परस्परविरुद्धम् अपौरुषेयं वचनं चेति । तदेवाह—असम्भवि न ह्यस्ति सम्भवो वचनस्य त्रसरेणोरिवाकाशे । न चामूर्त्तस्य सतोऽप्यदर्शनमिति वक्तुं युक्तं प्रमाणाभावात् । अभिव्यञ्जकवशाच्छब्दश्रवणमेव प्रमाणमिति चेत् न । तस्य जन्यत्वेऽप्युपपत्तेः । अभिव्यङ्ग्यत्वे प्रत्युत दोषसम्भवः । एकशब्दाभिव्यक्त्यर्थं स्थान-

करणाभिघाते शब्दान्तराणामपि तद्देश्यानामभिव्यक्तिप्रसङ्गः । न च प्रतिनियतव्यञ्जकव्यङ्ग्यता शब्दानां भवति व्यङ्ग्यान्तरेषु तददर्शनात् । तथा च—

गृहे दधिघटीं द्रष्टुमाहितो गृहमेधिना । अपूपानपि तद्देश्यान् प्रकाशयति दीपकः ॥ १ ॥

तदेव वचनस्यापौरुषेयता न सम्भवति । अथाप्यप्रामाणिकहेवाकबलादाकाशादिवच्छब्दस्यापौरुषेयता यदि भवेत् तथापि प्रामाण्य न सम्भवति । हि यस्मादाप्तवक्तृकत्वेन वाचां प्रामाण्यं नान्यथा । यतः—

शब्दे गुणोद्भवस्तावद्वक्त्रधीन इति स्थितम् । तदभावः कचित्तावद्दोषवद्वक्तृकत्वतः ॥ १ ॥

तद्दोषैरपकृष्टानां शब्दे सङ्क्रान्त्यसम्भवात् । यद्वा वक्तुरभावेन गुणा न स्युर्निराश्रयाः ॥ २ ॥ किञ्च—

गुणा सन्ति न सन्तीति पौरुषेयेषु युज्यते । वेदे कर्त्तुरभावाच्च गुणाशङ्कैव नास्ति नः ॥ ३ ॥ १२ ॥

एवं तावदपौरुषेयवचनाभिहितस्यासम्भवादिना अभावमभिधायासर्वज्ञपुरुषवक्तृकस्य धर्मस्याप्रामाणिकत्वमाह—

**मिथ्यादृष्टिभिराम्नातो हिंसाद्यैः कलुषीकृतः । स धर्म्म इति वित्तोऽपि भवभ्रमणकारणम् ॥१३॥**

मिथ्यादृष्टिभिर्हरिहरहिरण्यगर्भकपिलबुद्धादिभिराम्नात आत्मोपज्ञतया प्रतिपादितः । यत्तदोर्नित्याभिसम्बन्धाद्यो मिथ्यादृष्टिभिराम्नातः स धर्मत्वेन मुग्धबुद्धीनां प्रसिद्धोऽपि भवभ्रमणकारणमधर्म एवेत्यर्थः । कुत इत्याह—हिंसाद्यैः कलुषीकृत इति । मिथ्यादृष्टिप्रणीता ह्यागमा हिंसादिदोषदूषिताः ॥ १३ ॥

इदानीमदेवागुर्व्वधर्म्माणां सात्तेप प्रतिक्षेपमाह—

**सरागोऽपि हि देवश्चेद् गुरुरब्रह्मचार्यपि। कृपाहीनोऽपि धर्म्मः स्यात्कष्टं नष्टं हहा जगत् ॥१४॥**

रागग्रहणमुपलक्षणं द्वेषमोहयोः। अब्रह्मचारित्वमुपलक्षणं प्राणातिपातादीनाम्। कृपाहीनत्वमुपलक्षणं मूलोत्तरगुणहीनत्वस्य। चेच्छब्दः प्रत्येकमभिसम्बध्यते। आक्षेपं प्रकटयति—कष्टमिति खेदे नष्टं जगत् देवगुरुधर्मशून्यत्वेन विनष्टं दुर्गतिगमनात्। हहा निपातः खेदातिशयसूचकः। यदाह—

'रागी देवो दोसी देवो मज्झि सुन्नंपि देवो, मज्जे धम्मो मंसे धम्मो जीवहिंसाइ धम्मो। रत्ता मत्ता कन्तासत्ता जे गुरू तेवि पुज्जा, हाहा कट्ठं नट्ठो लोओ अट्टमट्टं कुणंतो ॥ १ ॥ १४ ॥

तदेवमदेवागुर्वधर्मपरिहारेण देवगुरुधर्मप्रतिपत्तिलक्षणं सम्यक्त्वं सुव्यवस्थितम्। तच्च शुभात्मपरिणामरूपमस्मदादीनामप्रत्यक्षं केवलं लिङ्गैर्लक्ष्यते, तान्येवाह—

**शमसंवेगनिर्वेदानुकम्पास्तिक्यलक्षणैः। लक्षणैः पञ्चभिः सम्यक् सम्यक्त्वमुपलक्ष्यते ॥१५॥**

पञ्चभिर्लक्षणैर्लिङ्गैः परस्थं परोक्षमपि सम्यक्त्वं सम्यगुपलक्ष्यते। लिङ्गानि तु शमसंवेगनिर्वेदानुकम्पास्तिक्यस्वरूपाणि। शमः प्रशमः क्रूराणामनन्तानुबन्धिनां कषायाणामनुदयः। स च प्रकृत्या वा कषायपरिणतेः कटुफलावलोकनाद्वा भवति। यदाह—

(१) रागी देवो द्वेषी देवो सखे शून्योऽपि देवः, मद्ये धर्मो मांसे धर्मः जीवहिंसायां धर्मः। रक्ता मत्ताः कान्तासक्ता ये गुरवः तेऽपि पूज्याः, हाहा कष्टं नष्टो लोको अट्टमट्टं कुर्वन् ॥

पंइईए कम्माण नाऊण वा विवागमसुह ति । अवरद्धे वि न कुप्पइ उवसमओ सव्वकाल पि ॥ १ ॥

अन्ये तु क्रोधकण्डूविषयतृष्णोपशमः शम इत्याहुः । अधिगतसम्यग्दर्शनो हि साधूपासनावान् कथं क्रोधकण्ड्वा विषयतृष्णया च तरलीक्रियेत? ननु क्रोधकण्डूविषयतृष्णोपशमश्चेच्छमस्तर्हि कृष्णश्रेणिकादीनां सापराधे निरपराधेऽपि च परे क्रोधवतां विषयतृष्णातरलितमनसां च कथं शम ? तदभावे च सम्यक्त्वं न गम्येत? नैवम् । दृश्यते हि धूमरहितोऽप्ययस्कारगृहेषु वह्निः भस्मच्छन्नस्य वा वह्नेर्न धूमलेशोऽपीति । अयं तु नियम सुपरीक्षिते लिङ्गे सति लिङ्गी भवत्येव । यदाह—

लिङ्गे लिङ्गी भवत्येव लिङ्गिन्येवेतरत्पुनः । नियमस्य विपर्यासे सम्बन्धो लिङ्गलिङ्गिनोः ॥ १ ॥

सञ्ज्वलनकषायोदयाद्वा कृष्णादीनां क्रोधकण्डूविषयतृष्णे । सञ्ज्वलना अपि केचन कषायास्तीव्रतया अनन्तानुबन्धिसदृशविपाकाभवन्त इति सर्वमवदातम् । संवेगो मोक्षाभिलाषः । सम्यग्दृष्टिर्हि नरेन्द्रसुरेन्द्राणां विषयसुखानि दु खानुषङ्गाद्दुःखतया मन्यमानो मोक्षसुखमेव सुखत्वेन मन्यते अभिलषति च । यदाह—

नरविबुहेसरसोक्ख दुक्ख चिय भावओ अ मन्नंतो । संवेगओ न मोक्ख मोत्तूण किंचि पच्छे (त्थे) इ ॥ १ ॥

निर्वेदो भववैराग्यम् । सम्यग्दर्शनी हि दुःखदौर्गत्यगहने भवकारागारे कर्मदण्डपाशिकैस्तथातथाकदर्थ्यमानः प्रतिकर्त्तुमक्षमो ममत्वरहितश्च दुःखेन निर्विण्णो भवति । यदाह—

---

(१) प्रकृत्या कर्मणा ज्ञात्वा वा विपाकमशुभमिति । अपराधेऽपि न कुप्यति उपशमत सर्वकालमपि ॥

(२) नरविबुधेश्वरसौख्य दु खमेव भावतश्च मन्यमान । संवेगतो न मोक्ष मुक्त्वा किञ्चित् प्रेक्षते, ( प्रार्थयति ) ॥

नारयतिरियनरामरभवेसु निव्वेयश्रो वसइ दुक्खं । अकयपरलोयमग्गो ममत्तविसवेगरहिश्रो य ॥ १ ॥

अन्ये तु संवेगनिर्वेदयोरर्थविपर्ययमाहुः संवेगो भवविरागः निर्वेदो मोक्षाभिलाष इति । अनुकम्पा दुःखितेषु अपक्षपातेन दुःखप्रहाणेच्छा । पक्षपातेन तु करुणा स्वपुत्रादौ व्याघ्रादीनामप्यस्त्येव । सा चानुकम्पा द्रव्यतो भावतश्च भवति । द्रव्यतः सत्यां शक्तौ दुःखप्रतीकारेण । भावत आर्द्रहृदयत्वेन । यदाह—

दंट्ठूण पाणिनिवहं भीमे भवसायरम्मि दुक्खत्तं । अविसेसओणुकंपं दुविहावि सामच्छ(त्थ)ओ कुणइ ॥ १ ॥

अस्तीति मतिरस्येत्यास्तिकस्तस्य भावः कर्म वा आस्तिक्यम् । तत्त्वान्तरश्रवणेऽपि जिनोक्ततत्त्वविषये निराकाङ्क्षा प्रतिपत्तिः । आस्तिक्येन हि जीवधर्मतया अप्रत्यक्षं सम्यक्त्वं लक्ष्यते । तद्वान् हि आस्तिक इत्युच्यते । यदाह—

मन्नइ तमेव सच्चं नीसंकं जं जिणेहिं पन्नत्तं । सुहपरिणामो सम्मं कंखाइविसुत्तिआरहिओ ॥ १ ॥

अन्ये तु शमादीनि लिङ्गान्यन्यथा व्याचक्षते सुपरीक्षितप्रवक्तृप्रवाच्यप्रवचनतत्त्वाभिनिवेशान्मिथ्याभिनिवेशोपशमः शमः । स सम्यग्दर्शनस्य लक्षणम् । यो ह्यतत्त्वं विहायात्मना तत्त्वं प्रतिपन्नः स लक्ष्यते सम्यग्दर्शन-

---

( १ ) नारकतिर्यङ्नरामरभवेषु निर्वेदतः वसति दुःखम् । अकृतपरलोकमार्गो ममत्वविषवेगरहितश्च ।

( २ ) दृष्ट्वा प्राणिनिवहं भीमे भवसागरे दुःखार्त्तम् । अविशेषतोऽनुकम्पां द्विविधामपि सामर्थ्यतः करोति ॥

( ३ ) दुहावि ।

( ४ ) मन्यते तदेव सत्यं निःशङ्कं यद्जिनैः प्रज्ञापितम् ( प्रज्ञप्तम् ) । शुभपरिणामः सम्यक् काङ्क्षादिविसूत्रिकारहितः ॥

वानिति। संवेगो भयं जिनप्रवचनानुसारिणो हि नरकेषु शारीरं मानसं च शीतोष्णादिजनितं च संक्लिष्टासुरोदीरितं च परस्परोदीरितं च, तिर्यक्षु भारारोपणाद्यनेकविधं, मनुजेषु दारिद्र्यदौर्भाग्यादि च दुःखमवलोकयतस्तद्भीरुतया तत्प्रशमोपायभूतं धर्म्ममनुतिष्ठतो लक्ष्यते विद्यतेऽस्य सम्यग्दर्शनमिति। निर्वेदो विषयेष्वनभिष्वङ्गः यथा इहलोक एव प्राणिनां दुरन्तकामभोगाभिष्वङ्गोऽनेकोपद्रवफलः परलोकेऽप्यतिकटुकनरकतिर्यग्मनुष्यजन्मफलप्रदः। अतो न किञ्चिदनेन। उज्झितव्य एवायमिति। एवंविधनिर्वेदेनापि लक्ष्यतेऽस्त्यस्य सम्यग्दर्शनमिति। अनुकम्पा कृपा यथा सर्व्वे एव सत्त्वाः सुखार्थिनो दुःखप्रहाणार्थिनश्च। ततो नैषामल्पापि पीडा मया कार्येत्यनयापि लक्ष्यतेऽस्त्यस्य सम्यक्त्वमिति। सन्ति खलु जिनेन्द्रप्रवचनोपदिष्टा अतीन्द्रिया जीवपरलोकादयो भावा इति परिणाम आस्तिक्यम्। अनेनापि लक्ष्यते सम्यग्दर्शनयुक्तोऽयमिति ॥ १५ ॥

सम्यक्त्वलिङ्गान्युक्त्वा भूषणान्याह—

**स्थैर्यं प्रभावना भक्तिः कौशलं जिनशासने। तीर्थसेवा च पञ्चास्य भूषणानि प्रचक्षते ॥१६॥**

अस्य सम्यक्त्वस्य पञ्च भूषणानि भूष्यते अलङ्क्रियते यैस्तानि भूषणानि जिनशासने जिनशासनविषये। एतच्च सर्वत्र सम्बध्यते। स्थैर्य्यं जिनधर्मं प्रति चलितचित्तस्य परस्य स्थिरत्वापादनं स्वयं वा परतीर्थिकर्द्धिदर्शनेऽपि जिनशासनं प्रति निष्प्रकम्पता। प्रभवति जैनेन्द्रशासनं तस्य प्रभवतः प्रयोजकत्वं प्रभावना। सा चाष्टधा प्रभावकभेदेन। यदाह—

पावयणी धम्मकही वाई नेमित्तिओ तवस्सी य । विज्जा सिद्धो अ कई अट्ठेव पभावगा भणिया॥ १ ॥

तत्र प्रवचनं द्वादशाङ्गं गणिपिटकं तदस्यास्त्यतिशयवदिति प्रवचनी युगप्रधानागमः । धर्मकथा प्रशस्यास्यास्तीति धर्मकथी शिखादित्वादिन् । वादिप्रतिवादिसभ्यसभापतिलक्षणायां चतुरङ्गायां सभायां प्रतिपक्षनिरासपूर्वकं स्वपक्षस्थापनार्थमवश्यं वदतीति वादी । निमित्तं त्रैकालिकं लाभालाभादिप्रतिपादकं शास्त्रं तद्वेत्त्यधीते वा नैमित्तिकः । तपो विकृष्टमष्टमाद्यस्यास्तीति तपस्वी । विद्याः प्रज्ञप्त्यादयः शासनदेवतास्ताः साहाय(य्य)के यस्य स विद्यावान् । अञ्जनपादलेपतिलकगुटिकासकलभूताकर्षणानिष्कर्षणवैक्रियत्वप्रभृतयः सिद्धयस्ताभिः सिद्ध्यति स सिद्धः । कवते गद्यपद्यादिभिः प्रबन्धैर्वर्णनां करोतीति कविः । एते प्रवचन्यादयोऽष्टौ प्रभवतो भगवच्छासनस्य यथायथं देशकालाद्यौचित्येन साहाय(य्य)ककरणात्प्रभावकास्तेषां कर्म प्रभावना द्वितीयं भूषणम् । भक्तिः प्रवचने विनयवैयावृत्त्यरूपा प्रतिपत्तिः सम्यग्दर्शनज्ञानचारित्रादिगुणाधिकेष्वभ्युत्थानमभियानं शिरस्यञ्जलिकरणं स्वयमासनढौकनमासनाभिग्रहो वन्दना पर्युपासना अनुगमनं चेत्यष्टविधकर्मविनयनादष्टविध उपचारविनयः । व्यावृत्तस्य भावः कर्म वा वैयावृत्त्यम् । तच्चाचार्योपाध्यायतपस्विशि(शै)क्षकग्लानकुलगणसङ्घसाधुसमनो(मान)ज्ञेषु दशस्वन्नपानवस्त्रपात्रप्रतिश्रयपीठफलकसंस्तारादिभिर्धर्म्मसाधनैरुपग्रहः शुश्रूषाभैषजक्रियाकान्तारविषमदुर्गोपसर्गेष्वभ्युपपत्तिश्च । जिनशासनविषये च कौशलं नैपुण्यम् । ततो हि व्यवहितादिरप्यर्थो विषयीक्रियते । यथानार्यदेशवर्त्ती आर्द्रककुमारः श्रेणिकपुत्रेणाभयकुमारेण कौशलात्प्रतिबोधित इति । तीर्थं नद्यादेरिव संसारस्य तरणे

(१) प्रवचनी धर्मकथी वादी नैमित्तिकः तपस्वी च । विद्यावान् सिद्धश्च कविः अष्टैव प्रभावका भणिताः ॥

सुखावतारो मार्ग । तच्च द्विधा द्रव्यतीर्थं भावतीर्थं च । द्रव्यतीर्थं तीर्थकृतां जन्मदीक्षाज्ञाननिर्व्वाणस्थानम् । यदाह—

जम्म दिक्खा नाण तित्थयराण महाणुभावाण । जत्थ य किर निव्वाण आगाढ दसण होइ ॥ १ ॥

भावतीर्थं तु चतुर्विधः श्रमणसङ्घः प्रथमगणधरो वा । यदाह—" तित्थ भन्ते तित्थ तित्थयरे तित्थ ? गोयमा ! अरिहा ताव नियमा तित्थकरे, तित्थ पुण चाउव्वणे समणसघे पढमगणहरे वा " । तीर्थस्य सेवा तीर्थसेवा ॥ १६ ॥

अस्य सम्यक्त्वस्य भूषणान्युक्त्वा दूषणान्याह—

**शङ्काकाङ्क्षाविचिकित्सामिथ्यादृष्टिप्रशंसनम् । तत्संस्तवश्च पञ्चापि सम्यक्त्वं दूषयन्त्यलम् ॥१७॥**

पञ्चापि शङ्कादयो निर्दोषमपि सम्यक्त्व दूषयन्ति अलमतिशयेन । शङ्का सन्देहः सा च सर्वविषया देशविषया च । सर्वविषया अस्ति वा नास्ति वा धर्म्म इत्यादि । देशशङ्का एकैकवस्तुधर्म्मगोचरा । यथा अस्ति जीव के-वल सर्वगतोऽसर्वगतो वा सप्रदेशोऽप्रदेशो वेति । इय च द्विधाऽपि भगवदर्हत्प्रणीतप्रवचनेषु अप्रत्ययरूपा सम्य-

(१) जन्म दीक्षा ज्ञान तीर्थकराणा महानुभावानाम् । यत्र च किल निर्वाण आगाढ दर्शन भवति ॥

(२) चतुर्वर्ण ।

(३) तीर्थं भगवन् तीर्थं तीर्थकर तीर्थं ? गौतम ! अर्हन् तावन्नियमेन तीर्थकरस्तीर्थं पुनश्चातुर्वर्णो श्रमणसङ्घ प्रथम-गणधरो वा ।

त्त्वं दूषयति । केवलागमगम्या अपि हि पदार्था अस्मदादिप्रमाणपरीक्षानिरपेक्षा आप्तप्रणेतृकत्वान्न सन्देग्धुं योग्या । यत्रापि मोहवशात् क्वचन संशयो भवति तत्राप्यप्रतिहतेयमर्गला । यथा—

[1]कत्थ य मइदुव्वल्लेण तव्विहायरियविरहओ वावि । नेयगहणत्तणेण य नाणावरणोदएणं च ॥ १ ॥ [2]हेऊदाहरणासंभवे अ सइ सुट्ठु जं न बुज्झेज्जा । सव्वन्नुमयमवितहं तहावि तं चिंतए मइमं ॥ २ ॥ [3]अणुवकयपराणुग्गहपरायणा जं जिणा जगप्पवरा । जियरागदोसमोहा य नन्नहा वाइणो तेणं ॥ ३ ॥

यथा वा सूत्रोक्तस्यैकस्याप्यरोचनादक्षरस्य भवति नरः मिथ्यादृष्टिः । सूत्रं हि नः प्रमाणं जिनाभिहितम् । काङ्क्षा अन्यान्यदर्शनग्रहः । सापि सर्वविषया देशविषया च । सर्वविषया सर्वपाखण्डिधर्म्माकाङ्क्षारूपा । देशकाङ्क्षा त्वेकादिदर्शनविषया यथा सुगतेन भिक्षूणामक्लेशको धर्म्म उपदिष्टः स्नानान्नपानाच्छादनशयनीयादिषु सुखानुभवद्वारेण । यदाह—

मृद्वी शय्या प्रातरुत्थाय पेया, मध्ये भक्तं पानकं चापराह्णे । द्राक्षाखण्डं शर्करा चार्द्धरात्रे, मोक्षश्चान्ते शाक्यसिंहेन दृष्टः ॥ १ ॥ इति

---

( १ ) क्व च ( क्वचन ) मतिदुर्बलेन तद्विधाचार्यविरहतो वापि । ज्ञेयगहनत्वेन च ज्ञानावरणोदयेन च ॥

( २ ) हेतूदाहरणासंभवे च सति सुष्ठु यन्न बुध्येत । सर्वज्ञमतमवितथं तथापि तच्चिन्तयति मतिमान् ॥

( ३ ) अनुपकृतपरानुग्रहपरायणा यज्जिना जगत्प्रवराः । जितरागदोष ( द्वेष ) मोहाश्च नान्यथा वादिनस्तेन ॥

एतदपि घटमानकमेव न दूरापेतम्। तथा परिव्राड्गौतमब्राह्मणादयो विषयानुपभुञ्जाना एव परलोकेऽपि सुखेन युज्यन्त इति साधीयानेषोऽपि धर्म इति। एवं च काङ्क्षापि परमार्थतो भगवदर्हत्प्रणीतागमानाश्वासरूपा सम्यक्त्वं दूषयति। विचिकित्सा चित्तविप्लव, सा च सत्यपि युक्त्यागमोपपन्ने जिनधर्मेऽस्य महतस्तप क्लेशस्य सिकताकणकवलवन्निःस्वादस्यायत्यां फलसम्पद्भविता। अथ क्लेशमात्रमेवेदं निर्जराफलविकलमिति। उभयथा हि क्रिया दृश्यन्ते सफला अफलाश्च कृषीवलादीनामिव इयमपि तथा सम्भाव्यते। यदाह—

[1]पुव्वपुरिसा जहोइअमग्गचरा घडइ तेसिं फलजोगो। अम्हेसु य धीसघयणविरहओ न तह तेसिं फलं ॥ १ ॥ इति ॥

विचिकित्सापि भगवद्वचनानाश्वासरूपत्वात्सम्यक्त्वस्य दोषः। न च शङ्कातो नेयं भिद्यते। शङ्का हि सकलासकलपदार्थभाक्त्वेन द्रव्यगुणविषया, इयं तु क्रियाविषयैव। यद्वा विचिकित्सा निन्दा सा च सदाचारमुनिविषया यथा अस्नानेन प्रस्वेदजलक्लिन्नमलत्वाद्दुर्गन्धिवपुष एते इति। को दोषः स्याद्यदि प्रासुकवारिणाऽङ्गक्षालनं कुर्वीरन्निति। इयमपि तत्त्वतो भगवद्धर्मानाश्वासरूपत्वात् सम्यक्त्वदोषः ३। मिथ्या जिनागमविपरीता दृष्टिर्दर्शनं येषां ते मिथ्यादृष्टयस्तेषां प्रशंसनं प्रशंसा तच्च सर्वविषयं देशविषयं च। सर्वविषयं सर्वाण्यपि कपिलादिदर्शनानि युक्तियुक्तानीति माध्यस्थ्यसारा स्तुतिः सम्यक्त्वस्य दूषणम्। यदाचक्ष्महि स्तुतौ—

---

(१) पूर्वपुरुषा यथोचितमार्गचरा घटते तेषां फलयोगः। अस्मासु च धीसंहननविरहतः न तथा तेषां फलम् ॥

सुनिश्चितं मत्सरिणो जनस्य, न नाथ मुद्रामतिशेरते ते। माध्यस्थ्यमास्थाय परीक्षका ये, मणौ च काचे च समानुबन्धाः ॥ १ ॥

देशविषयं तु इदमेव बुद्धवचनं साङ्ख्यकणादादिवचनं वा तत्त्वमिति। इदं तु व्यक्तमेव सम्यक्त्वदूषणम् ४। तैर्मिथ्यादृष्टिभिरेकत्र संवासात्परस्परालापादिजनितः परिचयः संस्तवः। एकत्रवासे हि तत्प्रक्रियाश्रवणात्तत्क्रियादर्शनाच्च दृढसम्यक्त्ववतोऽपि दृष्टिभेदः सम्भाव्यते, किमुत मन्दबुद्धेर्नवधर्म्मस्य इति संस्तवोऽपि सम्यक्त्वदूषणम् ५। एवंविधं च सम्यक्त्वं विशिष्टद्रव्यक्षेत्रकालभावसामग्र्यां सत्यां गुरोः समीपे विधिना प्रतिपद्य श्रावको यथावत्पालयति। यदाह—

[1]समणोवासओ तत्थ मिच्छत्ताओ पडिक्कमे। दव्वओ भावओ पुव्विं सम्मत्तं पडिवज्जए ॥ १ ॥

न कप्पए से परतित्थियाणं, तहेव तेसिं चिय देवयाणं। परिग्गहे ताण य चेइयाणं, पहावणावंदणपूयणाइं ॥२॥

लोयाण तित्थेसु सिणाणदाणं, पिंडप्पयाणं हुणणं तवं च। संकंतिसोमग्गहणाइएसुं, पभूयलोयाण पवाहकिच्चं ॥३॥

एवं तावत्सागरोपमकोटीकोट्यां शेषायां किञ्चिदूनायां मिथ्यात्वमोहनीयस्थितौ जन्तुः सम्यक्त्वं प्रतिपद्यते। सागरोपमकोटीकोट्यामप्यवशिष्टायां पल्योपमपृथक्त्वं यदा व्यतीतं भवति तदा देशविरतिं प्रतिपद्यते। यदाह—

---

(१) श्रमणोपासकस्तत्र मिथ्यात्वात्प्रतिक्रामेत्। द्रव्यतो भावतः पूर्वं सम्यक्त्वं प्रतिपद्यते ॥

(२) न कल्पते तस्य परतीर्थिकानां तथैव तेषामेव देवतानाम्। परिग्रहे तेषां च चैत्यानां प्रभावनावन्दनपूजनादि ॥

(३) लोकानां तीर्थेषु स्नानदानं पिण्डप्रदानं हवनं तपश्च। संक्रान्तिसोमग्रहणादिकेषु प्रभूतलोकानां प्रवाहकृत्यम् ॥

" 'सम्मत्तम्मि उ लद्धे पलियपुहुत्तेण सावओ होज्ज त्ति " ॥ १७ ॥

सम्यक्त्वमूलानि पञ्चाणुव्रतानीत्युक्त तत्र सम्यक्त्वमभिहितमिदानीमणुव्रतान्याह—

**विरतिं स्थूलहिंसादेर्द्विविधत्रिविधादिना । अहिंसादीनि पञ्चाणुव्रतानि जगदुर्जिना ॥१८॥**

स्थूला मिथ्यादृष्टीनामपि हिंसात्वेन प्रसिद्धा या हिंसा सा स्थूलहिंसा स्थूलानां वा त्रसानां जीवानां हिंसा स्थूलहिंसा । स्थूलग्रहणमुपलक्षणम् । तेन निरपराधसङ्कल्पपूर्वकहिंसानामपि ग्रहण आदिग्रहणात् स्थूलानृतस्तेयाब्रह्मचर्यपरिग्रहाणां सग्रह' । एभ्यः स्थूलहिंसादिभ्यो या विरतिर्निवृत्तिस्तामहिंसादीनि अहिंसासूनृतास्तेयब्रह्मचर्यापरिग्रहान् पञ्चाणुव्रतानीति ( तानि ) जिनास्तीर्थकरा जगदुः प्रतिपादितवन्तः । किमविशेषेण विरतिर्नेत्याह । द्विविधत्रिविधादिना भङ्गजालेन द्विविधः कृतकारितरूपस्त्रिविधो मनोवाक्कायभेदेन यत्र स द्विविधत्रिविध एको भङ्गः । इह यो हिंसादिभ्यो विरतिं प्रतिपद्यते, स द्विविधा कृतकारितभेदां त्रिविधेन मनसा वचसा कायेन चेति । एव च भावना–स्थूलहिंसां न करोत्यात्मना न कारयत्यन्येन मनसा वचसा कायेन चेति । अस्य चानुमतिरप्रतिषिद्धा अपत्यादिपरिग्रहसद्भावात् तैर्हिंसादिकरणे च तस्यानुमतिप्राप्ते । अन्यथा परिग्रहापरिग्रहयोरविशेषेण प्रव्रजिताप्रव्रजितयोरभेदापत्तेः । ननु भगवत्यादावागमे त्रिविध त्रिविधेनेत्यपि प्रत्याख्यानमुक्तमगारिणः, तच्छ्रुतोक्तत्वादनवद्यमेव तत्कस्मान्नोच्यते ? उच्यते–तस्य विशेषविषयत्वात् । तथाहि यः किल प्रविव्रजिषुरेव

( १ ) सम्यक्त्वे तु लब्धे पल्योपमपृथक्त्वेन श्रावको भवेदिति ।

प्रतिमाः प्रतिपद्यते पुत्रादिसन्ततिपालनाय यो वा विशेषं स्वयंभूरमणादिगतं मत्स्यादिमांसं स्थूलहिंसादिकं वा क्वचिदवस्थाविशेषे प्रत्याख्याति स एव त्रिविधं त्रिविधेनेति करोति। इत्यल्पविषयत्वान्नोच्यते । बाहुल्येन तु द्विविधं त्रिविधेनेति । द्विविधत्रिविध आदिर्यस्य द्विविधत्रिविधादेर्भङ्गजालस्य तेन ॥

द्विविधं द्विविधेनेति द्वितीयो भङ्गः द्विविधमिति स्थूलहिंसां न करोति न कारयति द्विविधेनेति मनसा वचसा यद्वा मनसा कायेन यद्वा वाचा कायेनेति । तत्र यदा मनसा वाचा न करोति न कारयति तदा मनसा अभिसन्धिरहित एव वाचापि हिंसकमब्रुवन्नेव कायेनैव दुश्चेष्टितादिना असंज्ञिवत्करोति । यदा तु मनसा कायेन न करोति न कारयति तदा मनसाभिसन्धिरहित एव कायेन दुश्चेष्टितादि परिहरन्नेवानाभोगाद्वाचैव हन्मि घातयामि वेति ब्रूते। यदा तु वाचा कायेन न करोति न कारयति तदा मनसैवाभिसन्धिमधिकृत्य करोति कारयति च। अनुमतिस्तु त्रिभिरपि सर्वत्रैवास्ति । एवं शेषविकल्पा अपि भावनीयाः ।

द्विविधमेकविधेनेति तृतीयः द्विविधं करणं कारणं च एकविधेन मनसा यद्वा वचसा यद्वा कायेन ।

एकविधं त्रिविधेनेति चतुर्थः एकविधं करणं यद्वा कारणं मनसा वाचा कायेन च।

एकविधं द्विविधेनेति पञ्चमः एकविधं करणं यद्वा कारणं द्विविधेन मनसा वाचा यद्वा मनसा कायेन यद्वा वाचा कायेन ।

एकविधमेकविधेनेति षष्ठः एकविधं करणं यद्वा कारणं एकविधेन मनसा यद्वा वाचा यद्वा कायेन। यदाह—

दुविहतिविहेण पढमो दुविह दुविहेण बीयओ होइ। दुविह एगविहेण एगविह चेव तिविहेण ॥ १॥ एगविहं दुविहेण एगेगविहेण छट्ठओ होइत्ति।

एते च भङ्गाः करणत्रिकेण योगत्रिकेण च विशेष्यमाणा एकोनपञ्चाशद्भवन्ति। तथाहि—

हिंसां न करोति मनसा १ वाचा २ कायेन ३ मनसा वाचा ४ मनसा कायेन ५ वाचा कायेन वा ६ मनसा वाचा कायेन च ७ एते करणेन सप्त भङ्गा ।

एव कारणेन सप्त। अनुमत्या सप्त। तथा हिंसां न करोति न कारयति च मनसा १ वाचा २ कायेन ३ मनसा वाचा ४ मनसा कायेन ५ वाचा कायेन वा ६ मनसा वाचा कायेन च ७। एते करणकारणाभ्यां सप्त भङ्गाः।

एव करणानुमतिभ्यां सप्त। कारणानुमतिभ्यामपि सप्त। करणकारणानुमतिभिरपि सप्त। एव सर्वे मीलिता एकोनपञ्चाशद्भवन्ति। एते च त्रिकालविषयत्वात् प्रत्याख्यानस्य कालत्रयेण गुणिता सप्तचत्वारिंशदधिक शत भवन्ति। यदाह—

सेयाल भगसय पच्चक्खाणम्मि जस्स उवलद्ध। सो खलु पच्चक्खाणे कुसलो सेसा अकुसलाओ ॥ १ ॥

---

(१) द्विविधत्रिविधेन प्रथमो द्विविध द्विविधेन द्वितीयो भवति। द्विविध एकविधेन एकविध चैव त्रिविधेन। एकविध द्विविधेन एकैकविधेन षष्ठको भवतीति।

(१) सप्तचत्वारिंशत्भङ्गशत प्रत्याख्याने यस्य उपलब्धम्। स खलु प्रत्याख्याने कुशल शेषा अकुशला ॥

त्रिकालविषयता चातीतस्य निन्दया साम्प्रतिकस्य संवरणेन अनागतस्य प्रत्याख्यानेनेति । यदाह—
"अईअं निंदामि पडुप्पन्नं संवरेमि अणागयं पच्चक्खामि त्ति"। एते च भङ्गा अहिंसाव्रतमाश्रित्योपदर्शिताः व्रतान्तरेष्वपि द्रष्टव्याः ॥ १८ ॥

एवं सामान्येन हिंसादिगोचरां विरतिमुपदर्श्य प्रत्येकं हिंसादिषु तामुपदिदर्शयिषुर्हिंसायां तावदाह—

**पङ्गुकुष्ठिकुणित्वादि दृष्ट्वा हिंसाफलं सुधीः। निरागस्त्रसजन्तूनां हिंसां सङ्कल्पतस्त्यजेत् ॥१९॥**

इह नादृष्टपापफलाः पापान्निवर्त्तन्त इति पापफलमुपदर्शयन् हिंसाविरतिव्रतमुपदिशति । पङ्गुः सत्यपि पादे पादविहरणाक्षमः, कुष्ठी त्वग्दोषी, कुणिर्विकलपाणिः, तेषां भावः पङ्गुकुष्ठिकुणित्वम्। आदिग्रहणात्पङ्गुत्वोपलक्षितमधःकायवैगुण्यम्, कुष्ठित्वोपलक्षितं सकलरोगजातम्, कुणित्वोपलक्षितमुपरिकायवैगुण्यं संगृह्यते । एतद्धिंसाफलं दृष्ट्वा सुधीरिति बुद्धिमान्, स हि शास्त्रबलेन हिंसायाः फलमेतदिति निश्चित्य हिंसां त्यजेत् । अत्र विधौ सप्तमी। केषां? निरागस्त्रसजन्तूनां निरागसो निरपराधास्त्रसा द्वीन्द्रियादयस्तेषां सङ्कल्पेन सङ्कल्पतः आद्यादित्वात्तृतीयान्तात्तसुः । निरागस इति निरपराधजन्तुविषयां हिंसां प्रत्याचष्टे सापराधस्य तु न नियमः। त्रसग्रहणेनैकेन्द्रियविषयां हिंसां नियमयितुं न क्षम इत्याचष्टे—सङ्कल्पत इति अमुं जन्तुं मांसाद्यर्थित्वेन हन्मीति सङ्कल्पपूर्वकं हिंसां वर्जयेत्। आरम्भजा तु हिंसा अशक्यप्रत्याख्यानेति तत्र यतनामेव कुर्यादिति । अत्रान्तरश्लोकाः—

(१) अतीतं निन्दामि प्रत्युत्पन्नं संवृणोमि अनागतं प्रत्याख्यामीति ।

येषामेकान्तिको भेदः सम्मतो देहदेहिनोः। तेषां देहविनाशेऽपि न हिंसा देहिनो भवेत् ॥ १ ॥ अभेदैकान्तवादेऽपि स्वीकृते देहदेहिनोः। देहनाशे देहिनाशात्परलोकोऽस्तु कस्य वै ॥ २ ॥ भिन्नाभिन्नतया तस्माज्जीवे देहात्प्रतिश्रुते। देहनाशे भवेत्पीडा या तां हिंसां प्रचक्षते ॥ ३ ॥ दुःखोत्पत्तिर्मनःक्लेशस्तत्पर्यायस्य च क्षयः। यस्यां स्यात्सा प्रयत्नेन हिंसा हेया विपश्चिता ॥ ४ ॥ प्राणी प्रमादतः कुर्याद्यत्प्राणव्यपरोपणम्। सा हिंसा जगदे प्राज्ञैर्बीजं संसारभूरुहः ॥ ५ ॥ शरीरी म्रियतां मा वा ध्रुवं हिंसा प्रमादिनः। सा प्राणव्यपरोपेऽपि प्रमादरहितस्य न ॥ ६ ॥ जीवस्य हिंसा न भवेन्नित्यस्यापरिणामिनः। क्षणिकस्य स्वयं नाशात्कथं हिंसोपपद्यताम् ॥ ७ ॥ नित्यानित्ये ततो जीवे परिणामिनि युज्यते। हिंसा कायवियोगेन पीडातः पापकारणम् ॥ ८ ॥ केचिद्वदन्ति हन्तव्याः प्राणिनः प्राणिघातिनः। हिंस्रस्यैकस्य घाते स्याद्रक्षणं भूयसां किल ॥ ९ ॥ तदयुक्तमशेषाणां हिंस्रत्वात्प्राणिनामिह। हन्तव्यता स्यात्तल्लाभमिच्छोर्मूलक्षतिः स्फुटा ॥१०॥ अहिंसासम्भवो धर्मः स हिंसातः कथं भवेत्। न तोयजानि पद्मानि जायन्ते जातवेदसः ॥ ११ ॥ पापहेतुर्वधः पापं कथं छेत्तुमलं भवेत्। मृत्युहेतुः कालकूटं जीविताय न जायते ॥ १२ ॥ संसारमोचकास्त्वाहुर्दुःखिनां वध इष्यताम्। विनाशे दुःखिनां दुःखविनाशो जायते किल ॥ १३ ॥ तदप्यसाम्प्रतं ते हि हता नरकगामिनः। अनन्तेषु नियोज्यन्ते दुःखेषु स्वल्पदुःखकाः ॥ १४ ॥ किं च सौख्यवतां घाते धर्मः स्यात्पापवारणात्। इत्थं विचार्य हेयानि वचनानि कुतीर्थिनाम् ॥१५॥ चार्वाकाः प्राहुरात्मैव तावन्नास्ति कथञ्चन। तं विना कस्य सा हिंसा कस्य हिंसाफलं भवेत् ॥ १६ ॥ भूतेभ्य एव चैतन्यं पिष्टादिभ्यो यथा मदः। भूतसङ्घविनाशे च पञ्चत्वमिति कथ्यते ॥ १७ ॥ आत्माभावे च तन्मूलः

परलोको न युज्यते । अभावे परलोकस्य पुण्यापुण्यकथा वृथा ॥ १८ ॥ तपांसि यातनाश्चित्राः संयमो भोगवञ्चना । इति विप्रतिपत्तिभ्यः परेभ्यः परिभाष्यते ॥ १९ ॥ स्वसंवेदनतः सिद्धः स्वदेहे जीव इष्यताम् । अहं दुःखी सुखी वाहमिति प्रत्यययोगतः ॥ २० ॥ घटं वेद्म्यहमित्यत्र त्रितयं प्रतिभासते । कर्म्म क्रिया च कर्त्ता च तत्कर्त्ता किं निषिध्यते ॥ २१ ॥ शरीरमेव चेत्कर्त्तृ न कर्त्तृ तदचेतनम् । भूतचैतन्ययोगाच्चेच्चेतनं तदसङ्गतम् ॥ २२ ॥ मया दृष्टं श्रुतं स्पृष्टं घ्रातमास्वादितं स्मृतम् । इत्येककर्त्तृकाभावात् भूताचिद्रादिनः कथम् ॥ २३ ॥ स्वसंवेदनतः सिद्धे स्वदेहे चेतनात्मनि । परदेहेऽपि तत्सिद्धिरनुमानेन साध्यते ॥ २४ ॥ बुद्धिपूर्वा क्रियां दृष्ट्वा स्वदेहेऽन्यत्र तद्गतिः । प्रमाणबलतः सिद्धा केन नाम निवार्यते ॥ २५ ॥ तत्परलोकिनः सिद्धौ परलोको न दुर्घटः । तथा च पुण्यपापादि सर्वमेवोपपद्यते ॥ २६ ॥ तपांसि यातनाश्चित्रा इत्याद्युन्मत्तभाषितम् । सचेतनस्य तत्कस्य नोपहासाय जायते ॥ २७ ॥ निर्बाधोऽस्ति ततो जीवः स्थित्युत्पादव्ययात्मकः । ज्ञाता द्रष्टा गुणी भोक्ता कर्त्ता कायप्रमाणकः ॥२८॥ तदेवमात्मनः सिद्धौ हिंसा किं नोपपद्यते । तदस्याः परिहारेणाहिंसाव्रतमुदीरितम् ॥ २९ ॥ १९ ॥

हिंसानियमे स्पष्टं दृष्टान्तमाह—

**आत्मवत्सर्वभूतेषु सुखदुःखे प्रियाप्रिये । चिन्तयन्नात्मनोऽनिष्टां हिंसामन्यस्य नाचरेत् ॥२०॥**

सुखशब्देन सुखसाधनमन्नपानस्रक्चन्दनादि गृह्यते । दुःखशब्देन दुःखसाधनं वधबन्धमारणादि । ततो

(१) स्वयमेवो० ।

यथात्मनि दुःखसाधनमप्रियं तथा सर्वभूतेष्वपि । एवं चिन्तयन् दुःखसाधनत्वादप्रियां परस्य हिंसां न कुर्वीत । सुखग्रहणं दृष्टान्तार्थम् । यथा सुखसाधनं प्रियमेव दुःखसाधनमप्रियम् । तथा सर्वभूतेष्वपि दुःखसाधनमप्रियमित्यर्थः । यदाहुर्लौकिका अपि—

श्रूयतां धर्मसर्वस्वं श्रुत्वा चैवावधार्यताम् । आत्मनः प्रतिकूलानि परेषां न समाचरेत् ॥ १ ॥ इति ॥ २० ॥

ननु प्रतिषिद्धाचरणे दोषः, प्रतिषिद्धा च त्रसजीवविषया हिंसा, स्थावरेषु त्वप्रतिषिद्धहिंसेषु यथेष्टं चेष्टन्तां गृहस्था इत्याह—

**निरर्थिकां न कुर्वीत जीवेषु स्थावरेष्वपि । हिंसामहिंसाधर्मज्ञः काङ्क्षन्मोक्षमुपासकः ॥२१॥**

स्थावरा पृथिव्यम्बुतेजोवायुवनस्पतयस्तेष्वपि जीवेषु हिंसां न कुर्वीत । किंविशिष्टां ? निरर्थिकां प्रयोजनरहितां, शरीरकुटुम्बनिर्वाहनिमित्तं हि स्थावरेषु हिंसा न प्रतिषिद्धा, या त्वनर्थिका शरीरकुटुम्बादिप्रयोजनरहिता तादृशीं हिंसां न कुर्वीत उपासकः श्रावकः । किंविशिष्टः ? अहिंसाधर्मज्ञः अहिंसालक्षणं धर्मं जानातीति अहिंसाधर्मज्ञः । न हि प्रतिषिद्धवस्तुविषयैवाहिंसा धर्मः किं त्वप्रतिषिद्धेष्वपि सा यतनारूपा । ततश्च तथाविधं धर्मं जानन् स्थावरेष्वपि निरर्थिकां हिंसां न विदधीत । ननु प्रतिषिद्धविषयैवाहिंसास्तु किमनया सूक्ष्मेक्षिकया ? इत्याह—काङ्क्षन्मोक्षं, स हि मोक्षाकाङ्क्षी यतिवत् कथं निरर्थिकां हिंसामाचरेत् ? ॥ २१ ॥

ननु निरन्तरहिंसापरोऽपि सर्वस्वं दक्षिणां दत्त्वा पापविशुद्धिं विदध्यात् किमनेन हिंसापरिहारक्लेशेन ? इत्याह—

**प्राणी प्राणितलोभेन यो राज्यमपि मुञ्चति । तद्वधोत्थमघं सर्वोर्वीदानेऽपि न शाम्यति ॥२२॥**

प्राणी जन्तुः प्राणितं जीवितव्यं तस्य लोभेन राज्यमपि तत्कालोपस्थितं परिहरति । यदाह—

मार्यमाणस्य हेमाद्रिं राज्यं वाथ प्रयच्छतु । तदनिष्टं परित्यज्य जीवो जीवितुमिच्छति ॥ १ ॥

तत्तथाविधप्राणितप्रियप्राणिवधसम्भवं पापं सकलपृथ्वीदानेनापि न शाम्यति । भूदानं हि सकलदानेभ्योऽभ्यधिकमिति श्रुतिः ॥ २२ ॥

अथ श्लोकचतुष्टयेन हिंसाकर्तुर्निन्दामाह—

**वने निरपराधानां वायुतोयतृणाशिनाम् । निघ्नन् मृगाणां मांसार्थी विशिष्येत कथं शुनः ? ॥२३॥**

मृगाणामिति " निप्रेभ्यो घ्नः " ॥ २ । २ । १५ ॥ इति कर्मत्वप्रतिषेधाच्छेषे षष्ठी । वने वनवासिनां न तु परस्वीकृतभूमिवासिनां । तथाविधा अपि सापराधाः स्युरित्याह–निरपराधानां परधनहरणपरगृहभङ्गपरमारणाद्यपराधरहितानां । निरपराधत्वे हेतुमाह–वायुतोयतृणाशिनाम्, न हि वायुतोयतृणानि परधनानि येन तद्भक्षणात्सापराधत्वं स्यात् । मांसार्थीति अत्रापि मृगाणामिति सम्बध्यते । मृगाणां यन्मांसं तदर्थयते, मृगग्रहणेनाटविकाः प्राणिनो गृह्यन्ते । एवंविधमृगमांसार्थी मृगवधपरायणो निरपराधमानुषपिचण्डिकामांसलुब्धाच्छुनः कथं विशिष्येत श्वैवेत्यर्थः ॥ २३ ॥

**दीर्यमाणः कुशेनापि यः स्वाङ्गे हन्त दूयते । निर्मन्तून् स कथं जन्तूनन्तयेन्निशितायुधैः ॥२४॥**

दीर्यमाणो विदार्यमाणः कुशेन दर्भेण अपिशब्दादास्तां शस्त्रेण यः स्वाङ्गे शरीरे हन्तेति प्रतिबोध्याम-न्त्रणे दूयते उपतप्यते। निर्म्मन्तूञ्चिरपराधान् जन्तून् स कथं अन्तयेदन्तं प्रापयेत् निशितायुधैः कुन्तादिभिः ? आत्मानुसारेणापि परपीडामजानन्नेव निन्द्यते। तथा च मृगयाव्यापृतान् क्षत्रियान् प्रति केनचिदुक्तम्—

रसातलं यातु यदत्र पौरुषं, कै नीतिरेषाऽशरणो ह्यदोषवान्।
निहन्यते यद्बलिनातिदुर्बलो, हहा महाकष्टमराजकं जगत् ॥ १ ॥ २४ ॥

निर्मातुं क्रूरकर्माणः क्षणिकामात्मनो धृतिम्। समापयन्ति सकलं जन्मान्यस्य शरीरिणः ॥२५॥

क्रूरं रौद्रं कर्म हिंसादि येषां ते क्रूरकर्माणो लुब्धकादयः। आत्मनः स्वस्य धृतिं स्वास्थ्यलक्षणां निर्मातु-मिति सम्बन्धः। धृतेर्विशेषणं क्षणिकामिति आजन्मशाश्वतिकधृतिनिमित्तं कदाचित्किञ्चिद्विरुद्धमपि क्रियते। क्षणिकधृतिनिर्माणार्थं तु समापयन्ति समाप्तिं नयन्ति जन्म अन्यस्य वध्यस्य शरीरिणः। अयमर्थः—परप्राणिमास-जन्यक्षणिकतृप्तिहेतोराकालिकं परस्यायुः समाप्यत इति महादिदं वैशसम्। यदाह—

योऽश्नाति यस्य तन्मांसमुभयोः पश्यतान्तरम्। एकस्य क्षणिका तृप्तिः प्राणैरन्यो वियुज्यते ॥ १ ॥ २५ ॥

म्रियस्वेत्युच्यमानोऽपि देही भवति दुःखितः। मार्यमाणः प्रहरणैर्दारुणैः स कथं भवेत् ? ॥२६॥

म्रियस्व त्वमित्युच्यमानोऽपि न तु मार्यमाणो देही जन्तुर्जायमानमृत्युरिव दुःखितो भवतीति सर्वप्राणिप्रती-

(१) कुनीति।

तम् । प्रहरणैः कुन्ततोमरादिभिर्मार्यमाणो विनाश्यमानः स वराको देही कथं भवेत्? परमदुःखित एव भवेदित्यर्थः । मरणवचनेनाऽपि दूयमानस्य निशितैः शस्त्रैर्मारणमिति मृतमारणं तत्कथं सकर्णः कुर्यादिति निन्दा ॥ २६ ॥

हिंसाफलं दृष्टान्तद्वारेणाह—

**श्रूयते प्राणिघातेन रौद्रध्यानपरायणौ । सुभूमो ब्रह्मदत्तश्च सप्तमं नरकं गतौ ॥ २७ ॥**

श्रूयते आकर्ण्यते एतदागमे । यदुत प्राणिघातेन हेतुना सुभूमब्रह्मदत्तौ चक्रवर्त्तिनौ सप्तमं नरकं गतौ । हिंसाया नरकगमनहेतुत्वं न रौद्रध्यानमन्तरेण भवति । अन्यथा सिंहवधकतपस्विनोऽपि नरकः स्यादित्युक्तं रौद्रध्यानपरायणौ हिंसानुबन्धिध्यानयुक्तावित्यर्थः । यथा तौ नरकं गतौ तथा कथानकद्वारेण दर्श्यते । तथाहि—

वसन्तपुरनामायां पुर्यामुच्छन्नवंशकः । आसीच्च्युत इवाकाशादग्निको नाम दारकः ॥ १ ॥ सोऽन्यदा चलितस्तस्मात् स्थानाद्देशान्तरं प्रति । सार्थाद्धीनः परिभ्राम्यन्नगमत्तापसाश्रमम् ॥ २ ॥ तमग्निं तनयत्वेनाग्रहीत्कुलपतिर्जमः । जमदग्निरिति ख्यातिं स लोकेषु ततोऽगमत् ॥ ३ ॥ तप्यमानस्तपस्तीक्ष्णं प्रत्यक्ष इव पावकः । तेजसा दुःसहेनासौ पप्रथे पृथिवीतले ॥४॥ अत्रान्तरे महाश्राद्धो नाम्ना वैश्वानरः सुरः । धन्वन्तरिश्च तापसभक्तो व्यवदतामिति ॥ ५ ॥ एक आहार्हतां धर्मः प्रमाणमितरः पुनः । तापसानां विवादेऽस्मिन् व्यधातामिति निर्णयम् ॥ ६ ॥ आर्हतेषु जघन्यो यः प्रकृष्टस्तापसेषु यः । परीक्षणीयावावाभ्यां को गुणैरतिरिच्यते ? ॥ ७ ॥ तदानीं मिथिलापुर्यां नवधर्मपरिष्कृतः । श्रीमान् पद्मरथो नाम प्रस्थितः पृथिवीपतिः ॥ ८ ॥ दीक्षां श्रीवासु-

पूज्यान्ते ग्रहीतु भावतो यतिः । गच्छश्चम्पापुरीं ताभ्यां देवाभ्या ददृशे पथि ॥ ९ ॥ परीक्षाकाङ्क्षया ताभ्यां पानाम्भे ढौकिते नृपः । तृषित. क्षुधितोऽप्यौज्झद्धीराः सत्त्वाच्चलन्ति न ॥ १० ॥ क्रकचैरिव चक्राते क्रूरै' कर्करकण्टकैः । पीडा देवौ नृदेवस्य मृदुनो पादपद्मयो ॥ ११ ॥ पादाभ्यां प्रक्षरद्रक्तधाराभ्यां तादृशेऽध्वनि । तूलिकातलसञ्चार सचेरे च तथापि सः ॥ १२ ॥ निर्ममे गीतनृत्यादि ताभ्यां चोभाय भूपतेः । तन्मोघमभवत्तत्र दिव्यास्त्रमिव गोव्रजे ॥ १३ ॥ तौ सिद्धपुत्ररूपेण पुरोभूयेदमूचतु । तवाद्यापि महाभाग महदायुर्युवासि च ॥ १४ ॥ स्वच्छन्द भुङ्क्ष्व तद्भोगान् का धीर्यद्यौवने तपः । निशीथकृत्य कः प्रात कुर्यादुद्योगवानपि ॥ १५ ॥ यौवने तदतिक्रान्ते देहदौर्बल्यकारणम् । गृह्णीयास्त्व तपस्तात द्वितीयमिव वार्द्धकम् ॥ १६ ॥ राजोचे यदि बह्वायुर्बहुपुण्य भविष्यति । जलमानेन नलिनीनाल हि परिवर्द्धते ॥ १७ ॥ लोलेन्द्रिये यौवने हि यत्तपस्तत्तपो ननु । दारुणास्त्रे रणे यो हि शूरः शूर' स उच्यते ॥ १८ ॥ तस्मिन्नचलिते सत्त्वात्साधु साध्विति वादिनौ । तौ गतौ तापसोत्कृष्ट जमदग्निं परीक्षितुम् ॥ १९ ॥ न्यग्रोधमिव निस्तारिजटासस्पृष्टभूतलम् । वल्मीकाकीर्णपादान्त दान्त तौ तमपश्यताम् ॥ २० ॥ तस्य श्मश्रुलताजाले नीड निर्माय मायया । तदैव देवौ चटकमिथुनीभूय तस्थतु. ॥ २१ ॥ चटकश्चटकामूचे यास्यामि हिमवद्गिरौ । अन्यासक्तो नैष्यसि त्वमिति त नान्वमस्त सा ॥ २२ ॥ गोघातपातकेनाह गृहे नायामि चेत्प्रिये । इत्युक्तशपथ भूयश्चटक चटकाऽब्रवीत् ॥ २३ ॥ ऋषेरस्यैनसा गृह्ये शपेथा इति चेत्प्रिय । विसृजामि तदैव त्वा पन्थानः सन्तु ते शिवा ॥ २४ ॥ इत्याकर्ण्य वचः क्रुद्धो जमदग्निमुनिस्ततः । उभाभ्यामपि हस्ताभ्यामुभौ जग्राह पक्षिणौ ॥ २५ ॥ आचचक्षे ततो हन्त कुर्वाणे दुष्कर

तपः । उष्णरश्माविव ध्वान्तमाः पापं मयि कीदृशम् ॥ २६ ॥ अथर्षि चटकोवाच मा कुपस्ते मुधा तपः । अपुत्रस्य गतिर्नास्तीत्यश्रौषीस्त्वं न किं श्रुतिम् ॥ २७ ॥ तत्तथा मन्यमानोऽयं मुनिरेवमचिन्तयत् । ममाकलत्र-पुत्रस्य प्रवाहे मूत्रितं तपः ॥ २८ ॥ क्षुभितं तं परिज्ञाय धिग् भ्रान्तस्तापसैरिति । जज्ञे धन्वन्तरिः श्राद्धः प्रत्येति प्रत्ययान्न कः ॥ २९ ॥ बभूवतुरदृश्यौ च तावपि त्रिदशौ तदा । जमदग्निश्च सम्प्राप पुरं नेमिककोष्ठकम् ॥ ३० ॥ जितशत्रुमहीपालं तत्र भूयिष्ठकन्यकम् । स प्रेप्सुः कन्यकामेकां दत्तं हर इवागमत् ॥ ३१ ॥ कृत्वाभ्युत्थानमुर्वीशः प्राञ्जलिस्तमभाषत । किमर्थमागता यूयं ब्रूत किं करवाण्यहम् ॥३२॥ कन्यार्थमागतोऽस्मीति मुनिनोक्ते नृपोऽब्रवीत् । मध्ये शतस्य कन्यानां त्वां येच्छति गृहाण ताम् ॥ ३३ ॥ स कन्यान्तःपुरं गत्वा जगाद नृपकन्यकाः । धर्मपत्नी मम काचिद्भवतीभ्यो भवत्विति ॥३४॥ जटिलः पलितः क्षामो भिक्षाजीवो वदन्निदम् । न लज्जसे त्वमिति ताः कृतथूत्कारमूचिरे ॥३५॥ समीरण इव क्रुद्धो जमदग्निमुनिस्ततः । अधिज्येष्वासयष्ट्याभाः[1] कन्याः कुब्जीचकार ताः ॥३६॥ अथाङ्गणे रेणुपुञ्जे रममाणां नृपात्मजाम् । एकामालोकयामास रेणुकेत्यब्रवीच्च ताम् ॥३७॥ स तस्या इच्छसी-त्युक्त्वा मातुलिङ्गमदर्शयत् । तया प्रसारितः पाणिः पाणिग्रहणसूचकः ॥३८॥ तां मुनिः परिजग्राह रोरो धनमिवोरसा । सार्द्धं गवादिभिस्तस्मै ददौ च विधिवन्नृपः ॥३९॥ स श्यालीस्नेहसम्बन्धादेकोनं कन्यकाशतम् । सज्जीचक्रे तपःशक्त्या धिग्मूढानां तपोव्ययः ॥४०॥ नीत्वाश्रमपदं तां च स मुग्धमधुराकृतिम् । हरिणीमिव लोलाक्षीं प्रेम्णा मुनिरवर्द्धयत् ४१ अङ्गुलीभिर्गणयतो दिनान्यस्य तपस्विनः । यौवनं चारुकन्दर्पलीलावनमवाप सा ॥४२॥ साक्षीकृतज्वलदग्निर्ज-

१ अधिज्यधनुर्यष्टितुल्याः ।

मदग्निर्मुनिस्तत. । यथावदुपयेमे तां भूतेश इव पार्वतीम् ॥ ४३ ॥ ऋतुकाले स ऊचे तां चरुं ते साधयाम्यहम्। यथा ब्राह्मणमूर्द्धन्यो धन्य उत्पद्यते सुतः ॥ ४४ ॥ सोवाच हस्तिनपुरेऽनन्तवीर्यस्य भूपतेः। पत्न्यस्ति मत्स्वसा तस्यै चरुः क्षात्रोऽपि साध्यताम् ॥ ४५ ॥ ब्राह्मं सधर्मचारिण्यै चात्र तज्जामयेऽपरम् । स चरुं साधयामास पुत्रीयमुपजीवितुम् ॥ ४६ ॥ साचिन्तयदहं तावद्भूवमटवीमृगी । मा भून्मादृक् सुतोऽपीति चात्र चरुमभक्षयत् ॥४७॥ साऽदाद्ब्राह्म चरुं स्वस्रे जातौ च तनयौ तयोः । तत्र रामो रेणुकाया. कृतवीर्यश्च तत्स्वसु ॥ ४८ ॥ क्रमेण ववृधे राम ऋषित्वे पैतृकेऽपि स' । क्षात्रं प्रदर्शयस्तेजो हुताशनमिवाम्भसि ॥ ४९ ॥ विद्याधरोऽन्यदा तत्र कोऽप्यागादतिसारकी । विद्या तस्यातिसारात्तर्या विस्मृताकाशगामिनी ॥५०॥ रामेण प्रतिचरितो भेषजाद्यैः स बन्धुवत्। रामाय सेवमानाय विद्यां पारशवीं ददौ ॥ ५१ ॥ मध्येशरवणं गत्वा तां च विद्यामसाधयत् । राम परशुरामोऽभूत्तत प्रभृति विश्रुत. ॥ ५२ ॥ अन्येद्युः पतिमापृच्छ्य रेणुकोत्कण्ठिता स्वसुः । जगाम हस्तिनपुरे प्रेम्णो दूरं न किञ्चन ॥५३॥ स्यालीति लालयन् लोललोचनां तत्र रेणुकाम् । अनन्तवीर्योऽरमयत्कामः काम निरङ्कुशः ॥ ५४ ॥ ऋषिपत्न्या तया राजाहल्ययेव पुरन्दरः । अन्वभूच्च यथाकाम सम्भोगसुखसम्पदम् ॥५५॥ अनन्तवीर्यात्तनयो रेणुकायामजायत । ममतायामिवोतथ्यः सधर्मिण्यां बृहस्पतेः ॥ ५६ ॥ तेनापि सह पुत्रेण रेणुकामानयन्मुनिः । स्त्रीषु लुब्धो जनः प्रायो दोषं न खलु वीक्षते ॥ ५७ ॥ तां पुत्रसहितां वल्लीमकालफलितामिव । सञ्जातकोप परशुरामः परशुनाऽच्छिनत् ॥ ५८ ॥ तद्भगिन्या स वृत्तान्तोऽनन्तवीर्यस्य शंसितः । कोपमुद्दीपयामास कृशानुमिव मारुतः ॥ ५९ ॥ ततश्चानार्यदोर्वीर्योऽनन्तवीर्यो महीपतिः । जमदग्न्याश्रमं गत्वाभाङ्क्षीन्मत्त इव

द्विपः ॥ ६० ॥ तापसानां कृतत्रासः समादाय गवादि सः । मन्दं मन्दं परिक्रामन् केसरीव न्यवर्त्तत ॥ ६१ ॥ त्रस्यत्तपस्वितुमुलं श्रुत्वा ज्ञात्वा च तां कथाम् । क्रुद्धः परशुरामोऽथाधावत्साक्षादिवान्तकः ॥ ६२ ॥ सुभटग्रामसंग्रामकौतुकी जमदग्निजः । पर्शुना खण्डशश्चक्रे दारुवद्दारुणेन तम् ॥ ६३ ॥ राज्ये निवेशयाञ्चक्रे तस्य प्रकृतिपूरुषैः । कृतवीर्यो महावीर्यः स एव तु वयोलघुः ॥ ६४ ॥ स तु मातृमुखाच्छ्रुत्वा मृत्युव्यतिकरं पितुः । आदिष्टाहिरिवागत्य जमदग्निममारयत् ॥६५॥ रामः पितृवधक्रुद्धो द्रागगत्वा हस्तिनापुरे । अमारयत्कृतवीर्यं किं यमस्य दवीयसि ॥ ६६ ॥ जामदग्न्यस्ततस्तस्य राज्ये न्यविशत स्वयम् । राज्यं हि विक्रमाधीनं न प्रमाणं क्रमाक्रमौ ॥ ६७ ॥ रामाक्रान्तपुराद्राज्ञी कृतवीर्यस्य गुर्विणी । व्याघ्राघ्रातवनादेणीवाग- मत्तापसाश्रमम् ॥ ६८ ॥ कृपाधनैर्भूगृहान्तः सा निधाय निधानवत् । तपस्विभिर्गोप्यते स्म क्रूरात्परशुरामतः ॥ ६९ ॥ चतुर्दशमहास्वप्नसूचितोऽस्याः सुतोऽजनि । गृह्णन् भूमिं सुखेनाभूत्सुभूमो नामतस्ततः ॥ ७० ॥ क्षत्रियो यत्र यत्रासीत्तत्र तत्राप्यदीप्यत । पर्शुः परशुरामस्य कोपाग्निरिव मूर्त्तिमान् ॥ ७१ ॥ रामोऽगादन्यदा तत्राश्रमे पर्शुश्च सोऽज्वलत् । क्षत्रं चासूचयद्धूम इव धूमध्वजं तदा ॥ ७२ ॥ किमत्र क्षत्रियोऽस्तीति पृष्टास्तेन तपस्विनः । इत्यूचुस्तापसीभूताः क्षत्रिया वयमास्महे ॥ ७३ ॥ रामोऽप्यमर्षान्निःक्षत्रां सप्तकृत्वो वसुन्धराम् । निर्ममे निस्तृणां शैलतटीमिव दवानलः ॥ ७४ ॥ क्षुण्णक्षत्रियदंष्ट्राभी रामः स्थालमपूरयत् । यमस्य पूर्णकामस्य पूर्णपात्रश्रियं दधत् ॥ ७५ ॥ रामः पप्रच्छ नैमित्तानन्येद्युर्मे कुतो वधः । सदा वैरायमाणा हि शङ्कन्ते परतो मृतिम् ॥ ७६ ॥ यो दंष्ट्राः पायसीभूताः सिंहासन इह स्थितः । भोक्ष्यतेऽमूस्ततस्त्यस्ते वधो भावीति तेऽब्रुवन् ॥ ७७ ॥ रामोऽथ

कारयामास सत्रागारमवारितम् । धुरि सिंहासनं तत्रास्थापयत्स्थालमग्रतः ॥ ७८ ॥ अथाश्रमे प्रतिदिनं लालयद्भिस्तपस्विभिः । निर्व्येऽङ्गणद्रुम इव सुभूमो वृद्धिमद्भुताम् ॥ ७९ ॥ विद्याधरो मेघनादोऽन्येद्युर्नैमित्तिकानिति । परिपप्रच्छ पद्मश्रीः कन्या मे कस्य दीयताम् ॥ ८० ॥ तस्या वरं वरीयांसं सुभूमं तेऽप्युपादिशन् । दत्त्वा कन्यां ततस्तस्मै तस्यैवाभूत्स सेवकः ॥ ८१ ॥ कूपभेक इवानन्यगोऽथ पप्रच्छ मातरम् । सुभूमः किमियानेव लोकोऽयमधिकोऽपि किम् ॥ ८२ ॥ माताप्यचीकथदथो लोकोऽनन्तो हि वत्सक । मक्षिकापदमात्रं हि लोकमध्येऽयमाश्रमः ॥ ८३ ॥ अस्मिन् लोकेऽस्ति विख्यातं नगरं हस्तिनापुरम् । पिता ते कृतवीर्योऽभूत्तत्र राजा महाभुजः ॥ ८४ ॥ हत्वा ते पितरं रामो राज्यं स्वयमशिश्रियत् । क्षितिं निःक्षत्रियां चक्रे तिष्ठामस्तद्भयादिह ॥ ८५ ॥ तत्कालं हास्तिनपुरे सुभूमो भौमवज्ज्वलन् । जगाम वैरिणे क्रुद्धः क्षात्रं तेजो हि दुर्द्धरम् ॥ ८६ ॥ तत्र सत्रे ययौ सिंह इव सिंहासनेऽविशत् । दंष्ट्रास्ताः पायसीभूताः सुभुजो बुभुजे च सः ॥ ८७ ॥ उत्तिष्ठमाना युद्धाय ब्राह्मणास्तत्र रक्षका[1] । जघ्निरे मेघनादेन व्याघ्रेण हरिणा इव ॥ ८८ ॥ प्रस्फुरद्भ्रुकुटीकाकेशो दशनैरधरं दशन् । ततो रामः क्रुधा कालपाशाकृष्ट इवाययौ ॥ ८९ ॥ रामेण मुमुचे रोषात्सुभूमाय परश्वधः । विध्यातस्तत्क्षणं तस्मिन् स्फुलिङ्ग इव वारिणि ॥ ९० ॥ अस्त्राभावात्सुभूमोऽपि दंष्ट्रास्थालमुदक्षिपत् । चक्रीबभूव तत्सद्यः किं न स्यात्पुण्यसम्पदा ॥ ९१ ॥ चक्रवर्त्यष्टमः सोऽथ तेन चक्रेण भास्वता । शिरः परशुरामस्य पङ्कजच्छेदमच्छिदत् ॥ ९२ ॥ क्ष्मां निःक्षत्रियां रामः सप्तकृत्वो यथा व्यधात् । एकविंशतिकृत्वस्तां तथा निर्ब्राह्मणामसौ ॥ ९३ ॥ क्षुण्णक्षितिपह-

[1] मङ्गलग्रहवत्

स्त्यश्वपदातिव्यूहलोहितैः । वाहयन् वाहिनीर्नव्याः स प्राक् प्राचीमसाधयत् ॥ ९४ ॥ स च्छिन्नानेकसुभटमुण्डमण्डितभूतलः । दक्षिणाशां दक्षिणाशापतिरन्य इवाजयत् ॥ ९५ ॥ भटास्थिभिर्दन्तुरयन् शुक्तिशङ्खैरिवाभितः । रोधो नीरनिधेः सोऽथ प्रतीचीमजयद्दिशम् ॥ ९६ ॥ हेलोद्घाटितवैताढ्यकन्दरः स्थाममन्दरः । म्लेच्छान्विजेतुं भरतोत्तरखण्डं विवेश सः ॥ ९७ ॥ उच्छलच्छोणितरसच्छटाच्छुरितभूतलः । म्लेच्छांस्तत्राथ सोऽभाङ्क्षीदिक्षूनिव महाकरी ॥ ९८ ॥ एवं चतुर्दिशं भ्राम्यन् घरट्टश्रणकानिव । दलयन् सुभटानुर्वीं स षट्खण्डामसाधयत् ॥ ९९ ॥ उत्त्रासयन्नसुमतामिति नित्यरौद्र-ध्यानानलेन सततं ज्वलदन्तरात्मा । आसाद्य कालपरिणामवशेन मृत्युं, तां सप्तमीं नरकभूमिमगात्सुभूमः ॥ १०० ॥

इति सुभूमचक्रवर्तिकथानकम् ॥

अथ ब्रह्मदत्तकथा—

साकेतनगरे चन्द्रावतंसस्य सुतः पुरा। नामतो मुनिचन्द्रोऽभूचन्द्रवन्मधुराकृतिः ॥१॥ निर्विण्णः कामभोगेभ्यो भारेभ्य इव भारिकः। मुनेः सागरचन्द्रस्य पार्श्वे जग्राह स व्रतम् ॥२॥ प्रव्रज्यां जगतः पूज्यां पालयन्नयमन्यदा । देशान्तरे विहाराय चचाल गुरुणा सह ॥३॥ स तु भिक्षानिमित्तेन पथि ग्रामं प्रविष्टवान् । सार्थाद्भ्रष्टोऽटवीमाट यूथच्युत इवैणकः ॥४॥ स तत्र क्षुत्पिपासाभ्यामाक्रान्तो ग्लानिमागतः । चतुर्भिः,प्रतिचरितो वल्लवैर्बान्धवैरिव ॥५॥ स तेषामुपकाराय निर्ममे धर्मदेशनाम् । अपकारिष्वपि कृपा सतां किं नोपकारिषु ॥६॥ प्रवव्रजुस्ते तत्पार्श्वे चत्वारः शमशालिनः ।

चतुर्विधस्य धर्मस्य चतस्र इव मूर्त्तयः ॥७॥ व्रत तेऽपालयन् सम्यक् किन्तु द्वौ तत्र चक्रतुः। धर्मे जुगुप्सा चित्रां हि चित्तवृत्तिः शरीरिणाम् ॥ ८ ॥ जग्मतुस्तपसा तौ द्यां जुगुप्साकारिणावपि । स्वर्गाय जायतेऽवश्यमप्येकाह कृत तपः ॥ ९ ॥ च्युत्वा ततो दशपुरे शाण्डिल्यब्राह्मणावुभौ । युग्मरूपौ सुतौ दास्यां जयवत्या बभूवतुः । ॥ १० ॥ तौ क्रमाद्यौवन प्राप्तौ पित्रादिष्टौ च जग्मतु । रक्षितु क्षेत्रमीदृग् हि दासेराणां नियोजनम् ॥ ११ ॥ तयो॰ शयितयोर्नक्त नि सृत्य वटकोटरात्। एकः कृष्णाहिना दष्टः कृतान्तस्येव बन्धुना ॥ १२ ॥ ततः सर्पोपलम्भाय द्वितीयोऽपि परिभ्रमन् । वैरादिवाशु तेनैव दष्टो दुष्टेन भोगिना ॥ १३ ॥ तावनाप्तप्रतीकारौ वराकौ मृत्युमापतु' । यथाऽऽयातौ तथा यातौ निष्फल जन्म धिक्तयोः ॥ १४ ॥ कालिञ्जरगिरिप्रस्थे मृग्या यमलरूपिणौ । मृगावजनिषातां तौ वत्सधावे सहैव च ॥ १५ ॥ प्रीत्या सह चरन्तौ तौ मृगौ मृगयुणा हतौ । बाणेनैकेनैककाल कालधर्ममुपेयतु॰ ॥ १६ ॥ ततोऽपि मृतगङ्गाया राजहस्या उभावपि अजायेतां सुतौ युग्मरूपिणौ पूर्वजन्मवत् ॥ १७ ॥ क्रीडन्तावेकदेशस्थौ धृत्वा जालेन जालिक । ग्रीवा भक्त्वा ऽनधीद्धर्म्महीनानां हीदृशी गतिः ॥ १८ ॥ वाराणस्या ततोऽभूता भूतदत्ताभिधस्य तौ । महाधनसमृद्धस्य मातङ्गाधिपतेः सुतौ ॥ १९ ॥ चित्रसम्भूतनामानौ तौ मिथः स्नेहशालिनौ । न कदापि व्ययुज्येतां सम्बद्धौ नखमांसवत् ॥ २० ॥ वाराणस्या तदा चाभूच्छङ्ख इत्यवनीपतिः । आसीच्च सचिवस्तस्य नमुचिर्नाम विश्रुत ॥ २१ ॥ अपरेद्युः सोऽपराधे महीयसि महीभुजा । अर्पितो भूतदत्तस्य प्रच्छन्नवधहेतवे ॥ २२ ॥ तेनोचे नमुचिश्छन्न त्वा रक्षामि निजात्मवत् । पाठयस्यात्मजौ मे त्व यदि भूमिगृहस्थितः ॥ २३ ॥ प्रतिपन्न नमुचिना तन्मातङ्गपतेर्वच ।

जनो हि जीवितव्यार्थी तन्नास्ति न करोति यत् ॥ २४ ॥ विचित्राश्चित्रसम्भूतौ स तथाऽध्यापयत् कलाः। रेमेऽनुरक्तया सार्द्धं मातङ्गपतिभार्यया ॥ २५ ॥ ज्ञात्वा तद्भूतदत्तेनारेभे मारयितुं स तु। सहते कः स्वदारेषु पारदारिकविप्लवम् ॥ २६ ॥ ज्ञात्वा मातङ्गपुत्राभ्यां स दूरेणापसारितः। सैवास्मै दक्षिणा दत्ता प्राणरक्षणलक्षणा ॥२७॥ ततो निःसृत्य नमुचिर्गतवान् हस्तिनापुरे। चक्रे सनत्कुमारेण सचिवश्चक्रिणा निजः ॥ २८ ॥ इतश्च चित्रसम्भूतौ बभ्रतुर्नवयौवनौ। कुतोऽपि हेतोरायातौ पृथिव्यामाश्विनाविव ॥ २९ ॥ तौ स्वादु जगतुर्गीतं हाहाहूहूपहासिनौ। वादयामासतुर्वीणामतितुम्बुरुनारदौ ॥ ३० ॥ गीतप्रबन्धानुगतैः सुव्यक्तैः सप्तभिः स्वरैः। तयोर्वादयतोर्वेणुं किंकरन्ति स्म किन्नराः ॥ ३१ ॥ मुरजं धीरघोषं तौ वादयन्तौ च चक्रतुः। गृहीतमुरकंकालातोद्यकृष्णाविडम्बनाम् ॥ ॥ ३२ ॥ शिवः शिवोर्वशीरम्भामुञ्जकेशीतिलोत्तमाः। यन्नाट्यं न विदाञ्चक्रुस्तौ तदप्यभिनिन्यतुः ॥ ३३ ॥ सर्वगान्धर्वसर्वस्वमपूर्वं विश्वकार्म्मणम्। प्रकाशयद्भ्यामेताभ्यां न जह्रे कस्य मानसम् ॥ ३४ ॥ तस्यां पुरि प्रववृते कदाचिन्मदनोत्सवः। निरीयुः पौरचर्चर्यस्तत्र संगीतपेशलाः ॥ ३५ ॥ चर्चरी निर्ययौ तत्र चित्रसम्भूतयोरपि। जग्मुस्तत्रैव तद्गीताकृष्टाः पौरा मृगा इव ॥ ३६ ॥ राज्ञो व्यज्ञपि केनापि मातङ्गाभ्यां पुरीजनः। गीतेनाकृष्य सर्वोऽप्यमात्मवन्मालिनः कृतः ॥ ३७ ॥ क्षमापेनापि पुराध्यक्षः साक्षेपमिदमाज्ञपि। न प्रवेशः प्रदातव्यो नगर्यामनयोः क्वचित् ॥ ३८ ॥ ततःप्रभृति तौ वाराणस्या दूरेण तस्थतुः। प्रवृत्तश्चैकदा तत्र कौमुदीपरमोत्सवः ॥ ३९ ॥ राजशासनमुल्लङ्घ्य लोलेन्द्रियतया च तौ। प्रविष्टौ नगरीं भृङ्गौ गजगण्डतटीमिव ॥ ४० ॥ उत्सवं प्रेक्षमाणौ तौ सर्वाङ्गीणावगुण्ठनौ। दस्युवन्नगरीमध्ये छन्नं छन्नं विचेरतुः ॥ ४१ ॥ क्रोष्टुवत्क्रोष्टुशब्देन

पौरगीतेन तौ ततः । अगायता तारतारमलङ्घ्या भवितव्यता ॥ ४२ ॥ आकर्ण्य कर्णमधुरं तद्गीतं युवनागरैः । मधुवन्मक्षिकाभिस्तौ मातङ्गौ परिवारितौ ॥ ४३ ॥ कावेताविति विज्ञातुं लोकैः कृष्टावगुण्ठनौ । अरे तावेव मातङ्गावित्याक्षेपेण भाषितौ ॥ ४४ ॥ नागरैः कुट्यमानौ तौ यष्टिभिर्लोष्टुभिस्तत । श्वानाविव गृहात्पुर्या (र्या) नतग्रीवौ निरीयतुः ॥ ४५ ॥ तौ सैन्यशशवल्लोकैर्हन्यमानौ पदे पदे । स्खलत्पादौ कथमपि गम्भीरोद्यानमीयतुः ॥ ४६ ॥ तावचिन्तयतामेव धिग् नौ दुर्ज्ञातिदूषितम् । कलाकौशलरूपादि पयो ग्रातमिवाहिना ॥ ४७ ॥ उपकारो गुणैरास्तामपकारोऽयमावयोः । तदिदं क्रियमाणाया शान्तेर्वेताल उत्थितः ॥ ४८ ॥ कलालावण्यरूपाणि स्यूतानि वपुषा सह । तदेवानर्थसदनं तृणवत्त्यज्यतां क्षणात् ॥ ४९ ॥ इति निश्चित्य तौ प्राणपरिहारपरायणौ । मृत्युं साक्षादिव द्रष्टुं चेलतुर्दक्षिणाभिमुखौ ॥ ५० ॥ ततो दूरं प्रयातौ तौ गिरिमेकमपश्यताम् । यत्रारूढैर्भुवि वीक्ष्यन्ते करिणः किरिपोतवत् ॥ ५१ ॥ भृगुपातेच्छया ताभ्यामारोहद्भ्यां महामुनिः । ददृशे पर्वते तस्मिन् जङ्गमो गुणपर्वतः ॥ ५२ ॥ तौ प्रावृषेण्यमिवाम्भोदं मुनिं गिरिशिरःस्थितम् । दृष्ट्वा प्रणष्टसन्तापप्रसरौ तौ बभूवतुः ॥ ५३ ॥ तौ प्राग्दुःखमिवोज्झन्तावानन्दाश्रुजलच्छलात् । तत्पादपद्मयोर्भृङ्गाविव सद्यो निपेततुः ॥ ५४ ॥ समाप्य मुनिना ध्यानं कौ युवां किमिहागतौ । इति पृष्टौ स्ववृत्तान्तं तावशेषमशंसताम् ॥ ५५ ॥ स ऊचे भृगुपातेन वपुरेव हि शीर्यते । शीर्यते नाशुभं कर्म जन्मान्तरशतार्जितम् ॥ ५६ ॥ त्याज्यं वपुरिदं वां चेद् गृह्णीतं वपुषः फलम् । तच्चापवर्गस्वर्गादिकारणं परमं तपः ॥ ५७ ॥ इत्यादिदेशनावाक्यसुधानिर्धौतमानसौ । तस्य पार्श्वे जगृहतुर्यतिधर्ममुभावपि ॥ ५८ ॥ अधीयानौ क्रमेणाथ तौ गीतार्थौ बभूवतुः । आदरेण गृहीतं हि किं वा न स्यान्मनस्विनाम् ॥ ५९ ॥ षष्ठाष्टमप्र-

भूतिभिस्तौ तपोभिः सुदुस्तपैः । कृशयामासतुर्देहं प्राक्तनैः कर्मभिः सह ॥ ६० ॥ ततो विहरमाणौ तौ ग्रामाद्ग्रामं पुरात्पुरम् । कदाचित्प्रातिपेदाते नगरं हस्तिनापुरम् ॥६१॥ तौ तत्र रुचिरोद्याने चेरतुर्दुश्चरं तपः । सम्भोगभूमयोऽपि स्युस्तपसे शान्तचेतसाम् ॥ ६२ ॥ सम्भूतमुनिरन्येद्युर्मासक्षपणपारणे । पुरे प्रविष्टो भिक्षार्थं यतिधर्मोऽङ्गवानिव ॥ ६३ ॥ गेहाद्गेहं परिभ्राम्यन्नीर्यासमितिपूर्वकम् । स राजमार्गोपतितो दृष्टो नमुचिमन्त्रिणा ॥ ६४ ॥ मातङ्गदारकः सोऽयं मद्वृत्तं ख्यापयिष्यति । मन्त्रीति चिन्तयामास पापाः सर्वत्र शङ्किताः ॥ ६५ ॥ यावन्मन्मर्म कस्यापि प्रकाशयति न ह्यसौ । तावन्निर्वासयाम्येनमिति पत्तीन्न्ययुङ्क्त सः ॥ ६६ ॥ स ताडयितुमारेभे तेन पूर्वोपकार्य्यपि क्षीरपाणमिवाहीनामुपकारोऽसतां यतः ॥ ६७ ॥ लकुटैः कुट्यमानोऽसौ सस्यबीजमिवोत्कटैः । स्थानात्ततोऽपचक्राम त्वरितं त्वरितं मुनिः ॥६८॥ अमुच्यमानः कुट्टाकैर्निर्यन्नपि मुनिस्तदा । शान्तोऽप्यकुप्यदापोऽपि तप्यन्ते वह्नितापतः ॥ ६९ ॥ निर्जगाम मुखात्तस्य बाष्पो नीलः समन्ततः । अकालोपस्थिताम्भोदविभ्रमं बिभ्रदम्बरे ॥ ७० ॥ तेजोलेश्योज्ज्वलासाथ ज्वालापटलमालिनी । तडिन्मण्डलसङ्कीर्णामिव द्यामभितन्वती ॥ ७१ ॥ अतिविष्णुकुमारं तं तेजोलेश्याधरं ततः । प्रसादयितुमाजग्मुः पौराः सभयकौतुकाः ॥ ७२ ॥ राजा सनत्कुमारोऽपि ज्ञात्वा तत्र समाययौ । उत्तिष्ठति यतो वह्निस्तद्धि विध्यापयेत्सुधीः ॥ ७३ ॥ नत्वोचे तं नृपः किं वो युज्यते भगवन्निदम् । चन्द्राश्मार्कांशुतप्तोऽपि नार्चिर्मुञ्चति जातुचित् ॥७४॥ एभिरत्यपराद्धं यत्कोपोऽयं भवतामतः । क्षीराब्धेर्मथ्यमानस्य कालकूटमभून्न किम् ॥ ७५ ॥ न स्यात्स्याच्चेच्चिरं न स्याच्चिरं चेत्तत्फलेऽन्यथा । खलस्नेह इव क्रोधः सतां तद्ब्रूमहेऽत्र किम् ॥ ७६ ॥ तथापि नाथ नाथामि कोपं मुञ्चेतरोचितम् । भवादृशाः समदृशो ह्यपकार्य्युपकारिषु

॥ ७७ ॥ चित्रोऽप्यत्रान्तरे ज्ञात्वा सम्भूतमुनिमभ्यगात् । सान्त्वयितु भद्रमिव द्विप मधुरभाषितैः ॥ ७८ ॥ तस्य कोप उपाशाम्यच्चित्रवाक्यैः श्रुतानुगैः । पयोवाहपय.पूरैर्गिरेरिव दवानलः ॥ ७९ ॥ महाकोपतमोमुक्तः शशाङ्क इव पार्वणः । चणादासादयामास प्रसाद स महामुनिः ॥ ८० ॥ वन्दित्वा चमयित्वा च लोकस्तस्मान्यवर्तत ॥ सम्भूतश्चित्रमुनिना तदुद्यानमनीयत ॥ ८१ ॥ पश्चात्ताप चक्रतुस्तौ पर्यटद्भिर्गृहे गृहे । आहारमात्रककृते प्राप्यते व्यसन महत् ॥८२॥ शरीर गत्वरमिद ह्याहारेणापि पोषितम् । किमनेन शरीरेण किं वाहारेण योगिनाम् ॥८३॥ चेतसीति विनिश्चित्य कृतसंलेखनौ पुरा । उभौ चतुर्विधाहारप्रत्याख्यान प्रचक्रतुः ॥ ८४ ॥ क पराभूतवान्साधु वसुधाम्पाति मय्यपि । इति जिज्ञासतो राज्ञो मन्त्री व्यज्ञपि केनचित् ॥ ८५ ॥ अर्च्यांन्नार्चति यः सोऽपि पापः किमुत हन्ति यः । इत्यानाययदुर्वीशो दस्युवत्तयमच्य तम् ॥ ८६ ॥ अन्योऽपि साधुविध्वस मा विधादिति शुद्धधीः । त बद्ध पुरमध्येन सोऽनैषीत्साधुसन्निधौ ॥ ८७ ॥ नमन्नृपशिरोरत्नभाभिरम्भोमयीमिव । कुर्व्वन्नुर्वीं स उर्व्वीशपुङ्गवस्तावचन्दत ॥८८॥ सव्यपाणिगृहीतास्यवस्त्रिकापिहिताननौ। उद्दचिणकरौ तौ तमाशशसतु-राशिषा ॥ ८९ ॥ यो वोऽपराधवान् सोऽस्तु स्वकर्मफलभाजनम् । राज्ञा सनत्कुमारेणेत्यदर्शि नमुचिस्तयो ॥९०॥ अमोचि नमुचिः प्राप्त पञ्चत्वोचितभूमिकाम् । सनत्कुमारतस्ताभ्यामुरगो गरुडादिव ॥ ९१ ॥ निर्वास्य कर्मचण्डालश्चण्डाल इव पत्तनात् । वध्योऽप्यमोच्यसौ राज्ञा मान्य हि गुरुशासनम् ॥ ९२ ॥ सपत्नीभिश्चतुःषष्टि-सहस्रै. परिवारिता । वन्दितु तौ सुनन्दागात् स्त्रीरत्नमथ चक्रिण ॥ ९३ ॥ सा सम्भूतमुनेः पादपद्मयोर्लुलिता-लका । पपातास्येन कुर्वाणा भुवमिन्दुमतीमिव ॥ ९४ ॥ तस्याश्चालकसस्पर्शं सम्भूतमुनिरन्वभूत् । रोमाञ्चितश्च

सद्योऽभूच्छलान्वेषी हि मन्मथः ॥ ९५ ॥ अथ सान्तःपुरे राज्ञि तावनुज्ञाप्य जग्मुषि । रागाभिभूतः सम्भूतो निदानमिति निर्ममे ॥ ९६ ॥ दुष्करस्य मदीयस्य यद्यस्ति तपसः फलम् । तत्स्त्रीरत्नपतिरहं भूयासं भाविजन्मनि ॥ ९७ ॥ चित्रोऽप्यूचे काङ्क्षसीदं मोक्षदात्तपसः फलम् । मौलियोग्येन रत्नेन पादपीठं करोषि किम् ॥ ९८ ॥ मोहात्कृतं तन्निदानमिदानीमपि मुच्यताम् । मिथ्यादुष्कृतमस्यास्तु मुह्यन्ति न भवादृशाः ॥ ९९ ॥ एवं निवार्यमाणोऽपि सम्भूतश्चित्रसाधुना । निदानं नामुचदहो विषयेच्छा बलीयसी ॥ १०० ॥ निर्व्यूढानशनौ तौ तु प्राप्तायुःकर्मसंचयौ । सौधर्मे समजायेतां विमाने सुन्दरे सुरौ ॥ १ ॥च्युत्वा जीवोऽथ चित्रस्य प्रथमस्वर्गलोकतः । पुरे पुरिमतालाख्ये महेभ्यतनयोऽभवत् ॥ २ ॥ च्युत्वा सम्भूतजीवोऽपि काम्पिल्ये ब्रह्मभूपतेः । भार्यायाश्चुलनीदेव्याः कुक्षौ समवतीर्णवान् ॥ ३ ॥ चतुर्दशमहास्वप्नसूचितागामिवैभवः । अथ जज्ञे सुतस्तस्याः प्राच्या इव दिवाकरः ॥ ४ ॥ ब्रह्ममग्न इवानन्दाद् ब्रह्मभूपतिरस्य च । ब्रह्माण्डविश्रुतां ब्रह्मदत्त इत्यभिधां व्यधात् ॥ ५ ॥ ववृधे स जगन्नेत्रकुमुदानां मुदं दिशन् । पुष्यन् कलाकलापेन कलानिधिरिवामलः ॥ ६ ॥ वक्त्राणि ब्रह्मण इव चत्वारि ब्रह्मणोऽभवन् । प्रियमित्राणि तत्रैकः कटकः काशिभूपतिः ॥७॥ कणेरुदत्तसंज्ञोऽन्यो हस्तिनापुरनायकः । दीर्घश्च कोशलाधीशश्चम्पेशः पुष्पचूलकः ॥८॥ ते स्नेहाद्वर्षमेकैकमेकैकस्य पुरं युताः । पञ्चाप्यधिवसन्ति स्म स्वर्द्रुमा इव नन्दनम् ॥ ९ ॥ ब्रह्मणो नगरेऽन्येद्युस्ते यथायोगमाययुः । तत्र च क्रीडतां तेषां ययौ कालः कियानपि ॥१०॥ ब्रह्मदत्तस्य पूर्णेषु वर्षेषु द्वादशेष्वथ । परलोकगतिं भेजे ब्रह्मराजः शिरोरुजा ॥ ११ ॥ कृत्वौर्द्ध्वदेहिकं ब्रह्मभूपतेः कटकादयः । उपाया इव मूर्तास्ते चत्वारोऽमन्त्रयन्निति ॥ १२ ॥ ब्रह्मदत्तः शिशुर्यावदेकैकस्तावदत्र नः । तस्य

प्राहरिक इव वर्षे वर्षेऽस्तु रक्षक ॥ १३ ॥ दीर्घस्तातु सुहृद्राज्य तैः सयुज्य न्ययुज्यत । तत स्थानाद्यथा-स्थानमथ जग्मुस्त्रयोऽपि ते ॥ १४ ॥ अदीर्घबुद्धिर्दीर्घोऽपि ब्रह्मणो राज्यसम्पदम् । उचेवारक्षक चेत्र स्वच्छन्द बुभुजे ततः ॥ १५ ॥ निरङ्कुशतया कोश चिरगूढ स मूढधीः । सर्वमन्वेषयामास परमर्मेव दुर्जनः ॥ १६ ॥ स प्राक् परिचयादन्तरन्तःपुरमनर्गलः । सञ्चचाराधिपस्य हि प्रायोऽन्धकरण नृणाम् ॥ १७ ॥ एकान्ते चुलनीदेव्या सोऽतिमात्रममन्त्रयत् । वचोभिर्नर्मनिपुणैर्नुदन् स्मरशरैरिव ॥ १८ ॥ आचार ब्रह्मसुकृत लोक चावगणय्य सः । सम्प्रसक्तश्चुलन्याभूद्दुर्वाराणीन्द्रियाणि हि ॥ १९ ॥ ब्रह्मराजे पतिप्रेम मित्रस्नेह च तावुभौ । जहतुश्चुलनीदीर्घावहो सर्वङ्कषः स्मरः ॥ २० ॥ सुख विलसतोरेव यथाकामीनयोस्तयोः । बहवो व्यतियान्ति स्म मुहूर्तमिव वासराः ॥ २१ ॥ ब्रह्मराजस्य हृदय द्वैतीयीकमिव स्थितम् । मन्त्र्यज्ञासीद्धनुरिद स्पष्ट दुश्चेष्टित तयोः ॥२२॥ सचिवोऽचिन्तयचेद चुलनी स्त्रीस्वभावतः । अकार्यमाचरत्वेषा सत्यो हि विरलाः स्त्रिय ॥ २३ ॥ सकोशान्त पुर राज्य न्यासे विश्वासतोऽर्पितम् । यद्विद्रवति दीर्घस्तदकार्यं नास्य किञ्चन ॥ २४ ॥ तदसावाचरेत्किञ्चित्कुमारस्यापि वि-प्रियम् । पोपकस्यापि नात्मीयो मार्जार इव दुर्जन ॥ २५ ॥ विमृश्येति वरधनुसञ्ज्ञ स्वसुतमादिशत् । तत्तत् ज्ञापयितु नित्य ब्रह्मदत्त च सेवितुम् ॥ २६ ॥ विज्ञाते मन्त्रिपुत्रेण वृत्तान्ते ब्रह्मनन्दनः । शनै प्राकाशयत्कोप नवोद्भिन्न इव द्विपः ॥२७॥ ब्रह्मदत्तोऽसहिष्णुस्तन्मातृदुश्चरित तत । मध्ये शुद्धान्तमगमद्गृहीत्वा काककोकिले ॥२८॥ वर्णसङ्करतो वध्यावेतावन्यमपीदृशम् । निश्चित निग्रहीष्यामि तत्रेत्युच्चैरुवाच स ॥ २९ ॥ काकोऽह त्व पिकी त्यावां निजिघृक्षत्यसाविति । दीर्घेणोक्तेऽवदद्देवी मा भैषीर्बालभाषितात् ॥ ३० ॥ एकदा भद्रवशया सह नीत्वा

मृगद्विपम्। साचेपं तद्वदेवोचे कुमारो मारख्चकम्॥३१॥ इति श्रुत्वाऽवदद्दीर्घः साकूतं वालभाषितम्। ततश्चुलन्युवाचेति यद्यस्त्येवं ततोऽपि किम् ॥ ३२ ॥ हंस्याऽन्ये युर्वकं वध्वाभ्यधत्त ब्रह्मभूरिति । अनया रमते ह्येष सहे कस्यापि नेहशम् ॥ ३३ ॥ दीर्घोऽवादीदिदं देवि स्वपुत्रस्य शिशोः शृणु। अन्तरुद्भिन्नरोषाग्निधूमोद्गारोपमा गिरः ॥ ३४ ॥ वर्द्धमानः कुमारोऽयं तदवश्यं भविष्यति । आवयोरतिविघ्नाय करेण्वोरिव केसरी ॥ ३५ ॥ न यावत्कवचहरः कुमारो हन्त जायते । तावद्विषद्रुम इव बालोऽप्युन्मूल्यतामसौ ॥ ३६ ॥ चुलन्यूचे कथं राज्यधरः पुत्रो विहन्यते । तिरश्च्योऽपि हि रक्षन्ति पुत्रान् प्राणानिवात्मनः ॥ ३७॥ दीर्घोऽब्रवीत्पुत्रमूर्त्या तव कालोऽयमागतः। मा मुहस्त्वं मयि सति सुतास्तव न दुर्लभाः ॥ ३८॥ विमुच्यापत्यवात्सल्यं शाकिनीव चुलन्यथ। रतस्नेहपरवशा प्रतिशुश्राव तत्तथा ॥ ३९॥ सामन्त्रयद्विनाश्योऽयं रक्ष्या च वचनीयता। यद्वदाश्रवणं सेक्यं कार्यं च पितृतर्पणम् ॥ ४० ॥ क उपायोऽथवास्त्येष विवाह्यो ब्रह्मसूरसौ। वासागारमिषात्तस्य कार्यं जतुगृहं ततः ॥ ४१ ॥ गूढप्रवेशनिःसारे तत्रोद्वाहादनन्तरम् । सुपुप्ते सस्नुषेऽप्यासिन् ज्वाल्यो निशि हुताशनः ॥ ४२ ॥ उभाभ्यां मन्त्रयित्वैवं पुष्पचूलस्य कन्यका। वृता वैवाहिकी सर्वसामग्री चोपचक्रमे ॥ ४३ ॥ तयोश्च क्रूरमाकूतं विज्ञाय सचिवो धनुः । इति विज्ञपयामास दीर्घराजं कृताञ्जलिः ॥ ४४ ॥ कलाविन्नीतिकुशलः सूनुर्वरधनुर्मम । वहंलिहयुवेवास्तु त्वदाज्ञारथधूर्वहः ॥ ४५ ॥ जरद्गव इवाहं तु यातायातेषु निःसहः । गत्वा क्वचिदनुष्ठानं करोमि त्वदनुज्ञया ॥ ४६ ॥ कमप्यनर्थं कुर्वीत मायाव्येष गतोऽन्यतः । आशङ्कतेति तं दीर्घो धीमद्भ्यः को न शङ्कते

१ वृषभयुवा. (२) वृद्धवृषभः ।

॥ ४७ ॥ मायाकृतावहित्थोऽथ दीर्घं सचिवमूचिवान् । राज्येन त्वां विना न किं यामिन्येव विना विधुम् ॥४८॥ धर्मं सत्रादिनाऽत्रैव कुरु मा गास्त्वमन्यतः । राज्यं भवादृशैर्भाति सद्वृक्षैरिव काननम् ॥४९॥ ततो भागीरथीतीरे सद्बुद्धिर्विदधे धनुः । धर्मस्येव महाच्छत्रं पवित्रं सत्रमण्डपम् ॥ ५० ॥ सत्रं च पान्थसार्थानामन्नपानादिना तत । प्रवाहमिव गाङ्गं सोऽनवच्छिन्नमवाहयत् ॥ ५१ ॥ दानमानोपकाराद्यैः स प्रत्ययितपूरुषैः । चक्रे सुरङ्गां द्विक्रोशां ततो जतुगृहावधि ॥ ५२ ॥ इतः प्रच्छन्नलेखेन सौहार्दद्रुमवारिणा । इमं व्यतिकरं पुष्पचूलमज्ञापयद्धनुः ॥ ५३ ॥ ज्ञात्वा तत्पुष्पचूलोऽपि सुधीः स्वदुहितुः पदे । प्रेषयामास दासेरीं हंसीस्थाने बकीमिव ॥ ५४ ॥ पित्तले च स्वर्णमिति पौष्पचूलीति सा जनैः । लक्षिता भूषणमणिद्योतिताशाविशत्पुरीम् ॥ ५५ ॥ मूर्च्छद्गीतिध्वनितूर्यपूर्यमाणे नभस्तले । मुदा तां चुलनी ब्रह्मदत्तेनाथ पर्यणाययत् ॥ ५६ ॥ चुलन्यप्यखिलं लोकं विसृज्य रजनीमुखे । कुमारं सस्नुषं प्रैषीज्जातुषे वासवेश्मनि ॥ ५७ ॥ सवधूकः कुमारोऽपि विसृष्टान्यपरिच्छदः । तत्रागाद्वरधनुना छाययेव स्वया सह ॥ ५८ ॥ वार्त्ताभिर्मन्त्रिपुत्रेण ब्रह्मदत्तस्य जाग्रत । निशार्द्धं व्यतिचक्राम कुतो निद्रा महात्मनाम् ॥ ५९ ॥ चुलन्यादिष्टपुरुषैः फूत्कर्तुं नमिताननैः । ज्वलेति प्रेरित इव वासगृहेऽज्वलच्छिखी ॥ ६० ॥ धूमस्तोमस्ततो विष्वक् पूरयामास रोदसीम् । चुलनीदीर्घदुष्कृत्यदुष्कीर्त्तिप्रसरोपमः ॥ ६१ ॥ सप्तजिह्वोऽप्यभूत्कोटिजिह्वो ज्वालाकदम्बकैः । तत्सर्वं कवलीकर्तुं बुभुक्षित इवानलः ॥ ६२ ॥ किमेतदिति सपृष्टो ब्रह्मदत्तेन मन्त्रिसूः । सद्योपादाचचक्षेऽदश्चुलनीदुष्टचेष्टितम् ॥ ६३ ॥ आकृष्टु त्वामितः स्थानाद्भूप करिकरादिव । अस्ति तातेन दत्तेह सुरङ्गा सत्रगामिनी ॥ ६४ ॥ अत्र पार्ष्णिप्रहारेण प्रकाशीकृत्य तत्क्षणात् । योगीव विवर-

द्वारं तद्द्वारं प्रविशाधुना ॥ ६५ ॥ आतोद्यपुटवत्सोऽथ पार्ष्णिनाऽऽस्फोट्य भूपुटम् । सुरङ्गया समित्रोऽगाद्वल-रन्ध्रेण सूत्रवत् ॥ ६६ ॥ सुरङ्गान्ते धनुधृतौ तुरङ्गावध्यरोहताम् । राजमन्त्रिकुमारौ तौ रेवन्तश्रीविडम्बकौ ॥६७॥ पञ्चाशद्योजनीं क्रोशमिव पञ्चमधारया । अश्वौ जग्मतुरुच्छ्वासौ ततः पञ्चत्वमापतुः ॥ ६८ ॥ ततस्तौ पादचारेण प्राणत्राणपरायणौ । जग्मतुर्निकषा ग्रामं कृच्छ्रात्कोष्टकनामकम् ॥ ६९ ॥ प्रोवाच ब्रह्मदत्तोऽथ सखे वरधनोऽधुना । स्पर्द्धमाने इवान्योऽन्यं बाधेते क्षुत्तृषा च माम् ॥ ७० ॥ क्षणमत्र प्रतीक्षस्वेत्युक्त्वा तं मन्त्रिनन्दनः । ग्रामादाकार-यामास नापितं वपनेच्छया ॥ ७१ ॥ मन्त्रिपुत्रस्य मन्त्रेण तत्रैव ब्रह्मनन्दनः । वपनं कारयामास चूलामात्रमधा-रयत् ॥ ७२ ॥ तथा कषायवस्त्राणि पवित्राणि स धारयन् । सन्ध्याभ्रच्छन्नबालांशुमालिलीलामधारयत् ॥ ७३ ॥ कण्ठे वरधनुन्यस्तं ब्रह्मसूत्रमधत्त च । ब्रह्मपुत्रो ब्रह्मपुत्रसादृश्यमुदुवाह च ॥ ७४ ॥ मन्त्रिसूर्ब्रह्मदत्तस्य वक्षः श्री-वत्सलाञ्छितम् । पट्टेन पिदधे प्रावृट् पयोदेनेव भास्करम् ॥ ७५ ॥ एवं वेषपरावर्त्तं ब्रह्मसूः सूत्रधारवत् । पारि-पार्श्विकवन्मन्त्रिपुत्रोऽपि विदधे तथा ॥ ७६ ॥ ततः प्रविष्टौ ग्रामे तौ पार्वणाविन्दुभास्करौ । केनापि द्विजवर्येण भोजनाय निमन्त्रितौ ॥ ७७ ॥ सोऽथ तौ भोजयामास भक्त्या राजानुरूपया । प्रायस्तेजोऽनुमानेन जायन्ते प्रतिपत्तयः ॥ ७८ ॥ कुमारस्याक्षतान्मूर्ध्नि क्षिपन्ती विप्रगेहिनी । श्वेतवस्त्रयुगं कन्यां चोपनिन्येऽप्सरःसमाम् ॥ ७९ ॥ ऊचे ततो वरधनुर्बटोरस्याकलापटोः । कण्ठे बध्नासि किमिमां मूढे शण्डस्य गामिव ॥ ८० ॥ ततो द्विजवरेणोचे ममेयं गुणबन्धुरा । कन्या बन्धुमती नास्या विनामुमपरो वरः ॥८१॥ षट्खण्डपृथिवीपाता पतिरस्या भविष्यति । इत्याख्यायि निमित्तज्ञैर्निश्चितं चायमेव सः ॥ ८२ ॥ तैरेवाख्यायि मे पट्टच्छन्नश्रीवत्सलाञ्छनः ।

भोद्यते यस्तवगृहे तस्मै देया स्वकन्यका ॥ ८३ ॥ जज्ञे च ब्रह्मदत्तस्योद्वाहः सह तया तदा । भोगिनामुपतिष्ठन्ते भोगाः काममचिन्तिता ॥ ८४ ॥ तामुषित्वा निशां बन्धुमतीमाश्वास्य चान्यतः । ययौ कुमार एकत्रावस्थान साद्विषा कुतः ॥८५॥ प्रातर्ग्राम प्रापतुस्तौ तत्र चाश्रृशुतामिदम् । पन्थानोऽधिब्रह्मदत्त सर्वे दीर्घेण रोधिताः ॥८६॥ प्रस्थितावुत्पथेनाथ पेततुस्तौ महाटवीम् । निरुद्धां श्वापदैर्दीर्घपुरुषैरिव दारुणैः ॥ ८७ ॥ ततः कुमार तृषित मुक्त्वा वटतरोरध । वारिणेऽगाद्वरधनुर्मनस्तुल्येन रहसा ॥ ८८ ॥ ततो वरधनुः सोऽयमुपलक्ष्य न्यरुध्यत । रुषितैर्दीर्घपुरुषैः पोत्रिपोत इव श्वभि. ॥ ८९ ॥ गृह्यतां गृह्यतामेष वध्यतां वध्यतामिति । भीषण भाषमाणैस्तैर्जगृहे ववधे च सः ॥ ९० ॥ सञ्ज्ञामधिब्रह्मदत्त पलायस्वेति सोऽकृत । पलायिष्ट कुमारोऽपि समये खलु पौरुषम् ॥ ९१ ॥ ततस्तस्या महाटव्या महाटव्यन्तर जवात् । ब्रह्मसूराश्रमीवागादाश्रमादाश्रमान्तरम् ॥ ९२ ॥ स तु तत्र कृताहारो विरसैररसैः फलैः । तृतीये दिवसेऽपश्यदेक तापसमग्रतः ॥ ९३ ॥ कुत्राश्रमो वो भगवन्निति पृष्टस्तपस्विना । स स्वाश्रमपद निन्ये तापसा ह्यतिथिप्रिया ॥ ९४ ॥ सोऽथापश्यत्कुलपतिं ववन्दे पितृवन् मुदा । प्रमाणमन्तःकरणमविज्ञातेऽपि वस्तुनि ॥ ९५ ॥ ऊचे कुलपतिर्वत्स तवातिमधुराकृतेः । को हेतुरत्रागमने मरौ सुरतरोरिव ॥ ९६ ॥ ततो महात्मनस्तस्य विश्वस्तो ब्रह्मसूर्निजम् । वृत्तान्तमाख्यत्प्रायेण गोप्य न खलु तादृशम् ( शः ) ॥ ९७ ॥ हृष्टस्ततः कुलपतिर्व्याहरद्ब्रह्मदाचरम् । द्विधास्थित इवात्मैको भ्राताह त्वत्पितुर्लघुः ॥ ९८ ॥ ततो निजगृह प्राप्तस्तिष्ठ वत्स यथासुखम् । अस्मत्तपोभिर्वर्द्धस्व सहैवास्मन्मनोरथैः ॥ ९९ ॥ कुर्वन् जनदृगा-

१ किरिवाल

नन्दममन्दं विश्ववल्लभः । असौ तत्राश्रमे तस्थौ प्रावृट्कालोऽप्युपस्थितः ॥ २०० ॥ तत्राऽसौ निवसंस्तेन बलेनेव जनार्दनः । शास्त्राणि शस्त्राण्यस्त्राणि सर्वाण्यध्याप्यते स्म च ॥ १ ॥ वर्षात्यये समायाते सारसालापबन्धुरे । बन्धाविव फलाद्यर्थं प्रचेलुस्तापसा वनम् ॥ २ ॥ सादरं कुलपतिना वार्यमाणोऽप्यगाद्वनम् । तैः सह ब्रह्मदत्तोऽपि कलभः कलभैरिव ॥ ३ ॥ भ्रमन्नितस्ततोऽपश्यद्विण्मूत्रं तत्र दन्तिनः । प्रत्यग्रमिति सोऽमंस्त हस्ती कोऽप्यस्ति दूरतः ॥ ४ ॥ तापसैर्वार्यमाणोऽपि ततः सोऽनुपदं व्रजन् । योजनपञ्चकस्यान्ते नागं नगमिवैक्षत ॥ ५ ॥ निःशङ्कं बद्धपर्यङ्कः कुर्वन् गर्जितमूर्जितम् । मल्लो मल्लमिवाह्वास्त नृहस्ती मत्तहस्तिनम् ॥ ६ ॥ क्रुधोद्धुपितसर्वाङ्गो व्याकुञ्चितकरः करी । निष्कम्पकर्णस्ताम्रास्यः कुमारं प्रत्यधावत ॥ ७ ॥ इभोऽभ्यर्णेऽभ्यगाद्यावत् कुमारस्तावदन्तरे । उत्तरीयं प्रचिक्षेप तं वञ्चयितुमर्भवत् ॥ ८ ॥ अभ्रखण्डमिव भ्रश्यदन्तरिक्षात्तदंशुकम् । दशनाभ्यां प्रतीयेप क्षणादेपोऽत्यमर्पणः ॥ ९ ॥ एवंविधाभिश्चेष्टाभिः कुमारस्तं मतङ्गजम् । लीलया खेलयामासाहितुण्डिक इवोरगम् ॥ १० ॥ सखेव ब्रह्मदत्तस्यात्रान्तरे कृतडम्बरः । धाराधरोऽम्बुधाराभिरुपदुद्राव तं गजम् ॥ ११ ॥ ततो रसित्वा विरसं मृगनाशं ननाश सः । कुमारोऽपि भ्रमन्नद्रिदिग्मूढः प्राप निम्नगाम् ॥ १२ ॥ उत्ततार कुमारस्तां नदीं मूर्त्तामिवापदम् । ददर्श च तटे तस्याः पुराणं पुरमुद्वसम् ॥ १३ ॥ कुमारः प्रविशंस्तस्मिन्नपश्यद्वंशजालिकाम् । तत्रासिवसुनन्दौ चोत्पातकेतुविधू इव ॥ १४ ॥ तौ गृहीत्वा कृपाणेन कुमारः शस्त्रकौतुकी । चिच्छेद कदलीच्छेदं तां महावंशजालिकाम् ॥ १५ ॥ वंशजालान्तरे चासौ स्फुरदोष्ठदलं शिरः । ददर्श पतितं पृथ्व्यां स्थलपद्ममिवाग्रतः ॥ १६ ॥ सम्यक् पश्यन्नपश्यच्च ब्रह्मस्तत्र कस्यचित् ।

वैन्गुलीकरणस्थस्य कवन्ध धूमपायिन ॥१७॥ हा विद्यासाधनघनो निधन प्रापितो मया। कोऽप्येपोऽनपराधो धिग् मामिति स्व निनिन्द स ॥ १८ ॥ अग्रत स ययौ यावत्तावदुद्यानमैक्षत । सुरलोकादवतीर्णमवन्यामिव नन्दनम् ॥ १९ ॥ स तत्र प्रविशन्नग्रे प्रासाद सप्तभूमिकम् । अदर्शत्सप्तलोकश्रीरहस्यमिव मूर्छितम् ॥ २० ॥ आरूढेऽभ्र-लिहे तस्मिन्निषण्णां खेचरीमिव । हस्तविन्यस्तवदनां नारीमेकां स ऐक्षत ॥ २१ ॥ उपसृत्य कुमारस्तां पप्रच्छ स्वच्छया गिरा । का त्वमेकाकिनी किं वा किं वा शोकस्य कारणम् ॥ २२ ॥ अथ सा साध्वसाक्रान्ता जगादेति सगद्गदम् । महान् व्यतिकरो मेऽस्ति ब्रूहि कस्त्व किमागत ॥ २३ ॥ ब्रह्मदत्तोऽस्मि पञ्चालभूपतेर्ब्रह्मण सुतः । इति सोऽचीकथद्यावन्मुदा सा तावदुत्थिता ॥ २४ ॥ आनन्दबाष्पसलिलैर्लोचनाञ्जलिविच्युतै । सा कुर्वती पाद्य मिव पपातामुष्य पादयो ॥ २५ ॥ कुमाराशरणाया मे शरण त्वमुपागत । मज्जतो नौरिवाम्भोधौ वदन्तीति रु-रोद सा ॥ २६ ॥ तेन पृष्टा च साप्यूचे त्वन्मातृभ्रातुरस्म्यहम् । नाम्ना पुष्पवती पुष्पचूलस्यङ्गपते सुता ॥२७॥ कन्यास्मि भवते दत्ता विवाहदिवसोन्मुखी । हसीव रन्तुमुद्याने दीर्घिकापुलिनेऽगमम् ॥ २८ ॥ दुष्टविद्याधरेणाह नाटयोन्मत्ताभिधेन तु । अत्रापहृत्यानीतास्मि रावणेनेव जानकी ॥२९॥ दृष्टिं सोऽसहमानो मे विद्यासाधनहेतवे । शूर्पणखासुनुरिव प्राविशद्वशजालिकाम् ॥ ३० ॥ धूमपस्योर्ध्वपादस्य तस्य विद्याद्य सेत्स्यति । शक्तिमान् सिद्ध-विद्य स किल मां परिणेष्यति ॥ ३१ ॥ ततस्तद्वधवृत्तान्त कुमारोऽस्यै न्यवेदयत् । हर्षस्योपरि हर्षोऽभूत्प्रियास्या विप्रियच्छिदा ॥३२॥ तयोरथ विवाहोऽभूद्गान्धर्वोऽन्योऽन्यरक्तयो । श्रेष्ठो हि क्षत्रियेष्वेप निर्मन्त्रोऽपि सकामयो

१ वल्गुल पक्षिविशेष, तत च्वि

॥ ३३ ॥ रममाणस्तया सार्द्धं विचित्रालापपेशलम् । स एकयामामिव तां त्रियामामत्यवाहयत् ॥ ३४ ॥ ततः प्र-
भातसमये ब्रह्मदत्तेन शुश्रुवे । आकाशे खेचरस्त्रीणां कुररीणामिव ध्वनिः ॥ ३५ ॥ अकस्माज्जायते कोऽयं खे शब्दो-
ऽनब्दवृष्टिवत् । तेनेति पृष्टा संभ्रान्ता पुष्पवत्येवमब्रवीत् ॥ ३६ ॥ भगिन्यौ त्वद्द्विषो नाट्योन्मत्तस्येमे समागते ।
नाम्ना खण्डा विशाखा च विद्याधरकुमारिके ॥ ३७ ॥ तन्निमित्तं विवाहोपस्करपाणी इमे मुधा । अन्यथा चिन्तितं
कार्यं दैवं घटयतेऽन्यथा ॥ ३८ ॥ अपसर्प क्षणं तावद्यावत्त्वद्गुणकीर्त्तनैः । लभेऽहमनयोर्भावं त्वयि रागविरा-
गयोः ॥ ३९ ॥ रागे रक्तां प्रेरयिष्ये पताकां तत्त्वमापतेः । विरागे चालयिष्यामि श्वेतां गच्छेस्तदाऽ-
न्यतः ॥ ४० ॥ ब्रह्मदत्तस्ततोऽवादीन्मा भैषीर्भीरु नन्वहम् । ब्रह्मसूनुः किमेते मे तुष्टे रुष्टे करिष्यतः
॥ ४१ ॥ उवाच पुष्पवत्येवं नैताभ्यां वच्मि ते भयम् । एतत्सम्बन्धिनः किन्तु मा विरौत्सुर्नभश्चराः
॥४२॥ तस्याश्चित्तानुवृत्त्या तु तत्रैवास्थात् स एकतः । अथ पुष्पवती श्वेतां पताकां पर्यचीचलत् ॥ ४३ ॥ ततः
कुमारस्तां दृष्ट्वा तत्प्रदेशाच्छनैः शनैः । प्रियानुरोधादगमन्न हि भीस्तादृशां नृणाम् ॥ ४४ ॥ आकाशमिव
दुर्ग्रा ( र्गा ) हमरण्यमवगाह्य सः । दिनान्तेऽर्क इवाम्भोधिं प्रापदेकं महासरः ॥ ४५ ॥ ततः प्रविश्य तत्रासौ
सुरेभ इव मानसे । स्नात्वा स्वच्छन्दमत्यच्छाः सुधा इव पपावपः ॥ ४६ ॥ निःसृत्य ब्रह्मसूर्नीरात्तीरमुत्तरप-
श्चिमम् । लताक्वणदलिस्वानैः सौस्नातिकमिवाभ्यगात् ॥ ४७ ॥ तत्र तेन द्रुमलताकुञ्जे पुष्पाणि चिन्वती ।
वनाधिदेवता साक्षादिव काप्यैक्षि सुन्दरी ॥ ४८ ॥ दध्याविति कुमारोऽपि जन्मप्रभृति वेधसः । रूपाण्यभ्यस्य-

२ सुस्नानपृच्छकमिव.

तोऽमुष्या सञ्जातं रूपकौशलम् ॥ ४६ ॥ सा दास्या सह जल्पन्ती कटाक्षे कुन्दसोदरैः । कण्ठे मालामिवास्यन्ती त पश्यन्त्यन्यतो ययौ ॥ ५० ॥ पश्यन् कुमारस्तामेव प्रस्थितो यावदन्यतः । वस्त्रभूषणताम्बूलभृद्दासी तावदाययौ ॥ ५१ ॥ सा वस्त्राद्यर्पयित्वोचे या त्वया ददृशेऽत्र सा । सत्यङ्कारमिव स्वार्थसिद्धेः प्रैषीदिदं त्वयि ॥ ५२ ॥ आदिष्टा चास्मि यदमु मन्दिरे तातमन्त्रिणः । नयातिथ्याय तथ्याय स हि वेत्ति यथोचितम् ॥ ५३ ॥ सोऽगात् सह तया वेश्म नागदेवस्य मन्त्रिणः । अमात्योऽप्यभ्युदस्थात्तमाकृष्ट इव तद्गुणैः ॥ ५४ ॥ श्रीकान्तया राजपुत्र्या वासाय तव वेश्मनि । प्रेषितोऽसौ महाभाग सन्दिश्येति जगाम सा ॥ ५५ ॥ उपास्यमानः स्वामीव विविध तेन मन्त्रिणा । क्षणदां क्षपयामास क्षणमेकमिवैष ताम् ॥ ५६ ॥ मन्त्री राजकुलेऽनैषीत्कुमारं क्षणदात्यये । अर्घादिनोपतस्थेऽमु बालार्कमिव भूपतिः ॥५७॥ वशाद्यपृष्ट्वापि नृपः कुमाराय सुतां ददौ । आकृत्यैव हि तत्सर्वं विदन्ति ननु तद्विदः ॥ ५८ ॥ उपायंस्त कुमारस्तां हस्तं हस्तेन पीडयन् । अन्योऽन्यं सङ्क्रमयितुमनुरागमिवाभितः ॥५९॥ ब्रह्मदत्तोऽन्यदा क्रीडन् रहः पप्रच्छ तामिति । एकस्याज्ञातवंशादेः पित्रा दत्तासि मे कथम् ॥ ६० ॥ श्रीकान्ता कान्तदन्तांशुधौताधरदलाऽब्रवीत् । राजा शबरसेनोऽभूद्वसन्तपुरपत्तने ॥ ६१ ॥ तस्सूनुर्मे पिता राज्ये निषण्णः क्रूरगोत्रिभिः । पर्यस्तोऽशिश्रियदिमां पल्लीं सबलवाहन ॥ ६२ ॥ भिल्लानुपनमय्यात्र वार्वेग इव वेतसान् । ग्रामघातादिना तातः पुष्णाति स्व परिग्रहम् ॥ ६३ ॥ जातास्मि चाहं तनया तातस्यात्यन्तवल्लभा । स्वामिन् सम्पदिवोपायांश्चतुरस्तनयाननु ॥ ६४ ॥ स मामुद्यौवनामूचे सर्वे मे द्वेषिणो नृपाः । त्वयेह स्थितया वीक्ष्य शस्तो यस्ते मतो वरः ॥ ६५ ॥ तस्युषी चक्रवाकीव सरस्तीरे निरन्तरम् । ततः प्रभृति पश्यामि सर्वानेकैकशोऽ

ध्वगान् ॥ ६६ ॥ मनोरथानामगतिः स्वप्नेऽप्यत्यन्तदुर्लभः । आर्यपुत्रागतोऽसि त्वं मद्भाग्योपचयादिह ॥ ६७ ॥
स पल्लीपतिरन्येद्युर्ग्रामघातकृते ययौ । कुमारोऽपि समं तेन क्षत्रियाणां क्रमो ह्यसौ ॥ ६८ ॥ लुण्ठ्यमाने ततो
ग्रामे कुमारस्य सरस्तटे । पादाब्जयोर्वरधनुरेत्य हंस इवापतत् ॥ ६९ ॥ कुमारकण्ठमालम्ब्य मुक्तकण्ठं रुरोद सः
नवीभवन्ति दुःखानि सञ्जाते हीष्टदर्शने ॥ ७० ॥ ततः पीयूषगण्डूषैरिवालापैः सुपेशलैः । आश्वास्य पृष्टस्तेनोचे
स्ववृत्तामिति मन्त्रिसूः ॥ ७१ ॥ वटे(टा)ऽधस्त्वां तदा मुक्त्वा गतोऽहं नाथ पाथसे । सुधाकुण्डमिवापश्यं किञ्चिदग्रे
महासरः ॥ ७२ ॥ तुभ्यमम्भोजिनीपत्रपुटेनादाय वार्य्यहम् । यमदूतैरिवागच्छन् रुद्धः संवर्मितैर्भटैः ॥ ७३ ॥
अरे वरधनो ब्रूहि ब्रह्मदत्तः क्व विद्यते । इति तैः पृच्छ्यमानः सन्न वेद्मीत्यहमब्रु(ब्र)वम् ॥ ७४ ॥ तस्करैरिव
निःशङ्कं ताड्यमानोऽथ तैरहम् । इत्यवोचं यथा ब्रह्मदत्तो व्याघ्रेण भक्षितः ॥७५॥ तं देशं दर्शयेत्युक्तो माययेतस्ततो
भ्रमन् । त्वद्दर्शनपथेऽभ्येत्याकार्षं संज्ञां पलायने ॥ ७६ ॥ परिव्राड्दत्तगुटिकां मुखेऽहं क्षिप्तवांस्ततः । तत्प्रभावेन
निःसंज्ञो मृत इत्युज्झितोऽस्मि तैः ॥ ७७ ॥ चिरं गतेषु तेष्वास्यादाकृष्य गुटिकामहम् । त्वां नष्टार्थमिवान्वेष्टुं
भ्रमन् ग्रामं कमप्यगाम् ॥७८॥ तत्रैककोऽपि ददृशे परिव्राजकपुङ्गवः । साक्षादिव तपोराशिर्नमश्चक्रे मया ततः ॥७९॥
सोऽवदन् मां वरधनो मित्रमस्मि धनोरहम् । वसुभागो महाभागो ब्रह्मदत्तः क्व वर्त्तते ॥८०॥ आचचक्षे मयाप्यस्य
विश्वं विश्वस्य सूनृतम् । स च मे दुष्कथाधूमैर्म्लानास्यः पुनरभ्यधात् ॥ ८१ ॥ तदा जतुगृहे दग्धे दीर्घः
प्रातरुदैक्षत । करङ्कमेकं निर्दग्धं करङ्कत्रितयं न हि ॥८२॥ सुरङ्गां तत्र चापश्यत्तदन्तेऽश्वपदानि च । धनोर्बुद्ध्या
प्रणष्टौ वां ज्ञात्वा तस्मै चुकोप सः ॥ ८३ ॥ बध्वा युवां समानेतुं प्रत्याशं साधनानि सः । अस्खलद्गमनान्य-

केमहासीवादिदेश च ॥८४॥ पलायितो धनुर्मन्त्री जनयित्री तु सा तव। दीर्घेण नरक इव क्षिप्ता मातङ्गपाटके ॥८५॥ गण्डोपरिस्थास्पिटकेनेवार्त्तो वार्त्तया तया। दुःखोपर्युद्भवद्दुःखः काम्पील्य गतवानहम् ॥८६॥ छद्मकापालिकीभूय तत्र मातङ्गपाटके। वेश्म वेश्मानुप्रवेशमस्थां शश इवानिशम् ॥८७॥ पृच्छ्यमानश्च लोकेन तत्र भ्रमणकारणम्। अवोचमिति मातङ्ग्या विद्याया कल्प एष मे ॥८८॥ तत्रैव भ्राम्यता मैत्री मया विश्वास-भाजनम्। अजायतारक्षकस्य मायया किं न साध्यते ॥८९॥ अन्येद्युस्तन्मुखेनाम्बामवोच यत्करोत्यसौ। त्वत्पुत्रमित्रकौण्डिन्यो महाव्रत्यभिवादनम् ॥९०॥ द्वितीयेऽह्नि स्वय गत्वा जनन्या बीजपूरकम्। अदा सगुटिक जग्धेनासज्ञा तेन साऽभवत् ॥९१॥ मृतेति ता पुराध्यक्षो गत्वा राज्ञे न्यजिज्ञपत्। राज्ञादिष्टाः स्वपुरुषास्तस्याः सस्कारहेतवे ॥९२॥ तत्रायाता मयोक्तास्ते सस्कारोऽस्याः क्षणेऽत्र चेत्। महाननर्थो वो राज्ञश्चेति जग्मुः स्वधाम ते ॥९३॥ आरक्ष चावद त्व चेत् सहाय साधयाम्यहम्। सर्वलक्षणभाजोऽस्या मन्त्रमेक शवेन तत् ॥९४॥ आरक्षः प्रतिपेदे तत्तेनैव सहितस्ततः। सायमादाय जननीं श्मशानेऽगां दवीयसि ॥९५॥ स्थण्डिले मण्डलादीनि मया निर्माय मायया। पूर्दैवीना बलिं दातुमारक्षः प्रेषितस्ततः ॥९६॥ गते तस्मिन्नह मातुरपरा गुटिकामदाम्। निद्राच्छेद इवोज्जृम्भा सोदस्थाज्जातचेतना ॥९७॥ स्व ज्ञापयित्वा रुदतीं निवार्य स नयामि ताम्। कच्छग्रामे गृहे तातसुहृदो देवशर्म्मणः ॥९८॥ इतस्ततो भ्रमन्नेपोऽन्वेषय-स्त्वामिहागमम्। दिष्ट्या दृष्टोऽधुना साक्षात्पुण्यराशिरिवासि मे ॥९९॥ तत पर कथ नाथ प्रस्थितोऽसि स्थितोऽसि च। तेनेति पृष्टः स्व वृत्त कुमारोऽपि न्यवेदयत् ॥३००॥ अथ कोऽप्येत्य तावूचे ग्रामे दीर्घभटाः

पटम् । युष्मत्तुल्यर्द्धिरूपाङ्कं दर्शयन्तो वदन्त्यदः ॥ १ ॥ ईदृग्नरौ किमायातावत्रेत्याकर्ण्य गां मया । दृष्टाविह युवां यद्वां रुचितं कुरुतं हि तत् ॥ २ ॥ ततस्तस्मिन् गतेऽरण्यमध्येन कलभाविव । पलायमानौ कौशाम्बीं प्रापतुस्तौ पुरीं क्रमात् ॥ ३ ॥ तत्र सागरदत्तस्य श्रेष्ठिनो बुद्धिलस्य च । उद्यानेऽपश्यतां लक्षपणं तौ कुक्कुटाहवम् ॥ ४ ॥ उत्पत्योत्पत्य नखरैः प्राणाकर्षाङ्कुशैरिव । युयुधाते ताम्रचूडौ चञ्चाचञ्चवि चोच्चकैः ॥ ५ ॥ तत्र सागरदत्तस्य जात्यं शक्तं च कुकुटम् । भद्रेभमिव मिश्रेभोऽभाङ्क्षीद्बुद्धिलकुक्कुटः ॥ ६ ॥ ततो वरधनुः साह कथं जात्योऽपि कुक्कुटः । भग्नस्ते सागरानेन पश्याम्येनं यदीच्छसि ॥७॥ सागराऽनुज्ञया सोऽप्यपश्यत् बुद्धिलकुकुटम् । तत्पादयोरयःसूचीर्यमदूतीरिवैक्षत ॥ ८ ॥ लक्षयन् बुद्धिलोऽप्यस्य लक्षार्द्धं छन्नमिष्टवान् । सोऽप्याख्यत्तं व्यतिकरं कुमारस्य जनान्तिके[1] ॥ ९ ॥ ब्रह्मदत्तोऽप्ययःसूचीः कृष्ट्वा बुद्धिलकुक्कुटम् । भूयोऽपि सागरश्रेष्ठिकुक्कुटेनाभ्ययोजयत् ॥ १० ॥ असूचिकः कुक्कुटेन तेन बुद्धिलकुक्कुटः । क्षणादभञ्जि निस्नानां छद्मबाह्यं कुतो जयः ॥ ११ ॥ हृष्टः सागरदत्तस्तावारोप्य स्यन्दनं स्वकम् । जयदानैकसुहृदौ निनाय निलये निजे ॥ १२ ॥ स्वधामनीव तद्धाम्नि तयोर्निवसतोरथ । किमप्याख्यद्वरधनोरेत्य बुद्धिलकिङ्करः ॥ १३ ॥ तस्मिन् गते वरधनुः कुमारमिदमभ्यधात् । यद्बुद्धिलेन लक्षार्द्धं दित्सितं मेऽद्य पश्य तत् ॥ १४ ॥ सोऽदर्शयत्ततो हारं निर्मलस्थूलवर्त्तुलैः । कुर्वाणं मौक्तिकैः शुक्रमण्डलस्य विडम्बनाम् ॥ १५ ॥ हारे बद्धं स्वनामाङ्कं ब्रह्मसूर्लेखमैक्षत । आगाच्च वाचिकामिव मूर्त्तं वत्साख्यतापसी ॥ १६ ॥ अक्षतानि तयोर्मूर्ध्नि क्षिप्त्वाशीर्वादपूर्वकम् । नीत्वान्यतो वरधनुं किञ्चिदाख्याय सा ययौ

१ रहसि.

॥ १७ ॥ तत्राख्यातु समारेभे मन्त्रिसूर्ब्रह्मसूनवे । प्रतिलेख हारबद्धलेखस्येयमयाचत ॥ १८ ॥ श्रीब्रह्मदत्तनामाङ्को लेखोऽय प्रथयस्व तत् । को ब्रह्मदत्त इति सा मया पृष्टेदमब्रवीत् ॥ १९ ॥ अस्ति श्रेष्ठिसुता रत्नवती नामेह पत्तने । रूपान्तरेण कन्यात्व प्रपन्नेव रतिर्भुवि ॥ २० ॥ भ्रातुः सागरदत्तस्य बुद्धिलस्य च तद्दिने । कुक्कुटायोधनेऽपश्यद्ब्रह्मदत्तमिम हि सा ॥ २१ ॥ ततःप्रभृति ताम्यन्ती कामार्त्ता सा न शाम्यति । शरण ब्रह्मदत्तो मे स एवेत्याह चानिशम् ॥ २२ ॥ स्वय लिखित्वा चान्येद्युर्लेख हारेण सयुतम् । अर्प्यतां ब्रह्मदत्तस्येत्युदित्वा सा ममार्पयत् ॥ २३ ॥ दासहस्ते मया लेख प्रैषीत्युक्त्वा स्थिता सती । मयापि प्रतिलेख तेऽर्पयित्वा सा व्यसृज्यत ॥ २४ ॥ दुर्वारमारसन्ताप कुमारोऽपि ततो दिनात् । मध्याह्नार्ककरोत्तप्त करीव न सुख स्थितः ॥ २५ ॥ कौशाम्बीस्वामिनोऽन्येद्युर्दीर्घेण प्रहिता नराः । नष्टशल्यवदङ्गे तौ तत्रान्वेष्टु समाययुः ॥ २६ ॥ राजादेशेन कौशाम्ब्यां प्रवृत्तेऽन्वेषणे तयो । सागरो भूगृहे क्षिप्त्वा तौ जुगोप निधानवत् ॥ २७ ॥ निशि तौ निर्यियासन्तौ रथमारोप्य सागरः । कियन्तमपि पन्थान निनाय ववले तत ॥ २८ ॥ तौ गच्छन्तौ पुरो नारीमुद्याने समपश्यताम् । अस्त्रपूर्णरथारूढाममरीमिव नन्दने ॥ २९ ॥ लग्ना किमियती वेला युवयोरिति सादरम् । तयोक्तौ तौ बभाषाते कावावां वेत्सि वा कथम् ॥ ३० ॥ अथाभाषत सा पुर्यामस्यां श्रेष्ठी महाधनः । धनप्रवर इत्यासीद्धनदस्येव सोदरः ॥ ३१ ॥ श्रेष्ठिश्रेष्ठस्य तस्याहमष्टानां तनुजन्मनाम् । उपरिष्टाद्विवेकश्रीर्धीगुणानामिवाभवम् ॥ ३२ ॥ उद्यौवनास्मिन्नुद्याने यक्षमाराधय बहु । अत्युच्चमवरप्राप्त्यै स्त्रीणां नाऽन्यो मनोरथः ॥ ३३ ॥ तुष्टो भक्त्यैष मे यक्षवरो वरमिद ददौ । ब्रह्मदत्तश्चक्रवर्त्ती तव भर्त्ता भविष्यति ॥ ३४ ॥ सागरबुद्धि-

लश्रेष्ठिकुक्कुटाजौ य एष्यति । श्रीवत्सी ससखा तुल्यरूपो ज्ञेयः स तु त्वया ॥ ३५ ॥ मदायतनवर्त्तिन्याः प्रथमस्ते भविष्यति । मेलको ब्रह्मदत्तेन तज्जाने सोऽसि सुन्दर ॥ ३६ ॥ एह्येहि तन्मां विरहदहनार्तां चिरादिह । विध्यापय पयःपूरेणेव सङ्गेन सम्प्रति ॥ ३७ ॥ तथेति प्रतिपद्यास्या अनुरागमिवालघुम् । सोऽधितष्ठौ रथं तां च गन्तव्यं क्वेति पृष्टवान् ॥ ३८ ॥ सेत्यूचे मगधपुरे मत्पितृव्यो धनावहः । अस्ति श्रेष्ठ्यावयोर्बह्वीं प्रतिपत्तिं स दास्यति ॥ ३९ ॥ तदितस्तत्र गन्तव्यमिति रत्नवतीगिरा । ब्रह्मसर्म्मन्त्रिपुत्रेण सूतेनाश्वाननोदयत् ॥ ४० ॥ कौशाम्बीदेश-मुल्लङ्घ्य क्षणेन ब्रह्मनन्दनः । क्रीडास्थानं यमस्येव प्राप भीमां महाटवीम् ॥ ४१ ॥ सुकण्टकः कण्टकश्च तत्र चौरचमूपती । ब्रह्मदत्तं रुरुधतुः श्वानाविव महाकिरिम् ॥ ४२ ॥ ससैन्यौ युगपत् कालरात्रिपुत्राविवोत्कटौ । शरैर्नभो मण्डपवच्छादयामासतुश्च तौ ॥ ४३ ॥ आत्तधन्वा कुमारोऽपि गर्जंश्चौरवरूथिनीम् । निषिषेधेषुभिर्धारा-सारैर्दवमिवाम्बुदः ॥ ४४ ॥ कुमारे वर्षति शरान् ससैन्यौ तौ प्रणेशतुः । हन्त प्रहारिणि हरौ हरिणानां कुतः स्थितिः ॥ ४५ ॥ कुमारं मन्त्रिसूरेवमूचे श्रान्तोऽसि सङ्गरात् । मुहूर्त्तं स्वपिहि स्वामिंस्तदिहैव रथे स्थितः ॥ ४६ ॥ स्यन्दने ब्रह्मदत्तोऽपि रत्नवत्या समन्वितः । सुष्वाप गिरिनितम्बे करिण्येव करी युवा ॥ ४७ ॥ विभातायां विभावर्य्यां प्राप्यैकामथ निम्नगाम् । तस्थुः श्रान्तास्तुरङ्गाश्च कुमारश्च व्यबुध्यत ॥ ४८ ॥ विबुद्धस्तु स नापश्यत्स्यन्दने मन्त्रिनन्दनम् । पयसे किं गतः स्यादित्यसकृद् व्याजहार तम् ॥ ४९ ॥ सोऽलब्ध-प्रतिवाग् दृष्ट्वा रथाग्रं रक्तपङ्किलम् । विलपन् हा हतोऽसीति मूर्च्छितो न्यपतद्रथे ॥ ५० ॥ उत्थितो लब्धसंज्ञः सन् हाहा वरधनो सखे । क्वासीति लोकवत् क्रन्दन् रत्नवत्येत्यबोधि सः ॥ ५१ ॥ विपन्नो

ज्ञायते नैव स तावद्भवतः सखा। तस्य वाचाप्यमाकृत्य नाथ कर्तुं न युज्यते ॥ ५२ ॥ त्वत्कार्याय गतः क्वापि स भविष्यत्यसशयम्। यान्ति नाथमपृष्ट्वापि नाथकार्याय मन्त्रिणः ॥ ५३ ॥ स तवोपरि भक्त्यैव रक्षितो नूनमेष्यति। स्वामिभक्तिप्रभावो हि भृत्यानां कवचायते ॥ ५४ ॥ स्थाने प्रातः करिष्यामो नरैस्तस्य गवेषणम्। युज्यते नेह तु स्थातुमन्तकोपवने वने ॥ ५५ ॥ तद्वाचा सोऽनुदद्रथ्यान् प्रपेदे मगधक्षिते। सीमग्राम दविष्ठ हि वाजिना मरुतां च किम् ॥ ५६ ॥ ग्रामेशेन सदःस्थेन दृष्ट्वा निन्ये स्ववेश्म स। अज्ञाता अपि पूज्यन्ते महान्तो मूर्तिदर्शनात् ॥ ५७ ॥ शोकाक्रान्त इवासीति पृष्टो ग्रामाधिपेन स। इत्यूचे मत्सखा चौरैर्युध्यमानो गतः क्वचित् ॥ ५८ ॥ तस्य प्रवृत्तिमानेष्ये सीताया इव मारुतिः[1]। इत्युक्त्वा ग्रामणीः सर्वां तां जगाहे महाटवीम् ॥ ५९ ॥ अथैत्य ग्रामणीरूचे दृष्टः कोऽपि वने न हि। प्रहारपातित किन्तु प्राप्त एष शरो मया ॥ ६० ॥ हतो वरधनुर्नूनमिति चिन्तयतस्ततः। ब्रह्मसूनोः शोक इव तमोभूरभवन्निशा ॥ ६१ ॥ यामे तुरीये यामिन्यास्तत्र चौराः समापतन्। ते तु भग्नाः कुमारेण मारेणेव प्रवासिनः ॥ ६२ ॥ ततोऽनुयातो ग्रामण्या ययौ राजगृह क्रमात्। स चामुचद्रत्नवतीं तद्बहिस्तापसाश्रमे ॥ ६३ ॥ विशन् पुर स ऐक्षिष्ट हर्म्यवातायनस्थिते। साक्षादिव रतिप्रीती कामिन्यौ नवयौवने ॥ ६४ ॥ ताभ्यां सोऽभिदधे प्रेमभाज त्यक्त्वा जन ननु। यत्तदा गतवान् युक्त तत् किं ते प्रत्यभासत ॥ ६५ ॥ व्याजहार कुमारोऽपि प्रेमभाग् बत को जन। स कदा च मया त्यक्तः कोऽह के वा युवामिति ॥ ६६ ॥ प्रसीदागच्छ विश्राम्य नाथेत्यालापनिघ्नयोः। प्राविशद्ब्रह्मदत्तोऽपि मनसीव तयोर्गृहे

---

१ कामेन

॥ ६७ ॥ तिष्ठमाने कृतस्नानाशनाय ब्रह्मसूनवे । कथयामासतुस्ते स्वां कथामवितथामिति ॥ ६८ ॥

अस्ति विद्याधरावासः कलधौतशिलामयः । मेदिन्यास्तिलक इव वैताढ्यो नाम पर्वतः ॥ ६९ ॥ अमुष्य दक्षिणश्रेण्यां नगरे शिवमन्दिरे । राजास्ति ज्वलनशिखोऽलकायामिव गुह्यकः ॥ ७० ॥ विद्याधरपतेस्तस्य द्युतिद्योतितदिग्मुखा । प्रिया विद्युच्छिखेत्यस्ति विद्युदम्भोमुचो यथा ॥ ७१ ॥ तयोः प्राणप्रिये नाट्योन्मत्ताभिधसुतानुजे । नाम्ना खण्डा विशाखा च पुत्र्यावावां बभूविव ॥ ७२ ॥ तातः सौधेऽन्यदा सख्याग्निशिखेन सहालपन् । गच्छतोऽष्टापदगिरिं गीर्वाणान् खे निरैक्षत ॥ ७३ ॥ ततः स तीर्थयात्रार्थं चलितोऽचालयच्च नौ । सुहृदं चाग्निशिखं तं धर्मेऽभीष्टं हि योजयेत् ॥ ७४ ॥ प्राप्ता अष्टापदं तत्रापश्याम मणिनिर्मिताः । प्रतिमास्तीर्थनाथानां मानवर्णसमन्विताः ॥ ७५ ॥ स्नानं विलेपनं पूजां विरचय्य यथाविधि । तास्त्रिः प्रदक्षिणीकृत्यावन्दामहि समाहिताः ॥ ७६ ॥ प्रासादान्निःसृतैर्दृष्टौ रक्ताशोकतरोरधः । चारणश्रमणौ मूर्त्तिमन्ताविव तपःशमौ ॥ ७७ ॥ तौ प्रणम्योपविश्याग्रे शुश्रुम श्रद्धया वयम् । अज्ञानतिमिरच्छेदकौमुदीं धर्मदेशनाम् ॥ ७८ ॥ पप्रच्छाग्निशिखः कः स्यात्कन्ययोरनयोः पतिः । तावूचतुर्यो ह्यनयोर्भ्रातरं मारयिष्यति ॥ ७९ ॥ हिमेनेव शशी म्लानो जातस्तातस्तया गिरा । आवामपीत्यवोचाव वाचा वैराग्यगर्भया ॥ ८० ॥ संसारासारतासारा देशनाद्यैव शुश्रुवे । तद्विषादनिषादेन किं तात परिभूयसे ॥ ८१ ॥ अलमस्माकमप्येवंविधैर्विषयजैः सुखैः । प्रवृत्ते तत्प्रभृत्यावां त्रातुं निजसहोदरम् ॥ ८२ ॥ भ्राम्यन्नपश्यन्मे भ्राताऽन्यदा पुष्पवतीमसौ । मातुलस्य त्वदीयस्य पुष्पचूलस्य कन्यकाम् ॥ ८३ ॥ रूपेणाद्भुतलावण्यपुण्येन हृतमानसः । तां जहार स दुर्बुद्धिर्बुद्धिः कर्मानुसारिणी ॥ ८४ ॥ सोऽसहिष्णुर्दृशं तस्या

विद्यां साधयितु ययौ । स्वय संविद्रेते सम्यग् भवन्तस्तु ततः परम् ॥ ८५ ॥ तदा च पुष्पवत्याख्यदावयोर्भ्रातृ-सङ्क्षयम् । शोक धर्माक्षरैः शोकापनोद इव चानुदत् ॥ ८६ ॥ अन्यच्च पुष्पवत्यूचेऽभिगम्योऽयमिहागतः । ब्रह्मदत्तोऽस्तु वां भर्ता नान्यथा हि मुनेर्गिर ॥ ८७ ॥ स्वीकृत च य(त)दावाभ्यां तथा च रभसावशात् । पताकाचालि धवला त्यक्त्वावो त्व गतस्ततः ॥ ८८ ॥ यदासज्ञाग्यवैगुण्यान्नागतोऽसि न चेक्षितः । भ्रान्त्वा सर्वत्र निर्विण्णे आवामिह तदागते ॥ ८९ ॥ पुण्यैरासि समायातः पुरा पुष्पवतीगिरा । वृतोऽसि वरयावां तद्भतिरेकस्त्वमावयोः ॥ ९० ॥ गान्धर्वेण विवाहेन स उपायस्त ते अपि । भोगी हि भाजन स्त्रीणां सरितामिव सागरः ॥ ९१ ॥ रममाणः सम ताभ्यां गङ्गोमाभ्यामिवेश्वर । तत्रातिवाहयामास तां निशां ब्रह्मनन्दनः ॥ ९२ ॥ यावन्मे राज्यलाभः स्यात्पुष्पवत्याः समीपतः । तावद्युवाभ्यां स्थातव्यमित्युक्त्वा व्यसृजच्च ते ॥ ९३ ॥ तथेत्याहतवत्यौ ते सलोकस्तच्च मन्दिरम् । गन्धर्वनगरमिव ततः सर्वं तिरोदधे ॥ ९४ ॥ अथाश्रमे रत्नवतीमन्वेष्टुं ब्रह्मसूरगात् । अपश्यस्तत्र पप्रच्छ नरमेक शुभाकृतिम् ॥ ९५ ॥ दिव्याम्बरधरा नारी रत्नाभरणभूषिता । क्वापि दृष्टा महाभाग त्वयातीतदिनेऽद्य वा ॥ ९६ ॥ स ऊचे नाथ नाथेति रुदती ह्यो मयेक्षिता । प्रत्यभिज्ञाय नप्त्रीति तत्पितृव्याय चार्पिता ॥ ९७ ॥ तद्वरोऽसीति तेनोक्तस्तथेति ब्रह्मसूर्वदन् । निन्ये तेन प्रहृष्टेन तत्पितृव्यनिकेतनम् ॥ ९८ ॥ रत्नवत्या पितृव्योऽपि ब्रह्मदत्त व्यवाहयत् । ऋद्ध्या महत्या धनिनां सर्वमीषत्कर यत. ॥ ९९ ॥ तया विषयसौख्यानि सम सोऽनुभवन्नथ । मृतकार्यं वरधनोरपरेद्युः प्रचक्रमे ॥ ४०० ॥ साक्षादिव परेतेपु

१ जानन्ति

भुञ्जानेषु द्विजन्मसु । विप्रवेषो वरधनुस्तत्रागत्याब्रवीदिति ॥ १ ॥ मम चेद्भोजनं दत्थ साक्षाद्वरधनोर्हि तत् । इति श्रुतिसुधेवास्य श्रुता वाग् ब्रह्मसूनुना ॥ २ ॥ स तं दृष्ट्वा परिष्वङ्गादेकीकुर्वन्निवात्मना । स्नपयन्निव हर्षास्रैर्निनायान्तर्गृहं ततः ॥ ३ ॥ ऊचे पृष्टः कुमारेण स्ववृत्तं सोऽकथय(कथ)त्तदा । सुप्ते त्वयि निरुद्धोऽहं चौरैः दीर्घभटैर्यथा ॥ ४ ॥ वृत्तान्तरस्थितेनैकदस्युनैकेन पत्रिणा । हतोऽहं पतितः पृथ्व्यां तिरोऽधां च लतान्तरे ॥ ५ ॥ गतेषु तेषु चौरेषु मध्येवृत्तं तिरोभवन् । आतिरन्तर्जलमिव क्रमेण ग्राममाप्नुवम् ॥ ६ ॥ भवत्प्रवृत्तिं ग्रामेशाद्विज्ञायाहमिहागमम् । दिष्ट्याऽपश्यं भवन्तं च कलापीव पयोमुचम् ॥ ७ ॥ अथोचे ब्रह्मदत्तस्तमस्माभिः स्थास्यते ननु । विना पुरुषकारेण क्लीबैरिव कियच्चिरम् ॥ ८ ॥ अत्रान्तरे च सम्प्राप्तसाम्राज्यमकरध्वजः । मधुवन्मदको यूनां प्रादुरासीन्मधूत्सवः ॥ ९ ॥ तदा च राज्ञो मत्तेभः स्तम्भं भङ्क्त्वाऽपशृङ्खलः । निर्ययौ त्रासिताशेषमर्त्यो मृत्योरिवानुजः ॥ १० ॥ ततो नितम्बभारार्त्तां काञ्चित् कन्यां स्खलद्गतिम् । करी करेण जग्राहाकृष्य पुष्करिणीमिव ॥ ११ ॥ तस्यां च शरणार्थिन्यां क्रन्दन्त्यां दीनचक्षुषि । जज्ञे हाहारवो विश्वदुःखबीजाङ्कुरोपमः ॥१२॥ रे मातङ्गासि मातङ्गैः स्त्रियं गृह्णन्न लज्जसे । इत्युक्तः स कुमारेण तां विमुच्य तमभ्यगात् ॥१३॥ उत्प्लुत्य दन्तसोपाने पादं विन्यस्य हेलया । आरुरोह कुमारस्तमशिश्रयदथासनम् ॥ १४ ॥ वाक्पादाङ्कुशयोगेन स्वं योगेनेव योगवित् । वशीचकार तं नागं कुमारस्तरसा ततः ॥१५॥ साधु साध्वित्युच्यमानो जनैर्जय जयेति च । कुमारः करिणं स्तम्भे नीत्वाबध्नाद्वशामिव ॥ १६ ॥ ततो नरेन्द्रस्तत्रागात्तं च दृष्ट्वा विसिष्मिये । आकृतिर्वि-

१ पक्षिविशेषः । २ चण्डालः ।

क्रमशास्य कस्य विश्रीयते न वा ॥ १७ ॥ कोऽय कुतो वा छ्मात्मा किं सूर्यो वासवोऽथवा । राज्ञेत्युक्ते रत्नवत्याः पितृव्यस्तमचीकथत् ॥ १८ ॥ ततो विशाम्पतिः कन्याः पुण्यमानी कृतोत्सवः । द्वः चंपाकरायेव ब्रह्मदत्ताय दत्तवान् ॥ १९ ॥ परिणीय स तास्तत्र सुख तिष्ठन्नथाऽन्यदा । जरत्यैत्यैकयेत्यूचे भ्रमयित्वांशुकाञ्चलम् ॥ २० ॥ इह वैश्रवणोऽस्त्याढ्यः श्रिया वैश्रवणोऽपर । तस्य च श्रीमतिर्नाम सुता श्रीरिव वारिधेः ॥ २१ ॥ मोचिता भवता व्यालाद्राहोरिन्दुकलेव या । सा त्वामेव पतीयन्ती ततःप्रभृति ताम्यति ॥ २२ ॥ यथा गजात्त्वया त्राता तथा त्रायस्व तां स्मरात् । गृहाण पाणिं त्व तस्या यथा हृदयमग्रहीः ॥ २३ ॥ उपयेमे कुमारस्तां विविधोद्वाहमङ्गलै । सुबुद्धिमन्त्रिणः कन्यां नन्दां वरधनुः पुनः ॥ २४ ॥ पप्रथाते पृथिव्यां तौ तिष्ठन्तौ तत्र शङ्कित[1] । सौभियोगी प्रतस्थाते ततो वाराणसीं प्रति ॥ २५ ॥ श्रुत्वायान्त ब्रह्मदत्त ब्रह्माणमिव गौरवात् । अभ्येत्य सम्रुज वाराणसीशः स्वगृहेऽनयत् ॥ २६ ॥ कटकः कटकवर्ती नाम पुत्रीं निजां ददौ । चतुरङ्गचमूं चास्मै मूर्तामिव जयश्रियम् ॥ २७ ॥ कणेरुदत्तश्चम्पेशो धनुर्मन्त्री तथाऽपरे । भगदत्तादयोऽप्येयुर्नृपाः श्रुत्वा तदागमम् ॥ २८ ॥ कृत्वा वरधनु सेनान्य सुपेणमिवार्पभिः[3] । दीर्घं दीर्घपथे नेतु प्रतस्थे ब्रह्मनन्दन ॥ २९ ॥ दीर्घस्य दूतः कटकराजमेत्यैवमूचिवान् । दीर्घेण सममाबाल्यमैत्री त्यक्तु न युज्यते ॥ ३० ॥ तत कटक इत्यूचे ब्रह्मणा सहिताः पुरा । सोदर्या इव पञ्चाप्यभवाम सुहृदो वयम् ॥ ३१ ॥ स्वर्जुषो ब्रह्मण॰ पुत्रे राज्ये च भ्रातुरर्पिते । दीर्घेण धिकृत नाचि शाकिन्यपि समर्पितम् ॥ ३२ ॥

---

१ चन्द्राय॰ २ सोधर्मी ३ भरतचक्री

ब्रह्मणः पुत्रभाण्डे यद्दीर्घो दीर्घमचिन्तयन् । आचचारातिपापं तच्छपचोऽपि किमाचरेत् ॥ ३३ ॥ तद्दुच्छ शंस दीर्घाय ब्रह्मदत्तोऽभ्युपेत्यसौ । युद्धयस्व यदि वा नश्येत्युक्त्वा दूतं व्यसर्जयत् ॥ ३४ ॥ ततः प्रयाणैरच्छिन्नैः काम्पील्यं ब्रह्मसूर्ययौ । सदीर्घमप्यरौत्सीत्तन्नभः सार्कमिवाम्बुदः ॥ ३५ ॥ दीर्घः सर्वाभिसारेण रणसारेण पत्तनात् । दण्डाक्रान्तो निरसरद्बिलादिव महोरगः ॥ ३६ ॥ चुलन्यपि तदात्यन्तवैराग्यादाददे व्रतम् । पार्श्वे पूर्णाप्रवर्त्तिन्याः क्रमान्निर्वृतिमाप च ॥ ३७ ॥ पुरोगा दीर्घराजस्य पुरोगैर्ब्रह्मजन्मनः । नदीयादांस्यकूपारयादोभिरिव जघ्निरे ॥ ३८ ॥ दीर्घोऽप्यमर्षादुन्नामिदंष्ट्रिकाविकटाननः । वराह इव धावित्वा हन्तुं प्रववृते परान् ॥ ३९ ॥ ब्रह्मदत्तस्य पादातरथिसाद्यादिकं बलम् । पर्यास्यत नदीपूरेणेव दीर्घेण वेगिना ॥ ४० ॥ ब्रह्मदत्तस्ततः क्रोधारुणाक्षो युयुधे स्वयम् । गर्जता दीर्घराजेन गर्जन् दन्तीव दन्तिना ॥ ४१ ॥ उभावपि बलिष्ठौ तावस्त्राण्यस्त्रैर्निरासतुः । कल्लोलैरिव कल्लोलान् युगान्तोद्भ्रान्तवारिधी ॥ ४२ ॥ ज्ञात्वाऽथ सेवक इवावसरं प्रसरद्द्युति । डुढौके ब्रह्मदत्तस्य चक्रं दिक्चक्रजित्वरम् ॥ ४३ ॥ ततो जहार दीर्घस्य तेनाशु ब्रह्मसूरस्रन् । विमर्दो विद्युतः को वा गोधानिधनसाधने ॥ ४४ ॥ जयतादेष चक्रीति भाषिणो मागधा इव । ब्रह्मदत्तोपरि सुराः पुष्पवृष्टिं वितेनिरे ॥ ४५ ॥ पौरैः पितेव मातेव देवतेव स वीक्षितः । पुरं विवेश काम्पील्यं सुत्रामेवामरावतीम् ॥ ४६ ॥ पूर्वोढूढाः सर्वतोऽपि पत्नीरानाययन्नृपः । कुरुम(पुष्पव)त्यभिधानां च स्त्रीरत्नं प्रत्यातिष्ठिपत् ॥ ४७ ॥ विभिन्नस्वामिनोद्भूतसीमनिर्मूलनादसौ । षट्खण्डां साधयित्वोर्वीमेकखण्डां विनिर्ममे ॥ ४८ ॥ संवत्सरैर्द्वादश-

१ युद्धाक्रान्तः पक्षे यष्ट्याक्रान्तः ।

भिरुपेत्योपेत्य सर्वत । तस्याभिषेको विदधे भरतस्येव राजभि' ॥ ४९ ॥ चतु.षष्टिसहस्रान्तःपुरस्त्रीपरिवारितः । स राज्यसौख्य बुभुजे प्राक्तपोभूरुह' फलम् ॥ ५० ॥ अन्येद्युर्नाट्यसङ्गीते तस्य दास्या समर्पितः । स्वर्वधूगुम्फित इव विचित्र पुष्पगेन्दुकः ॥ ५१ ॥ अथादचस्तु त दृष्ट्वा दृष्टपूर्वो मयेदृश । कुत्रापीति व्यधादन्तरूहापोह मुहुर्मुहु ॥ ५२ ॥ प्राक्पश्चजन्मस्मरणोत्पत्तेस्तत्कालमेव च । सौधर्मे दृष्टवानेतदित्यज्ञासीन्महीपति ॥ ५३ ॥ स सिक्तश्चन्दनाम्भोभि स्वस्थीभूयेत्यचिन्तयत् । कथ मेलिष्यति स मे पूर्वजन्मसहोदरः ॥ ५४ ॥ त ज्ञातुकाम' श्लोकार्द्धसमस्यामेवमार्पयत् । आस्व दासौ मृगौ हसौ मातङ्गावमरौ तथा ॥ ५५ ॥ अर्द्धश्लोकसमस्यां मे य इमां पूरयिष्यति । राज्यार्द्ध तस्य दास्यामीत्यसावघोषयत्पुरे ॥ ५६ ॥ श्लोकार्द्ध तत्तु सर्वोऽपि कण्ठस्थ निनमागवत् । पठश्चकार्षीत्पश्चार्द्ध न चापूरिष्ट कश्चन ॥ ५७ ॥ तदा च पुरिमताल।चित्रजीवो महेभ्यभू । जातिस्मृतेः प्रव्रजितो विहरन्नेकदाऽऽययौ ॥ ५८ ॥ तत्र कस्मिंश्चिदुद्याने प्रासुकस्थण्डिलस्थित । श्लोकार्द्ध तत्तु पठत सोऽश्रौषीदारघट्टिकात् ॥५९॥ एषा नौ षष्ठिका जातिरन्योऽन्याभ्यां वियुक्तयो । श्लोकापरार्द्धमेव स सम्पूर्य तमपाठयत् ॥६०॥ श्लोकापरार्द्ध तद्राज्ञः पुरस्तादारघट्टिक । पपाठ क कविरिति तत्पृष्टस्त मुनिं जगौ ॥६१॥ स पारितोषिक तस्मै वितीर्योत्कण्ठया ययौ। तत्रोद्याने मुनिं द्रष्टु धर्मद्रुममिवोद्गतम् ॥६२॥ वन्दित्वा त मुनिं तत्र बाष्पपूर्णविलोचन । निषसादान्तिके राजा सस्नेह पूर्वजन्मवत् ॥ ६३ ॥ आशीर्वाद मुनिर्दत्त्वा कृपारसमहोदधि । अनुग्रहार्थं भूपस्य प्रारेभे धर्मदेशनाम् ॥ ६४ ॥ राजन्नसारे ससारे सारमन्यन्न किञ्चन । सारोऽस्ति धर्म एवैक सरोजमिव कर्दमे ॥ ६५ ॥ शरीर यौवन लक्ष्मी स्वाम्य मित्राणि बन्धव । सर्वमप्यनिलो

द्रुतपताकाञ्चलचञ्चलम् ॥ ६६ ॥ बहिरङ्गान् द्विषोऽजैषीर्य्यथा साधयितुं महीम् । अन्तरङ्गान् जय तथा मोक्ष-साधनहेतवे ॥ ६७ ॥ गृहाण यतिधर्मं तत्पृथक्कृत्य त्यजापरम् । राजहंसो हि गृह्णाति विभज्य क्षीरमम्भसः ॥ ॥ ६८ ॥ ब्रह्मदत्तस्ततोऽवादीद् दिष्ट्या दृष्टोऽसि बान्धव । इयं तवैव राज्यश्रीर्भुङ्क्ष्व भोगान् यथारुचि ॥ ६९ ॥ तपसो हि फलं भोगाः सन्ति ते किं तपस्यसि । उपक्रमेत को नाम स्वतः सिद्धे प्रयोजने ॥ ७० ॥ मुनिरूचे ममाप्यासन् धनदस्येव सम्पदः । मया तास्तृणवत्त्यक्ता भवभ्रमणभीरुणा ॥ ७१ ॥ सौधर्मात् क्षीणपुण्योऽस्मिन्ना-गतोऽसि महीतले । इतोऽपि क्षीणपुण्यः सन् राजन्मा गा अधोगतिम् ॥ ७२ ॥ आर्य्ये देशे कुले श्रेष्ठे मानुष्यं प्राप्य मोक्षदम् । साधयस्यमुना भोगान् सुधया पायुशौचवत् ॥ ७३ ॥ स्वर्गाच्च्युत्वा क्षीणपुण्यौ भ्रान्तावावां कुयो-निषु । यथा तथा स्मरन् राजन् किं बाल इव मुह्यसि ? ॥ ७४ ॥ तेनैवं बोध्यमानोऽपि नाबुद्ध वसुधाधवः । कुतः कृतनिदानानां बोधिबीजसमागमः ॥ ७५ ॥ तमबोध्यतमं बुध्वा जगाम मुनिरन्यतः । कालादिष्टाहिना दष्टे कियत्तिष्ठन्ति मान्त्रिकाः ॥ ७६ ॥ घातिकर्म्मक्षयात्प्राप्य केवलज्ञानमुत्तमम् । भवोपग्राहिकर्माणि हत्वा प्राप परं पदम् ॥ ७७ ॥ ब्रह्मदत्तोऽपि संसारसुखानुभवलालसः । सप्तातिवाहयामास शतानि शरदां क्रमात् ॥ ७८ ॥ कदाचित्प्राक्परिचितो द्विजः कश्चिज्जगाद तम् । चक्रवर्त्तिन् स्वयं भुङ्क्षे यत्तन्मे देहि भोजनम् ॥ ७९ ॥ ब्रह्मदत्तोऽप्यवोचत्तं मदन्नं द्विज दुर्जरम् । चिरेण जीर्य्यमाणं तु महोन्मादाय जायते ॥ ८० ॥ कदर्योऽस्यन्नदानेऽपि धिक्त्वामिति वदन् द्विजः । अभोजि सकुटुम्बोऽपि भूभुजा भोजनं निजम् ॥ ८१ ॥ निशायामथ विप्रस्य बीजादिव तदोदनात् । शतशाखः स्मरोन्मादतरुः प्रादुरभूद्भृशम् ॥ ८२ ॥ अज्ञातजननीजामिस्नुषाव्यतिकरं मिथः । पशुवत्सहपुत्रोऽपि



॥ ८९ ॥

विप्रः प्रयाते रवे ॥ ८३ ॥ ततो विरामे यामिन्या द्विजो गृहजनश्च सः । द्विया दर्शयितुं स्वास्यमन्योऽन्यमपि नाशकत् ॥ ८४ ॥ कूरेणानेन राज्ञाऽस्मि सकुटुम्बो विडम्बितः । चिन्तयामित्यमर्षेण नगरान्निरगाद्द्विजः ॥ ८५ ॥ दूरादरकपत्राणि कामयन् शर्कराकणैः । तेन कश्चिदजापालो ददृशे भ्रमता बहिः ॥ ८६ ॥ मद्वैरसाधनायालमयमेवेति चिन्तयन् सः । तं पूजयेनेन स कारणादावैवमवोचत ॥ ८७ ॥ राजमार्गे गजारूढो यः श्वेतच्छत्रचामरः । याति क्षिप्ते दृशौ तस्य त्वया प्रक्षिप्य गोलिके ॥ ८८ ॥ विप्रवाचमजापालः प्रतिपेदे तथैव ताम् । पशुतुल्यगुणाना हि न विमृश्यविभागिनः ॥ ८९ ॥ सोऽथ कुड्यान्तरे स्थित्वा समं प्रक्षिप्य गोलिके । आस्फोटयद् दृशौ राज्ञो नाज्ञा लक्ष्मणा गिरिः खलु ॥ ९० ॥ सोऽङ्गरक्षैरजापालः प्राप्तः श्येनैरिव द्विकः । हन्यमानस्तमेवाख्यद्विप्रं शिरकारकम् ॥ ९१ ॥ तच्छ्रुत्वा पार्थिवोऽवोचद्धिग् धिग् जातिर्द्विजन्मनाम् । यत्रैते भुञ्जते पापास्तत्र मज्जन्ति मानवम् ॥ ९२ ॥ यः स्वामीयति दातारं दत्त तस्मै वरं शुने । न जातु दातुमुचितं कृतघ्नानां द्विजन्मनाम् ॥९३॥ रक्तकानां मूर्खमानां श्वापदानां पलादिनाम् । सृष्टिं द्विजानां योऽकार्षीत्स्रष्टा प्रथमं हि सः ॥ ९४ ॥ इति जल्पन्ननल्पमन्युः पृथ्वीपतिरघातयत् । सपुत्रबन्धुमित्रं तं विप्रं सशोकमुष्टिवत् ॥ ९५ ॥ दृशोरन्धीकृतस्तेन हृदयेऽन्धीकृतः क्रुधा । विप्रान् सोऽघातयत् सर्वान् पुरोधप्रभृतीनपि ॥ ९६ ॥ सोऽमात्यमादिदेशैवं नेत्रैरेषां द्विजन्मनाम् । विशालं स्थालमापूर्य निधेहि पुरतो मम ॥ ९७ ॥ रौद्रमध्यवसायं तं राज्ञो विज्ञाय मन्त्र्यपि । श्लेष्मातकफलैः स्थालं पूरयित्वा पुरो न्यधात् ॥ ९८ ॥ मुमुदे ब्रह्मदत्तोऽपि पाणिना संस्पृशन्मुहुः । विप्राणां लोचनैः स्थालं साधु पूर्णमिति ब्रुवन् ॥ ९९ ॥ स्पर्शो स्त्रीरत्नरूपायाः पुष्पवत्यास्तथा न हि ।

यथाऽऽसीद्ब्रह्मदत्तस्य तत्स्थालस्पर्शने रतिः ॥ ५०० ॥ न कदाचन स स्थालमपासारयदग्रतः । दुर्म्मदी मदिरापात्रमिव दुर्गतिकारणम् ॥ १ ॥ विप्रनेत्रधियाऽमृद्नात् श्लेष्मातकफलानि सः । फलाभिमुखपापद्रोः सञ्जयन्निव दोहदम् ॥ २ ॥ तस्यानिवर्त्तको रौद्राध्यवसायोऽत्यवर्द्धत । अशुभं वा शुभं वाऽपि सर्वं हि महतां महत् ॥ ३ ॥ तस्यैवं वसुधेशस्य रौद्रध्यानानुबन्धिनः । पापपङ्कवराहस्य ययुर्वर्षाणि षोडश ॥ ४ ॥ यातेषु षोडशयुतेषु समाशतेषु, सप्तस्वसौ क्षितिपतिः परिपूरितायुः । हिंसाऽनुबन्धिपरिणामफलानुरूपां तां सप्तमीं नरकलोकभुवं जगाम ॥ ५ ॥ २७ ॥

॥ इति ब्रह्मदत्तचक्रवर्त्तिकथानकम् ॥

पुनरपि हिंसकान्निन्दति ।

**कुणिर्वरं वरं पङ्गुरशरीरी वरं पुमान् । अपि सम्पूर्णसर्वाङ्गो न तु हिंसापरायणः ॥ २८ ॥**

कुणिर्विकलपाणिः वरमिति मनागिष्टे मन्तमव्ययं, पङ्गुः पादविकलः, कुत्सितं शरीरमशरीरं नञः कुत्सार्थत्वात् तद्विद्यते यस्य सोऽशरीरी कुष्ठी विकलाङ्गः, कुणिपङ्गुकुष्ठिनस्ते हि विकलाङ्गत्वादेव हिंसामकुर्वन्तो मनाक् श्रेष्ठाः, सम्पूर्णसर्वाङ्गोऽपि कृतपरिकरबन्धं हिंसापरायणः पुमान्न तु श्रेष्ठः ॥ २८ ॥

ननु रौद्रध्यानपरायणस्य या तु शान्तिकनिमित्तं प्रायश्चित्तभूता हिंसा या वा कुलक्रमायाता मत्स्यबन्धानामिव सा रौद्रध्यानरहितत्वान्न दोषायेत्याह—

**हिंसा विघ्नाय जायेत विघ्नशान्त्यै कृताऽपि हि । कुलाचारधियाऽप्येषा कृता कुलविनाशनी ॥ २९ ॥**

रौद्रध्यानमन्तरेणाप्यविवेकाल्लोभाद्वा या शान्तिनिमित्त कुलक्रमाद्वा हिंसा न केवल पापहेतुः प्रत्युत विघ्नशान्तिनिमित्त क्रियमाणा समरादित्यकथोक्तस्य यशोधरजीवस्य सुरेन्द्रदत्तस्येव पिष्टमयकुक्कुटवधरूपा विघ्नाय जायेत कल्पेत अस्मत्कुलाचारोऽयमिति बुद्ध्याऽपि कृता हिंसा कुलमेव विनाशयति ॥ २९ ॥

इदानीं कुलक्रमायातामपि हिंसां परिहरन् पुमान् प्रशस्य एवेत्याह ।

**अपि वशक्रमायातां यस्तु हिंसां परित्यजेत् । स श्रेष्ठ सुलस इव कालसौकरिकात्मजः ॥३०॥**

वश कुल कुलक्रमायातामपि हिंसां यः परिहरेत् सः श्रेष्ठः प्रशस्यतमः सुलस इव, तस्य विशेषण कालसौकरिकात्मज कालसौकरिको नाम सौनिकस्तस्यात्मजः पुत्र. । यदाह—

(१)अवि इच्छन्ति य मरण न य परपीड कुणन्ति मणसा वि । जे सुविइअसुगइपहा सोयरिअसुओ जहा सुलसो ॥

सुलसकथानक सम्प्रदायगम्यम् । स चाय—

महर्द्धि मगधेष्वस्ति पुर राजगृहाभिधम् । तत्र श्रीवीरपादाब्जभृङ्गोऽभूच्छ्रेणिको नृपः ॥ १ ॥ तस्य प्रियतमे नन्दाचिल्लणे शीलभूषणे । अभूतां देवकीरोहिण्याविवानकदुन्दुभे(२) ॥ २ ॥ नन्दायां नन्दनो विश्वकुमुदानन्दचन्द्रमाः । नाम्नाऽभयकुमारोऽभूदुभयान्वयभूषणः ॥ ३ ॥ राजा तस्य परिज्ञाय प्रकृष्ट बुद्धिकौशलम् । ददौ

(१) अपि इच्छन्ति च मरण न च परपीडा कुर्वन्ति मनसापि। ये सुविदितसुगतिपथा सौकरिकसुतो यथा सुलस ॥१॥
(२) वसुदेवस्य कृष्णपितु ।

सर्वाधिकारित्वं गुणा हि गरिमास्पदम् ॥ ४ ॥ अन्यदा श्रीमहावीरो विहरन् परमेश्वरः । जगत्पूज्यः पुरे तस्मिन्नागत्य समवासरत् ॥५॥ श्रुत्वा स्वामिनमायातं जङ्गमं कल्पपादपम् । कृतार्थमानी तत्रागान्मुदितः श्रेणिको नृपः ॥ ६ ॥ यथास्थानं निषण्णेषु देवादिषु जगद्गुरुः । प्रारेभे दुरितध्वंसदेशनीं धर्म्मदेशनाम् ॥ ७ ॥ तदा कुष्ठगलत्कायः कश्चिदेत्य प्रणम्य च । निषसादोपतीर्थेशमलर्क इव कुट्टिमे ॥ ८ ॥ ततो भगवतः पादौ निजपूयरसेन सः । निःशङ्कश्चन्दनेनेव चर्चयामास भूयसा ॥ ९ ॥ तद्वीक्ष्य श्रेणिकः क्रुद्धो दध्यौ वध्योऽयमुत्थितः । पापीयान् यज्जगद्भर्त्तर्य्येवमाशातनापरः ॥ १० ॥ अत्रान्तरे जिनेन्द्रेण क्षुते प्रोवाच कुष्ठिकः । म्रियस्वेत्यथ जीवेति श्रेणिकेन क्षुते सति ॥ ११ ॥ क्षुतेऽभयकुमारेण जीव वा त्वं म्रियस्व वा । कालसौकरिकेणापि क्षुते मा जीव मा मृथाः ॥ १२ ॥ जिनं प्रति म्रियस्वेति वचसा रुषितो नृपः । इतः स्थानादुत्थितोऽसौ ग्राह्य इत्यादिशद्भटान् ॥ १३ ॥ देशनान्ते महावीरं नत्वा कुष्ठी समुत्थितः । रुरुधे श्रेणिकभटैः किरातैरिव शूकरः ॥ १४ ॥ स तेषां पश्यतामेव दिव्यरूपधरः क्षणात् । उत्पपाताम्बरे कुर्वन्नर्कबिम्बविडम्बनाम् ॥ १५ ॥ पत्तिभिः कथिते राज्ञा क एष इति विस्मयात् । विज्ञप्तो भगवानस्मै देवोऽसावित्यचीकथत् ॥ १६ ॥ पुनर्विज्ञपयामास सर्वज्ञमिति भूपतिः । देवः कथमभूदेष कुष्ठी वा केन हेतुना ॥ १७ ॥ अथोचे भगवानेवमस्ति वत्सेषु विश्रुता । कौशाम्बी नाम पूस्तस्यां शतानीकोऽभवन्नृपः ॥ १८ ॥ तस्यां नगर्यामेकोऽभून्नामतः सेडुको द्विजः । सीमा सदा दरिद्राणां मूर्खाणामवधिः परः ॥ १९ ॥ गर्भिण्याऽभाणि सोऽन्येद्युर्ब्राह्मण्या सूतिकर्म्मणे । भद्रानय घृतं मह्यं सद्या न ह्यन्यथा व्यथा

(१) मत्तः श्वा.

॥ २० ॥ सोऽप्यूचे तां प्रिये नास्ति मम कुत्रापि कौशलम् । येन किञ्चिज्ञभे कापि कलाग्राह्या यदीश्वरा ॥ २१ ॥ उवाच सा च त भट्ट गच्छ सेवस्व पार्थिवम् । पृथिव्यां पार्थिवादन्यो न कश्चित्कल्पपादप ॥ २२ ॥ तथेति प्रतिपद्यासौ नृप पुष्पफलादिना । प्रवृत्त सेवितु विप्रो रत्नेच्छुरिव सागरम् ॥ २३ ॥ कदाचिदथ कौशाम्वी चम्पेशेनामितैर्बलैः । घनर्तुनेव मेघैर्घोररुध्यत समन्तत ॥२४॥ शानीकोऽपि शतानीको मध्येकौशाम्बि तस्थिवान् । प्रतीक्षमाण समयमन्तर्बिलमिवोरगः ॥ २५ ॥ चम्पाधिपोऽपि कालेन वहुना सन्नसैनिकः । प्रावृषि स्वाश्रय यातु प्रवृत्तो राजहसवत् ॥ २६ ॥ तदा पुष्पार्थमुद्याने गत सेडुक ऐक्षत । त क्षीणसैन्य प्रत्यूषे निष्प्रभोडुमिवोडुपम् ॥ २७ ॥ तूर्णमेत्य शतानीक व्यजिज्ञपदसाविदम् । याति क्षीणबलस्तेऽरिर्भग्नदंष्ट्र इवोरगः ॥२८॥ यद्यद्योत्तिष्ठसे तस्मै तदा ग्राह्यः सुखेन सः । वलीयानपि खिन्नः सन्नखिन्नेनाभिभूयते ॥ २९ ॥ तद्वचः साधु मन्वानो राजा सर्वाभिसारतः । नि ससार शैरासारसारनासीरदारुणः ॥ ३० ॥ ततः पश्चादपश्यन्तो नेशुश्चम्पेशसैनिकाः । अचिन्तिततडित्पाते को वीक्षितुमपि क्षमः ॥ ३१ ॥ चम्पाधिपतिरेकाङ्ग कान्दिशीकः पलायित । तस्य हस्त्यश्वकोशादि कौशाम्बीपतिरग्रहीत् ॥ ३२ ॥ हृष्टः प्रविष्ट कौशाम्बीं शतानीको महामना । उवाच सेडुक विप्र ब्रूहि तुभ्य ददामि किम् ॥३३॥ विप्रस्तमूचे याचिष्ये पृष्ट्वा निजकुटुम्बिनीम् । पर्यालोचपद नान्यो गृहिणां गृहिणीं विना ॥ ३४ ॥ भट्ट प्रहृष्टो भट्टिन्यै तदशेष शशास स । चेतसा चिन्तयामास सा चैवं बुद्धिशालिनी ॥ ३५ ॥ यद्यमुना ग्राहयिष्ये नृपाद्ग्रामादिक तदा । करिष्यत्यपरान्दारान्मदाय विभव खलु ॥ ३६ ॥ दिन प्रत्येक आलोच-

( १ ) खिन्नसैनिक २ बाणवृष्ट्या सारभूत नासीरम्—अग्रसैन्य तेन दारुण ३ दर्शनम् ।

स्तथाग्रासनभोजनम् । दीनारो दक्षिणायां च याच्य इत्यन्वशात्पतिम् ॥ ३७ ॥ ययाचे तत्तथा विप्रो राजाऽदात्त-द्वदन्निदम् । करङ्कोऽब्धिमपि प्राप्य गृह्णात्यात्मोचितं पयः ॥३८॥ प्रत्यहं तत्तथा लेभे प्राप्य सम्भावनां च सः । पुंसां राजप्रसादो हि वितनोति महार्घताम् ॥ ३९ ॥ राजमान्योऽयमित्येष नित्यं लोकैर्न्यमन्त्र्यत । यस्य प्रसन्नो नृपतिस्तस्य कः स्यान्न सेवकः ॥ ४० ॥ अग्रे भुक्तं चालयित्वा बुभुजेऽनेकशोऽप्यसौ । प्रत्यहं दक्षिणालोभाद्धि-ग्धिग्लोभो द्विजन्मनाम् ॥ ४१ ॥ उपाचीयत विप्रोऽसौ विविधैर्दक्षिणाधनैः । प्रासरत्पुत्रपौत्रैश्च पादैरिव वटद्रुमः ॥ ४२ ॥ स तु नित्यमजीर्णान्नवमनादूर्ध्वगै रसैः । आमैरभूद्दूषितत्वगश्वत्थ इव लाक्षया ॥ ४३ ॥ कुष्ठी क्रमेण सञ्जज्ञे शीर्णघ्राणांह्रिपाणिकः । तथैवाभुङ्क्त राजाग्रे सोऽतृप्तो हव्यवाडिव ॥ ४४ ॥ एकदा मन्त्रिभिर्भूपो विज्ञप्तो देव कुष्ठ्यसौ । सञ्चरिष्णुः कुष्ठरोगो नास्य योग्यमिहाशनम् ॥ ४५ ॥ सन्त्यस्य नीरुजः पुत्रास्तेभ्यः कोऽप्यत्र भोज्यताम् । व्यङ्गितप्रतिमायां हि स्थाप्यते प्रतिमान्तरम् ॥ ४६ ॥ एवमास्त्विति राज्ञोक्तेऽमात्यैर्विप्रस्तथोदितः । स्वस्थानेऽस्थापयत्पुत्रं गृहे तस्थौ स्वयं पुनः ॥ ४७ ॥ मधुमण्डकवद्क्षुद्रमाक्षिकाजालमालितः । पुत्रैर्गृहादपि बहिः कुटीरेऽक्षेपि स द्विजः ॥ ४८ ॥ बहिःस्थितस्य तस्याज्ञां पुत्रा अपि न चक्रिरे । दारुपात्रे ददुः किन्तु शुनकस्येव भोजनम् ॥ ४९ ॥ जुगुप्समाना वध्वोऽपि तं भोजयितुमाययुः । तिष्ठिवुर्वलितग्रीवं मोटनोत्पुटनासिकाः ॥ ५० ॥ अथ सोऽचिन्तयद्विप्रः श्रीमन्तोऽमी मया कृताः । एभिर्मुक्तोऽस्म्यनादृत्य तीर्णाम्भोभिस्तरण्डवत् ॥ ५१ ॥ तोषयन्ति न वाचाऽपि रोषयन्त्येव माममी । क्रुष्ठो रुष्टो न सन्तुष्टो भव्य इत्यनुलापिनः ॥ ५२ ॥

(१) घटः (२) वान्त्वा.

जुगुप्सन्ते यथैते मां जुगुप्स्या स्युरमी अपि। यथा तथा करिष्यामीत्यालोच्यावोचदात्मजान् ॥ ५३ ॥ उद्विग्नो जीवितस्याहं कुलाचारस्त्वसौ सुता । मुमूर्षुभिः कुटुम्बस्य देयो मन्त्रोचित पशु ॥ ५४ ॥ पशुरानीयतामेक इत्याकर्ण्यानुमोदिन । आनिन्यिरे तेऽथ पशु पशुवन्मन्दबुद्धयः ॥ ५५ ॥ उद्वर्त्योद्वर्त्य च स्वाङ्ग-मन्नेन व्याधिवर्त्तिका । तेनाचारि पशुस्तावद्यावत् कुष्ठी बभूव सः ॥ ५६ ॥ ददौ विप्रः स्वपुत्रेभ्यस्त हत्वा पशुमन्यदा । तदाशयमजानन्तो मुग्धा बुभुजिरे च ते ॥ ५७ ॥ तीर्थे स्वार्थाय यासामीत्यापृच्छ्य तनयान् द्विजः । ययावुद्यत्सुखोऽरण्य शरण्यमिव चिन्तयन् ॥ ५८ ॥ अत्यन्ततृषित सोऽटन्नटव्यां पयसे चिरम् । अपश्यत्सुहृदमिव देशे नानाद्रुमे ह्रदम् ॥ ५९ ॥ नीर तीरतरुस्रस्तपत्रपुष्पफल द्विजः । ग्रीष्ममध्यन्दिनार्काशुक-थित क्वाथनत्पपौ ॥ ६० ॥ सोऽपाद्यथा यथा वारि भूयोभूयस्तृपातुरः । तथा तथा विरेकोऽस्य बभूव कृमिभि सह ॥ ६१ ॥ स नीरुगासीत्कतिभिरप्यहोभिर्ह्रदाम्भसा । मनोज्ञसर्वावयवो वसन्तेनेव पादपः ॥ ६२ ॥ आरोग्य हृष्टो ववले विप्रः विप्र स्ववेश्मने । पुर्सा वपुर्विशेषोत्थशृङ्गारो जन्मभूमिषु ॥ ६३ ॥ स पुर्यां प्रविशन् पौरैर्ददृशे जातविस्मयैः । देदीप्यमानो निर्मुक्तो निर्मोक इव पन्नगः ॥ ६४ ॥ पौरैः पृष्टः पुनर्जात इवोल्लाघः कथ न्वसि । देवताराधनादस्मीत्याचचक्षे स तु द्विजः ॥ ६५ ॥ स गत्वा स्वगृहेऽपश्यत्स्वपुत्रान् कुष्ठिनो मुदा । मयाऽवज्ञाफल साधु दत्तमित्यवदच्च तान् ॥ ६६ ॥ सुतास्तमेवमूचुश्च भवता तात निर्घृणम् । विश्वस्तेषु किमस्मासु द्विषेवेदमनु-ष्ठितम् ॥ ६७ ॥ लोकैराक्रुश्यमानोऽसौ राजन्नागत्य ते पुरम् । आश्रयजीविकाद्वार द्वारपाल निराश्रयः ॥ ६८ ॥ तदाऽत्र वयमायाता द्वाःस्थोऽस्मद्धर्मदेशनाम् । श्रोतु प्रचलितोऽमुञ्च विप्र निजकर्मणि ॥ ६९ ॥ द्वारोपविष्टः स

द्वारदुर्गाणामग्रतो बलिम्। जन्मादृष्टमिवाभुङ्क्त यथेष्टं काष्ठितः क्षुधा ॥ ७० ॥ आकण्ठं परिभुक्तान्नदोषाद्ग्रीष्मोष्मणा च सः। उत्पन्नया तृषाऽकारि मरुपान्थ इवाकुलः ॥ ७१ ॥ तत्तु द्वाःस्थभिया स्थानं त्यक्त्वा नागात्प्रपादिषु। असौ जलचरान् जीवान् धन्यान्मेने तृषातुरः ॥ ७२ ॥ आरटन् वारि वारीति स तृषार्त्तो व्यपद्यत। इहैव नगरद्वारवाप्यामजनि दर्दुरः ॥ ७३ ॥ विहरन्तो वयं भूयोऽप्यागमामेह पत्तने। लोकोऽस्मद्वन्दनार्थं च प्रचचाल ससम्भ्रमः ॥ ७४ ॥ अस्मदागमनोदन्तं श्रुत्वाऽम्भोहारिणीमुखात्। स भेकोऽचिन्तयदिदं काप्येवं श्रुतपूर्व्यहम् ॥ ७५ ॥ ऊहापोहं ततस्तस्य कुर्वाणस्य मुहुर्मुहुः। स्वप्नस्मरणवज्जातिस्मरणं तत्क्षणादभूत् ॥ ७६ ॥ स दध्यौ दर्दुरश्चैवं द्वारे संस्थाप्य मां पुरा। द्वाःस्थो यं वन्दितुमगात्स आगाद्भगवानिह ॥ ७७ ॥ यथैते यान्ति तं द्रष्टुं लोका यास्याम्यहं तथा। सर्वसाधारणी गङ्गा न हि कस्यापि पैतृकी ॥ ७८ ॥ ततोऽस्मद्वन्दनाहेतोरुत्प्लुत्योत्प्लुत्य सोऽध्वनि। आयांस्तेऽश्वखुरक्षुण्णो भेकः पञ्चत्वमाप्तवान् ॥ ७९ ॥ दर्दुराङ्कोऽयमुत्पेदे देवोऽस्मद्भक्तिभावितः। भावना हि फलत्येव विनाऽनुष्ठानमप्यहो ॥ ८० ॥ इन्द्रः सदस्युवाचेदमुपश्रेणिकमार्हताः। अश्रद्दधानस्तदसौ त(त्व)त्परीक्षार्थमागतः ॥८१॥ गोशीर्षचन्दनेनायमानर्च्च चरणौ मम। त्वद्दृष्टिमोहनायान्यत्सर्वं व्यधित वैक्रियम् ॥ ८२ ॥ अथोचे श्रेणिकः स्वामिन्नमङ्गल्यं प्रभोः क्षुते। एषोऽन्येषां तु मङ्गल्यामङ्गल्यानि जगाद किम् ॥ ८३ ॥ अथाचचक्षे भगवान् किं भवेऽद्यापि तिष्ठसि। शीघ्रं मोक्षं प्रयाहीति मां म्रियस्वेत्युवाच सः ॥ ८४ ॥ स त्वां जगाद जीवेति जीवतस्ते यतः सुखम्। नरके नरशार्दूल मृतस्य हि गतिस्तव ॥ ८५ ॥ जीवन् धर्म्मं विधत्ते स्याद्विमानेऽनुत्तरे मृतः। जीव म्रियस्व वेत्येवं तेनाभयमभाषत ॥ ८६ ॥ जीवन् पापपरो मृत्वा सप्तमं

नरकं व्रजेत् । कालसौकारिकस्तेन प्रोचे मा जीव मा मृथाः ॥ ८७ ॥ तच्छ्रुत्वा श्रेणिको नत्वा भगवन्तं व्यजिज्ञ-
पत् । त्वयि नाथे जगन्नाथ कथं मे नरके गतिः ॥ ८८ ॥ बभाषे भगवानेवं पुरा त्वमसि भूपते । बद्धायुर्नरके
तेन तत्रावश्यं गमिष्यसि ॥८९॥ शुभानामशुभानां वा फलं प्राग्बद्धकर्मणाम् । भोक्तव्यं तद् द्व(वद्ध)यमपि नान्यथा
कर्त्तुमीश्महे ॥ ९० ॥ आद्यो भाविजिनचतुर्विंशतौ त्वं भाविष्यसि । पद्मनाभाभिधो राजन् खेदं मा स्म कथास्ततः
॥ ९१ ॥ श्रेणिकोऽथावदन्नाथ किमुपायोऽस्ति कोऽपि स । नरकाद्येन रक्ष्येऽहमन्धकूपादिवान्धलः ॥ ९२ ॥
भगवान् व्याजहारेदं साधुभ्यो भक्तिपूर्वकम् । ब्राह्मण्या चेत्कपिलया भिक्षां दापयसे मुदा ॥ ९३ ॥ कालसौक-
रिकात्सूना विमोचयसि वा यदि । तदा ते नरकान्मोक्षो राजन् जायेत नान्यथा ॥९४॥ सम्यगित्युपदेशं स हृदि
हारमिवोद्वहन् । प्रणम्य श्रीमहावीरं चचाल स्वाश्रयं प्रति ॥९५॥ अत्रान्तरे परीक्षार्थं दर्दुराङ्केन भूपते । अकार्यं
निदधत्साधुः कैवर्त्त इव दर्शितः ॥९६॥ तं दृष्ट्वा प्रवचनस्य मालिन्यं मा भवत्विति । निवार्याकार्यतः साम्ना स्वगृहं
प्रत्यगान्नृप ॥९७॥ स देवो दर्शयामास साध्वीमुदरिणीं पुनः । नृपः शासनभक्तस्तां जुगोप निजवेश्मनि ॥९८॥
प्रत्यक्षीभूय देवोऽपि तमूचे साधु साधु भो. । सम्यक्त्वाचाल्यसे नैव पर्वतः स्वपदादिव ॥ ९९ ॥ नृनाथ यादृशं
शक्रः सदसि त्वामचीकथत् । दृष्टस्तादृश एवासि मिथ्यावाचो न तादृशाः ॥ १०० ॥ दिवानिर्मितनक्षत्रश्रेणिक
श्रेणिकाय सः । व्यश्राणयत्ततो हारं गोलकद्वितयं तथा ॥ १ ॥ योऽमुं सन्धास्यते हारं त्रुटितं स मरिष्यति ।
इत्युदीर्य तिरोऽधत्त स्वमदृष्ट इवामरः ॥ २ ॥ दिव्यं देव्यै ददौ हारं चेल्लणायै मनोहरम् । गोलकद्वितयं तत्तु
नन्दायै नृपतिर्मुदा ॥ ३ ॥ दानस्यास्यासि योग्येति सेर्ष्यं नन्दा मनस्विनी । आस्फाल्य स्फोटयामास स्तम्भे

तद्गोलकद्वयम् ॥ ४ ॥ एकस्मात्कुण्डलद्वन्द्वं चन्द्रद्वन्द्वमिवामलम् । देदीप्यमानमन्यस्मात्क्षौमयुग्मं च निःसृतम् ॥ ५ ॥ तानि दिव्यानि रत्नानि नन्दा सानन्दमग्रहीत् । अनभ्रवृष्टिवल्लाभो महतां स्यादचिन्तितः ॥ ६ ॥ राजा ययाचे कपिलां साधुभ्यः श्रद्धयाऽन्विता । भिक्षां प्रयच्छ निर्भिक्षां त्वां करिष्ये धनोच्चकैः ॥ ७ ॥ कपिलोचे विधत्से मां सर्वां स्वर्णमयीं यदि । हिनस्सि वा तथाऽप्येतदकृत्यं न करोम्यहम् ॥ ८ ॥ कालसौकरिकोऽप्यूचे राज्ञा सूनां विमुञ्च यत् । दास्येऽहमर्थमर्थस्य लोभात्त्वमसि सौनिकः ॥ ९ ॥ सूनायां ननु को दोषो यया जीवन्ति मानवाः । तां न जातु त्यजामीति कालसौकरिकोऽवदत् ॥ १० ॥ सूनाव्यापारमेषोऽत्र करिष्यति कथं न्विति । नृपः क्षिप्त्वाऽन्धकूपे तमहोरात्रमधारयत् ॥ ११ ॥ अथ विज्ञपयामास गत्वा भगवते नृपः । सोऽत्याजि सौनिकः सूनामहोरात्रमिदं विभो ॥ १२ ॥ सर्वज्ञोऽभिदधे राजन्नन्धकूपेऽपि सोऽवधीत् । शतानि पञ्च महिषान् स्वयं निर्माय मृन्मयान् ॥ १३ ॥ तद्गत्वा श्रेणिकोऽपश्यत् स्वयमुद्विविजे ततः । धिगहो मे पुरा कर्म्म नान्यथा भगवद्गिरः ॥ १४ ॥ पञ्च पञ्च शतान्यस्य महिषान्निघ्नतोऽन्वहम् । कालसौकरिकस्योच्चैः पापराशिरवर्द्धत ॥ १५ ॥ इहापि रोगास्तस्यासन्दारुणैरतिदारुणाः । पर्यन्तनरकप्राप्तेरुपर्युत्कलितैरघैः ॥ १६ ॥ हा तात हा मातरिति व्याधिबाधाकदर्थितः । वध्यमानः शूकरवत्कालसौकरिकोऽरटत् ॥ १७ ॥ सोऽङ्गनातूलिकापुष्पवीणाक्वणित-मार्जिताः[1] । दृष्टित्वग्नासिकाकर्णजिह्वाशूलान्यमन्यत ॥ १८ ॥ ततस्तस्य सुतस्तादृक् स्वरूपं सुलसोऽखिलम् । जगाद जगदाशायाभयायाभयदायिने ॥ १९ ॥ ऊचेऽभयस्त्वत्पिता यच्चक्रे तस्येदृशं फलम् । सत्यमत्युग्रपापानां

१ मार्जिता—सुगन्धिद्रव्यैः संस्कृतं दधि.

फलमत्रैव लभ्यते ॥ २० ॥ तथाऽप्यस्य कुरु प्रीत्यै विपरीतेन्द्रियार्थताम् । अमेध्यगन्धविध्वसे भवेन्न जलमौषधम् ॥ २१ ॥ अथैत्य सुलसस्त तु कटुतिक्तान्यभोजयत् । अपाययदपोऽत्युष्णास्तत्रपुसहोदराः ॥२२॥ भूयिष्ठविष्ठया सुष्ठु सर्वाङ्गीणं व्यलेपयत् । उर्ध्वकण्टकमय्यां च शय्यायां पर्य्यसूपुपत् ॥ २३ ॥ आवयामास चक्रीवत्क्रमेलकरवान् कटून् । रक्षोवेतालकङ्कालघोररूपाण्यदर्शयत् ॥ २४ ॥ तैः प्रीतः सोऽब्रवीत्पुत्र चिरात्स्वाद्य भोजनम् । शीत वारि मृदु शय्या सुगन्धि च विलेपनम् ॥२५॥ शब्दः श्रुतिसुधाऽमूनि रूपाण्येक सुख दृशोः । भक्तेनापि त्वयाऽस्मात् किं वञ्चितोऽस्मि चिर सुखात् ॥ २६ ॥ तच्छ्रुत्वा सुलसो दध्याविदमत्रैव जन्मनि । अहो पापफल घोर नरके किं भविष्यति ॥ २७ ॥ सुलसे चिन्तयत्येन स मृत्वा प्राप दारुणम् । सप्तमे नरके स्थानमप्रतिष्ठानसञ्ज्ञितम् ॥ २८ ॥ कृतोर्ध्वदेहिकोऽभाषि सुलसः स्वजनैरिति । पितु श्रय पद स्वाम सनाथा हि त्वया यथा ॥ २९ ॥ सुलसस्तानुवाचेद करिष्ये कर्म न ह्यदः । किञ्चिल्लेमे फल पित्राऽप्यत्रैवामुष्य कर्मणः ॥ ३० ॥ यथा मम प्रिया प्राणास्तथाऽन्यप्राणिनामपि । स्वप्राणितायं धिगहो परप्राणप्रमारणम् ॥ ३१ ॥ हिंसाजीविकया जीवेत् कः प्रेत्य फलमीदृशम् । मरणैकफल ज्ञात्वा किंपाकफलमत्ति कः ॥ ३२ ॥ अथ ते स्वजनाः प्रोचुः पाप प्राणिवधेऽत्र यत् । तद्विभज्य ग्रहीष्यामो हिरण्यमिव गोत्रिण ॥ ३३ ॥ त्वमेक महिष हन्या हनिष्यामोऽपरान् वयम् । अत्यल्पमेव ते पाप भविष्यति ततो ननु ॥ ३४ ॥ आदाय सुलसः पित्र्य कुठार पाणिना ततः । तेनाजघ्ने निजा जङ्घां मूर्छितो निपपात च ॥ ३५ ॥ लब्धसञ्ज्ञस्ततोऽवादीत् साक्रन्दः करुणस्वरम् । हा कुठार

१ चक्रीवत्–रासभ , क्रमेलकश्च–उष्ट्र तयो शब्दान्

प्रहारेण कठोरेणास्मि पीडितः ॥ ३६ ॥ गृह्णीत बन्धवो यूयं विभज्य मम वेदनाम्। स्यामल्पवेदनो येन पीडितं पात पात माम् ॥ ३७ ॥ सुलसं खिन्नमनसस्ते च प्रतिबभाषिरे। पीडा कस्यापि केनापि ग्रहीतुं शक्यते किमु ॥ ३८ ॥ सुलसो व्याजहारेदं यद् व्यथामियतीमपि। न मे ग्रहीतुमीशिध्वे तत्कथं नरकव्यथाम् ॥ ३९ ॥ कृत्वा पापं कुटुम्बार्थे घोरां नरकवेदनाम्। एकोऽमुत्र सहिष्येऽहं स्थास्यन्त्यत्रैव बान्धवाः ॥ ४० ॥ हिंसां तन्न करिष्यामि पैत्रिकीमपि सर्वथा। पिता भवति यद्यन्धः किमन्धः स्यात्सुतोऽपि हि ॥४१॥ एवं व्याहरमाणस्य सुलसस्यातिपीडया। प्रतिजागरणायागादभयः श्रेणिकात्मजः ॥ ४२ ॥ परिरभ्य बभाषे तमभयः साधु साधु भोः। सर्वं ते श्रुतमस्माभिः प्रमोदाद्वयमागताः ॥ ४३ ॥ पापात्पैत्र्यादपक्रामन् कर्दमादिव दूरतः। त्वमेकः श्लाघ्यसे हन्त पक्षपातो गुणेषु नः ॥ ४४ ॥ सुलसं पेशलैरेवमालापैर्धर्मवत्सलः। अनुमोद्य निजं धाम स जगाम नृपात्मजः ॥ ४५ ॥ स्नाननाद्दत्य सुलसो गृहीतद्वादशव्रतः। दौर्गत्यभीतोऽस्थाज्जैनधर्मे रोर इवेश्वरे ॥ ४६ ॥

कालसौकरिकसूनुरिवैवं, यस्त्यजेत् कुलभवामपि हिंसाम्। स्वर्गसम्पददवीयसि तस्य, श्रेयसामविषयो न हि किञ्चित् ॥ १४७ ॥ ३० ॥

अथ हिंसां कुर्वन्नपि दमादिभिः पुण्यमर्जयत्येव पापं च विशोधयेदित्याह—

**दमो देवगुरूपास्तिर्दानमध्ययनं तपः। सर्वमप्येतदफलं हिंसां चेन्न परित्यजेत् ॥ ३१ ॥**

दम इन्द्रियजयः, देवगुरूपास्तिर्देवसेवा गुरुसेवा च, दानं पात्रेषु द्रव्यविश्राणनं, अध्ययनं धर्मशास्त्रादेः

पठन, तप' कृच्छ्रचान्द्रायणादि, एतद्मादि सर्वमपि न तु किञ्चिदेव, अफल पुण्यार्जनपापक्षयादिफलरहित चेद्यदि हिंसां शान्तिकहेतु कुलक्रमायातां वा न परित्यजेन्न परिहरेत् ॥ एव तावन्मासलुब्धानां शान्तिकार्थिनां कुलाचारमनुपालयतां च या हिंसा सा प्रतिषिद्धा ॥ ३१ ॥

इदानीं शास्त्रीयां हिंसां प्रतिषेधन् शास्त्रत्वेन वाऽऽक्षिपति—

विश्वस्तो मुग्धधीर्लोक. पात्यते नरकावनौ । अहो नृशंसैर्लोभान्धैर्हिंसाशास्त्रोपदेशकैः ॥३२॥

हिंसाशास्त्र वक्ष्यमाण तस्योपदेशका हिंसाशास्त्रोपदेशका मन्वादयस्तैः किंविशिष्टैर्नृशंसैर्निर्दयैः । दयावान् हि कथ हिंसाशास्त्रमुपदिशेत् । नृशंसत्वे हेतुमाह । लोभान्धै मांसलोभान्धैः स्वाभाविकनिर्मलविवेकिससर्गचक्षुरहितै । यदाह—

एक हि चक्षुरमलं सहजो विवेक–स्तद्वद्भिरेव सह सवसतिर्द्वितीयम् ।
एतद्द्वय भुवि न यस्य स तत्त्वतोऽन्ध–स्तस्यापमार्गचलने खलु कोऽपराध ? ॥ १ ॥

अहो इति निर्वेदे, यतो विश्वस्तो विश्रब्ध , विश्रब्धत्वे हेतुर्मुग्धधी• । चतुरबुद्धिर्हि कृत्याकृत्य विवेचयन् न प्रतारकवचस्सु विश्वसिति । लोकः प्राकृतो जन पात्यते क्षेप्यते नरकावनौ नरकपृथ्व्याम् ॥ ३२ ॥

हिंसाशास्त्रमेव यदाहुरित्यनेन प्रस्तुत्य निर्दिशति—

यज्ञार्थं पशव· सृष्टाः स्वयमेव स्वयंभुवा । यज्ञोऽस्य भूत्यै सर्वस्य तस्माद्यज्ञे वधोऽवध. ॥३३॥

यज्ञार्थं यज्ञनिमित्तं स्वयंभुवा प्रजापतिना पशवः सृष्टा उत्पादिताः स्वयमेवेत्यर्थवादः। अस्य जगतो विश्वस्य यज्ञो ज्योतिष्टोमादिः भूत्यै भूतिर्विभवः, तस्मात्तत्र यो वधः स न वधो विज्ञेयः हिंसाजन्यस्य पापस्यानुत्पत्तेः। एवमुच्यते। कथं पुनर्यज्ञे हिंसादोषो नास्ति? उच्यते—हिंसा हिंस्यमानस्य महानपकारः प्राणवियोगेन पुत्रदारधनादिवियोगेन वा सर्वानर्थोत्पत्तेर्दुष्कृतस्य वा नरकादिफलविपाकस्य प्रत्यासत्तेः। यज्ञे तु हतानामुपकारो नापकारः नरकादिफलानुत्पत्तेः ॥ ३३ ॥ एतदेवाह—

**औषध्यः पशवो वृक्षास्तिर्यञ्चः पक्षिणस्तथा। यज्ञार्थं निधनं प्राप्ताः प्राप्नुवन्त्यु(च्छ्रि)तिं पुनः॥३४॥**

औषध्यो दर्भादयः पशवश्छागादयः वृक्षा यूपादयः तिर्यञ्चो गवाश्वादयः पक्षिणः कपिञ्जलादयः यज्ञार्थं यज्ञनिमित्तं निधनं विनाशं प्राप्ताः। यद्यपि केषाञ्चित्तत्र निधनं नास्ति तथापि या च यावती च पीडा विद्यत इति सा निधनशब्देन लक्ष्यते। प्राप्नुवन्ति यान्ति उच्छ्रितिमुत्कर्षं देवगन्धर्वयोनित्वमुत्तरकुर्वादिषु दीर्घायुष्कादि च ॥ ३४ ॥

यावत्यः काश्चिच्छास्त्रे चोदिता हिंसास्ताः संक्षिप्य दर्शयति—

**मधुपर्के च यज्ञे च पितृदैवतकर्मणि। अत्रैव पशवो हिंस्या नान्यत्रेत्यब्रवीन्मनुः॥ ३५ ॥**

मधुपर्कः क्रियाविशेषः तत्र गोवधो विहितः, यज्ञो ज्योतिष्टोमादिः तत्र पशुवधो विहितः, पितरो दैवतानि यत्र कर्मण्यष्टकादौ तच्च श्राद्धं पितॄणां दैवतानां च कर्म महायज्ञादि ॥ ३५ ॥

एष्वर्थेषु पशून् हिंसन् वेदतत्त्वार्थविद्द्विजः। आत्मानं च पशूंश्चैव गमयत्युत्तमां गतिम् ॥ ३६ ॥

एतानर्थान् साधयितु पशून् हिंसन् द्विज आत्मान पशूंश्चोत्तमां गतिं स्वर्गापवर्गलक्षणां गमयति प्रापयति वेदतत्त्वार्थविदिति विदुषोऽधिकारित्वमाह ॥ ३६ ॥

हिंसाशास्त्रमनूद्य पुनस्तदुपदेशकानाक्षिपति—

ये चक्रुः क्रूरकर्माणः शास्त्र हिंसोपदेशकम्। क्व ते यास्यन्ति नरके नास्तिकेभ्योऽपि नास्तिका.३७

ये मन्वादय क्रूर निर्घृण कर्म येषां ते क्रूरकर्माण शास्त्र स्मृत्यादि हिंसाया उपदेशक चक्रु ते हिंसाशास्त्रकर्त्तार क्व नरके यास्यन्तीति विस्मय । ते चास्तिकाभासा अपि नास्तिकेभ्योऽपि नास्तिका परमनास्तिका इत्यर्थ ॥ ३७ ॥

उक्त चेत्यनेन सवादश्लोकमुपदर्शयति—

वर वराकश्चार्वाको योऽसौ प्रकटनास्तिक । वेदोक्तितापसच्छद्मच्छन्नं रक्षो न जैमिनिः ॥३८॥

वरमिति मनागिष्टो जैमिन्यपेक्षया चार्वाको लौकायतिक वराक इति दम्भरहितत्वादनुकम्प्यः । तदेवाह—योऽसौ प्रकटनास्तिक । जैमिनिस्तु न वर कुत वेदोक्तितापसच्छद्म तापसवेषस्तेन छन्न रक्षो राक्षसः, अय हि वेदोक्तिं मुखे कृत्वा सकलप्राणिवञ्चनात् मायावी राक्षस इव । यच्चोक्तं यज्ञार्थं पशव स्रष्टा इति तद्वाङ्मात्र निजनिजकर्मनिर्माणमाहात्म्येन नानायोनिषु जन्तव समुत्पद्यन्त इति व्यलीक कस्यचित् सृष्टिवाद, यज्ञोऽस्य भूत्यै सर्वस्येति त्वर्थवाद पक्षपातमात्र, वधोऽवध इति तूपहासपात्र वच, यज्ञार्थं विनिहतानां चौषध्यादीनां पुनरुच्छ्र-

:श्रद्धानभाषितं अकृतसुकृतानां यज्ञवधमात्रेणोच्छ्रितगतिप्राप्त्ययोगात् । अपि च यज्ञहननमात्रेण यदि उच्छ्रितगतिप्राप्तिस्तर्हि मातापित्रादीनामपि यज्ञे वधः किं न क्रियते । यदाहुः—

नाहं स्वर्गफलोपभोगतृषितो नाभ्यर्थितस्त्वं मया, सन्तुष्टस्तृणभक्षणेन सततं साधो न युक्तं तव ।
स्वर्गे यान्ति यदि त्वया विनिहता यज्ञे ध्रुवं प्राणिनो, यज्ञं किं न करोषि मातृपितृभिः पुत्रैस्तथा बान्धवैः ॥ १ ॥

मधुपर्कादिषु च हिंसा श्रेयसे नान्यत्रेति स्वच्छन्दभाषितं, को हि विशेषो हिंसाया येनैका श्रेयस्करी नान्येति । पुण्यात्मानस्तु सर्वाऽपि हिंसा न कर्त्तव्येत्याहुः । यथा—

सव्वे जीवा वि इच्छंति जीविउं न मरज्जिउं । तम्हा पाणिवहं घोरं निग्गंथा वज्जयंति णम् ॥ १ ॥

यत्तूक्तं " आत्मानं च पशूंश्चैव गमयत्युत्तमां गतिमिति " तदतिमहासाहसिकादन्यः को वक्तुमर्हति ? । अपि नाम पशोरहिंस्रस्याकामनिर्जरयोत्तमगतिलाभः संभवेत्, द्विजस्य तु निशातकृपाणिकाप्रहारपूर्वं सौनिकस्येव निर्दयस्य हिंसतः कथमुत्तमगतिसंभावनाऽपि स्यात् ? ॥ ३८ ॥

एतदेव विशेषाभिधानपूर्वकमुपसंहरन्नाह—

**देवोपहारव्याजेन यज्ञव्याजेन येऽथवा । घ्नन्ति जन्तून् गतघृणा घोरां ते यान्ति दुर्गतिम् ॥३९॥**

देवा भैरवचण्डिकादयस्तेभ्यः उपहारो बलिः स एव व्याजं छद्म तेन महानवमीमाघाष्टमीचैत्राष्टमीनमसितका-

(१) सर्वे जीवा अपि इच्छन्ति जीवितुं न मर्तुम् । तस्मात् प्राणिवधं घोरं निर्ग्रन्था वर्जयन्ति ॥ १ ॥

दिषु देवपूजाच्छद्मना ये जन्तुघातं कुर्वन्ति ये च यज्ञव्याजेन गतघृणा निर्दयास्ते घोरां रौद्रां दुर्गतिं नरकादिलक्षणां यान्ति, अत्र देवोपहारव्याजेनेति विशेषाभिधानं यज्ञव्याजेनेत्युपसंहारः, अपि च निराबाधे धर्मसाधने स्वाधीने साबाधपराधीनधर्मसाधनपरिग्रहो न श्रेयान् । यदाहुः—अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेदिति ॥ ३९ ॥

एतदेवाह—

शमशीलदयामूलं हित्वा धर्मं जगद्धितम् । अहो हिंसाऽपि धर्माय जगदे मन्दबुद्धिभिः ॥४०॥

शमः कषायेन्द्रियजयः, शीलं सुस्वभावता, दया भूतानुकम्पा, एतानि मूलं कारणं यस्य स तथा धर्मोऽभ्युदयनिःश्रेयसकारणं तं । किं विशिष्टं ? जगद्धितं, हित्वा उपेक्ष्य शमशीलादीनि धर्मसाधनान्युपेक्ष्येत्यर्थः, अहो इति विस्मये हिंसाऽपि धर्मसाधनबहिर्भूता धर्मसाधनत्वेन मन्दबुद्धिभिरुक्ता सर्वजनप्रसिद्धानि शमशीलादीनि धर्मसाधनान्युपेक्ष्य अधर्मसाधनमपि हिंसां धर्मसाधनत्वेन प्रतिपादयतां परेषां व्यक्तैव मन्दबुद्धिता ॥ ४० ॥

एवं तावल्लोभमूला शान्त्यर्था कुलक्रमायाता यज्ञनिमित्ता देवोपहारहेतुका च हिंसा प्रतिषिद्धा । पितृनिमित्ता अवशिष्यते तां प्रतिनिषेधितुं परशास्त्रीयां षट्श्लोकीमनुवदति—

हविर्यच्चिररात्राय यच्चानन्त्याय कल्पते । पितृभ्यो विधिवद्दत्तं तत्प्रवक्ष्याम्यशेषतः ॥ ४१ ॥

चिररात्रशब्दो दीर्घकालवचनः, यच्चानन्त्याय केनचिद्धविषा दीर्घकालतृप्तिर्जायते केनचिदनन्तैव तदुभयं प्रवक्ष्यामि ॥ ४१ ॥

तिलैर्व्रीहियवैर्माषैरद्भिर्मूलफलेन वा । दत्तेन मासं प्रीयन्ते विधिवत्पितरो नृणाम् ॥ ४२ ॥

तिलादिग्रहणं नेतरपरिसंख्यानार्थमपि तूपात्तानां फलविशेषप्रदर्शनार्थम् । एतैर्विधिवद्दत्तैः पितरो मासं प्रीयन्ते ॥ ४२ ॥

द्वौ मासौ मत्स्यमांसेन त्रीन् मासान् हारिणेन तु । औरभ्रेणाथ चतुरः शाकुनेनेह पञ्च तु ॥४३॥

मत्स्याः पाठीनकाद्याः, हरिणा मृगाः, औरभ्रा मेषाः, शकुनय आरण्यकुक्कटाद्याः ॥ ४३ ॥

षण्मासांश्छागमांसेन पार्षतेनेह सप्त वै । अष्टावेणस्य मांसेन रौरवेण नवैव तु ॥ ४४ ॥

छागश्छगलः, पृषतैणरुरवो मृगजातिविशेषवचनाः ॥ ४४ ॥

दशमासांस्तु तृप्यन्ति वराहमहिषामिषैः । शशकूर्मयोर्मांसेन मासानेकादशैव तु ॥ ४५ ॥

वराह आरण्यशूकरः ॥ ४५ ॥

संवत्सरं तु गव्येन पयसा पायसेन तु । वार्ध्रीणसस्य मांसेन तृप्तिर्द्वादशवार्षिकी ॥ ४६ ॥

श्रुतानुमितयोः श्रुतसंबन्धस्य बलीयस्त्वाद्गव्येन पयसा पायसेन च संबन्धो न मांसेन प्राकरणिकेन, अन्ये तु व्याख्यानयन्ति मांसेन गव्येन पयसा पायसेन वा । पयसो विकारः पायसं दध्यादि । पयःसंस्कृते त्वोदने प्रसिद्धिः । वार्ध्रीणसो जरच्छागः यस्य पिबतो जलं त्रीणि स्पृशन्ति जिह्वा कर्णौ च यदाह—

त्रिपिबं त्विन्द्रियक्षीणं श्वेतं वृद्धमजापतिम् । वार्ध्रीणसं तु तं प्राहुर्याज्ञिकाः पितृकर्मसु ॥ १ ॥ ४६ ॥

पितृनिमित्तहिंसोपदेशकं शास्त्रमनूद्य तदुपदिष्टां हिंसां दूषयति—

**इति स्मृत्यनुसारेण पितॄणां तर्पणाय या। मूढैर्विधीयते हिंसा साऽपि दुर्गतिहेतवे ॥ ४७ ॥**

इति पूर्वोक्ता या स्मृतिर्धर्मसंहिता तस्या अनुसारेणालम्बनेन पितरः पितुर्वंश्या । यच्छ्रुतिः— " पित्रे पितामहाय प्रपितामहाय पिण्डं निर्वपेदिति " । तेषां तर्पणाय तृप्तये मूढैरविचारकैर्या हिंसा विधीयते सापि न केवलं मांसलोभादिनिमित्ता दुर्गतिहेतवे नरकाय । न हि स्वल्पाऽपि काचिद्धिंसा न नरकादिनिबन्धनं । यत्तु पितृतृप्तिप्रपञ्चवर्णनं तन्मुग्धबुद्धिप्रतारणमात्रं, न हि तिलव्रीह्यादिभिर्मत्स्यमांसादिभिर्वा परासूनां पितॄणां तृप्तिरुत्पद्यते । यदाह—

मृतानामपि जन्तूनां यदि तृप्तिर्भवेदिह । निर्वाणस्य प्रदीपस्य स्नेहः संवर्द्धयेच्छिखाम् ॥ १ ॥ इति

न केवलं हिंसा दुर्गतिहेतुरेव किं तु हिंस्यमानैर्जन्तुभिर्विरोधनिबन्धनत्वेन स्वस्यापि इहामुत्र च हिंसाहेतुतया भयहेतुः ॥ ४७ ॥ अहिंस्रस्य तु सर्वजीवाभयदानशौण्डस्य न कुतोऽपि भयमस्तीत्याह—

**यो भूतेष्वभयं दद्याद्भूतेभ्यस्तस्य नो भयम् । यादृग्वितीर्यते दानं तादृगासाद्यते फलम् ४८**

स्पष्टम् ॥ ४८ ॥

एवं तावद्धिंसापराणां मनुष्याणां नरकादि हिंसाफलमभिहितं । सुराणामपि हिंसकानां जुगुप्सनीयचरितानां मूढजनप्रसिद्धं पूज्यत्वं परिदेवयते[1]—

---

१ शोचति

कोदण्डदण्डचक्रासिशूलशक्तिधराः सुराः। हिंसका अपि हा कष्टं पूज्यन्ते देवताधिया ॥ ४९ ॥

हा कष्टमित्यतिशयनिर्वेदे हिंसका अपि रुद्रप्रभृतयः सुराः प्राकृतैर्जनैः पूज्यन्ते विविधपुष्पोपहारादिभिरर्च्यन्ते । ते च यथाकथञ्चिदभ्यर्च्यतां नाम केवलं देवताबुद्धिस्तत्र विरुद्धा इत्याह–देवताधिया । हिंसकत्वे विशेषणद्वारेण हेतुमाह–कोदण्डदण्डचक्रासिशूलशक्तिधरा इति कोदण्डादिधरत्वाद्धिंसकाः, हिंसकत्वमन्तरेण कोदण्डादीनां धारयितुमयुक्तत्वात् । कोदण्डधरः शङ्करः, दण्डधरो यमः, चक्रासिधरो विष्णुः, शूलधरौ शिवौ, शक्तिधरः कुमारः, उपलक्षणमन्येषां शस्त्राणां शस्त्रधराणां च ॥ ४९ ॥

एवं प्रपञ्चतो हिंसां प्रतिषिध्य तद्विपक्षभूतमहिंसाव्रतं श्लोकद्वयेन स्तौति—

मातेव सर्वभूतानामहिंसा हितकारिणी । अहिंसैव हि संसारमरावमृतसारणिः ॥ ५० ॥
अहिंसा दुःखदावाग्निप्रावृषेण्यघनावली। भवभ्रमिरुगार्त्तानामहिंसा परमौषधी ॥ ५१ ॥

स्पष्टम् ॥ ५० ॥ ५१ ॥ अहिंसाव्रतस्य फलमाह—

दीर्घमायुः परं रूपमारोग्यं श्लाघनीयता। अहिंसायाः फलं सर्वं किमन्यत्कामदैव सा ॥ ५२ ॥

अहिंसापरो हि परेषामायुर्वर्द्धयन्ननुरूपमेव जन्मान्तरे दीर्घायुष्टं लभते । तथैव पररूपमविनाशयन् प्रकृष्टं रूपमाप्नोति । तथैव चास्वास्थ्यहेतुं हिंसां परिहरन् परमस्वास्थ्यरूपमारोग्यं लभते सर्वभूताभयप्रदश्च तेभ्य आत्मनः श्लाघनीयतामश्नुते । एतत्सर्वमहिंसायाः फलं, कियद्वा शृङ्गग्राहिकया वक्तुं शक्यते इत्याह–किमन्यत्कामदैव सा

यद्यत्कामयते तस्मै ददाति उपलक्षणमेतदकामितस्यापि स्वर्गापवर्गादे फलस्य दानात् ।

अत्रान्तरे श्लोकः—

हेमाद्रिः पर्वतानां हरिरमृतभुजां चक्रवर्त्ती नराणां, शीतांशुर्ज्योतिषां स्वस्तरुरवनिरुहां चण्डरोचिर्ग्रहाणाम् ।
सिन्धुस्तोयाशयानां जिनपतिरसुरामर्त्यमर्त्याधिपानां, यद्वत्तद्वद्व्रतानामधिपतिपदवीं यात्यहिंसा किमन्यत् ॥१॥५२॥

उक्तमहिंसाव्रतम्, अथ सत्यव्रतस्यावसरस्तच्च नालीकविरतिव्रतमन्तरेणोपपद्यते, न च तत्फलमनुपदर्श्यालीकाद्विरतिं कारयितुं शक्यः पर इत्यलीकफलमुपदर्श्य तद्विरतिमुपदर्शयति—

**मन्मनत्वं काहलत्वं मूकत्वं मुखरोगिताम् । वीक्ष्यासत्यफलं कन्यालीकाद्यसत्यमुत्सृजेत् ॥५३॥**

मनं एव मन्त्र यत्र तन्मन्मनं परस्याप्रतिपादकं वचनं तद्योगात्पुरुषोऽपि मन्मनस्तस्य भावो मन्मनत्वं १ । काहलमव्यक्तवर्णं वचनं तद्योगात्पुरुषोऽपि काहलस्तस्य भावः काहलत्वं २ । मूकोऽवाक् तस्य भावो मूकत्वं ३ । मुखस्य रोगा उपजिह्वादयस्तेऽस्य सन्ति मुखरोगी तस्य भावो मुखरोगिता ४ । एतत्सर्वमसत्यफलं वीक्ष्य शास्त्रबलेनोपलभ्यासत्यं स्थूलासत्यमुत्सृजेच्छ्रावकः । यदाह—

मूका जडाश्च विकला वाग्हीना वाग्जुगुप्सिताः । पूतिगन्धमुखाश्चैव जायन्तेऽनृतभाषिणः ॥ १ ॥ ५३ ॥

असत्यं च कन्यालीकादि वक्ष्यमाणम् । तदेवाह—

**कन्यागोभूम्यलीकानि न्यासापहरणं तथा । कूटसाक्ष्यं च पञ्चेति स्थूलासत्यान्यकीर्त्तयन् ॥५४॥**

कन्यालीकं १ गवालीकं २ भूम्यलीकं ३ न्यासापहरणं ४ कूटसाक्ष्यं च ५ एतानि पञ्च स्थूलासत्यान्यकीर्त्तयन् जिनाः। तत्र कन्याविषयमलीकं कन्यालीकं भिन्नकन्यामभिन्नां विपर्ययं वा वदतो भवति, इदं च सर्वस्य कुमारादिद्विपदविषयस्यालीकस्योपलक्षणं १। गवालीकमल्पक्षीरां बहुक्षीरां विपर्ययं वा वदतः, इदमपि सर्वचतुष्पदविषयस्यालीकस्योपलक्षणं २। भूम्यलीकं परसत्कामप्यात्मादिसत्कां विपर्ययं वा वदतः, इदं च शेषपादपाद्यपद्रव्यविषयालीकस्योपलक्षणं ३। अथ द्विपदचतुष्पदापदग्रहणमेव कस्मान्न कृतम्? उच्यते—कन्याद्यलीकानां लोके अतिगर्हितत्वेन रूढत्वादिति। न्यस्यते रक्षणायान्यस्मै समर्प्यत इति न्यासः सुवर्णादिः तस्यापहरणमपलापस्तद्वचनं स्थूलमृषावादः, इदं चानेनैव विशेषेण पूर्वालीकेभ्यो भेदेनोपात्तं, कूटसाक्ष्यं प्रमाणीकृतस्य लञ्चामत्सरादिना कूटं वदतः, यथाहमत्र साक्षी, अस्य च परकीयपापसमर्थकत्वलक्षणाविशेषमाश्रित्य पूर्वेभ्यो भेदेनोपन्यासः, एतानि क्लिष्टाशयसमुत्थत्वात् स्थूलासत्यानि ॥ ५४ ॥

एतेषां स्थूलालीकत्वे विशेषणद्वारेण हेतुमुपन्यस्य प्रतिषेधमाह—

**सर्वलोकविरुद्धं यद्यद्विश्वसितघातकम्। यद्विपक्षश्च पुण्यस्य न वदेत्तदसूनृतम् ॥ ५५ ॥**

सर्वलोके विरुद्धत्वात् कन्यागोभूम्यलीकानि न वदेत्। विश्वसितघातकत्वान्न्यासापलापं न वदेत्। पुण्यस्य धर्मस्य विपक्षरूपोऽधर्मस्तं हि वदन् प्रमाणीकृतो विवादिभिरभ्यर्थ्यते धर्मं ब्रूयान्नाधर्ममिति। इति धर्मविपक्षत्वात्कूटसाक्ष्यं न वदेत् ॥ ५५ ॥

असत्यस्य फलविशेषमुपदर्शयंस्तत्परिहारमुपदिशति—

असत्यतो लघीयस्त्वमसत्याद्वचनीयता । अधोगतिरसत्याच्च तदसत्यं परित्यजेत् ॥ ५६ ॥

लघीयस्त्व वचनीयता चासत्यस्यैहिक फल, अधोगतिरामुष्मिकम् ॥ ५६ ॥

अथ भवतु क्लिष्टाशयपूर्वस्यासत्यस्य निषेधः, प्रामादिकस्य तु का वार्त्तेत्याह—

असत्यवचन प्राज्ञः प्रमादेनापि नो वदेत् । श्रेयांसि येन भज्यन्ते वात्ययेव महाद्रुमा ॥५७॥

आस्तां क्लिष्टाशयपूर्वकमसत्यवचन, प्रामादिकमप्यज्ञानसशयादिजनितवचन न वदेत् येन प्रामादिकेनासत्यवचनेन श्रेयासि भङ्गमुपयान्ति वात्ययेव महाद्रुमा इति दृष्टान्तः । यदाहुर्महर्षयः—

अइअम्मि य कालम्मि* पच्चुप्पन्नमणागए । जमट्ठ तु न जाणेज्जा एवमेअ ति णो वए ॥ १ ॥

अइअम्मि य कालम्मि* पच्चुप्पण्णमणागए । जत्थ सका भवे त तु, एवमेअ ति णो वए ॥ २ ॥

अइअम्मि य कालम्मि* पच्चुप्पन्नमणागए । निस्सकिअ भवे ज तु, एवमेअ तु निद्दिसे ॥ ३ ॥

एतच्चासत्य चतुर्द्धा—भूतनिह्नवो, अभूतोद्भावन, अर्थान्तर, गर्हा च । भूतनिह्नवो यथा—नास्त्यात्मा, नास्ति पुण्य, नास्ति पाप चेत्यादि । अभूतोद्भावन यथा—सर्वगत आत्मा श्यामाकतन्दुलमात्रो वा । अर्थान्तर यथा—गाम-

---

(१) अतीते च काले प्रत्युत्पन्नमनागते । यमर्थं तु न जानीयात् एवमेतत् इति नो वदेत् ॥ १ ॥ * अइम्मि ।

(२) अतीते च काले प्रत्युत्पन्नमनागते । यत्र शङ्का भवेत्तत्तु एवमेतत् इति नो वदेत् ॥ २ ॥

(३) अतीते च काले प्रत्युत्पन्नमनागते । नि शङ्कित भवेत्तत्तु एवमेतत् तु निर्दिशेत् ॥ ३ ॥ * अइम्मि ।

श्वमभिदधतः । गर्हा तु त्रिधा, एका सावद्यव्यापारप्रवर्त्तनी, यथा क्षेत्रं कृषत्यादि । द्वितीया अप्रिया, काणं काणमिति वदतः । तृतीया आक्रोशरूपा, यथा अरे बान्धकिनेय इत्यादि ॥ ५७ ॥

अतिपरिहरणीयत्वमसत्यवचनस्य दर्शयन् पुनरप्यैहिकान् दोषानाह—

**असत्यवचनाद्वैरविषादाप्रत्ययादयः । प्रादुःषन्ति न के दोषाः कुपथ्याद्व्याधयो यथा ॥ ५८ ॥**

वैरं विरोधः, विषादः पश्चात्तापः, अप्रत्ययोऽविश्वासः । आदिग्रहणाद्राजावमानादयो गृह्यन्ते ॥ ५८ ॥

आमुष्मिकं मृषावादस्य फलमाह—

**निगोदेष्वथ तिर्यक्षु तथा नरकवासिषु । उत्पद्यन्ते मृषावादप्रसादेन शरीरिणः ॥ ५९ ॥**

निगोदा अनन्तकायिका जीवास्तेषु, तिर्यक्षु गोबलीवर्दन्यायेन शेषतिर्यग्योनिषु, नरकवासिषु नैरयिकेषु ॥५९॥

इदानीं मृषावादपरिहारे अन्वयव्यतिरेकाभ्यां कालिकाचार्यवसुराजौ दृष्टान्तावाह—

**ब्रूयाद्भियोपरोधाद्वा नासत्यं कालिकार्यवत् । यस्तु ब्रूते स नरकं प्रयाति वसुराजवत् ॥६०॥**

भिया मरणादिभयेन, उपरोधाद्दाक्षिण्यादसत्यं न ब्रूयात् । यस्तु ब्रूते भियोपरोधाद्वा इत्यत्रापि संबन्धनीयं, दृष्टान्तौ संप्रदायगम्यौ । स चायम् ।

---

(१) कुलटापुत्र ।

अस्ति भूरमणीमौलिमणिस्तुरमणी पुरी । यथार्थनामा तत्रासीज्जितशत्रुर्महीपतिः ॥ १ ॥ रुद्रेति नामधेयेन ब्राह्मणी तत्र विश्रुता । दत्त इत्यभिधानेन तस्याः पुत्रो बभूव च ॥ २ ॥ दत्तो नितान्तदुर्दान्तो द्यूतमद्यप्रियः सदा । सेवितु त महीपाल प्रवृत्तो वर्त्तनेच्छया ॥ ३ ॥ राज्ञा प्रधानीचक्रेऽसौ छायावत्पारिपार्श्वकः । आरोहायोपसर्पन्त्या विषवल्लेरपि द्रुमः ॥ ४ ॥ विभेद्य प्रकृतीरेष राजान निरवासयत् । पापात्मानः कपोताश्च स्वाश्रयोच्छेददायिनः ॥ ५ ॥ तस्य राज्ञो दुरात्माऽसौ राज्ये स्वयमुपाविशत् । क्षुद्रः पादान्तदानेऽपि क्रामत्युच्छीर्षकावधि ॥ ६ ॥ पशुर्हिंसोत्कटान् यज्ञानज्ञो धर्मधिया व्यधात् । धूमैर्मलिनयन् विश्व स मूर्तैरिव पातकैः ॥ ७ ॥ विहरन् तत्राजगाम भगवानङ्गवानिव सयमः ॥ ८ ॥ तत्समीपमनापित्सुर्दत्तो कालिकार्याख्यश्चाचार्यस्तस्य मातुलः । तत्राजगाम भगवानङ्गवानिव सयमः ॥ ८ ॥ तत्समीपमनापित्सुर्दत्तो मिथ्यात्वमोहित' । अत्यर्थं प्रार्थितो मात्रा मातुलाभ्यर्णमाययौ ॥ ९ ॥ मत्तोन्मत्तप्रमत्तात्मो दत्तोऽपृच्छत्तमुद्भटम् । आचार्य यदि जानासि यज्ञानां ब्रूहि किं फलम् ॥ १० ॥ उवाच कालिकाचार्यो धर्मं पृच्छसि तच्छृणु । तत्परस्य न कर्त्तव्य यद्यद्धिप्रियमात्मन ॥ ११ ॥ ननु यज्ञफल पृच्छामीति दत्तोदिते पुनः । सूरिरूचे न हिंसादि श्रेयसे किन्तु पाप्मने ॥ १२ ॥ पुनस्तदेव साक्षेप पृष्टो दत्तेन दुर्धिया । ससौष्ठवमुवाचार्यो यज्ञानां नरकः फलम् ॥ १३ ॥ दत्त' क्रुद्धोऽभ्यधादेवमिह क प्रत्ययो वद । आर्योऽप्यूचे श्वकुम्भ्यां त्व पक्ष्यसे सप्तमेऽहनि ॥ १४ ॥ दत्त कोपादुदस्तभ्रूररुणीकृतलोचनः । भूताविष्ट इवोवाच प्रत्ययोऽत्रापि को ननु ॥ १५ ॥ अथोचे कालिकार्योऽपि श्वकुम्भीपचनात्पुरः । तस्मिन्नेवाह्न्यकस्मात्ते मुखे विष्ठा प्रवेक्ष्यति ॥ १६ ॥ रोषाद् दत्तो जगादेद तव मृत्युः कुतः

कदा। न कुतोऽपि स्वकाले द्यां यास्यामीत्यवदन्मुनिः ॥१७॥ अमुं निरुन्द्ध दुर्बुद्धिमिति दत्तेन रोषतः। आदिष्टैः कालिकाचार्यो रुरुधे दण्डपूरुषैः ॥ १८ ॥ अथ दत्तात् समुद्विग्नाः सामन्ताः पापकर्मणः। आह्वन्नाद्यं नृपं तस्मै दत्तमर्पयितुं किल ॥ १९ ॥ दत्तोऽपि शङ्कितस्तस्थौ निलीनो निजवेश्मनि। कण्ठीरवरवत्रस्तो निकुञ्ज इव कुञ्जरः ॥ २० ॥ स विस्मृतदिनो दैवादागते सप्तमे दिने। बहिर्निर्गन्तुमारच्चै राजमार्गानरचयत् ॥२१॥ तत्रैको मालिकः प्रातर्विशन् पुष्पकरण्डवान्। चक्रे वेगातुरो विष्ठां भीतः पुष्पैः प्यधत्त च ॥२२॥ इहाहनि हनिष्यामि पशुवन्मुनिपांसनम्। चिन्तयन्निति दत्तोऽपि निर्ययौ सादिभिर्वृतः ॥२३॥ एकेन वल्गताऽश्वेन विष्ठोत्क्षिप्ता खुरेण सा। दत्तस्य प्राविशच्चास्ये नासत्या यमिनां गिरः ॥२४॥ शिलास्फालितवत्सद्यः श्लथाङ्गो विमनास्ततः। स सामन्ताननापृच्छ्य ववले स्वगृहं प्रति ॥२५॥ नाऽस्मन्मन्त्रोऽमुना ज्ञात इति प्रकृतिपूरुषैः। गृहमप्रविशन्नेव बद्ध्वा दध्रे स गौरिव ॥२६॥ अथ प्रकाशयंस्तेजो निजं राजा चिरन्तनः। प्रादुरासीत्तदानीं स निशात्यय इवार्यमा ॥ २७ ॥ सोऽहिः करण्डनिर्यात इव दूरं ज्वलन् क्रुधा। दत्तं श्वकुम्भ्यां नरककुम्भ्यामिव तदाऽक्षिपत् ॥ २८ ॥ अधस्तात्ताप्यमानायां कुम्भ्यां श्वानोऽन्तरा स्थिताः। दत्तं विदद्रुः परमाधार्मिका इव नारकम् ॥ २९ ॥ निरस्तभूपालभयोपरोधः श्रीकालिकाचार्य इवैवमुच्चैः। सत्यव्रतत्राणकृतप्रतिज्ञो न जातु भाषेत मृषा मनीषी ॥ ३० ॥

॥ इति कालिकाचार्यदत्तकथानकम् ॥

अस्ति चेदिषु विख्याता नाम्ना शुक्तिमती पुरी। शुक्तिमत्याख्यया नद्या नर्मसख्येव शोभिता ॥१॥ पृथ्वीमुकुटकल्पायां तस्यां तेजोभिरद्भुतः। माणिक्यमिव पृथ्वीशोऽभिचन्द्रो नामतोऽभवत् ॥२॥ सूनुः सूनृतवाक्तस्य वसुरि-

त्याभिधानतः । अजायत महाबुद्धिः पाण्डोरिव युधिष्ठिरः ॥३॥ पार्श्वे क्षीरकदम्बस्य गुरो पर्वतकः सुतः। राजपुत्रो वसुश्च्छात्रो नारदश्चायठस्त्रय॰ ॥४॥ सौधोपरि शयानेषु तेषु पाठश्रमान्निशि । चारणश्रमणौ व्योम्नि यान्तावित्यूचतुर्मिथ ॥५॥ एषामेकतमः स्वर्गं गमिष्यत्यपरौ पुन॰। नरक यास्यतस्तच्चाश्रौषीत्क्षीरकदम्बकः ॥६॥ तच्छ्रुत्वा चिन्तयामास खिन्नः क्षीरकदम्बकः। मय्यप्यध्यापके शिष्यौ यास्यतो नरक हहा ॥७॥ एभ्य को यास्यति स्वर्गं नरक कौ च यास्यतः। जिज्ञासुरित्युपाध्यायस्तान्सर्वान् युगपदाह्वत ॥ ८ ॥ यावपूर्णं समर्प्यैषामेकैक पिष्टकुक्कुटम् । स ऊचेऽमी तत्र वध्या यत्र कोऽपि न पश्यति ॥ ९ ॥ वसुपर्वतकौ तत्र गत्वा शून्यप्रदेशयो । आत्मनीनां गतिमिव जघ्नतु पिष्टकुक्कुटौ ॥ १० ॥ महात्मा नारदस्तत्र व्रजित्वा नगराद्बहिः । स्थित्वा च विजने देशे दिशः प्रेक्ष्य व्यतर्कयत् ॥ ११ ॥ गुरुपादैरदस्तावदादिष्ट वत्स यत्त्वया । वध्योऽय कुक्कुटस्तत्र यत्र कोऽपि न पश्यति ॥ १२ ॥ असौ पश्यत्यह पश्याम्यमी पश्यन्ति खेचरा । लोकपालाश्च पश्यन्ति पश्यन्ति ज्ञानिनोऽपि च ॥ १३ ॥ नास्त्येव स्थानमपि तद्यत्र कोऽपि न पश्यति । तात्पर्यं तद्गुरुगिरा न वध्यः खलु कुक्कुट ॥ १४ ॥ गुरुपादा दयावन्तः सदा हिंसाप॰ राङ्मुखाः । अस्मत्प्रज्ञा परिज्ञातुमेतन्नियतमादिशन् ॥ १५ ॥ विमृश्यैवमहत्वैव कुक्कुट स समाययौ । कुक्कुटाहनने हेतु गुरोर्व्यज्ञपयच्च तम् ॥ १६ ॥ स्वर्गं यास्यत्यसौ तावदिति निश्चित्य सस्वजे । गुरुणा नारदः स्नेहात् साधु साध्विति भाषिणा ॥ १७ ॥ वसुपर्वतकौ पश्चादागत्यैव शशसतुः । निहतौ कुक्कुटौ तत्र यत्र कोऽपि न पश्यति ॥ १८ ॥ अपश्यत युवामादावपश्यन् खेचरादयः । कथ हतौ कुक्कुटौ रे पापावित्यशपद्गुरुः ॥ १९ ॥ ततः खेदादुपाध्यायो दध्यौ विध्यातपाठधीः । मुधा मेऽध्यापनक्लेशो वसुपर्वतयोरभूत् ॥ २० ॥ गुरूपदेशो हि यथापात्र

परिणमेदिह । अम्भः स्थानभेदेन मुक्तालवणतां व्रजेत् ॥ २१ ॥ प्रियः पर्वतकः पुत्रः पुत्रादप्यधिको वसुः । नरकं यास्यतस्तस्माद्गृहवासेन किं मम ॥ २२ ॥ निर्वेदादित्युपाध्यायः प्रव्रज्यामग्रहीत्तदा । तत्पदं पर्वतोऽध्यास्त व्याख्याक्षणविचक्षणः ॥ २३ ॥ भूत्वा गुरोः प्रसादेन सर्वशास्त्रविशारदः । नारदः शारदाम्भोदशुद्धधीः स्वां भुवं ययौ ॥ २४ ॥ नृपचन्द्रोऽभिचन्द्रोऽपि जग्राह समये व्रतम् । ततश्चासीद्वसू राजा वासुदेवसमः श्रिया ॥ २५ ॥ सत्यवादीति स प्राप प्रसिद्धिं पृथिवीतले । तां प्रसिद्धिमपि त्रातुं सत्यमेव जगाद सः ॥ २६ ॥ अथैकदा मृगयुणा मृगाय मृगयाजुषा । चिक्षिपे विशिखो विन्ध्यनितम्बे सोऽन्तराऽस्खलत् ॥ २७ ॥ इषुस्खलनहेतुं स ज्ञातुं तत्र ययौ ततः । आकाशस्फटिकशिलामज्ञासीत्पाणिना स्पृशन् ॥२८॥ स दध्याविति मन्येऽस्यां संक्रान्तः परतश्चरन् । भूमिच्छायेव शीतांशौ ददृशे हरिणो मया ॥ २९ ॥ पाणिस्पर्शं विना नेयं सर्वथाऽप्युपलक्ष्यते । अवश्यं तदसौ योग्या वसोर्वसुमतीपतेः ॥ ३० ॥ रहो व्यज्ञपयद्राज्ञे गत्वा तां मृगयुः शिलाम् । हृष्टो राजाऽपि जग्राह ददौ चास्मै महद्धनम् ॥ ३१ ॥ स तया घटयामास च्छन्नं स्वासनवेदिकाम् । तच्छिल्पिनोऽघातयच्च नात्मीयाः कस्यचिन्नृपाः ॥ ३२ ॥ तस्यां सिंहासनं वेदौ चेदीशस्य निवेशितम् । सत्यप्रभावादाकाशस्थितमित्यबुधज्जनः ॥ ३३ ॥ सत्याद्धि तुष्टाः सान्निध्यमस्य कुर्वन्ति देवताः । एवमूर्जस्विनी तस्य प्रसिद्धिर्व्यानशे दिशः ॥ ३४ ॥ तया प्रसिद्ध्या राजानो भीतास्तस्य वशं गताः । सत्या वा यदि वा मिथ्या प्रसिद्धिर्जयिनी नृणाम् ॥ ३५ ॥ आगाच्च नारदोऽन्येद्युस्ततश्चैक्षिष्ट पर्वतम् । व्याख्यानयन्तमृग्वेदं शिष्याणां शेमुषीजुषाम् ॥ ३६ ॥ अजैर्यष्टव्यमित्यस्मिन् मेषैरित्युपदेशकम् । बभाषे नारदो भ्रातर्भ्रान्त्या किमिदमुच्यते ॥ ३७ ॥

त्रिवार्षिकाणि धान्यानि न हि जायन्त इत्यजा । व्याख्याता गुरुणाऽस्माकं व्यस्मार्षीः केन हेतुना ॥ ३८ ॥ ततः पर्वतकोऽवादीदिदं तातेन नोदितम् । उदिताः किं त्वजा मेषास्तथैवोक्ता निघण्टुषु ॥ ३९ ॥ जगाद नारदोऽप्येवं शब्दानामर्थकल्पना । मुख्या गौणी च तत्रेह गौणी गुरुरचीकथत् ॥४०॥ गुरुर्धर्मोपदेष्टैव श्रुतिर्धर्मात्मिकैव च । द्वयमप्यन्यथाकुर्वन्मित्र मा पापमर्जय ॥४१॥ साक्षेपं पर्वतोऽजल्पदजान्मेषान् गुरुर्जगौ । गुरूपदेशशब्दार्थोल्लङ्घनाद्धर्ममर्जसि ॥ ४२ ॥ मिथ्याभिमानवाचो हि न स्युर्दण्डभयान्नृणाम् । स्वपक्षस्थापने तेन जिह्वाच्छेदपणोऽस्तु नः ॥४३॥ प्रमाणमुभयोरत्र सहाध्यायी वसुर्नृपः । नारदः प्रतिपेदे तत्र चोभः सत्यभाषिणाम् ॥४४॥ रहः पर्वतमूचेऽम्बा गृहकर्मरताऽप्यहम् । अजास्त्रिवार्षिकं धान्यमित्यश्रौषं भवत्पितुः ॥ ४५ ॥ जिह्वाच्छेदं पणेऽकार्षीर्यद्दर्पाद्वत्स साम्प्रतम् । अविमृश्य विधातारो भवन्ति विपदां पदम् ॥ ४६ ॥ अवदत्पर्वतोऽप्येवं कृतं तावदिदं मया । यथातथाकृतस्याम्ब करणं न हि विद्यते ॥ ४७॥ साऽथ पर्वतकापायपीडया हृदि शल्यिता । वसुराजमुपेयाय पुत्रार्थे क्रियते न किम् ॥ ४८ ॥ दृष्टः क्षीरकदम्बोऽद्य यदम्ब त्वमसीक्षिता । किं करोमि प्रयच्छामि किं चेत्यभिदधे वसुः ॥ ४९ ॥ साऽवादीद्दीयतां पुत्रभिक्षा मह्य महीपते । धनधान्यैः किमन्यैर्मे विना पुत्रेण पुत्रक ॥ ५० ॥ वसुरूचे मम मातः पाल्यः पूज्यश्च पर्वतः । गुरुवद्गुरुपुत्रेऽपि वर्तितव्यमिति श्रुतिः ॥ ५१ ॥ कस्याद्य पत्रमुत्क्षिप्तं कालेनाकालरोषिणा । को जिघांसुर्भ्रातरं मे ब्रूहि मातः किमातुरा ॥ ५२ ॥ अजव्याख्यानवृत्तान्त

---

१ कोपेषु

स्वपुत्रस्य पर्णं च तम् । त्वं प्रमाणीकृतश्चासीत्याख्यायार्थयते स्म सा ॥ ५३ ॥ कुर्वाणो रक्षणं भ्रातुरजान्मेषानुदीरय । प्राणैरप्युपकुर्वन्ति महान्तः किं पुनर्गिरा ॥ ५४ ॥ अवोचत वसुर्मातर्मिथ्या वच्मि वचः कथम् । प्राणात्ययेऽपि शंसन्ति नासत्यं सत्यभाषिणः ॥ ५५ ॥ अन्यदप्यभिधातव्यं नासत्यं पापभीरुणा । गुरुवागन्यथाकारे कूटसाक्ष्ये च का कथा ॥ ५६ ॥ बहूकुरु गुरोः सुनुं यद्वा सत्यव्रताग्रहम् । तया सरोषमित्युक्तस्तद्वचोऽमंस्त पार्थिवः ॥ ५७ ॥ ततः प्रमुदिता क्षीरकदम्बगृहिणी ययौ । आजग्मतुश्च विद्वांसौ तत्र नारदपर्वतौ ॥५८॥ सभायाममिलन् सभ्या माध्यस्थ्यगुणशालिनः । वादिनोः सदसद्वादक्षीरनीरसितच्छदाः ॥ ५९ ॥ आकाशस्फटिकशिलावेदिसिंहासनं वसुः । सभापतिरलश्चक्रे नभस्तलमिवोडुपः ॥ ६० ॥ ततो निजनिजव्याख्यापक्षं नारदपर्वतौ । कथयामासतू राज्ञे सत्यं ब्रूहीति भाषिणौ ॥६१॥ विप्रवृद्धैरथोचे स विवादस्त्वयि तिष्ठते । प्रमाणमनयोः साक्षी त्वं रोदस्योरिवार्यमा ॥६२॥ घटप्रभृतिदिव्यानि वर्तन्ते हन्त सत्यतः । सत्याद्वर्षति पर्जन्यः सत्यात्सिद्ध्यन्ति देवताः ॥ ६३ ॥ त्वयैव सत्ये लोकोऽयं स्थाप्यते पृथिवीपते । त्वामिहार्थे ब्रूमहे किं ब्रूहि सत्यव्रतोचितम् ॥ ६४ ॥ वचोऽश्रुत्वैव तत्सत्यप्रसिद्धिं स्वां निरस्य च । अजान्मेषान् गुरुर्व्याख्यादिति साक्ष्यं वसुर्व्यधात् ॥ ६५ ॥ असत्यवचसा तस्य क्रुद्धास्तत्रैव देवताः । दलयामासुराकाशस्फटिकासनवेदिकाम् ॥ ६६ ॥ वसुर्वसुमतीनाथस्ततो वसुमतीतले । पपात सद्यो नरकपातं प्रस्तावयन्निव ॥६७॥ कूटसाक्ष्यं प्रदातुस्ते श्वपचस्येव को मुखम् । पश्येदिति वसुं निन्दन्नारदः स्वास्पदं ययौ ॥ ६८ ॥ देवताभिरसत्योक्तिकुपिताभिर्निपातितः । जगाम घोरं नरकं नरनाथो वसुस्ततः ॥ ६९ ॥ यो यः स्वनुरुपाविक्षद्राज्ये तस्यापराधिनः । प्रजघ्नुर्देवतास्तं तं यावदष्टौ निपातिताः ॥ ७० ॥

इति वसुनृपतेरसत्यवाचः, फलमाकर्ण्य जिनोक्तिविद्धकर्णः। कथमप्युपरोधतोऽपि जल्पे-दनृतं प्राणितसंशयेऽपि नैव ॥ ७१ ॥ ६० ॥

॥ इति नारदपर्वतकथानकम् ॥

सद्भ्यो हितं सत्यमिति व्युत्पत्त्या अवितथमपि परपीडाकरं वचनमसत्यमेवाहितत्वादिति सत्यमपीदृशं न भाषेतेत्याह—

**न सत्यमपि भाषेत परपीडाकरं वचः। लोकेऽपि श्रूयते यस्मात् कौशिको नरकं गतः ॥६१॥**

सत्यमवितथं लोकरूढया परमार्थतस्तु परपीडाकरत्वादसत्यमेवेत्यर्थः, तन्न भाषेत, तद्भाषणान्नरकगमनश्रुते। अत्रार्थे लौकिकं दृष्टान्तमाह—लोकेऽपि समयान्तरेऽपि श्रूयते निशम्यते परपीडाकरसत्यभाषणेन कौशिको नरकं गत इति। कौशिकस्तु सम्प्रदायगम्यः, स चायम्—

आसीत्सत्यधनः कोऽपि कौशिको नाम तापसः। अपास्य ग्रामसंवासमनुगङ्गमुवास सः ॥ १ ॥ कन्दमूलफलाहारो निर्ममो निष्परिग्रहः। सत्यवादितया प्राप प्रसिद्धिं परमामसौ ॥ २ ॥ मुषित्वा ग्राममन्येद्युर्दस्यवस्तस्य पश्यतः। आश्रमं निकषा जग्मुर्वनं बिलमिवोरगाः ॥ ३ ॥ तेषामनुपदिनस्तु ग्राम्याः पप्रच्छुरेत्य तम्। सत्यवाद्यसि तद्ब्रूहि तस्कराः क्व नु वव्रजुः ॥ ४ ॥ धर्मतत्त्वानभिज्ञोऽथ कथयामास कौशिकः। घने तरुनिकुञ्जेऽस्मिन् दस्यवः प्राविशन्निति ॥ ५ ॥ तस्योपदेशात्सन्नद्धा ग्रामीणाः शस्त्रपाणयः। वनं प्रविश्य निर्जघ्नुर्दस्यून् व्याधा

मृगानिव ॥ ६ ॥ ऋतमप्यनृतं परव्यथा–करणेनेदमुदीरयन् वचः । परिपूर्य निजायुरुल्बणं, नरकं कौशिकतापसो ययौ ॥ ७ ॥ ६१ ॥

अल्पमप्यसत्यवचनं प्रतिषेधितुं महदसत्यं वदतः परिदेवयते—

**अल्पादपि मृषावादाद्रौरवादिषु संभवः। अन्यथा वदतां जैनीं वाचं त्वहह का गतिः॥ ६२ ॥**

अल्पादप्यैहिकार्थविषयत्वेन स्तोकादपि मृषावादादसत्याद्रौरवादिषु रौरवमहारौरवप्रभृतिषु नरकावासेषु संभव उत्पत्तिः, लोकप्रसिद्धत्वाद्रौरवग्रहणम् । अन्यथा सर्वनरकेष्वित्युच्येत । अन्यथा विपरीतार्थतया जैनीं वाचं वदतामतीवासत्यवादिनां कुतीर्थिकानां स्वयूथ्यानां च निह्नवादीनां का गतिर्नरकादप्याधिका तेषां गतिः प्राप्नोतीत्यर्थः । अहहेति खेदे अशक्यप्रतीकाराः परिदेवनीयाः खल्वेत इति । यदाह—

अहह सयलन्नपावाहिं वितहपन्नवणमणुमवि दुरंतं । जं मिरिइभवतदज्जियदुक्कयअवसेसलेसवसा ॥ १ ॥
सुरथुयगुणो वि तित्थंकरो वि तिहुयणअतुल्लमल्लो वि । गोवाइहिं वि बहुसो कअत्थिओ तिजयपहु त्तं सि ॥ २ ॥
थीगोबंभणभूणंतगा वि केवि इह दिढपहाराई । बहुपावा वि पसिद्धा सिद्धा किर तम्मि चेव भवे ॥ ३ ॥ ६२ ॥

---

(१) अहह सकलान्यपापेभ्यो वितथप्रज्ञापनमण्वपि दुरन्तम् । यन्मरीचिभवतदर्जितदुष्कृतावशेषलेशवशात् ॥ १ ॥
(२) सुरस्तुतगुणोऽपि तीर्थकरोऽपि त्रिभुवनातुल्यमल्लोऽपि । गोपादिभिरपि बहुशः कदर्थितः त्रिजगत्प्रभुस्त्वमसि ॥२॥
(३) स्त्रीगोब्राह्मणभ्रुणान्तका अपि केऽपि इह दृढप्रहार्यादयः । बहुपापा अपि प्रसिद्धाः सिद्धाः किल तस्मिन्नेव भवे ॥३॥

असत्यवादिनो निन्दित्वा सत्यवादिनः स्तौति—

ज्ञानचारित्रयोर्मूलं सत्यमेव वदन्ति ये। धात्री पवित्रीक्रियते तेषां चरणरेणुभिः ॥ ६३ ॥

ज्ञानचारित्रयोर्ज्ञानक्रिययोर्मूलं कारणं यत्सत्यं तदेव वदन्ति ये, ज्ञानचारित्रग्रहणं 'णाणकिरियाहिं मोक्खो' इति भगवद्भाष्यकारवचनानुवादार्थं ज्ञानग्रहणेन दर्शनमप्याक्षिप्यते। दर्शनमन्तरेण ज्ञानस्याज्ञानत्वात् मिथ्यादृष्टिर्हि सत्त्वासत्त्वे वैपरीत्येन जानाति, भवहेतुश्च तज्ज्ञानं यदृच्छया चार्थनिरपेक्षमुपलभ्यते, न च ज्ञानफलमस्य। यदाह—

सयसयविसेसणाओ भवहेउ जइच्छओवलम्भाओ। नाणफलाभावाओ मिच्छादिट्ठिस्स अन्नाणं ॥ १ ॥

स्पष्टमन्यत् ॥ ६३ ॥

सत्यवादिनामैहिकमपि प्रभावं दर्शयति—

अलीकं ये न भाषन्ते सत्यव्रतमहाधनाः। नापराद्धुमलं तेभ्यो भूतप्रेतोरगादयः ॥ ६४ ॥

भूता भूतोपलक्षिता व्यन्तराः प्रेताः पितरो ये स्वसम्बन्धिनो मनुष्यान् पीडयन्ति भूतप्रेतग्रहणं भुवनपत्यादीनामुपलक्षणार्थम्। उरगाः सर्पाः आदिग्रहणाद् व्याघ्रादीनां परिग्रहः।

---

(१) "ज्ञानक्रियाभ्यां मोक्षः"

(२) सदसदविशेषणात् भवहेतुर्यदृच्छोपलम्भात्। ज्ञानफलाभावान्मिथ्यादृष्टेरज्ञानम् ॥ १ ॥

अत्रान्तरे श्लोकाः—

अहिंसापयसः पालिभूतान्यन्यव्रतानि यत् । सत्यभङ्गात्पालिभङ्गेऽनर्गलं विस्रवेत तत् ॥ १ ॥ सत्यमेव वदेत्प्राज्ञः सर्वभूतोपकारकम् । यद्वा तिष्ठेत् समालम्ब्य मौनं सर्वार्थसाधकम् ॥ २ ॥ पृष्टेनापि न वक्तव्यं वचो वैरस्य कारणम् । मर्मावित्कर्कशं शङ्कास्पदं हिंस्रमसूयकम् ॥ ३ ॥ धर्मध्वंसे क्रियालोपे स्वसिद्धान्तार्थविप्लवे । अपृष्टेनापि शक्तेन वक्तव्यं तन्निषेधितुम् ॥ ४ ॥ चार्वाकैः कौलिकैर्विप्रैः सौगतैः पाञ्चरात्रिकैः । असत्येनैव विक्रम्य जगदेतद्विडम्बितम् ॥ ५ ॥ अहो पुरजलस्रोतःसोदरं तन्मुखोदरम् । निःसरन्ति यतो वाचः पङ्काकुलजलोपमाः ॥ ६ ॥ दावानलेन ज्वलता परिप्लुष्टोऽपि पादपः । सान्द्रीभवति लोकोऽयं न तु दुर्वचनाग्निना ॥ ७ ॥ चन्दनं चन्द्रिकाचन्द्रमणयो मौक्तिकस्रजः । आह्लादयन्ति न तथा यथा वाक् सूनृता नृणाम् ॥ ८ ॥ शिखी मुण्डी जटी नग्नश्चीवरी यस्तपस्यति । सोऽपि मिथ्या यदि ब्रूते निन्द्यः स्यादन्त्यजादपि ॥ ९ ॥ एकत्रासत्यजं पापं पापं निःशेषमन्यतः । द्वयोस्तुलाविधृतयोराद्यमेवातिरिच्यते ॥ १० ॥ पारदारिकदस्यूनामस्ति काचित्प्रतिक्रिया । असत्यवादिनः पुंसः प्रतीकारो न विद्यते ॥ ११ ॥

कुर्वन्ति देवा अपि पक्षपातं, नरेश्वराः शासनमुद्वहन्ति ॥ शीतीभवन्ति ज्वलनादयो यन्तत् सत्यवाचां फलमामनन्ति ॥ १२ ॥ इति द्वितीयं व्रतम् ॥ ६४ ॥

इदानीं तृतीयमस्तेयव्रतमुच्यते । तत्रापि फलानुपदर्शनेन न स्तेयान्निवर्त्तत इति फलोपदर्शनपूर्वं स्तेयनिवृत्तिमाह—

दौर्भाग्य प्रेष्यतां दास्यमङ्गच्छेद दरिद्रताम्। अदत्तात्तफल ज्ञात्वा स्थूलस्तेय विवर्जयेत् ॥६५॥

दौर्भाग्यमुद्वेजनीयता, प्रेष्यता परकर्मकरत्व, दास्यमङ्कपातादिना परायत्तशरीरता, अङ्गच्छेदः करचरणादिच्छेदः, दरिद्रता निर्धनत्व, एतानीहामुत्र चादत्तादानफलानि शास्त्रतो गुरुमुखाद्वा ज्ञात्वा स्थूल चौरादिव्यपदेशनिबन्धन स्तेय विवर्जयेच्छ्रावकः ॥ ६५ ॥

स्थूलस्तेयपरिहारमेव प्रपञ्चयति—

पतित विस्मृत नष्टं स्थित स्थापितमाहितम्। अदत्त नाददीत स्वं परकीयं क्वचित्सुधीः ॥६६॥

पतित गच्छतो वाहनादेर्भ्रष्ट, विस्मृत क्वापि मुक्तमिति स्वामिना यन्न स्मर्यते, नष्ट क्वापि गतमिति स्वामिना यन्न ज्ञायते, स्थित स्वामिपार्श्वे यदवस्थित, स्थापित न्यासीकृत, आहित निधीकृतं, तदेवविध परकीय स्व धनमदत्त नाददीत क्वचिद्द्रव्यक्षेत्राद्यापद्यपि सुधीः प्राज्ञः ॥ ६६ ॥

इदानीं स्तेयकारिणो निन्दति—

अय लोकः परलोको धर्मो धैर्यं धृतिर्मतिः। मुष्णता परकीयं स्वं मुषित सर्वमप्यदः ॥६७॥

परकीय स्व धन मुष्णता अपहरता सर्वमप्यद एतत् स्व स्वकीय मुषित स्वशब्दस्योभयत्र सबन्धात्। किं तदित्याह, अय लोक' अय प्रत्यक्षेणोपलभ्यमानो लोक इद जन्मेत्यर्थः, परलोको जन्मान्तर, धर्म पुण्य, धैर्यमापत्स्वप्यवैक्लव्य, धृति स्वास्थ्य, मतिः कृत्याकृत्यविवेक ॥ ६७ ॥

अथ हिंसाकारिभ्योऽपि स्तेयकारिणो बहुदोषत्वमाह—

**एकस्यैकं क्षणं दुःखं मार्यमाणस्य जायते । सपुत्रपौत्रस्य पुनर्यावज्जीवं हृते धने ॥ ६८ ॥**

एकस्य न तु बहूनां, एकं क्षणं न तु बहुकालं, दुःखमसातं, मार्यमाणस्य हिंस्यमानस्य। स्तेयकारिणा त्वपहृते धने परस्य सपुत्रपौत्रस्य, न त्वेकस्य, यावज्जीवं न त्वेकं क्षणं, दुःखं जायत इति संबन्धः ॥ ६८ ॥

उक्तमपि स्तेयफलं प्रपञ्चेनाह—

**चौर्यपापद्रुमस्येह वधबन्धादिकं फलम् । जायते परलोके तु फलं नरकवेदना ॥ ६९ ॥**

चौर्यात्पापं तदेव द्रुमस्तस्येह लोके फलं वधबन्धादिकं, परलोके तु फलं नरकभाविनी वेदना ॥ ६९ ॥

अथ कदाचित्प्रमादात् स्तेयकारी नृपतिभिर्न निगृह्येत तथाप्यस्वास्थ्यलक्षणमैहिकं फलमवस्थितमेव इत्याह—

**दिवसे वा रजन्यां वा स्वप्ने वा जागरेऽपि वा। सशल्य इव चौर्येण नैति स्वास्थ्यं नरः क्वचित् ॥७०॥**

स्वप्नः स्वापः, जागरो निद्राया अभावः, चौर्येण हेतुना क्वचिदपि स्थाने ॥ ७० ॥

न केवलं स्तेयकर्तुः स्वास्थ्याभाव एव किन्तु बन्धुभिः परित्यागोऽपीत्याह—

**मित्रपुत्रकलत्राणि भ्रातरः पितरोऽपि हि। संसजन्ति क्षणमपि न म्लेच्छैरिव तस्करैः ॥७१॥**

पिता जनकः, पितृतुल्याः पितरः, पिता च पितरश्च पितरः न संसजन्ति न मिलन्ति पापभयात्। यदाहुः—

ब्रह्महत्या सुरापाणं स्तेयं गुर्वङ्गनागमः । महान्ति पातकान्याहुस्तत्संसर्गं च पञ्चमम् ॥ १ ॥

राजदण्डभयाद्वा । यदाहुः—

चौरश्चौरापको मन्त्री भेदज्ञः काणकक्रयी । स्थानदो भक्तदश्चैव चौरः सप्तविधः स्मृतः ॥ १ ॥

तस्करैरिति तदेव चौर्यं कुर्वन्तीत्येवंशीलास्तस्करास्तै ॥ ७१ ॥

स्तेयप्रवृत्तानां तन्निवृत्तानां च दोषान् गुणांश्च प्रत्येकं दृष्टान्तद्वारेणाह—

संबन्ध्यपि निगृह्येत चौर्यान्मण्डिकवन्नृपैः । चौरोऽपि त्यक्तचौर्य्यः स्यात्स्वर्गभाग्रौहिणेयवत् ७२

दृष्टान्तद्वयमपि सम्प्रदायगम्यं । स चायम्—

अलङ्घ्यमध्यमम्भोधेरिवाम्भो बहुरत्नभूः । अस्तीह पाटलीपुत्र नाम गौडेषु पत्तनम् ॥ १ ॥ कलाकलापनिलयः साहसस्यैकमन्दिरम् । राजपुत्रो मूलदेवस्तत्र मूलं धियामभूत् ॥ २ ॥ स धूर्त्तविद्यैकधवः कृपणानाथबान्धवः । कूटचेष्टामधुरिपू रूपलावण्यमन्मथः ॥ ३ ॥ चौरे चौरः साधौ साधुर्वक्रे वक्र ऋजावृजुः । ग्राम्ये ग्राम्यश्छेके च्छेको विटे विटो भटे भटः ॥ ४ ॥ द्यूतकारे द्यूतकारो वार्त्तिके वार्त्तिकश्च सः । तत्कालं स्फटिकाश्मेव जग्राह पररूपताम् ॥ ५ ॥ चित्रैः कौतूहलैस्तत्र लोकं विस्माययन्नसौ । विद्याधर इव स्वैरं चचार चतुराग्रणीः ॥ ६ ॥ द्यूतैकव्यसनासक्तिदोषात्पित्राऽपमानितः । द्युसत्पुरश्रीजयिन्यामुज्जयिन्यां जगाम सः ॥ ७ ॥ गुलिकायाः प्रयोगेण स भूत्वा कुब्जवामनः । पौरान् विस्माययंस्तत्र कलाभिः ख्यातिमासदत् ॥ ८ ॥ तत्रासीद्रूपलावण्यकलाविज्ञानकौ-

१ धर पति ।

शलैः । दत्तत्रपा रतेर्देवदत्तेति गणिकोत्तमा ॥ ९ ॥ गुणः कलावतां यो यः प्रकृष्टा तत्र तत्र सा । छेकाया रञ्जने तस्याः प्रतिच्छेको न कोऽप्यभूत् ॥ १० ॥ मूलदेवस्ततस्तस्याः क्षोभार्थं तद्गृहान्तिके । प्रभाते गातुमारेभे प्रत्यक्ष इव तुम्बरुः ॥ ११ ॥ आकर्ण्य देवदत्ताऽपि कोऽप्येष मधुरो ध्वनिः । कस्येति विस्मयाद्दास्याऽन्वेषयामास तं बहिः ॥ १२ ॥ शशंसागत्य सा देवि गन्धर्वः कोऽपि गायति । मूर्त्त्यैव वामनः पूर्णैर्गुणैः पुनरवामनः ॥ १३ ॥ देवदत्ता ततः कुब्जां माधवीं नाम चेटिकाम् । प्रजिघाय तमाह्वातुं प्रायो वेश्याः कलाप्रियाः ॥ १४ ॥ सा गत्वा तं जगादेदं महाभाग कलानिधे । देवदत्ता स्वामिनी मे त्वामाह्वयति गौरवात् ॥ १५ ॥ मूलदेवोऽवदद्गच्छ नागमिष्यामि कुब्जिके । कुट्टिनीवश्यवेश्यानां स्ववशो वेश्म को विशेत् ॥ १६ ॥ व्याघुटन्तीं विनोदेच्छुः कलाकौशलयोगतः । स आस्फाल्य ऋजूचक्रे तां कुब्जीमब्जनालवत् ॥ १७ ॥ वपुर्नवमिवासाद्य सानन्दा साऽपि चेटिका । उपेत्य देवदत्तायै तच्चेष्टितमचीकथत् ॥ १८ ॥ देवदत्तवरेणेव देवदत्ताऽपि तेन ताम् । कुब्जामृजूकृतां वीक्ष्य परमं प्राप विस्मयम् ॥ १९ ॥ देवदत्ता ततोऽवादीदीदृशमुपकारिणम् । निजाङ्गुलिमपि च्छित्त्वा तमेकच्छेकमानय ॥ २० ॥ ततो गत्वा समभ्यर्थ्य चाटुभिश्चतुरोचितैः । अचालि वेश्माभिमुखं धूर्त्तराजो भुजिष्यया ॥ २१ ॥ तया निर्दिश्यमानाध्वा प्रविवेश निवेशनम् । ततोऽसौ देवदत्ताया राधाया इव माधवः ॥ २२ ॥ तं वामनमपि प्रेक्ष्य कान्तिलावण्यशालिनम् । सा मन्वाना सुरं छन्नमुपावेशयदासने ॥ २३ ॥ मिथो हृदयसंवादिसंलापसुभगा ततः । तयोः प्रववृते गोष्ठी तुल्यवैदग्ध्यशालिनोः ॥ २४ ॥ अथाऽऽगात्तत्र कोऽप्येको वीणाकारः प्रवीणधीः । वीणामवीवदत्तेन देवदत्ताऽतिकौतुकात् ॥२५॥ वल्लकीं वादयन्तं च व्यक्तग्रामश्रुतिस्वराम् । धूनयन्ती शिरो देवदत्ताऽपि

प्रशशंस तम् ॥ २६ ॥ स्मित्वाऽवदन्मूलदेवोऽप्यहो उज्जयिनीजन । जानात्यत्यन्तनिपुणो गुणागुणविवेचनम् ॥ २७ ॥ साशङ्का साऽप्युवाचैव किमत्र न्यूनमस्त्यहो । छेकश्छेकप्रशंसायामुपहासं हि शङ्कते ॥ २८ ॥ सोऽप्याचचक्षे किं न्यूनमस्ति क्वापि भवादृशाम् । सगर्भा किन्त्वसौ तन्त्री किञ्च वंशोऽपि शल्यवान् ॥ २९ ॥ कथं ज्ञायत इत्युक्तस्तयाऽऽदाय स वल्लकीम् । वंशादश्मानमाकृष्य तन्त्र्या केशमदर्शयत् ॥ ३० ॥ समारचय्य तां वीणां तत स्वयमवादयत् । श्रोतृकर्णेषु पीयूषच्छटामिव परीक्षिपन् ॥ ३१ ॥ देवदत्ताऽनवीभिन सामान्यस्त्वं कलानिधे । नररूपं प्रपेदाना साक्षादसि सरस्वती ॥ ३२ ॥ वीणाकारश्चरणयोः प्रणिपत्ये त्यवोचत । स्वामिन् शिक्षे भवत्पार्श्वे वीणावाद्यं प्रसीद मे ॥ ३३ ॥ मूलदेवो जगादैवं सम्यग् जानामि न ह्यहम् । किन्तु जानामि तान् ये हि सम्यग् जानन्ति वल्लकीम् ॥ ३४ ॥ के नाम ते क्व सन्तीति पृष्टोऽसौ देवदत्तया । अवोचदस्ति पूर्वस्यां पाटलीपुत्रपत्तनम् ॥ ३५ ॥ तस्मिन् विक्रमसेनोऽस्ति कलाचार्यो महागुणः । मूलदेवोऽहं च तस्य सदाप्यासन्नसेवक ॥ ३६ ॥ अत्रान्तरे विश्वभूतिर्नाट्याचार्यः समागत । साक्षाद्भरत इत्यस्मै कथितो देवदत्तया ॥ ३७ ॥ मूलदेवोऽप्येवमूचे सत्यमेवायमीदृश । ग्राहिताभिः कलां युष्मादृशीभिरपि लक्ष्यते ॥ ३८ ॥ विश्वभूतिरुपक्रान्ते विचारे भारते तत । त खर्व इत्यवाज्ञासीद्वाक्यार्थज्ञा हि तादृशा ॥ ३९ ॥ मेने च धूर्तराजेन विद्वन्मान्ययमस्य तत् । ताम्रस्वर्णालङ्करणस्येवान्तर्दर्शयाम्यहम् ॥ ४० ॥ स्वच्छन्दं भरते तस्य गल्भमानस्य धूर्तराट् । पूर्वापरविरोधाख्यं व्याख्याने दोषमग्रहीत् ॥ ४१ ॥ विश्वभूतिस्ततः कोपादसबद्धमभाषत । प्राज्ञै पृष्टा ह्युपाध्यायाश्छादयन्त्यज्ञतां रुषा ॥ ४२ ॥ तमेन नाट्यैर्नाट्याचार्यं नारीषु नान्यत । हसितो मूलदेवेन तूष्णीक

सोऽप्यजायत ॥ ४३ ॥ स्मेराक्षी देवदत्ताऽपि पश्यन्ती वामनं मुदा । उपाध्यायस्य वैलक्ष्यमपनेतुमवोचत ॥४४॥ इदानीमुत्सुका यूयमुपाध्यायाः क्षणान्तरे । परिभाव्याभिधातव्यं प्रश्ने विज्ञानशालिनाम् ॥ ४५ ॥ देवदत्ते वयं यामो नाट्यस्यावसरोऽधुना । सज्जस्व त्वमपीत्युक्त्वा विश्वभूतिस्ततो ययौ ॥ ४६ ॥ देवदत्ताऽप्यथादिक्षदावयोः स्नानहेतवे । अङ्गमर्दो [1]निर्विमर्दं कश्चिदाहूयतामिति ॥ ४७ ॥ अजल्पद्धूर्त्तराजोऽपि व्याहार्षीर्माऽङ्गमर्दकम् । सुभ्रू यद्यनुजानासि तवाभ्यङ्गं करोमि तत् ॥ ४८ ॥ किमेतदपि वेत्सीति तयोक्तः प्रत्युवाच सः । न जानामि स्थितः किन्तु तज्ज्ञानामहमन्तिके ॥ ४९ ॥ आदेशाद्देवदत्तायाः पक्वतैलान्यथाययुः । अभ्यङ्गं कर्तुमारेभे स मायावामनस्ततः ॥ ५० ॥ मृदुमध्यदृढं स्थानौचित्यात् पाणिं प्रसारयन् । अङ्गे तस्या मूलदेवः सुखमद्वैतमादधे ॥ ५१ ॥ सर्वार्थेषु कलादाक्ष्यमीदृग्नान्यस्य कस्यचित् । न सामान्योऽयमित्यंह्र्योः पतित्वा साऽब्रवीदिति ॥ ५२ ॥ गुणैरपि त्वमाख्यातः कोऽप्युत्कृष्टः पुमानिति । मयूरव्यंसकात्मानं किं गोपयसि मायया ॥ ५३ ॥ प्रसीद दर्शयात्मानं किं मोहयसि मां मुहुः । भक्तानामुपरोधेन साक्षात्स्युर्देवता अपि ॥ ५४ ॥ आकृष्य गुलिकामास्याद् रूपं तत्परिवर्त्त्य सः । प्रतिपेदे निजं रूपं शैलूष इव तत्क्षणात् ॥ ५५ ॥ अनङ्गमिव जाताङ्गं तं लावण्यैकसागरम् । उद्वीक्ष्य विस्मिता सोचे प्रसादः साधु मे कृतः ॥ ५६ ॥ तस्यार्पयित्वा स्नानीयं [2]पोतं प्रीता स्वपाणिना । अङ्गाभ्यङ्गं व्यरचयद्देवदत्ताऽनुरागिणी ॥ ५७ ॥ खलिप्रक्षालनापूर्वं पिष्टातकसुगन्धिभिः । कवोष्णवारिधाराभिस्ततो द्वावपि सस्नतुः ॥ ५८ ॥ देवदूष्ये देवदत्तोपनीते पर्य्यधत्त सः । सुगन्ध्याढ्यानि भोज्यानि बुभुजाते समं च तौ

(१) निर्विमर्दः इति वा पाठः. (२) वस्त्रम् ।

॥ ५९ ॥ रहःकलारहस्यानि वयस्यीभूतयोस्तयो । मिथः कथयतोरेकः क्षणः सुखमयो ययौ ॥ ६० ॥ ततः सा
न्याजहारैव हृत मे हृदय त्वया । गुणैर्लोकोत्तरैर्नाथ प्रार्थयेऽह तथाऽप्यदः ॥ ६१ ॥ यथा पदमकार्षीस्त्व हृदये
मम सुन्दर । विदधीथास्तथा नित्यमस्मिन्नेव निकेतने ॥ ६२ ॥ मूलदेवोऽप्युवाचैव निर्धनेषु विदेशिषु । अस्मा-
दृशेषु युष्माकमनुबन्धो न युज्यते ॥ ६३ ॥ गुणानां पक्षपातेनानुरागो निर्धनेऽपि चेत् । वेश्यानामर्जनाभावात्कुल
सीदेत्तदाऽखिलम् ॥ ६४ ॥ बभाषे देवदत्ताऽपि को विदेशो भवादृशाम् । सर्वः स्वदेशो गुणिना नृणां केसरिणा-
मिव ॥ ६५ ॥ आत्मानमर्थयन्त्यर्थैर्मूर्खा हि बहिरेव नः । प्रवेश न लभन्तेऽन्तर्विना त्वां गुणमन्दिर ॥ ६६ ॥
सर्वथा प्रतिपत्तव्य त्वया सुभग मद्वच । इत्युक्ते मूलदेवेनाप्यामेति जगदे वचः ॥ ६७ ॥ ततश्च क्रीडतोः स्नेहा-
द्विनोदैर्विविधैस्तयो । राजद्वा स्थोऽब्रवीदेत्यागच्छ प्रेक्षाक्षणोऽधुना ॥ ६८ ॥ छन्नवेष मूलदेव सा नीत्वा राज-
वेरमनि । राज्ञोऽग्रे नृत्यमारेभे रम्भेव करणोज्ज्वलम् ॥ ६९ ॥ शक्रपाटहिकसमः पाटप्रकटने पटु । मूलदेवोऽपि
निपुणोऽवादयत्पटह तत्र ॥ ७० ॥ राजाऽरज्यत नृत्तेन तस्याः करणशालिना । प्रसाद मार्गयेत्यूचे त च न्यासी-
चकार सा ॥ ७१ ॥ सा मूलदेवसहिता जगौ चानु ननर्त च । ददौ चास्यै नृपस्तुष्ट स्वाङ्गलग्न विभूषणम् ॥ ७२ ॥
पाटलीपुत्रराजस्य राजदौवारिकस्ततः । हृष्टो विमलसिंहाख्य इत्युवाच महीपतिम् ॥ ७३ ॥ अय हि पाटलीपुत्रे
मूलदेवस्य धीमतः । कलाप्रकर्षोऽमुष्या वा न तृतीयस्य कस्यचित् ॥७४॥ ततः प्रदीयतां देव मूलदेवादनन्तरम् ।
विज्ञानिषु च पट्टोऽस्यै पताका नर्तकीषु च ॥ ७५ ॥ ततो राज्ञा तथा दत्ते साऽब्रवीदेष मे गुरुः । ततः प्रसादमा-

( १ ) पाटो विस्तार ।

दास्ये स्वामिन्नस्याभ्यनुज्ञया ॥७६॥ राजाऽप्यवोचत्तादियं महाभागानुमन्यताम्। धूर्त्तोऽप्यवादीद्यद्देव आज्ञापयति तत्कुरु ॥ ७७ ॥ अत्रान्तरे धूर्त्तराजा वीणां स्वयमवादयत्। हरन्मनांसि विश्वेषां विश्वावसुरिवापरः ॥ ७८ ॥ ततो विमलसिंहेन बभाषे देव खल्वयम्। मूलदेवश्छन्नरूपो नापरस्येदृशी कला ॥ ७६ ॥ विज्ञानातिशयस्यास्य प्रयोक्ता नापरः क्वचित्। मूलदेवं विना देव सर्वथाऽसौ स एव तत् ॥ ८० ॥ राजा जगाद यद्येवं तदाहो स्वं प्रदर्शय। दर्शने मूलदेवस्य रत्नस्येवास्मि कौतुकी ॥ ८१ ॥ गुलिकां मूलदेवोऽपि मुखादाकृष्य तत्क्षणात्। व्यक्तोऽभूत्कान्तिमान्मेघनिर्मुक्त इव चन्द्रमाः ॥ ८२ ॥ साधु ज्ञातोऽसि विज्ञानिन्निति सप्रेमभाषिणा। ततो विमलसिंहेन धूर्त्तसिंहः स सस्वजे ॥८३॥ न्यपतन्मूलदेवोऽपि नृदेवस्य पदाब्जयोः। राजाऽपि तं प्रसादेन सगौरवमपूजयत् ॥ ८४ ॥ एवं च देवदत्ताऽपि तस्मिन्नत्यनुरागिणी। पुरूरवस्युर्वशीवान्वभूद्विषयजं सुखम् ॥ ८५ ॥ अतिष्ठन्मूलदेवोऽपि न विना द्यूतदेवनम्। भवितव्यं हि केनापि दोषेण गुणिनामपि ॥ ८६ ॥ ययाचे देवदत्ताऽपि धिग् द्यूतं त्यज्यतामिति। नात्यजन्मूलदेवस्तत्प्रकृतिः खलु दुस्त्यजा ॥ ८७ ॥ तस्यां नगर्यामासीच्च धनेन धनदोपमः। सार्थवाहोऽचलो नाम मूर्त्योऽपर इव स्मरः ॥ ८८ ॥ आसक्तो देवदत्तायां मूलदेवाग्रतोऽपि सः। कृतस्वीकरणो भाट्या बुभुजे तां निरन्तरम् ॥ ८६ ॥ ईर्ष्यां स मूलदेवाय महतीं वहति स्म च। अन्विष्यति स्म तच्छिद्राण्युपद्रवचिकीर्षया ॥ ६० ॥ तच्छङ्कया मूलदेवोऽप्यगात्तद्वेश्मनि च्छलात्। पारवश्येऽप्यविच्छिन्नो रागः प्रायेण रागिणाम् ॥ ६१ ॥ देवदत्तां जनन्यूचे धूर्त्तताम्रगधूर्त्तकम्। निर्धनं द्यूतकारं च मूलदेवं सुते त्यज ॥ ६२ ॥ प्रत्यहं विविधं द्रव्यं यच्छत्यस्मिन् रमस्व तत्। अचले निश्चलरती रम्भेव धनदात्मजे ॥ ६३ ॥ देवदत्ता प्रत्युवाच मातरेकान्ततो

ह्यहम् । धनानुरागिणी नास्मि किं त्वस्मि गुणरागिणी ॥ ९४ ॥ अमुष्य द्यूतकारस्य गुणास्तिष्ठन्ति कीदृशाः । इति कोपाज्जनन्योक्ता देवदत्तेत्यभाषत ॥९५॥ धीरो वदान्यो विद्याविद्गुणरागी स्वयं गुणी । विशेषज्ञः शरण्योऽयं नामुं त्यक्ष्यामि तत् खलु ॥९६॥ ततश्च कुट्टिनी रुष्टा कूटजुष्टा प्रचक्रमे । उच्चाटयितुं तनयां स्वैरिणी वैरिणीमिव ॥ ९७ ॥ साऽदात्तयाऽर्थिते मान्ये निर्माल्यं शरके पयः । इक्षुखण्डे वंशखण्डं श्रीखण्डे नीपखण्डलम् ॥ ९८ ॥ सकोपं देवदत्तोक्ता कुट्टिनी कुटिलाऽब्रवीत् । मा कुप' पुत्रि यादृशो यचस्तादृग्वालिः किल ॥ ९९ ॥ लतेव कण्टकितरुं किमालम्ब्य स्थितास्यमुम् । सर्वथा मूलदेवं तत्त्यजापात्रमिमं पतिम् ॥ १००॥ अवादीद्देवदत्तैवं मातः किमिति मुह्यसि । पुमान् पात्रमपात्रं वा किमुच्येतापरीक्षितः ॥ १ ॥ परीक्षा क्रियतां तर्हीत्युक्ता साक्षेपमम्बया । मुदिता देवदत्तैवमादिदेश स्वचेटिकाम् ॥ २ ॥ यदिक्षौ देवदत्ताया अभिलाषोऽद्य विद्यते । प्रेष्यन्तामिक्षवः सार्थवाहाचल ततस्त्वया ॥ ३ ॥ तयोक्तः सार्थवाहोऽपि धन्यमानी प्रमोदतः । शकटानीक्षुपूर्णानि प्रेषयामास तत्क्षणात् ॥ ४ ॥ दृष्ट्वा कुट्टिन्युवाचैवमचलस्वामिनो हले । अचिन्तनीयमौदार्यं पश्य चिन्तामणेरिव ॥ ५ ॥ विपक्षा देवदत्तोचे किमम्बाऽस्मि करेणुका । भक्षणायेक्षवः क्षिप्ता यत्समूलदलाग्रकाः ॥ ६ ॥ आदिश्यतां मूलदेवोऽप्यस्मिन्नर्थे भुजिष्यया । विवेके ज्ञायते मातर्द्वयोरपि यथाऽन्तरम् ॥ ७॥ मूलदेवोऽपि चेट्योक्त इक्षूनादाय पञ्चपान् । मूलाग्राणि त्यजन्मङ्क्षु निस्त्वचश्च विचक्षणः ॥८॥ कठोरत्वेन दुश्चर्वपर्वग्रन्थीन् परित्यजन् । द्व्यङ्गुला गण्डिकाश्चक्रे पीयूषस्येव कुण्डिका ॥ ९ ॥ चतुर्जातेन संस्कृत्य कर्पूरेणाधिवास्य च । शूलप्रोता वर्द्धमानसपुटे प्राहिणोत्स ताः ॥ १० ॥ देवदत्ताऽपि ता प्रेक्ष्य बभाषे शम्भलीमिति । धूर्त्तेशाचलयोः पश्य स्वर्णरीर्योरिवान्तरम् ॥ ११ ॥

कुट्टिन्यचिन्तयदहो महामोहान्धमानसा । मृगीव मृगतृष्णाम्भो धूर्त्तमेषाऽनुधावति ॥ १२ ॥ स कोऽप्युपायः क्रियते येन निष्कास्यते पुरात् । अत्युष्णजलसेकेन बिलादिव महोरगः ॥ १३ ॥ कुट्टिनी मूलदेवस्योच्चाटनायाचलं जगौ । कर्त्तव्यः कृत्रिमो ग्रामगमनोपक्रमस्त्वया ॥ १४ ॥ ग्रामे यास्यामीत्यलीकं सार्थवाह त्वमञ्जसा । कथयेर्देवदत्ताया विश्रब्धा सा यथा भवेत् ॥ १५ ॥ ततो ग्रामान्तरगतं श्रुत्वा त्वां धूर्त्तपांसनः । निःशङ्कं देवदत्तायाः स समीपमुपैष्यति ॥ १६ ॥ देवदत्तान्तके मूलदेवे दीव्यति निर्भरम् । आगच्छेः सर्वसामग्र्या मत्सङ्केतेन सुन्दर ॥ १७ ॥ ततस्तथा कथमपि त्वमेतमवमानयेः । यथैतां न भजेद्भूयस्तित्तिरीमिव तित्तिरः ॥ १८ ॥ तत्तथा प्रतिपद्याथ यास्यामि ग्राममित्यसौ । आख्याय देवदत्ताया द्रव्यं दत्त्वा च निर्ययौ ॥ १९ ॥ ततस्तया निरातङ्कं मूलदेवे प्रवेशिते । आहूतास्त कुट्टिन्यचलं कुट्टाकभटवेष्टितम् ॥ २० ॥ देवदत्ता च सहसा प्रविशन्तं ददर्श तम् । मूलदेवं च खट्वाऽधो न्यधात्पत्रकरण्डवत् ॥ २१ ॥ तथास्थितं मूलदेवं कुट्टिन्या ज्ञापितोऽचलः । पर्यङ्के कृतपर्य्यङ्को निषसाद सिताननः ॥ २२ ॥ अवोचदचलस्तत्र कुर्वन् कैतवनाटितम् । देवदत्ते वयं श्रान्ताः स्नास्यामः प्रगुणीभव ॥ २३ ॥ देवदत्ताऽब्रवीदेवं विलक्षवितथस्मिता । स्नानयोग्यासने तर्हि स्नातुं पादोऽवधार्यताम् ॥ २४ ॥ एवमुत्थाप्यमानोऽपि सादरं देवदत्तया । विशेषतोऽभूत् खट्वायामचलो निश्चलासनः ॥ २५ ॥ शशाक धूर्त्तराजोऽपि स्थातुं गन्तुं च नो तदा । प्रायेण विगलन्त्येवास्वस्थे मनसि शक्तयः ॥ २६ ॥ अवोचदचलो देवदत्ते स्वप्नो मयेक्षितः । पर्यङ्केऽस्मिन् कृताभ्यङ्गः सचेलस्नातवानहम् ॥ २७ ॥ स्वप्नं सत्यापयिष्यामि तदर्थमहमागमम् । सत्यीकृतो ह्ययं स्वप्नः शुभोदर्काय जायते

॥ २८ ॥ कुट्टिन्यवोचदादेशः प्रमाण जीवितेशितुः । पुत्रि किं न श्रुत स्वामी यदिच्छति करोति तत् ॥ २९ ॥ देवदत्ताऽब्रवीदार्ये किमेतदुचित तव । अदृष्यदेवदृष्येय तूलिका यद्विनश्यति ॥ ३० ॥ अचलोऽप्यवददब्रद्रे कार्पण्य किमिद तव । शरीरमपि यच्छन्ति पत्यर्थे त्वादृश स्त्रियः ॥ ३१ ॥ किं तेऽन्यास्तूलिका न स्युः पतिर्यस्या किलाचल. । लवणेन स किं सीदेद्यस्य रत्नाकर सखा ॥ ३२ ॥ ततो माटीविवशया कारितो देवदत्तया । अभ्य-ङ्गोद्वर्तनादीनि पर्यङ्कस्थित एव सः ॥ ३३ ॥ स्नप्यमाने ततस्तस्मिन्नीशे खलिजलादिना । मूलदेवश्चण्ड इव श्रियते स्म समन्ततः ॥ ३४ ॥ आज्ञुहावाचलभटान् कुट्टिनी दृष्टिसञ्ज्ञया । निदिदेशाचल चाशु धूर्त्ताकर्षणकर्मणे ॥ ३५ ॥ कोपाटोपसमाविष्टो मूलदेव ततोऽचल' । चकर्ष धृत्वा केशेषु द्रौपदीमिव कौरवः ॥ ३६ ॥ त चोवाच नयज्ञोऽसि विद्वानसि सुधीरसि । कर्मणोऽस्यानुरूपोऽद्य ब्रूहि कस्तेऽस्तु निग्रहः ॥ ३७ ॥ घनाधीनशरीरेय वेश्या तां चेद्रिरससे । ग्रामपट्टकनङ्गुरिघनेन न किमग्रही ॥ ३८ ॥ मूलदेवोऽपि निष्पन्दस्तदा मुकुलितेक्षणः । विफलीभूतफा-लस्योद्वाह द्वीपिनस्तुलाम् ॥ ३९ ॥ एव च चिन्तयामास सार्थवाहपतिस्ततः । न निग्राह्यो महात्माऽसौ दैवादेव दशा गत ॥ ४० ॥ इति चोवाच मुक्तोऽद्य त्वमस्रादागसो मया । कृतज्ञोऽस्युपकर्त्तव्य त्वयाऽपि समये मम ॥ ४१ ॥ मुक्तोऽथ तेन धूर्त्तेशो वेश्मतो निर्ययौ तत । तूर्णं तूर्णं परिक्रामन् रणाङ्गन इव द्विप ॥ ४२ ॥ गत्वा पुरीपरिसरे सस्नौ सरसि विस्तृते । शरत्काल इव भ्रेजे तत्क्षणात् क्षालिताम्बर ॥ ४३ ॥ अचलस्यापकर्तुं चोपकर्त्तुं च स धूर्त्तराट् । मनोरथरथारूढोऽचलद्वेलातट प्रति ॥ ४४ ॥ द्वादशयोजनायामा स श्वापदकुलाकुलाम् । दुर्दशायाः

---

१ ईश्वरस्य गण –सेवक चण्डनामा ।

प्रियसखीमिव प्राप महाटवीम् ॥ ४५ ॥ पारावारमिवापारां तितीर्षुस्तां महाटवीम् । सहायं चिन्तयामास तरण्डमिव धूर्त्तराट् ॥ ४६ ॥ कस्मादप्यागतोऽकस्मादभ्रादिव परिच्युतः । शम्बलस्थगिकां बिभ्रत्कोऽपि टक्को द्विजस्तदा ॥ ४७ ॥ असहायः सहायीयं तं विप्रं क्षिप्रमागतम् । वृद्धो यष्टिमिव प्राप्य मूलदेवो मुदं ययौ ॥ ४८ ॥ जगाद मूलदेवस्तं ममारण्ये प्रपेतुषः । आत्मच्छायाद्वितीयस्य दिष्ट्या मिलितवानसि ॥४९॥ स्वच्छन्दं वार्त्तयिष्यावस्तदावां द्विजसत्तम । मार्गखेदापहरणी विद्या वार्त्ता हि या पथि ॥ ५० ॥ दूरे कियति गन्तव्यं स्थाने जिगमिषा क्व ते । कथ्यतां भो महाभाग मार्गमैत्रीं वशीकुरु ॥ ५१ ॥ विप्रोऽप्याख्यद्गमिष्यामि पारेऽरण्यमिव स्थितम् । स्थानं वीरनिधानाख्यं ब्रूहि त्वं कुत्र यास्यसि ॥ ५२ ॥ मूलदेवोऽब्रवीद्यास्याम्यहं वेणातटे पुरे । विप्रोऽप्यूचे तदेहि त्वमेकोऽध्वा दूरमावयोः ॥५३॥ ललाटन्तपतपने मध्याह्नेऽथ समागते । मिलिताभ्यां च गच्छद्भ्यां ताभ्यां प्रापि महासरः ॥५४॥ पाणिपादमुखं मूलदेवः प्रक्षाल्य वारिणा । निरन्तरतरुच्छाये भूतले समुपाविशत् ॥५५॥ स्थगिकायाः समाकृष्य सक्तूनालोड्य वारिणा । एकोऽपि भोक्तुमारेभे टक्को रङ्क इव द्रुतम् ॥ ५६ ॥ धूर्त्तोऽप्यचिन्तयदसौ नाऽऽदौ मे भोजनं ददौ । अतिक्षुधाऽऽतुरो भुङ्क्ते भुक्तः सन् खलु दास्यति ॥५७॥ भुक्त्वा तत्रोत्थिते विप्रे बध्ना(ध्न)ति स्थगिकामुखम् । दध्यौ धूर्त्तोऽपि यद्यद्य नादात्तच्छ्वः प्रदास्यति ॥५८॥ तस्मिन्नदत्त्वा भुञ्जाने मूलदेवस्तदाशया । त्रीन्वासरानगमयन्नृणामाशा हि जीवितम् ॥५९॥ अटवीं तां परित्यज्य धूर्त्तराज द्विजोऽवदत् । स्वस्ति तुभ्यं महाभाग यास्याम्यहमितोऽधुना ॥६०॥ तमूचे मूलदेवोऽपि त्वत्साहाय्यादियं मया । द्वादशयोजनायामा क्रोशवल्लङ्घिताऽटवी ॥६१॥ वेणातटे गमिष्यामि मूलदेवाभिधोऽस्म्यहम् । तत्र मे कथयेः कार्यं कथ्यतां किं च नाम ते ॥६२॥ लोकैर्निर्घृणशर्मेति

निहितापरनामकः। विप्रोऽहं सद्दडो नामेत्युक्त्वा टक्कस्ततो ययौ ॥६३॥ गच्छता मूलदेवेन ततो वेणातटं प्रति। दृष्टः मरुमध्ये कश्चिद्ग्रामं दारमथ पथि ॥६४॥ प्रविष्टस्तत्र भिक्षार्थं ग्रामकुम्भीर्बुभुक्षया। असमासादयामास कुल्माषान् कुत्रचिद्गृहे ॥ ६५ ॥ ग्रामान्निष्क्रामतस्तस्याभिमुखः कोऽप्यभून्मुनिः। मासक्षपणपुण्यात्मा पुण्यपुञ्ज इवाङ्गवान् ॥ ६६ ॥ तं दृष्ट्वा मुदितः सोऽभूदहो मे सुकृतोदयः। यन्मयासादितमिदं पात्रं यानपात्रं भवोदधौ ॥ ६७ ॥ साधोः कुल्माषदानेन रत्नत्रितयशालिनः। उन्मीलतु चिरादद्य मद्विवेकतरोः फलम् ॥ ६८ ॥ कुल्माषान् साधवे दत्त्वा मूलदेवः पपाठ च। धन्यास्ते खलु येषां स्युः कुल्माषाः साधुपारणे ॥ ६९ ॥ तस्य भावनया हृष्टा बभाषे व्योम्नि देवता। अर्द्धश्लोकेन याचस्व भद्र किं ते प्रदीयताम् ॥ ७० ॥ प्रार्थयामास सद्यस्तां मूलदेवोऽपि देवताम्। गणिकादेवदत्तेभसहस्रं राज्यमस्तु मे ॥ ७१ ॥ एवमस्त्विति देव्यूचे मूलदेवोऽपि तं मुनिम्। वन्दित्वाऽथ ग्राममध्ये भिक्षित्वा बुभुजे स्वयम् ॥ ७२ ॥ मार्गे क्रामन् क्रमेणासौ प्राप वेणातटं पुरम्। सुष्वाप पान्थशालायां निद्रासुखमवाप च ॥ ७३ ॥ यामिन्याः पश्चिमे यामे स सुप्तः स्वप्नमैक्षत। यत्पूर्णमण्डलश्चन्द्रः प्रविवेश मुखे मम ॥ ७४ ॥ तमेव स्वप्नमद्राक्षीत्कोऽपि कार्पटिकस्तदा। अन्यकार्पटिकानां च प्रबुद्धस्तमचीकथत् ॥ ७५ ॥ तेषु कार्पटिकेष्वेकः स्वप्नमेवं व्यचारयत्। अचिरेण लप्स्यसे त्वं सखण्डघृतमण्डकम् ॥ ७६ ॥ हृष्टः कार्पटिकः सोऽभूदेवं भूयादिति ब्रुवन्। जायेत बदरेणापि शृगालस्य महोत्सवः ॥ ७७ ॥ स्वप्नं नाचीकथत्तेषामज्ञाना धूर्तराट् निजम्। मूर्खा हि दर्शिते रत्ने रूपत्खण्डं प्रचक्षते॥७८॥ मण्डकं कर्पटिः प्राप गृहाच्छादनपर्वणि। प्रायेण

(१) ग्राम। (२) वसता प्राणिनामावसथो विश्रामस्थानम्।

फलति स्वप्नो विचारस्यानुसारतः ॥ ७९ ॥ धूर्तोऽपि प्रातरारामे गत्वा पुष्पोच्चयादिना । अप्रीणान्मालिकं लोकंपृणं कर्मापि तादृशाम् ॥ ८० ॥ गृहीत्वा मालिकात्तस्मात्स पुष्पाणि फलानि च । शुचिर्भूत्वा ययौ वेश्म स्वप्नशास्त्रविपश्चितः ॥८१॥ मूलदेवस्ततो नत्वा दत्त्वा पुष्पफलानि च । उपाध्यायाय तज्ज्ञाय शशंस स्वप्नमात्मनः ॥ ८२ ॥ मुदितः सोऽवदद्विद्वान्वत्स स्वप्नफलं तव । सुमुहूर्ते कथयिष्याम्यद्यास्माकं भवातिथिः ॥ ८३ ॥ मूलदेवं स्नपयित्वा भोजयित्वा च गौरवात् । परिणाययितुं कन्यामुपाध्याय उपानयत् ॥ ८४ ॥ बभाषे मूलदेवोऽपि ताताऽज्ञातकुलस्य मे । कन्यां प्रदास्यसि कथं विचारयसि किं न हि ॥ ८५ ॥ उपाध्यायोऽप्युवाचैवं त्वन्मूर्त्याऽपि कुलं गुणाः । ज्ञातास्ततसर्वथा कन्या ममेयं परिणीयताम् ॥ ८६ ॥ तद्वाचा मूलदेवोऽपि कन्यकां तामुपायत । कार्यसिद्धेर्भविष्यन्त्याः प्रादुर्भूतमिवाननम् ॥ ८७ ॥ मध्ये दिनानां सप्तानां त्वं राजेह भविष्यसि । इति तस्य स्वप्नफलमुपाध्यायो न्यवेदयत् ॥ ८८ ॥ हृष्टस्तत्र वसन् धूर्तराजो गत्वा बहिः पुरात् । सुष्वाप चम्पकतले संप्राप्ते पञ्चमेऽहनि ॥ ८९ ॥ तदा च नगरे तस्मिन्नग्रेतनमहीपतिः । अपुत्रो निधनं प्राप निष्पाद इव पादपः ॥ ९० ॥ मन्त्रोधिताः पुरीभाश्वच्छत्रभृङ्गारचामराः । भ्रेमुः प्रापुर्न राज्यार्हं दुष्प्रापस्तादृशो जनः ॥९१॥ ततो बहिः पर्यटन्तो निकषा चम्पकद्रुमम् । अपश्यन्मूलदेवं ते नरदेवपदोचितम् ॥ ९२ ॥ हयेन हेषितं चक्रे गजेनोर्जितगर्जितम् । भृङ्गारेण च तस्याऽर्घश्चामराभ्यां च वीजनम् ॥ ९३ ॥ पुण्डरीकं स्वर्णदण्डमण्डितं तस्य चोपरि । शरदभ्रमिवादभ्रतडिद्दण्डमजृम्भत ॥ ९४ ॥ तं चाधिरोहयामास स्वस्कन्धे जयकुञ्जरः । स्वाम्याप्तिमुदितैर्लोकैश्चक्रे जयजयारवः

(१) जनप्रीतिकरम् । (२) श्वेतच्छत्रम् ।

॥ ९५ ॥ पुरं महातूर्यरवैः पूर्यमाणदिगन्तरम् । तत्राविशन्मूलदेवो राजराज इवालकाम् ॥ ९६ ॥ उत्तीर्णो राजहर्म्येऽसौ सिंहासनमधिष्ठितः ॥ ९७ ॥ अथोचे देवता व्योम्नि देवतानां प्रसादतः । अयं विक्रमराजाख्यो राजा जज्ञे कलानिधिः ॥ ९८ ॥ वर्तिष्यन्ते न येऽमुष्य शासने क्षितिशासितुः । तानहं निग्रहीष्यामि महीभृत इवाशनिः ॥ ९९ ॥ तद्गिरा विस्मितं भीतं सर्वं प्रकृतिमण्डलम् । यतेरिवेन्द्रियग्रामः सदा तस्य वशेऽभवत् ॥ २०० ॥ ततः स राजा विषयसुखान्यनुभवन् व्यधात् । प्रीतिमुज्जयिनीशेन मिथः सव्यवहारतः ॥ १ ॥ तदानीं देवदत्ताऽपि मूलदेवविडम्बनाम् । तादृशीं प्रेक्ष्य साक्षेपा व्यब्रवीदचलं प्रति ॥ २ ॥ किं ज्ञाता द्रव्यदर्पान्ध त्वया कुलगृहिण्यहम् । मुमूर्षो मूर्ख मद्गेहे व्यवाहार्षीर्यदीदृशम् ॥ ३ ॥ त्वयाऽस्मदीयसदने नागन्तव्यमतः परम् । इति निष्कास्य तं गेहात्समीपे नृपतेरगात् ॥ ४ ॥ तया च याचितो राजा स वरो दीयतामिति । यथेच्छं ब्रूहि यच्छामि तं येनेत्यवदन्नृपः ॥ ५ ॥ सोचे मां प्रति नाज्ञाप्यो मूलदेवं विना पुमान् । वारणीयोऽचलश्चायमागच्छन्मम वेश्मनि ॥ ६ ॥ एवमस्त्विति राज्ञोक्ता ( जोक्त्वा ) हेतुः कोऽत्रेति पृष्टवान् । शशंस माधवी देवदत्ताभ्रूसंज्ञया ततः ॥ ७ ॥ जितशत्रुनृपः कोपाचलितभ्रूलतस्ततः । सार्थवाहं तमाहूय साक्षेपमिदमब्रवीत् ॥ ८ ॥ मत्पुरीमण्डनावेतौ रत्नभूतावरे त्वया । मूर्खेण धनमत्तेन ग्रावणीव निघर्षितौ ॥ ९ ॥ ततोऽमुष्यापराधस्य प्राणापहरणं तव । दण्डोऽस्त्विति नरेन्द्रोक्ते देवदत्ता न्यवारयत् ॥ १० ॥ त्वं यद्यप्यनया त्रातोऽधुना त्राणं तथापि ते । मूलदेवे समानीते भवेदित्यभ्यधान्नृपः ॥ ११ ॥ नृपं नत्वा ततो गत्वा सार्थवाहः प्रचक्रमे । नष्टरत्नमिवान्वेष्टुं मूलदेवं समन्ततः ॥ १२ ॥ मूलदेवमपश्यन् स भीतो न्यूनतया तया ।

भाण्डं भृत्वा ययौ शीघ्रं पारसकूलमण्डलम् ॥ १३ ॥ दध्यौ च मूलदेवोऽपि विना मे देवदत्तया । भोज्येनालवणेनेव प्राज्यराज्याश्रियाऽपि किम् ॥ १४ ॥ ततः स देवदत्ताया जितशत्रोश्च भूपतेः । चतुरं प्रेषयामास दूतं प्राभृतसंयुतम् ॥ १५ ॥ गत्वोज्जयिन्यां दूतोऽपि जितशत्रुं व्यजिज्ञपत् । देवतादत्तराज्यश्रीर्मूलदेवो वदत्यदः ॥ १६ ॥ यथा मे देवदत्तायां प्रेम जानीथ तत्तथा । यद्यस्यै रोचते वोऽपि तदियं प्रेष्यतामिति ॥ १७ ॥ ततोऽवददवन्तीशस्तेनेदं कियदर्थितम् । राज्ञा विक्रमराजेन भेदो राज्येऽपि नास्ति नः ॥ १८ ॥ आकार्य देवदत्तां च जगादोज्जयिनीपतिः । दिष्ट्या जाताऽसि भद्रे त्वं चिरात् पूर्णमनोरथा ॥ १९ ॥ राजा जज्ञे मूलदेवो देवतायाः प्रसादतः । त्वामानेतुं च स प्रैषीत्प्रधानपुरुषं निजम् ॥ २० ॥ ततस्त्वं तत्र गच्छेति प्रसादाज्जितशत्रुणा । आदिष्टा देवदत्ताऽगाद्वेणातटपुरं क्रमात् ॥ २१ ॥ राजा विक्रमराजोऽपि महोत्सवपुरःसरम् । स्वचेतसीव विपुले स्ववेश्मनि निनाय ताम् ॥ २२ ॥ जिनार्चामर्चतस्तस्य सम्यक् पालयतः प्रजाः । दीव्यतो देवदत्तां च त्रिवर्गोऽभूदबाधितः ॥ २३ ॥ इतश्च पारसकूलाद्बह्वात्तक्रेयवस्तुकः । आययावचलस्तत्र जलपूर्ण इवाम्बुदः ॥ २४ ॥ लक्ष्मीमहत्त्वपिशुनैर्मणिमौक्तिकविद्रुमैः । भृत्वा विशालं स स्थालं महीनाथमुपास्थित ॥२५॥ अचलोऽयमिति क्षिप्रमुपलक्षितवान् नृपः । दृष्ट्वा प्राग्जन्मसम्बन्धमपि प्राज्ञाः स्मरन्ति हि ॥२६॥ राजानं मूलदेवोऽयमित्यज्ञासीत्तु नाचलः । आत्तवेषं नटमपि स्थूलप्रज्ञा न जानते ॥ २७ ॥ कुतस्त्वमिति राज्ञोक्तः पारसादित्युवाच सः । ययाचे पञ्चकुलं च भाण्डालोकनकर्मणे ॥ २८ ॥ कौतुकात्स्वयमेष्याम इत्युक्तो भूभुजा स तु । महाप्रसाद इत्यूचे कोपं को वेत्ति तादृशाम् ॥ २९ ॥ ततः पञ्चकुलोपेतो ययौ राजा तदाश्रये । मञ्जिष्ठापट्टसूत्रादि सोऽपि भाण्डमदर्शयत् ॥ ३० ॥ भाण्डं

किमियदेवेद सत्य ब्रूहीति भूभुजा । उक्त इत्युक्तवान् श्रेष्ठी सत्यमेतावदेव मे ॥ ३१ ॥ नृपेण पुनरप्यूचे सम्यग्
ज्ञात्वा निवेदय । अस्मद्राज्ये शुल्कचौर्यां यच्छरीरेण निग्रहः ॥ ३२ ॥ अवोचदचलोऽप्येवमस्माभिः कथ्यतेऽ-
न्यया । पुरतो नापरस्यापि स्वय देवस्य किं पुनः ॥ ३३ ॥ राजेत्युवाच तर्ह्यस्य श्रेष्ठिन. सत्यभाषिणः । क्रियता-
मर्द्धदान च सम्यग्भाण्ड च वीक्ष्यताम् ॥ ३४ ॥ तत' पञ्चकुलेनांह्रिप्रहाराद्वशवेधत' । असारभाण्डमध्यस्थ सार-
माण्डमशङ्क्यत ॥ ३५ ॥ जाताशङ्कैस्ततो राजपुम्भिर्विभिदिरे चणात् । शुल्कदस्युमनांसीव भाण्डस्थानानि सर्वतः
॥ ३६ ॥ तैर्यथा शङ्कित भाण्ड वित्तशाठ्य तथाऽभवत् । परपुरान्त प्रवेशकारिणो ह्यधिकारिणः ॥ ३७ ॥ तज्-
ज्ञात्वा कुपितो राजा बन्धयामास त चणात् । सामन्ता अपि बध्यन्ते राजादेशाद्वणिक् कियान् ॥ ३८ ॥ ततस्त
सदने नीत्वा छोटयित्वा च बन्धनम् । किं मा प्रत्यभिजानासि पप्रच्छेति महीपति ॥ ३९ ॥ अचलोऽपि जगादैव
जगदुद्द्योतकारिणम् । भानुमन्त भवन्त च बालिशोऽपि न वेत्ति कः ॥ ४० ॥ पर्याप्त चाडुवचनैः सम्यक् त्व
वेत्सि तद्वद । राज्ञेत्युक्तोऽचलोऽवोचत्तर्हि जानामि न ह्यहम् ॥ ४१ ॥ देवदत्तामथाहूय भूपतिस्तमदर्शयत् ।
इष्टैर्दृष्टा कृतार्था स्यान्मनःसिद्धिर्हि मानिनाम् ॥ ४२ ॥ देवदत्तामसौ दृष्ट्वा ह्रीतः कष्टां दशां ययौ । अग्रेस्त्य-
पत्राजना हि मृत्योरप्यधिका नृणाम् ॥ ४३ ॥ साऽप्यूचे मूलदेवोऽयमित्युक्तो यस्तदा त्वया । एव कुर्या ममापि
त्व दैवाद्व्यसनमीयुपः ॥ ४४ ॥ तदसि व्यसन प्राप्त. प्राणसन्देहकारणम् । मुक्तोऽसि चार्यपुत्रेण नेदृशा
क्षुद्रघातिनः ॥ ४५ ॥ ततो विलच स वणिक् पतित्वा पादयोस्तयोः । ऊचे सर्वापराधान्मे तितिचध्व तदा
कृतान् ॥ ४६ ॥ रुष्टस्तेनापराधेन जितशत्रुर्महीपतिः । प्रवेशमुज्जयिन्यां मे युष्मद्वाचा प्रदास्यति ॥ ४७ ॥

अथोचे मूलदेवोऽपि मया चान्तं तदैव ते। यदा प्रसादो विदधे देव्या श्रीदेवदत्तया ॥ ४८ ॥ ततः प्रसादं दत्त्वोच्चैर्दूतमेकं समर्प्य च। पुरीमुज्जयिनीं गन्तुं विससर्जाचलं नृपः ॥ ४९ ॥ प्रवेशोऽवन्तिनाथेन तस्यावन्त्यामदीयत। मूलदेवस्य वचसा कोपस्तन्मूल एव यत् ॥५०॥ अन्येद्युर्दुःखविधुराः प्रजाकार्यधुरन्धरम्। मिलित्वा वणिजो मूलदेवमेवं व्यजिज्ञपन् ॥ ५१ ॥ जाग्रत्यपि प्रजास्त्रातुं त्वयि देव दिवानिशम्। अमुष्यतेदं नगरं परितः परिमोषिभिः ॥ ५२ ॥ कोला इव चिरं चौराः पुरेऽस्मिन्मन्दिराणि नः। प्रतिचपं खनन्त्युच्चैर्नारक्षा रचितुं क्षमाः ॥ ५३ ॥ अदृश्यमानाः केनापि कृतसिद्धाञ्जना इव। भ्राम्यन्ति चौराः स्वैरं नो गृहेषु स्वगृहेष्विव ॥ ५४ ॥ अचिरान्निग्रहीष्यामि तस्करानयशस्करान्। मूलदेवोऽभिधायैवं वणिजो विससर्ज तान् ॥५५॥ आदिचन्नगराध्यक्षं साक्षेपं क्ष्मापतिस्ततः। अन्विष्य तस्करान् सर्वान् गृहाण निगृहाण च ॥ ५६ ॥ अथोवाच पुराध्यक्षः स्वामिन्नेकोऽस्ति तस्करः। असौ न शक्यते धर्तुं दृष्टनष्टः पिशाचवत् ॥ ५७ ॥ जातामर्षस्ततो राजा महौजा निर्ययौ निशि। नीलाम्बरप्रावरणो नीलाम्बर इवापरः ॥ ५८ ॥ स्थानेषु शङ्कास्थानेषु बभ्राम स्थामधाम सः। दस्युं कमपि नापश्यदहेः पदमिवाम्भसि ॥ ५९ ॥ स सर्वं नगरं भ्रान्तः श्रान्तः सुष्वाप कुत्रचित्। खण्डदेवकुले शैलगुहायामिव केसरी ॥ ६० ॥ निशाचर इवाकस्मान्निशाचरणदारुणः। तस्कराग्रेसरस्तत्रोपासरन्मण्डिकाभिधः ॥ ६१ ॥ कोऽत्रेति व्याहरन्नुच्चैर्मलिम्लुचपतिस्ततः। रुष्टः सुप्तमिव व्यालं पदा नृपमघट्टयत् ॥ ६२ ॥ चेष्टां स्थानं च वित्तं च जिज्ञासुस्तस्य भूपतिः। ऊचे कार्पटिकोऽस्मीति क क निष्णा न तादृशाः ॥ ६३ ॥ एहि कार्पटिकाद्य त्वामदरिद्रीकरोम्यहम्। इत्यूचे तस्करो भूपं मदान्धानां धिगज्ञताम् ॥ ६४ ॥ तमन्वचालीत्सोऽर्थेच्छुः

पत्तिवत्पृथिवीपति । ममर्द गर्दभस्यापि पादौ कार्याञ्जनार्दन ॥६५॥ अजानान स राजान पार्श्वे मृत्युमिवात्मन ।
जगाम धाम कस्यापि श्रेष्ठिनः श्रेष्ठसम्पदः ॥६६॥ तत्र खात्र खनित्रेण पातयित्वा स वेश्मन । जग्राह सारद्रविण
राहुः कुण्डात्सुधामिव ॥ ६७ ॥ अज्ञो राज्ञा समस्त तद्वाहयामास तस्करः । उदर दर्शयामास शाकिन्येव स
मूढधी ॥ ६८ ॥ तमुन्मूलयितु मूलान्मूलदेव उवाह तत् । धूर्त्तो हि कारणोपात्तमार्दवा कार्यराक्षसा ॥ ६९ ॥
जीर्णोद्यान ततो गत्वा गुहामुद्घाट्य सोऽविशत् । निनाय तत्र भूप च च्छगणारोपितालिवत् ॥ ७० ॥ आसीन्ना-
गकुमारीव कुमारी तत्र तत्स्वसा । नवयौवनलावण्यपुण्यावयवशालिनी ॥ ७१ ॥ क्षालयास्यातिथे पादावित्यादिष्टा
स्वबन्धुना । सोपकूप ततो भूपमुपावेशयदासने ॥ ७२ ॥ प्रक्षालयन्ती तत्पादकमले कमलेक्षणा । अनुभूय
मृदुस्पर्श त सर्वाङ्गमुदैक्षत ॥ ७३ ॥ अहो कोऽप्येष कन्दर्पः साक्षादिति सविस्मया । सानुरागा सानुकम्पा साऽ-
ब्रवीदिति भूपतिम् ॥ ७४ ॥ पादप्रक्षालनव्याजात्कूपेऽस्मिन्नपरे नरा । अपात्यन्त महाभाग तस्कराणां कुतः कृपा
॥ ७५ ॥ क्षेप्स्यामि नेह कूपे त्वां त्वत्प्रभाववशीकृता । महतामनुभावो हि वशीकरणमद्भुतम् ॥ ७६ ॥ ततो
मदुपरोधेन सुन्दरापसर द्रुतम् । द्वयोरप्यन्यथा नाथ कुशल न भविष्यति ॥ ७७ ॥ विमृश्याथ महीनाथो निर्जगाम
द्रुत तत । धीमन्तो हि धिया घ्नन्ति द्विष सत्यपि विक्रमे ॥ ७८ ॥ गते नृपे तु व्याहारि तया गच्छत्यसाविति ।
स्वचूणरक्षणार्थं हि प्रपञ्चो धीमतामयम् ॥ ७९ ॥ कृष्टकङ्कासिजिह्वालो वेताल इव दारुणः । अनुभूपालमुत्तालो
दधावे माण्डिकस्तत ॥ ८० ॥ त समासन्नमालोक्य भूपतिर्धीबृहस्पतिः । चत्वरोत्तम्भितग्रावस्तम्भेनान्तरितोऽभवत्

(१) ' मर्दयामास ' इति प्रत्यन्तरपाठ साधीयान् । (२) अलि वृश्चिक ।

॥ ८१ ॥ कोपान्धनयनश्चासौ स एवैष पुमानिति । कङ्कासिना दृषत्स्तम्भं च्छित्वाऽगाद्धाम मण्डिकः ॥८२॥ ययौ स्वं धाम राजाऽपि हृष्टश्चौरोपलम्भतः । प्राप्तः सौख्याय जायेत दोषकारी न कस्य वा ॥८३॥ राजा प्रातस्ततो राजपाटिकाव्याजतो बहिः । दस्युं विश्वमनोदस्युस्तं निरूपयितुं ययौ ॥८४॥ अथ वस्त्रापणद्वारे कुर्वाणं तुन्नकारताम् । पट्टैर्वेष्टितजङ्घोरुं किञ्चिदुद्घाटिताननम् ॥८५॥ तस्करं मेस्करलतोपेतं छद्मश्लथाकृतिम् । दृष्ट्वोपालक्षयत् क्ष्मापः क्षपादृष्टानुमानतः ॥८६॥ (युग्मम्) गत्वा हर्म्यं महीनाथोऽभिज्ञानानि निवेदयन् । पुरुषान् प्रेषयामास तस्याकारणहेतवे ॥८७॥ न हतः स पुमान्नूनं तद्विजृम्भितमित्यसौ । आहूतोऽमंस्त चौरा हि महाराजिकवेदिनः ॥८८॥ सोऽगात्ततो राजकुले राज्ञाऽऽस्यत महासने । महाप्रसादं कुर्वन्ति नीतिज्ञा हि जिघांसवः ॥८९॥ तं भूपतिरभाषिष्ट प्रसादमुखया गिरा । स्वस्वसा दीयतां मह्यं दातव्या एव कन्यका ॥ ९० ॥ दृष्टपूर्वी स्वसारं मे नापरो निरगात्ततः । अयं स एव राजेति निश्चिक्ये मण्डिको हृदि ॥ ९१ ॥ गृह्यतां मत्स्वसा देव देवकीयैव सा किल । मदीयमन्यदप्येवमवोचत स पार्थिवम् । ॥ ९२ ॥ तदानीमप्युपायंस्त रूपातिशयशालिनीम् । तस्य स्वसारं नृपतिः कंसारिरिव रुक्मिणीम् ॥ ९३ ॥ महामात्यपदे चक्रे तस्करं तं नरेश्वरः । को वेत्ति भूभुजां भावं मध्यं पत्युरिवाम्भसाम् ॥ ९४ ॥ तस्माद्भूषणवस्त्रादि तद्भगिन्यैव भूपतिः । नित्यमानाययदहो धूर्त्तो धूर्त्तैरधृष्यत । ॥ ९५ ॥ यदु यावत्समाकृष्टं द्रव्यं तावन्नृपेण सा । अभाषि वित्तं त्वद्बन्धोः कियदद्यापि तिष्ठति ॥ ९६ ॥ वित्तमेतावदेवासीदस्य दस्योः स्वसाऽपि हि । एवं न्यवेदयद्राज्ञो गोप्यं प्रियतमे न हि ॥ ९७ ॥ विडम्बनाभिर्बह्वीभिर्मण्डिकं चण्डशासनः । निजग्राह ततो

(१) 'दोपाकरः' इति पाठः संभवति । (२) वंशलतोपेतम् ।

राजा पापानां कुशल कियत् ॥ ६८ ॥

चौर्यात् श्वशुर्यमपि विक्रमराजराजः, आनीय मण्डिकमखण्डनयो जघान । स्तैन्य न तेन विदधीत सुधी कथञ्चिदत्रापि जन्मनि विरुद्धफलानुबन्धि ॥ २६६ ॥

॥ इति मूलदेवमण्डिकयो कथानकम् ॥

आसीद्राजगृहे सम्पाजितामरपुरे पुरे । पादाक्रान्तनृपश्रेणिः श्रेणिको नाम पार्थिवः ॥ १ ॥ राज्ञस्तस्य च तनयो नयविक्रमभाजनम् । नाम्नाऽभयकुमारोभूत् प्रद्युम्न श्रीपतेरिव ॥ २ ॥ इतश्च तस्मिन्नगरे वैभारगिरिकन्दरे । चौरो लोहखुराख्योऽभूद्रौद्रो रस इवाङ्गवान् ॥ ३ ॥ स तु राजगृहे नित्य पौराख्यासुत्सवादिषु । लब्ध्वा छिद्राणि विदधे पिशाचवदुपद्रवम् ॥ ४ ॥ आददानस्ततो द्रव्य भुञ्जानश्च परस्त्रिय' । भाण्डागार निशान्त वा निज मेने स तत्पुरम् ॥ ५ ॥ चौर्यमेवाभवत्तस्य प्रीत्यै वृत्तिर्न चापरा । अपास्य क्रव्य क्रव्यादा भक्ष्यैस्तृप्यन्ति नापरैः ॥६॥ तस्यानुरूपो रूपेण चेष्टया च सुतोऽभवत् । भार्यायां रोहिणीनाम्न्यां रौहिणेयोऽभिधानतः ॥ ७ ॥ स्वमृत्युसमये प्राप्ते पित्राऽऽहूयेत्यभाषि स । यद्यवश्य करोषि त्वमुपदेश ददामि तव् ॥ ८ ॥ अवश्यमेव कर्त्तव्यमादिष्ट भवतां मया । क पितु पातयेदाज्ञां पृथिव्यामित्युवाच स' ॥ ९ ॥ प्रहृष्टो वचसा तेन चौरो लोहखुरस्तत. । पाणिना सस्पृशन् पुत्रमभाषिष्टेति निष्ठुरम् ॥ १० ॥ योऽसौ समवसरणे स्थितः सुरविनिर्मिते । विधत्ते देशनां वीरो मा श्रौषीस्तस्य भाषितम् ॥ ११ ॥ अन्यत्तु स्वेच्छया वत्स कुर्यास्त्वमनियन्त्रितः । उपदिश्येति पञ्चत्व प्राप लोहखुरस्ततः ॥ १२ ॥ मृतकार्य पितु कृत्वा रौहिणेयस्ततोऽनिशम् । चकार चौरिका लोहखुरोऽपर इवोद्गतः ॥ १३ ॥

पालयन् पितुरादेशं जीवितव्यमिवात्मनः । स्वदासेरमिवामुष्णात् स राजगृहपत्तनम् ॥ १४ ॥ तदा च नगरग्रामाकरेषु विहरन् क्रमात् । चतुर्दशमहासाधुसहस्रपरिवारितः ॥ १५ ॥ सुरैः संचार्य्यमाणेषु स्वर्णाम्भोजेषु चारुषु । न्यस्यन् पदानि तत्रागाद्वीरश्चरमतीर्थकृत् ॥ १६ ॥ व्यन्तरैरसुरैर्ज्योतिषिकैर्वैमानिकैरपि । सुरैः समवसरणं चक्रे जिनपतेस्ततः ॥ १७ ॥ आयोजनविसर्पिण्या सर्वभाषानुयातया । भारत्या भगवान् वीरः प्रारेभे धर्मदेशनाम् ॥ १८ ॥ तदानीं रौहिणेयोऽपि गच्छन् राजगृहं प्रति । मार्गान्तराले समवसरणाभ्यर्णमाययौ ॥ १९ ॥ एवं स चिन्तयामास पथाऽनेन व्रजामि चेत् । शृणोमि वीरवचनं तदाज्ञा भज्यते पितुः ॥ २० ॥ न चान्यो विद्यते पन्था भवत्वेवं विमृश्य सः । कर्णौ पिधाय पाणिभ्यां द्रुतं राजगृहं ययौ ॥ २१ ॥ एवमन्वहमप्यस्य यातायातकृतोऽन्यदा । उपसमवसरणं पादेऽभज्यत कण्टकः ॥ २२ ॥ औत्सुक्यगमनाद्गाढमग्नं पादे स कण्टकम् । अनुध्धृत्य समुद्धर्त्तुं न शशाक क्रमात् क्रमम् ॥ २३ ॥ नास्त्युपायोऽपरः कोऽपीत्याकृष्य श्रवणात्करम् । कर्षन् कण्टकमश्रौषीदिति विश्वगुरोर्गिरम् ॥ २४ ॥ महीतलास्पर्शिपादा निर्निमेषविलोचनाः । अम्लानमाल्या निःस्वेदा नीरजोऽङ्गाः सुरा इति ॥ २५ ॥ बहुश्रुतमिदं धिग् धिगित्याशूध्धृतकण्टकः । पिधाय पाणिना कर्णं तथैवापससार सः ॥ २६ ॥ अथान्वहं मुष्यमाणे पत्तने तेन दस्युना । उपेत्य श्रेणिकं श्रेष्ठिश्रेष्ठा व्यज्ञपयन्निति ॥ २७ ॥ त्वयि शासति देवान्यत्र भयं द्रविणं तु नः । आकृष्य गृह्यते चौरैरदृष्टैश्चेटकैरिव ॥ २८ ॥ बन्धूनामिव तेषां तु गृहीतः पीडया ततः । सकोपाटोपमित्यूचे नृपतिर्दण्डपाशिकम् ॥ २९ ॥ किं चौरीभूय दायादीभूय वा मम

(१) वैमानिकैर्ज्योतिषिकैर्व्यन्तरैरसुरैरपि इति वा पाठः ।

वेतनम् । गृह्णासि चौरैर्गृह्यन्ते यदेते त्वदुपेक्षितैः ॥ ३० ॥ सोऽप्यूचे देव कोऽप्येष चौरः पौरान् विलुण्टति । रौहिणेयाह्वयो धर्त्तुं दृष्टोऽपि न हि शक्यते ॥ ३१ ॥ विद्युदुत्क्षिप्तकरणेनोत्प्लुत्याय प्लवङ्गवत् । गेहाद्गेह तवो वप्रमुल्लङ्घयति हेलया ॥ ३२ ॥ मार्गेण यामस्तन्मार्गं यावत्तावत्स नेक्ष्यते । त्यक्तो ह्येकक्रमेणापि शतेन त्यज्यते क्रमै ॥३३॥ न त हन्तु न वा धर्त्तुमह शक्नोमि तस्करम् । गृह्णातु तदिमां देवो दाण्डपाशिकतां निजाम् ॥३४॥ नृपेणोल्लासितैकभ्रूसञ्ज्ञया भाषितस्तत । कुमारोऽभयकुमारस्तमूचे दाण्डपाशिकम् ॥३५॥ चतुरङ्ग चमू सज्जीकृत्य मुञ्च वहिष्पुरात् । यदान्त'प्रविशेच्चौरः पत्तन वेष्टयेस्तदा ॥ ३६ ॥ अन्तश्च त्रासितो विद्युदुत्क्षिप्तकरणेन स । पतिष्यति वहि सैन्ये वागुरायां कुरङ्गवत् ॥ ३७ ॥ प्रतिभूभिरिवानीतो निजपादैस्ततश्च सः । ग्रहीतव्यो महान् दस्युरप्रमत्तै पदातिभिः ॥३८॥ तथेत्यादेशमादाय निर्ययौ दाण्डपाशिकः । तथैव च चमूं सज्जां प्रच्छन्न निर्ममे सुधी ॥३९॥ तद्दिने रौहिणेयोऽपि ग्रामान्तरसमागमात् । अजानानः पुरीं रुद्धां वारीं गज इवाविशत् ॥ ४० ॥ तैरुपायैस्ततो धृत्वा बध्वा च स मलिम्लुच । आनीय नृपतेर्दाण्डपाशिकेन समर्पित ॥ ४१ ॥ यथा न्याय्य सतां ग्राथमसतां निग्रहस्तथा । निगृह्यतामसौ तस्मादित्यादिक्षन्महीपति ॥ ४२ ॥ अलोप्त्र ग्रास इत्येष न हि निग्रहमर्हति । विचार्य निग्रहीतव्य इत्युवाचाभयस्तत ॥ ४३ ॥ अथ पप्रच्छ त राजा कुत्यः कीदृशजीविकः । कुतो हेतोरिहा-यातो रौहिणेय स चासि किम् ॥ ४४ ॥ स्वनामशङ्कित सोऽपि प्रत्युवाचेति भूपतिम् । शालिग्रामे दुर्गचण्डा-भिधानोऽह कुटुम्बिक ॥ ४५ ॥ प्रयोजनवशेनेहायातः सजातकौतुकात् । एकदेवकुले रात्रिं महतीमासि च स्थित ॥४६॥ स्वधाम गच्छन्नारचैराक्षिप्तो राक्षसैरिव । अलङ्घयमह वप्र प्राणभीर्महती हि भी ॥४७॥ मध्यारक्ष-

विनिर्यातो वाह्यारक्षगणैष्वहम् । कैवर्तहस्तविस्रस्तो जाले मत्स्य इवापतम् ॥४८॥ ततो निरपराधोऽपि बध्ध्वा चौर इवाधुना । अहमेभिरिहानीतो नीतिसार विचारय ॥४९॥ ततस्तं भूपतिर्गुप्तौ प्रेषयामास तत्क्षणात् । तत्प्रवृत्ति-ज्ञानहेतोस्तत्र ग्रामे च पूरुषम् ॥ ५० ॥ सोऽग्रेऽपि ग्राहितो ग्रामः सङ्केतं तेन दस्युना । चौराणामपि केषाश्चिचि-त्रमायतिचिन्तनम् ॥ ५१ ॥ तत्स्वरूपं राजपुंसा ग्रामः पृष्टोऽब्रवीदिदम् । दुर्गचण्डोऽत्र वास्तव्यः परं ग्रामान्तरं गतः ॥ ५२ ॥ तत्रार्थे तेन विज्ञप्ते दध्यौ श्रेणिकस्त्विदम् । अहो सुकृतदम्भस्य ब्रह्माऽप्यन्तं न गच्छति ॥ ५३ ॥ अभयोऽसज्जयदथ प्रासादं सप्तभूमिकम् । महार्घरत्नखचितं विमानमिव नाकिनाम् ॥ ५४ ॥ श्रियाऽप्सरायमाणाभी रमणीभिरलङ्कृतम् । दिवोऽमरावतीखण्डमिव भ्रष्टमतर्कि सः ॥५५॥ गन्धर्ववर्गप्रारब्धसङ्गी-तकमहोत्सवः। सोऽधादकस्मादुद्भूतगन्धर्वनगराश्रियम् ॥५६॥ ततोऽभयो मद्यपानमूढं निर्माय तस्करम् । परिधाप्य देवदूष्ये अधितल्पमशाययत् ॥५७॥ मदे परिणते यावदुदस्थात्तावदैक्षत । सोऽकस्माद्विस्मयकरीमपूर्वां दिव्यसंपदम् ॥५८॥ अत्रान्तरेऽभयादिष्टैर्नरनारीगणैस्ततः । उदचारि जय जय नन्देत्यादिकमङ्गलम् ॥५९॥ अस्मिन्महाविमाने त्वमुत्पन्नस्त्रिदशोऽधुना। अस्माकं स्वामिभूतोऽसि त्वदीयाः किङ्करा वयम् ॥ ६० ॥ अप्सरोभिः सहैताभी रमस्व स्वैरमिन्द्रवत् । इत्यादि चतुरं चाटुगर्भमूचे च तैरसौ ॥ ६१ ॥ जातः सुरः किमस्मीति दध्यौ यावत्स तस्करः । संगीतकार्थं तावत्तैः प्रदत्तः समहस्तकः ॥ ६२ ॥ उपेत्य पुंसा केनापि स्वर्णदण्डभृता ततः । सहसा भोः किमार-ब्धमेतदेवमभाष्यत ॥ ६३ ॥ ततः प्रतिप्रभापे तैः प्रतिहार निजप्रभोः । प्रदर्शयितुमारब्धं स्वकं विज्ञानकौशलम् ॥६४॥ सोऽप्युवाच स्वनाथस्य दर्शयतां निजकौशलम् । देवलोकसमाचारं कार्यतां किं त्वसाविति ॥ ६५ ॥ तैरुक्तं

कीदृगाचार इति श्रुत्वा स पूरुष । साक्षेपमित्यभाषिष्ट किमेतदपि विस्मृतम् ॥ ६६ ॥ य इहोत्पद्यते देव स स्वे सुकृतदुष्कृते । आख्याति प्राक्तने स्वर्गभोगाननुभवेत्तत ॥ ६७ ॥ विस्मृत स्वामिलाभेन सर्वमेतत्प्रसीद न । देवलोकस्थितिं देन कार्यतामिति तेऽन्वदन् ॥ ६८ ॥ स रौहिणेयमित्यूचे निजे हन्त शुभाशुभे । प्राक्तने शस न स्वर्गभोगान् भुङ्क्ष्व तत' परम् ॥ ६९ ॥ तत सोऽचिन्तयद्दस्यु किमेतत् सत्यमीदृशम् । मा ज्ञातुमभयेनैष प्रपञ्चो रचितोऽथवा ॥ ७० ॥ ज्ञेय कथमेतदिति ध्यायता तेन सस्मृतम् । कण्टकोद्धरणकालाकर्णित भगवद्वच ॥ ७१ ॥ देवस्वरूप श्रीवीराच्छ्रुत चेत् सवादिष्यति । तत्सत्य कथयिष्यामि करिष्याम्यन्यथोत्तरम् ॥ ७२ ॥ इति बुद्ध्या स तानीक्षाञ्चक्रे क्षितितलस्पृशः । प्रस्वेदमलिनान् म्लानमाल्यान्निमिषदीक्षणान् ॥ ७३ ॥ तत्सर्वं कपट ज्ञात्वाऽचिन्तयत् दस्युरुत्तरम् । तेनोचे कथ्यता देव लोक सर्वोऽयमुत्सुक ॥ ७४ ॥ रौहिणेयस्ततोऽवादीन्मया पूर्वत्र जन्मनि । अदीयत सुपात्रेभ्यो दान चैत्यानि चक्रिरे ॥ ७५ ॥ प्रत्यष्ठाप्यन्त बिम्बानि पूजितान्यष्टधाऽर्चया। विहितास्तीर्थयात्राश्च गुरवः पर्युपासिताः ॥ ७६ ॥ इत्यादि सदनुष्ठान मया कृतमिति ब्रुवन् । ऊचे दण्डभृता शस दुश्चरितमपि स्वकम् ॥ ७७ ॥ रोहिणेयोऽप्युवाचेद साधुससर्गशालिना । कदाचिदप्याचरित किञ्चिन्नाशोभन मया ॥ ७८ ॥ व्याजहार प्रतीहारो जन्म नैकस्वभावतः । याति तत्कथ्यतां चौर्यपारदारिकतादिकम् ॥ ७९ ॥ रौहिणेयोऽभ्यधत्तैव किमेवविधचेष्टितः । स्वर्लोक प्राप्नुयादन्ध किमारोहति पर्वतम् ॥ ८० ॥ गत्वा ततस्तैस्तत्सर्वमभयाय निवेदितम् । अभयेन च विज्ञप्त श्रेणिकस्य महीपते ॥ ८१ ॥ एवविधैरुपायैर्यश्चौरो ज्ञातु न शक्यते । स चौरोऽपि विमोक्तव्यः शक्या नीतिर्न लङ्घितुम् ॥ ८२ ॥ अभय पार्थिवादेशाद्रोहिणेयममुचत् ।

वक्ष्यन्ते वञ्चनादक्षैर्दक्षा अपि कदाचन ॥ ८३ ॥ ततः सोऽचिन्तयच्चौरो धिगादेशं पितुर्मम । वञ्चितोऽस्मि चिरं येन भगवद्वचनामृतात् ॥ ८४ ॥ नागमिष्यत् प्रभुवचो यदि मे कर्णकोटरम् । तदा विविधमारेणागामिष्यं यमगोचरम् ॥ ८५ ॥ अनिच्छयाऽपि हि तदा गृहीतं भगवद्वचः । मम जीवातवे जज्ञे भैषज्यमिव रोगिणः ॥ ८६ ॥ त्यक्त्वार्हद्वचनं हा धिक् चौरवाचि रतिर्मया । आम्राण्यपास्य निम्बेषु काकेनेव चिरं कृता ॥८७॥ उपदेशैकदेशोऽपि यदीयः फलतीदृशम् । तस्योपदेशः सामस्त्यात् सेवितः किं करिष्यति ॥ ८८ ॥ एवं विमृश्य मनसा ययौ भगवतोऽन्तिके । पादाम्बुजे च नत्वैवं रौहिणेयो व्यजिज्ञपत् ॥ ८९ ॥ भवाब्धौ प्राणिनां घोरविपन्नक्रकुलाकुले । महापोतायते ते गीरायोजनविसर्पिणी ॥ ९० ॥ निषिद्धस्त्वद्वचः श्रोतुमनाप्तेनाप्तमानिना । इयत्कालमहं पित्रा वञ्चितस्तज्जगद्गुरो ॥ ९१ ॥ त्रैलोक्यनाथ ते धन्याः श्रद्दधानाः पिबन्ति ये । भवद्वचनपीयूषं कर्णाञ्जलिपुटैः सदा ॥ ९२ ॥ अहं तु पापोऽशुश्रूषुर्भगवन् भवतो वचः । पिधाय कर्णौ हा कष्टमिदं स्थानमलङ्घ्यम् ॥ ९३ ॥ एकदाऽनिच्छताऽप्येकं श्रुतं युष्मद्वचो मया । तेन मन्त्राक्षरेणेव रक्षितो राजराक्षसात् ॥ ९४ ॥ यथाऽहं मरणात्त्रातस्तथा त्रायस्व नाथ माम् । संसारसागरावर्त्ते निमज्जन्तं जगत्पते ॥ ९५ ॥ ततस्तत्कृपया स्वामी निर्वाणपददायिनीम् । विशुद्धां विदधे साधु साधुधर्मस्य देशनाम् ॥ ९६ ॥ ततः प्रबुद्धः प्रणमन् रौहिणेयोऽब्रवीदिदम् । यतिधर्मस्य योग्योऽस्मि न वेत्यादिश मां प्रभो ॥ ९७ ॥ योग्योऽसीति स्वामिनोक्ते, ग्रहीष्यामि विभो व्रतम् । परं किञ्चिद्वदिष्यामि, श्रेणिकेनेत्युवाच सः ॥ ९८ ॥ निर्विकल्पं निर्विशङ्कं स्ववक्तव्यमुदीरय । इत्युक्तः श्रेणिकनृपेणोचे लोहखुरात्मजः ॥ ९९ ॥ इह देव भवद्भिर्यः श्रुतोऽहं लोकवार्त्तया । स एष रौहिणेयोऽस्मि भवत्पत्तन-

मोपक' ॥ १०० ॥ भगवद्वचसैकेन दुर्लङ्घ्या लङ्घिता मया । प्रज्ञाऽभयकुमारस्य तरण्डेनेव निम्नगा ॥ १ ॥
अशेषमेतन्मुषित पत्तन भवतो मया । नान्वेषणीय. कोऽप्यन्यस्तस्करो राजभास्कर ॥ २ ॥ कमपि प्रेषय यथा
तल्लोप्त्र दर्शयाम्यहम् । करिष्ये सफल जन्म ततः प्रव्रज्यया निजम् ॥ ३ ॥ अभयोऽथ समुत्थाय श्रेणिकादेशत
स्वयम् । कौतुकात्पौरलोकश्च सहागाचेन दस्युना ॥ ४ ॥ ततो गिरिणदीकुञ्जरमशानादिषु तद्धनम् । स्थगित
दर्शयामास सोऽथ श्रेणिकसूनवे ॥ ५ ॥ अभयोऽपि हि यद्यस्य तत्तस्य धनमार्पयत् । नीतिज्ञानामलोभानां
मन्त्रिणां नापरा स्थिति ॥६॥ परमार्थं कथयित्वा प्रबोध्य निजमानुषान् । श्रद्धालुर्भगवत्पार्श्वे रौहिणेयः समाययौ
॥ ७ ॥ ततः श्रेणिकराजेन कृतनिष्क्रमणोत्सव । स जग्राह परिव्रज्या पार्श्वे श्रीवीरपादयोः ॥ ८ ॥ ततश्चतुर्था-
दारभ्य षण्मासान् यावदुज्ज्वलम् । विनिर्ममे तपःकर्म कर्मनिर्मूलनाय सः ॥ ९ ॥ तपोभि कृशितः कृत्वा भाव-
सलेखनां च स' । श्रीवीरमापृच्छ्य गिरौ पादपोपगम व्यधात् ॥१०॥ शुभध्यानः स्मरन् पञ्चपरमेष्ठिनमस्कृयाम् ।
त्यक्त्वा देह जगाम द्यां रौहिणेयो महामुनि ॥ ११ ॥ रौहिणेय इव चौर्यनिवृत्त', स्वर्गलोकमचिरादुपयाति ।
तत्सुधीर्न विदधीत कथश्चिचौरिकामुभयलोकविरुद्धाम् ॥ ११२ ॥ इति रौहिणेयकथानकम् ॥ ७२ ॥
स्तेयस्यातिपरिहरणीयतामाह—

दूरे परस्य सर्वस्वमपहर्तुमुपक्रम । उपाददीत नादत्तं तृणमात्रमपि क्वचित् ॥ ७३ ॥

दूरे आस्ता तावत्परस्य सर्वस्व निःशेषधनम्, अपहर्तुमुपक्रमः आरम्भ, अदत्त स्वामिना तृणमात्रमपि
नोपाददीत न गृह्णीयात् न तदर्थ यत्न कुर्यादिति यावत् ॥ ७३ ॥

स्तेयनिवृत्तानां फलं श्लोकद्वयेनाह—

**परार्थग्रहणे येषां नियमः शुद्धचेतसाम्। अभ्यायान्ति श्रियस्तेषां स्वयमेव स्वयम्वराः ॥७४॥**

परार्थग्रहणे परधनहरणे येषां नियमो निवृत्तिः शुद्धचेतसां निर्मलचित्तानां न तु बकवृत्तीनां कश्मलमनसां तेषामभ्यायान्ति अभिमुखमायान्ति श्रियः सम्पदः, स्वयमेव न तु परप्रेरणया व्यवसायेन वा। स्वयंवरा इत्युपमानगर्भम्। स्वयम्वरा इव कन्याः॥ ७४ ॥ तथा—

**अनर्था दूरतो यान्ति साधुवादः प्रवर्त्तते। स्वर्गसौख्यानि ढौकन्ते स्फुटमस्तेयचारिणाम् ॥७५॥**

अनर्था विपदः; दूरतो यान्त्यासन्ना अपि न भवन्ति; साधुरयमिति प्रवादः साधुवादः श्लाघा, प्रवर्त्तते प्रसरति, एतावदैहिकं फलम्; स्वर्गसौख्यानीति तु पारलौकिकम्, अस्तेयव्रतेनावश्यं चरन्तीत्यस्तेयचारिणस्तेषाम्। अत्रान्तरश्लोकाः—

वरं वह्निशिखा पीता सर्पास्यं चुम्बितं वरम्। वरं हालाहलं लीढं परस्वहरणं न तु ॥ १ ॥ प्रायः परस्वलुब्धस्य निःशूका बुद्धिरेधते। हन्तुं भ्रातॄन् पितॄन् दारान् सुहृदस्तनयान् गुरून् ॥ २ ॥ परस्वं तस्करो गृह्णन् वधबन्धादि नेक्षते। पयःपायीव लगुडं बिडाल उपरिस्थितम्॥ ३ ॥ व्याधधीवरमार्जारादिभ्यश्चौरोऽतिरिच्यते। निगृह्यते नृपतिभिर्यदसौ नेतरे पुनः ॥ ४ ॥ स्वर्णादिकेऽप्यन्यधने पुरःस्थे, सदा मनीषा दृषदीव येषाम्। सन्तोषपीयूषरसेन तृप्तास्ते द्यां लभन्ते गृहमेधिनोऽपि ॥ ५ ॥ ७५ ॥

इदानीमामुष्मिकमैहिकं चाब्रह्मफलमुपदर्श्य गृहस्थोचित ब्रह्मचर्यव्रतमाह—

**पण्ढत्वमिन्द्रियच्छेदं वीक्ष्याब्रह्मफलं सुधीः । भवेत् स्वदारसन्तुष्टोऽन्यदारान् वा विवर्जयेत् ॥७६॥**

षण्ढत्वमामुष्मिकं परदाररतानां फलं, इन्द्रियच्छेदश्च राजादिकृतं ऐहिकं, अब्रह्मणः प्रतिषिद्धस्य मैथुनस्य, वीक्ष्य शास्त्रात्प्रत्यक्षेण वा ज्ञात्वा, स्वदारेषु धर्मपत्न्यां सन्तुष्टो भवेदित्येकं गृहस्थब्रह्मचर्य्यम्, अन्यदारान् परसम्बन्धिनीः स्त्रियो विवर्जयेत् । स्वस्त्रीसाधारणस्त्रीसेवीत्यर्थः इति द्वितीयम् ॥ ७६ ॥

यद्यपि गृहस्थस्य प्रतिपन्नं व्रतमनुपालयतो न तादृशः पापसम्बन्धोऽस्ति तथापि यतिधर्मानुरक्तो यतिधर्मप्राप्तेः पूर्वं गार्हस्थ्येऽपि कामभोगविरक्तः सन् श्रावकधर्मं परिपालयति इति तं वैराग्यकाष्ठामुपनेतुं सामान्येनाब्रह्मदोषानाह—

**रम्यमापातमात्रे यत् परिणामेऽतिदारुणम् । किंपाकफलसकाशं तत्कः सेवेत मैथुनम् ॥७७॥**

आपातमात्रे प्रथमारम्भमात्रे, रम्यं मनोहरं, परिणामे प्रारम्भादुत्तरोत्तरावस्थायां, दारुणं रौद्रं, किंपाकफलसकाशं किंपाको वृक्षविशेषस्तत्फलसदृशं, किंपाकफलं ह्यापाते रम्यं परिणामे दारुणं मारणात्मकत्वात् यदाह—

वंधड्ढा हैलहलया दीसन्ता दिन्ति हिययपरिओसं । किंपागफला पुत्तय आसायन्तो वियाणिहिसि ॥ १ ॥

एवंविधं यन्मैथुनं मिथुनकर्म तत्कः सेवेतेति सम्बन्धः । यदाह—

( १ ) वर्णाढ्याः कौतुका दृश्यमाना ददति हृदयपरितोषम् । किंपाकफलानि पुत्रक आस्वादमानो विज्ञास्यसि ॥ १ ॥

( २ ) "हुमलम्मि कोउए हलहल" इति श्रीहेमचन्द्राचार्यो देशीनाममालाया अष्टमवर्गे अनेकार्थप्रकरणे ७४ श्लोके व्याचख्यु ।

यद्यपि निषेव्यमाणा मनसः परितुष्टिकारका विषयाः । किंपाकफलादनवत् भवन्ति पश्चादतिदुरन्ताः ॥२॥७७॥

मैथुनस्य परिणामदारुणत्वमाह—

**कम्पः स्वेदः श्रमो मूर्च्छा भ्रमिर्ग्लानिर्बलक्षयः । राजयक्ष्मादिरोगाश्च भवेयुर्मैथुनोत्थिताः ॥७८॥**

कम्पो वेपथुः, स्वेदो घर्मः, श्रमः क्लमः, मूर्च्छा मोहः, भ्रमिर्भ्रमः, ग्लानिरङ्गसादः, बलक्षयः शक्तिनाशः, राजयक्ष्मा क्षयरोगः, स आदिर्येषां कासश्वासादीनां रोगाणां ते तथा मैथुनोत्थिता मैथुनप्रभवाः ॥ ७८ ॥

अहिंसापरिवारत्वाच्छेषव्रतानां मैथुने अहिंसाया एवाभावमाह—

**योनियन्त्रसमुत्पन्नाः सुसूक्ष्मा जन्तुराशयः । पीड्यमाना विपद्यन्ते यत्र तन्मैथुनं त्यजेत् ॥७९॥**

योनिः प्रसवमार्गः सैव यन्त्राकारत्वाद्यन्त्रं, तत्र समुत्पन्नाः संमूर्च्छनेनोत्पन्नाः, ते च न चक्षुर्ग्राह्या इत्याह—सुसूक्ष्माः, जन्तुराशयो जन्तुसमूहाः, पीड्यमाना मृद्यमानाः पुंध्वजेनेति शेषः, रूतनालिकायां तप्तायःकणकप्रवेशे रूतानीव, विपद्यन्ते विनश्यन्ति, यत्र मैथुने तन्मैथुनं त्यजेत् ॥ ७९ ॥

योनौ जन्तुसद्भावं संवादेन द्रढयति—

**जन्तुसद्भावं वात्स्यायनोऽप्याह ।**

वात्स्यायनः कामशास्त्रकारः । अनेन च वात्स्यायनसंवादाधीनमस्य प्रामाण्यमिति नोच्यते, न हि जैनं शासनमन्यसंवादाधीनप्रामाण्यं किन्तु येऽपि कामप्रधानास्तैरपि जन्तुसद्भावो नापह्नुत इत्युच्यते ।

वात्स्यायनश्लोको यथा—

रक्तजा कृमयः सूक्ष्मा मृदुमध्याधिशक्तय.। जन्मवर्त्मसु कण्डूतिं जनयन्ति तथाविधाम् ॥८०॥

रक्तजा रक्तोद्भवा, कृमयो जन्तुविशेषा', सूक्ष्मा अप्रत्यक्षाः, मृदुमध्याधिशक्तय मृदुशक्तयो मध्यशक्तयोऽधिशक्तयश्च, तथाविधां मृदुमध्याधिमात्रशक्त्यनुरूपां मृदुशक्तयो मृद्वीं, मध्यशक्तयो मध्यां, अधिकशक्तयोऽधिकां कण्डूतिं कण्डूं जन्मवर्त्मसु योनिषु जनयन्ति ॥ ८० ॥

कामज्वरचिकित्सार्थमौषधमिव मैथुनसेवनमिति यो मन्यते त प्रत्याह—

स्त्रीसम्भोगेन य कामज्वर प्रतिचिकीर्षति। स हुताश घृताहुत्या विध्यापयितुमिच्छति ॥८१॥

प्रतिचिकीर्षति प्रतिकर्तुमिच्छति, विध्यापयितु शमयितुम्, अयमर्थो—नाय कामज्वरस्य प्रतीकारोऽनुगुण, अपि तु वृद्धिहेतुः, न हि हुताशे घृताहुतिप्रक्षेपस्तच्छान्त्यै भवति किन्तु तद्वृद्ध्यै। बाह्या अप्याहु —

न जातु काम कामानामुपभोगेन शाम्यति। हविषा कृष्णवर्त्मेव भूय एवाभिवर्द्धते ॥ १ ॥

किन्तु कामज्वरप्रतीकारा ईषत्करा वैराग्यभावनाप्रतिपक्षसेवाधर्मशास्त्रश्रवणादयः, तदेतेषु कामज्वरप्रशान्त्युपायेषु सत्सु किं भवभ्रमणहेतुना मैथुनसेवनेन ॥ ८१ ॥

एतदेवाह—

वर ज्वलदयस्तम्भपरिरम्भो विधीयते। न पुनर्नरकद्वाररामाजघनसेवनम् ॥ ८२ ॥

अयमर्थः—भवतु कामज्वरोपशमहेतुर्मैथुनं परं नरकहेतुत्वान्न प्रशस्यम् ॥ ८२ ॥

अपि च स्त्रीसम्बन्धनिबन्धनं निधुवनं, स्त्रियश्च स्मृता अपि सकलगुणगरिमाविघातहेतव इत्याह—

**सतामपि हि वामभ्रूर्ददाना हृदये पदम् । अभिरामं गुणग्रामं निर्वासयति निश्चितम् ॥८३॥**

सतामपि हि महात्मनामपि वामभ्रूर्विरचितलोचनविकारा, हृदये पदं ददाना स्मृतिमात्रेणापि सन्निधापिता, अभिरामं रमणीयं, गुणग्रामं गुणसमूहं, निर्वासयति उद्वासयति । श्लेषच्छाया चेयम् । यथा कुनियोगी कश्चिद्देशमध्ये पदं ददान एव रक्षितव्यान् ग्रामान् लोभमोहादिनोद्वासयति, एवं हृदये लब्धपदा कामिन्यपि पालनीयं गुणग्राममुच्छेदयति । अथवा सतामपि गुणग्राम सतामेव हृदये पादं दत्त्वा वामभ्रूर्निर्वासयति ॥ ८३ ॥

हृदयसन्निधापनमपि स्त्रीणां बहुदोषत्वाद्गुणहानिहेतुः किं पुना रमणमित्येतदेवाह—

**वञ्चकत्वं नृशंसत्वं चञ्चलत्वं कुशीलता । इति नैसर्गिका दोषा यासां तासु रमेत कः ॥८४॥**

वञ्चकत्वं मायाशीलता, नृशंसत्वं क्रूरकर्मकारिता, चञ्चलत्वं कुत्राप्यवस्थितचित्तत्वाभावः, कुशीलता दुःस्वभावता, उपस्थसंयमाभावो वा, इत्येते नैसर्गिकाः स्वाभाविका दोषा न त्वौपाधिकाः, तासु को रमेत ॥ ८४ ॥

न चेयन्त एव दोषा किन्त्वपरिसंख्याता इत्याह—

**प्राप्तुं पारमपारस्य पारावारस्य पार्यते । स्त्रीणां प्रकृतिवक्राणां दुश्चरित्रस्य नो पुनः ॥८५॥**

पारावारस्य समुद्रस्य, अपारस्यादृष्टपारस्य, पारं परतीरं, प्राप्तुं पार्यते शक्यते, न पुनः स्त्रीणां प्रकृतिवक्राणां

स्वभावकुटिलचरित्राणां, दुश्चरित्रस्य दुष्टचेष्टितस्य, पार पर्यन्त , आप्तु पार्यत इति ॥ ८५ ॥

दुश्चरित्रमेवाह—

**नितम्बिन्य पतिं पुत्र पितरभ्रातरं क्षणात्। आरोपयन्त्यकार्येऽपि दुर्वृत्ता· प्राणसशये ॥८६॥**

नितम्बिन्य इति योवनोन्माददर्शनार्थम् । अत एव स्त्रीति नोक्तम् । दुर्वृत्ता दुष्टशीला , अकार्येऽपि प्रयोजनमन्तरेणापि, अथवाऽकार्येऽन्ये प्रयोजने नञोऽन्यार्थत्वात्, प्राणसशये प्राणसन्देहे उपलक्षण चैतत् । प्राणनाशेऽपि आरोपयन्ति आरोहयन्ति । कमित्याह–पतिं भर्त्तारम् । सूर्यकान्तेव प्रदेशिराजम् । यदाह—

भज्जा वि इन्दियविगारदोसनडिया करेइ पइपावम् । जह मो पएसिराया सूरियकताइ तह वहिओ ॥ १ ॥

पुत्र तनयम् । चुलनीव ब्रह्मदत्तम् । यदाह—

माया नियगमइविगप्पियम्मि अत्थे अपूरमाणम्मि । पुत्तस्स कुणइ वसण चुलणी जह बभदत्तस्स ॥ २ ॥

पितर जनक, भ्रातर सोदरम् । जीवयशा इव जरासन्ध, कालादींश्च भ्रातॄन् ॥ ८६ ॥

अत एव—

**भवस्य बीज नरकद्वारमार्गस्य दीपिका। शुचा कन्द· कलेर्मूल दु·खानां खानिरङ्गना ॥८७॥**

---

( १ ) भार्याऽपि इन्द्रियविकारदोषनटिता करोति पतिपापम् । यथा स प्रदेशिराज सूर्यकान्तया तथा वधित ॥ १ ॥

( २ ) माता निजकमतिविकल्पिते अर्थे अपूर्यमाणे । पुत्रस्य करोति व्यसन चुल्नी यथा ब्रह्मदत्तस्य ॥ २ ॥

भवस्य संसारस्याङ्कुरस्येव बीजं तत्कारणत्वात्संसारस्य, नरकद्वारं नरकप्रवेशः, तत्र यो मार्गः पन्थास्तत्र दीपिकेव दीपिका तत्प्रकाशकत्वात्, शुचां शोकानां वल्लीनामिव कन्दस्तत्प्ररोहहेतुत्वात्, कलेः कलहस्य तरोरिव मूलं पादो वृद्धिहेतुत्वात्, दुःखानां शारीरमानसानां लवणादीनामिव खानिराकरस्तत्समुत्थत्वात् दुःखानां, काऽसौ ? अङ्गना । एवं तावद्यतिधर्मानुरक्तं गृहस्थं प्रति सामान्येन मैथुनदोषाः स्त्रीदोषाश्चोक्ताः ॥ ८७ ॥

सम्प्रति स्वदारसन्तुष्टान् गृहस्थानधिकृत्य साधारणस्त्रीदोषाः श्लोकपञ्चकेनोच्यन्ते—

**मनस्यन्यद्वचस्यन्यत्क्रियायामन्यदेव हि । यासां साधारणस्त्रीणां ताः कथं सुखहेतवः ॥८८॥**

मनसि चित्तेऽन्यत् वचःक्रिययोर्विलक्षणं, वचसि वचनेऽन्यत् मनःक्रिययोर्विलक्षणं, क्रियायां चेष्टितेऽन्यत् वाङ्मनसोर्विसंवादि, यासां साधारणस्त्रीणां वेश्यानां, ता विसंवादिप्रेमाणः कथं सुखस्य विश्वासैकनिबन्धनस्य हेतवः ? । यदाह—

अन्यस्मै दत्तसङ्केता याचतेऽन्यं स्तुते परम् । अन्यश्चित्ते परः पार्श्वे गणिकानामहो नरः ॥ १ ॥ ८८ ॥

तथा—

**मांसमिश्रं सुरामिश्रमनेकविटचुम्बितम् । को वेश्यावदनं चुम्बेदुच्छिष्टमिव भोजनम् ॥८९॥**

मांसेन जलस्थलखचारिजीवजाङ्गलेन मिश्रमामगन्धि, मांसादित्वाद्वेश्यानां, सुरया काष्ठपिष्टादिमय्या मदिरया मिश्रं व्याप्तं, सुरापाणप्रसक्तत्वात् । अनेकविटैर्बहुभिर्विटैरित्यर्थः, चुम्बितमास्वादितम्, प्रायो विटास-

क्तत्वात्, एवंविधं वेश्यानां वदनं कश्चुम्बेत् कश्चिचेतनश्चुम्बेदित्यर्थः । उच्छिष्टमिव भोजनमित्युपमानमनेकवि-टचुम्बितवेश्यावदनस्योपमेयस्य । अथवा मांसमिश्रत्वं सुरामिश्रत्वं चोच्छिष्टभोजनेऽपि योज्यम् ॥ ८६ ॥ तथा—

पि प्रदत्तसर्वस्वात् कामुकात् क्षीणसम्पदः । वासोऽप्याच्छेत्तुमिच्छन्ति गच्छतः पण्ययोषितः ।६०

प्रदत्तसर्वस्वादपि महाधनावस्थायां, पुण्यक्षयात्क्षीणसम्पदः कामुकात्तत एव गच्छतः स्वगृहं प्रति, वासोऽपि परिधानवस्त्रमपि, आच्छेत्तुं बलाद् ग्रहीतुमिच्छन्ति, पण्यं मूल्यं तत्प्रधाना योषितो वेश्या, अनेन कृतघ्नत्वं तासामाह । यदाह—

उपचरिताऽप्यतिमात्रं प्रकटवधूः क्षीणसम्पदः पुंसः। पातयति दृशं व्रजतः स्पृहया परिधानमात्रेऽपि ॥१॥६०॥

तथा—

न देवान्न गुरूंश्चापि सुहृदो न च बान्धवान् । असत्सङ्गरतिर्नित्यं वेश्यावश्यो हि मन्यते ॥६१॥

वेश्यावश्यः पुमान्न देवादीन्मन्यते, कुतः असत्सङ्गरतिर्नित्यं असद्भिर्विटादिभिः सङ्गो असत्सङ्गस्तत्र रतिर्यस्य। वेश्यावश्यस्य हि सुलभा एवासत्सङ्गाः ॥ ६१ ॥ तथा—

कुष्ठिनोऽपि स्मरसमान् पश्यन्तीं धनकाङ्क्षया । तन्वन्तीं कृत्रिमस्नेहं निःस्नेहां गणिकां त्यजेत् ९

कुष्ठिनः कुष्ठरोगिणोऽप्यत्यन्तमनुपादेयान्, स्मरसमान् कन्दर्पतुल्यान्, धनकाङ्क्षया हेतुभूतया पश्यन्तीं, महत्या प्रतिपत्त्या प्रतिपादयन्तीं, न च स्नेहमन्तरेण कुष्ठिनोऽपि सकाशाद्धनावाप्तिरिति । तन्वन्तीं विस्तारयन्तीं,

कृत्रिममुपचरितं स्नेहं प्रेम, परमार्थतस्तु निःस्नेहां गणिकां वेश्यां, त्यजेत् । एवं तावत्स्वदारसन्तुष्टस्य पण्याङ्गनागमने दोषाः प्रतिपादिताः ॥ ९२ ॥



इदानीं परदारगमनदोषानाह—

**नासक्त्या सेवनीया हि स्वदारा अप्युपासकैः। आकरः सर्वपापानां किं पुनः परयोषितः ॥९३॥**

सर्वविरतिलालसः खलु देशविरतिपरिणाम इति गार्हस्थ्येऽपि वैराग्यातिशयादुपासकैरप्रतिषिद्धाः स्वदारा अप्यासक्त्या गर्द्धेन न सेवनीयाः, किं पुनः परयोषितः ? ता अत्यन्तमसेवनीया इत्यर्थः, यत आकरः खानिः सर्वपापानां मायामृषावादादीनाम्, हिशब्दो यस्मादर्थे, यस्मात् स्वदारानपि नासक्त्या सेवन्ते उपासकाः, ततः कथं परदारेषु प्रसजेयुरित्यर्थः ॥ ९३ ॥

परस्त्रीणां पापकारित्वमेव दर्शयति—

**स्वपतिं या परित्यज्य निस्त्रपोपपतिं भजेत्। तस्यां क्षणिकचित्तायां विश्रम्भः कोऽन्ययोषिति ।९४।**

तस्यां क्षणिकचित्तायां चलितचित्तायामन्ययोषिति, को विश्रम्भः को विश्वासः ? न कश्चिदित्यर्थः । विश्रम्भाधीनं च सुखं तदपि नास्तीत्यर्थः । या किं, या स्वपतिं देवतारूपं 'भर्तृदेवता हि स्त्रियः' इति श्रुतेः, परित्यज्य पाणिगृहीत्यपि त्यक्त्वा, निस्त्रपा लज्जारहिता, त्रपा हि भूषणं स्त्रीणाम्; उपपतिं पत्यन्तरं, भजेत् ॥९४॥

इदानीं परस्त्रीप्रसक्तोऽनुशिष्यते—

भीरोराकुलचित्तस्य दुःस्थितस्य परस्त्रियाम्। रतिर्न युज्यते कर्तुमुपशून पशोरिव ॥ ९५ ॥

परस्त्रियां रतिं प्रीतिं, कर्तुं न युज्यते, भीरोः पतिराजादिभीतस्य, अत एवाकुलचित्तस्य अनेन दृष्टोऽनेन ज्ञातोऽहमिति उपसर्पतीति व्याकुलचित्तस्य, दुःस्थितस्य खण्डदेवकुलादौ शय्यासनादिरहितस्य, कस्येव, पशोरिव वध्यस्य, उपशून शूनासमीपे ॥ ९५ ॥ तस्मात्—

प्राणसन्देहजननं परमं वैरकारणम्। लोकद्वयविरुद्धं च परस्त्रीगमनं त्यजेत् ॥ ९६ ॥

परस्त्रियां गमनं सम्भोगस्तत्त्यजेत्, प्राणानां जीवितव्यस्य सन्देहो नाशशङ्का, तं जनयतीति प्राणसन्देहजननं, परस्त्रीषु प्रसक्तस्य हि प्रायेण परैः प्राणाः प्रणाश्यन्ते कदाचिन्नेति प्राणसन्देहः, परमं प्रकृष्टं वैरस्य विरोधस्य कारणम् यदाह—"बद्धमूलस्य मूलं हि महद्वैरतरोः स्त्रियः" इति। लोकद्वयमिहलोकपरलोकलक्षणं, तस्य विरुद्धं प्राणसन्देहजननत्वाद्वैरकारणत्वाल्लोकद्वयविरुद्धत्वादिति परस्त्रीगमनत्यागे हेतुत्रयं विशेषणद्वारेण ॥ ९६ ॥

लोकद्वयविरुद्धं चेति विशेषणमस्फुटं स्फुटयति—

सर्वस्वहरणं बन्धं शरीरावयवच्छिदाम्। मृतश्च नरकं घोरं लभते पारदारिकः ॥ ९७ ॥

सर्वधनापहारं, रज्ज्वादिना बन्धं, शरीरावयवः पुंध्वजादिस्तस्य च्छिदां छेदं लभत इतीहलोकविरोधः। मृतश्च नरकं घोरं लभते इति परलोकविरोधः। परदारान् गच्छतीति पारदारिकः ॥ ९७ ॥

उपपत्तिपूर्वं परस्त्रीगमनप्रतिषेधमाह—

**स्वदाररक्षणे यत्नं विदधानो निरन्तरम् । जानन्नपि जनो दुःखं परदारान् कथं व्रजेत् ॥९८॥**

जानन्नपि अनुभवन्नपि, दुःखं मनःपीडां, परदारप्रसङ्गे, परदाराः परेषां दाराः परदाराः, अतः स्वदारप्रसक्तेषु परेषु दुःखमनुभवत्येव । अत्र हेतुमाह । स्वदाररक्षणे, स्वकलत्ररक्षणे यत्नमादरं, भित्तिवरण्डकप्राकारप्राहरिकादिभिर्विदधानः कुर्वन्, निरन्तरं दिवानिशं, स्वदाररक्षणपरिक्लेशशाली जनो जानात्येव स्वस्मिन् दुःखं इत्यात्मानुभवेन परेष्वपि दुःखं पश्यन् कथं परदारान् व्रजेत् ? ॥ ९८ ॥

आस्तां परस्त्रीषु रमणं रमणेच्छाऽपि महतेऽनर्थायेति आह—

**विक्रमाक्रान्तविश्वोऽपि परस्त्रीषु रिरंसया । कृत्वा कुलक्षयं प्राप नरकं दशकन्धरः ॥ ९९॥**

परस्त्रीविषये रमणाभावेऽपि रिरंसामात्रेण हेतुना, दशकन्धरो रावणो, नरकं प्राप इति पारलौकिकं फलम् । ऐहिकमाह—कृत्वा कुलक्षयं, यद्यपि कुलक्षयस्तस्य रामादिभिः कृतो न तेन, तथापि तदीयपरदाररिरंसापूर्वकत्वादिभिस्तत्त्वतस्तत्कृत उच्यते । ननु पारलौकिकं फलं नरकगमनरूपमास्तां, ऐहलौकिकं तु बलवतां कुतस्त्यं भवेदित्याह । विक्रमाक्रान्तविश्वोऽपि, न हि दशकन्धरादन्यो बलवान्, यो विक्रमेण विश्वमप्याक्रान्तवान् सोऽपि यद्यनर्थमश्नुते तदा परस्य का मात्रेति ॥ ९९ ॥

अयं चार्थः सम्प्रदायगम्यः, स चायम् ।—

अस्ति त्रिकूटशिरसि शिरोमणिरिव क्षितेः । रक्षोद्वीपे हिरण्याङ्का लङ्केति प्रथिता पुरी ॥ १ ॥ विद्याधरनृप-

स्तस्यां पुलस्त्यकुलकौस्तुभः । अजायत महावीर्यो रावणो विश्वरावणः ॥ २ ॥ अभूतां भ्रातरौ तस्य नि सीम-
श्यामशोभिनौ । अपराविव दोःस्तम्भौ कुम्भकर्णविभीषणौ ॥ ३ ॥ देवतामिव कुलस्य स्वपूर्वपुरुषार्जिताम् ।
गृहे नवमहारत्नस्रजं सोऽपश्यदन्यदा ॥ ४ ॥ श्रूयन्ते द्वादशादित्या नवादित्या इमे पुनः । दृश्यन्ते कथमित्येत-
त्पूर्वृद्धान् पप्रच्छ तत्र स ॥ ५ ॥ अथाचचक्षिरे तस्मै त्वत्पूर्वपुरुषैः पुरा । वरलब्धा महासाराऽनर्घ्येयं रत्नमालिका
॥ ६ ॥ इमां क्षिपेत यः कण्ठे स्यात्सोऽर्द्धभरतेश्वरः । इत्याम्नायाच्चवाम्नाये पूज्यते पूर्वजैरसौ ॥ ७ ॥ ततस्तां
सोऽक्षिपत्कण्ठे तद्रत्नेषु नवस्वपि । सङ्क्रान्तास्यतया चासौ दशास्य इति पप्रथे ॥ ८ ॥ ततो जनैर्जयजयेत्यारावैर-
भिनन्दितः । सोऽमान्मूर्च इवोत्साहो जगद्विजयहेतवे ॥ ९ ॥ तस्यानवद्या विद्यास्ताः प्रज्ञप्तीप्रमुखाः सदा । असा-
ध्यसाधनप्रौढा पार्श्वे सेना इवावसन् ॥ १० ॥ ततो भरतवर्षार्द्धं स एकग्रामलीलया । दुःसाध साधयामास
दो कण्डूर्न त्वपूर्यत ॥ ११ ॥ आसीदितश्च वैताढ्यगिरौ विद्याधरेश्वरः । इन्द्रनामा पूर्वजन्मानुभूतेन्द्रपदस्थितिः
॥ १२ ॥ विश्वैश्वर्यबलोद्रेकादिन्द्रत्वाभ्यासतोऽपि च । इन्द्रमात्मानमेवायममस्तेन्द्रं तु नापरम् ॥ १३ ॥ शचीति
स स्वमहिषीं स्वमस्त्रं वज्रमित्यपि । पट्टेभमैरावण इत्यश्वमुच्चैः श्रवा इति ॥ १४ ॥ सारथिं मातलिरिति चतुरोऽ
न्यान्महाभटान् । सोमो यमः पाशधरः कुबेर इति चाभ्यधात् ॥ १५ ॥ मन्यमानस्तृणायान्यानिन्द्रमन्यः स
दोर्मदी । नाजीगणद्रावणमप्यत्यन्तरणदारुणम् ॥ १६ ॥ तस्मै ततः प्रकुपितः कृतान्त इव दारुणः । रावणः
श्रावणाम्भोदगर्जद्गजबलोऽचलत् ॥ १७ ॥ विद्याबलात्ससैन्योऽपि लङ्घयामास सोऽर्णवम् । विद्याधरास्तुल्ययाना
भुव्यम्भसि नभस्यपि ॥ १८ ॥ स दिशश्छादयन् सैन्यवात्योद्भूते रजश्चये । वैताढ्यं प्राप कल्पान्तमहावात इव

द्रुतम् ॥ १९ ॥ श्रुत्वा रावणमायान्तमिन्द्रोऽपि द्रुतमभ्यगात् । पुंसां मैत्र्यां च वैरे च संमुखोत्थानमादिमम् ॥ २० ॥ दूरादपि दशास्येन प्रहितो महितौजसा । अथ दूतोऽभ्युपेत्येन्द्रमित्युवाच ससौष्ठवम् ॥ २१ ॥ ये केचिदिह राजानो विद्यादोर्वीर्यदर्पिणः । तैरुपेत्योपायनाद्यैः पूजितो दशकन्धरः ॥ २२ ॥ दशकण्ठस्य विस्मृत्या भवतश्चार्जवादयम् । इयान् कालो ययौ तस्मिन् भक्तिकालस्तवाधुना ॥ २३ ॥ भक्तिं दर्शय तत्रास्मिन् शक्तिं वा दर्शयाधुना । भक्तिशक्तिविहीनश्चेदेवमेव विनङ्क्ष्यसि ॥ २४ ॥ इन्द्रोऽपि निजगादैवं वराकैः पूजितो नृपैः । रावणस्तदयं मत्तः पूजां मत्तोऽपि वाञ्छति ॥२५॥ यथा तथा गतः कालो रावणस्य सुखाय सः । कालरूपस्त्वयं कालस्तस्येदानीमुपस्थितः ॥ २६ ॥ गत्वा स्वस्वामिनो भक्तिं शक्तिं वा मयि दर्शय । स भक्तिशक्तिहीनश्चेदेवमेव विनङ्क्ष्यति ॥ २७ ॥ दूतेनागत्य विज्ञप्ते रावणः क्रोधदारुणः । चचालानन्तसैन्योर्मिः क्षयोद्भ्रान्त इवार्णवः ॥ २८ ॥ तयोर्बलानामन्योऽन्यं संफेटः शस्त्रवर्षिणाम् । संवर्त्तपुष्करावर्त्तवारिदानामिवाभवत् ॥ २९ ॥ रावणं रावणिर्नत्वा युद्धायेन्द्रमथाह्वत । रणक्रीडासु वीरा हि नाग्रं ददति कस्यचित् ॥ ३० ॥ ततश्चैकाङ्गविजयाकाङ्क्षि-णाविन्द्ररावणी । सैन्यान्यपास्यायुध्येतां द्वन्द्वयुद्धेन दुर्द्धरौ ॥ ३१ ॥ मिथः प्रतिहतास्त्रौ तौ रणपारयियासया । युयुधाते नियुद्धेन मदान्धौ सिन्धुराविव ॥ ३२ ॥ रावणिः किमधोऽथेन्द्र ऊर्ध्वमिन्द्रोऽथ रावणिः । नालक्ष्यत तयोर्व्यक्तिर्वेगाद्विपरिवर्त्तिनोः ॥ ३३ ॥ विजयश्रीः क्षणेनेन्द्रे मेघनादे क्षणेन च । यातायातं व्यधाद्धीतेवोभयोरपि भीमयोः ॥ ३४ ॥ असौ मशक इत्यस्थाद्यावद्दर्पेण वज्रभित् । तावत्सर्वौजसा मेघनादस्तं समुपाद्रवत् ॥ ३५ ॥ पातयित्वा झगित्येव तं बबन्ध दशास्यसूः । जिगीषूणां जये हेतुः प्रथमो ह्याशुकारिता ॥ ३६ ॥ मेघनादः

सिंहनादैर्नादयन् रोदसी अपि । पितुः समर्पयामास मूर्त्तं जयमिवाथ तम् ॥ ३७ ॥ प्रबलारचगुप्तायां त गुप्तौ रावणोऽक्षिपत् । द्वय विधत्ते हि बली निहन्त्यपि वहत्यपि ॥ ३८ ॥ सोमो दण्डधरः पाशी कुबेरश्च समेत्य ते । दशास्यमिन्द्रग्रहणात्क्रुद्धा रुरुधिरे ततः ॥ ३९ ॥ जितकाशी दशास्योऽपि भूत्वोत्साहाच्चतुर्गुण । योधयामास सग्रामचतुरश्चतुरोऽपि तान् ॥ ४० ॥ सोऽभाङ्क्षीद्दण्डिनो दण्ड चुचोद गदिनो गदाम् । पाशिनोऽत्रोटयत्पाशान् धनु सोमस्य चाच्छिदत् ॥ ४१ ॥ अपातयत्प्रहारैस्तान्महेभः कलभानिव । अग्रहीद्रावणो बध्वा वैरिविद्रावणः क्षणात् ॥ ४२ ॥ सप्ताङ्गराज्यसहितमुपादाय पुरन्दरम् । पाताललङ्कां लङ्केशो विजेतुमगमत्तत ॥ ४३ ॥ हत्वा चन्द्रोदरं तत्र तद्राज्य स्वां च सोदरीम् । सोऽदात्खराय त्रिशिरोदूषणज्यायसे ततः ॥ ४४ ॥ चन्द्रोदरस्य निःशेष खरः खरबलोऽग्रहीत् । एका तु गुर्विणी राज्ञी अरण्ये क्वचिदप्यगात् ॥ ४५ ॥ तत पातालङ्कातो लङ्कां लङ्कापतिर्ययौ । तत्र निष्कण्टक राज्य चक्रे विष्टपकण्टक ॥ ४६ ॥ सोऽन्येद्युः पुष्पकारूढः क्रीडयेतस्ततो भ्रमन् । मरुत्तभूपप्रारब्धमीक्षाञ्चक्रे महामखम् ॥ ४७ ॥ ततो विमानादुत्तीर्णो दशास्यस्तादिदृक्षया । आनर्चे भूभुजा तेन पाद्यसिंहासनादिना ॥ ४८ ॥ ततो मरुत्तभूपाल जगादैव दशाननः । अरे किमेष क्रियते नरकाभिमुखैर्मखः ॥ ४९ ॥ धर्म प्रोक्तो ह्यहिंसातः सर्वज्ञैस्त्रिजगद्धितैः । पशुहिंसात्मकाद्यज्ञात्स कथ नाम जायते ॥ ५० ॥ लोकद्वयारिं तद्यज्ञ मा कार्षीश्चेत्करिष्यसि । मद्गुप्ताविह ते वास परत्र नरके पुन ॥ ५१ ॥ विससर्ज मख सद्यो मरुत्तनृपतिस्ततः । अलङ्घ्या रावणाज्ञा हि विश्वस्यापि भयङ्करा ॥ ५२ ॥ प्रभञ्जन इवौजस्वी मरुत्तमखभञ्जनः । ततोऽगाच्चैत्ययात्रार्थं सुमेर्वष्टापदादिषु ॥ ५३ ॥ विधाय यात्रां चैत्येषु कृत्रिमाकृत्रिमेषु सः । आजगाम निज धाम पुनरेव दशाननः ॥ ५४ ॥

इतश्चासीदयोध्यायां पुर्य्यामेकमहारथः। राजा दशरथो नाम धाम निःसीमसम्पदाम् ॥ ५५ ॥ पत्न्यः कौशल्याकैकेयीसुमित्रासुप्रभाभिधाः। प्रियाश्चतस्रस्तस्यासन्मूर्त्ता इव दिशां श्रियः ॥ ५६ ॥ कौशल्या सुषुवे रामं कैकेयी भरतं सुतम्। सुमित्रा लक्ष्मणं नाम शत्रुघ्नं सुप्रभाऽभिधा ॥ ५७ ॥ रामलक्ष्मणभरतशत्रुघ्नास्तस्य रेजिरे। चत्वारः सूनवो दन्ता इव त्रिदशदन्तिनः ॥ ५८ ॥ जनकस्य सुतां सीतां भामण्डलसहोदरीम्। कार्मुकारोपणपणां रामभद्र उपायत ॥ ५९ ॥ जिनेन्द्रबिम्बस्नपनजलं मङ्गलहेतवे। चतसृणां च राज्ञीनां नृपः प्रैषयदन्यदा ॥ ६० ॥ तत्तोयमागतं पश्चादिति रोषमुपेयुषीम्। अनुनेतुं स्वयं राज्ञीं सुमित्रामगमन्नृपः ॥ ६१ ॥ घण्टान्तर्लोलिकालोल-दशनं चलिताननम्। श्वेतसर्वाङ्गरोमाणं भ्रूरोमच्छन्नलोचनम् ॥६२॥ पदे पदे प्रस्खलन्तं याचमानं च पश्चताम्। गतस्तत्र ददर्शैकं जरत्कञ्चुकिनं नृपः ॥ ६३ ॥ तं दृष्ट्वाऽचिन्तयद्राजा सो यावन्नेदृशा वयम्। चतुर्थपुरुषार्थाय तावद्धि प्रयतामहे ॥ ६४ ॥ व्रतं जिघृक्षुः स ततो राज्ये स्थापयितुं निजे। अह्वायाह्वाययामास तनयौ रामलक्ष्मणौ ॥ ६५ ॥ भरतस्य जनन्याऽथ कैकेय्या मन्थरागिरा। वरौ प्राक्प्रतिपन्नौ स याचितः सत्यसङ्गरः ॥ ६६ ॥ वरेणार्थित एकेन स तदा रघुपुङ्गवः। प्रतिपन्नस्थिरो राज्यं भरताय समार्पयत् ॥ ६७ ॥ चतुर्दशसमा यावद्वनवा-साय चादिशत्। ससीतालक्ष्मणं रामं वरेणान्येन चार्थितः ॥ ६८ ॥ ससीतालक्ष्मणो रामः सद्योऽगाद्दण्डकाव-नम्। पञ्चवट्याश्रमे चावतस्थेऽसौ सत्यसङ्गरः ॥ ६९ ॥ तत्रायातौ चारणर्षी राघवाभ्यां नमस्कृतौ। सीताऽऽन-र्चातिथीभूतौ श्रद्धालुः शुद्धभिक्षया ॥ ७० ॥ ततो गन्धोदकैर्वृष्टिरमरैर्विदधे तदा। तद्गन्धादाययौ तत्र जटायुर्नाम गृध्रराट् ॥७१॥ तौ मुनी देशनां तत्र चक्रतुः स व्यबोधि च। संजातजातिस्मरणोऽवतस्थे चानुजानकि ॥७२॥

तस्थुषस्तत्र रामस्य फलाद्यर्थं बहिर्गतः । ददर्श लक्ष्मणः खड्गमग्रहीच्च कुतूहलात् ॥ ७३ ॥ तत्तीक्ष्णत्वपरीक्षार्थं तत्क्षणं तेन लक्ष्मणः । अभ्यर्णस्थां वंशजालीं नालुलाव लुलाव च ॥ ७४ ॥ वंशजालान्तरस्थस्य कच कस्यापि देहिनः । अथैकं मौलिकमलं सोऽपश्यत्पतितं पुरः ॥ ७५ ॥ अयुध्यमानोऽशस्त्रश्च पुमान् कोऽपि हतो मया । अमुना कर्मणा धिग्मामित्यात्मानं निनिन्द सः ॥ ७६ ॥ गत्वा च रामभद्राय तदशेषमचीकथत् । असिं च दर्शयामास रामोऽप्येवमभाषत ॥ ७७ ॥ असावसिः सूर्यहासः साधकोऽस्य त्वया हतः । अस्य सम्भाव्यते नूनं कश्चिदुत्तरसाधकः ॥ ७८ ॥ अत्रान्तरे दशग्रीवस्वसा चन्द्रणखाऽभिधा । खरभार्या ययौ तत्र ददर्श च हतं सुतम् ॥ ७९ ॥ क्वासि हा वत्स शम्बूक शम्बूकेति रुदत्यसौ । अपश्यल्लक्ष्मणस्यांह्रिन्यासपङ्क्तिं मनोहराम् ॥ ८० ॥ मम सूनुर्हतोऽनेन यस्येयं पदपद्धतिः । पदपङ्क्तिपथेनैव ततश्चन्द्रणखाऽऽययौ ॥ ८१ ॥ यावत्किञ्चिद्गात्तावत्ससीतालक्ष्मणं पुरः । नेत्राभिरामं रामं साऽपश्यत्तरुतले स्थितम् ॥ ८२ ॥ निरीक्ष्य रामं सा सद्यो रिरंसाविवशाऽभवत् । कामावेशः कामिनीनां शोकोद्रेकेऽपि कोऽप्यहो ॥ ८३ ॥ स्वं रूपं चारु कृत्वाऽथ रन्तुं रामस्तयाऽर्थितः । हसन्नूचे सभार्योऽहमभार्यं भज लक्ष्मणम् ॥ ८४ ॥ तयाऽर्थितस्तथैवैत्य लक्ष्मणोऽप्येवमब्रवीत् । आर्यं गता त्वमार्येव तदलं वार्तयाऽनया ॥ ८५ ॥ सा याञ्चाखण्डनात्पुत्रवधाच्च रुषिताऽधिकम् । आख्यद्गत्वा खरादीनां तत्कृतं तनयक्षयम् ॥ ८६ ॥ विद्याधरसहस्रैस्ते चतुर्दशभिरावृताः । ततोऽभ्येयुरुपद्रोतुं रामं शैलमिव द्विपाः ॥ ८७ ॥ किमार्ये सत्यपि मयि योत्स्यते स्वयमीदृशैः । इति राममयाचिष्ट तेषां युद्धाय लक्ष्मणः ॥ ८८ ॥ गच्छ वत्स ! जयाय त्वं यदि ते सङ्कटं भवेत् । सिंहनादं

ममाहूत्यै कुर्या इत्वन्वशात् स तम् ॥ ८९ ॥ रामाज्ञा प्रतिपद्योच्चैर्लक्ष्मणोऽथ धनुःसखा । गत्वा प्रववृते हन्तुं स तांस्तार्क्ष्य इवोरगान् ॥ ९० ॥ प्रवर्द्धमाने तद्युद्धे स्वभर्तुः पार्ष्णिवृद्धये । गत्वा त्वरितमित्यूचे रावणं रावणस्वसा ॥ ९१ ॥ आयातौ दण्डकारण्ये मनुष्यौ रामलक्ष्मणौ । अनात्मज्ञौ निन्यतुस्ते यामेयं यमगोचरम् ॥ ९२ ॥ श्रुत्वा स्वस्नुपतिस्ते तु सानुजः सबलो ययौ । तत्र सौमित्रिणा सार्द्धं युद्ध्यमानोऽस्ति संप्रति ॥ ९३ ॥ कनिष्ठभ्रातृवीर्येण स्ववीर्येण च गर्वितः । परतोऽस्ति स्थितो रामो विलसन् सीतया सह ॥ ९४ ॥ सीता च रूपलावण्यश्रिया सीमेव योषिताम् । न देवी नोरगी नापि मानुष्यन्यैव काऽपि सा ॥ ९५ ॥ तस्या दासीकृताशेषसुरासुरवधूजनम् । त्रैलोक्येऽप्यप्रतिच्छन्दं रूपं वाचामगोचरम् ॥ ९६ ॥ आसमुद्रमसुद्राङ्क ! यानि कान्यपि भूतले । तवैवार्हन्ति रत्नानि तानि सर्वाणि बान्धव ! ॥९७॥ दृशामनिमिषीकारकारणं रूपसम्पदा । स्त्रीरत्नमेतद्गृह्णीया न चेत्तन्नासि रावणः ॥ ९८ ॥ आरुह्य पुष्पकमथादिदेश दशकन्धरः । विमानराज ! त्वरितं याहि यत्रास्ति जानकी ॥ ९९ ॥ ययौ चात्यन्तवेगेन विमानमनुजानकि । स्पर्द्धयेव दशग्रीवमनसस्तत्र गच्छतः ॥ १०० ॥ दृष्ट्वाऽपि रामादत्युग्रतेजसो दशकन्धरः । बिभाय दूरे तस्थौ च व्याघ्रो हुतवहादिव ॥ १ ॥ इति चाचिन्तयदितः कष्टं रामो दुरासदः । इतश्च सीताहरणमितो व्याघ्र इतस्तटी ॥ २ ॥ विमृश्य च ततो विद्यामस्मार्षीदवलोकनीम् । उपतस्थे च सा मङ्क्षु किङ्करीव कृताञ्जलिः ॥ ३ ॥ ततश्चाज्ञापयामास तत्कालं तां दशाननः । कुरु साहाय्यमह्नाय मम सीतां हरिष्यतः ॥ ४ ॥ साऽवोचद्वासुकेर्मौलिरत्नमादीयते सुखम् । न तु रामसमीपस्था सीता देवासुरैरपि ॥ ५ ॥ उपायः किन्त्वसावस्ति यायाद् येनैष लक्ष्मणम् । तस्यैव सिंहनादेन सङ्केतो ह्यनयोरयम् ॥ ६ ॥ एवं कुर्विति तेनोक्ता

व्रजित्वा परतस्ततः । सा साक्षादिव सौमित्रिः सिंहनादं विनिर्ममे ॥ ७ ॥ तं श्रुत्वा मैथिलीं तत्र मुक्त्वा रामो ययौ द्रुतम् । महतामपि मोहाय भवेन्माया हि मायिनाम् ॥ ८ ॥ अथोत्तीर्य दशग्रीव सीतामारोप्य पुष्पके । त्वां हरन् रावणोऽस्मीति कथयन्नभसा ययौ ॥ ९ ॥ हा नाथ विद्विपन्माथ राम हा वत्स लक्ष्मण । हा तातपाद हा भ्रातर्भामण्डल महाभुज ॥ १० ॥ सीता वो ह्रियतेऽनेन काकेनेव बलिश्छलात् । एवं सीता रुरोदोच्चै रोदयन्तीव रोदसीम् ॥ ११ ॥ मा भैषी पुत्रि मा भैषीः क रे यासि निशाचर । रोषादिति वदन् दूराज्जटायुस्तमधावत ॥ ॥ १२ ॥ भामण्डलानुगश्चैकः कोऽपि विद्याधराग्रणीः । डुढौके दशकण्ठ रे तिष्ठ तिष्ठेति तर्जयन् ॥ १३ ॥ जटायुर्विकटाटोपकरजत्रोटिकोटिभि । प्रणिहन्तु दशग्रीवोरसि प्रववृते तत ॥ १४ ॥ रे जीवितस्य तृप्तोऽसि जरद्गृध्रेति विब्रुवन् । दशास्यश्चन्द्रहासासिमाकृष्य निजघान तम् ॥ १५ ॥ तस्य विद्याधरस्यापि विद्यां दशमुखोऽहरत् । निकृत्तपक्ष पक्षीव सोऽपविद्योऽपतद्भुवि ॥ १६ ॥ रावणोऽगात्ततो लङ्कां सीतां चोपवनेऽमुचत् । तां प्रलोभयितु तत्र त्रिजटामादिदेश च ॥ १७ ॥ रामस्यापि हतामित्रः सौमित्रिः सम्मुखोऽभवत् । आर्यामार्य ! विमुच्यैका किमागा इति चाब्रवीत् ॥ १८ ॥ आहूतः सिंहनादेन तव वैधुर्यलक्ष्मणा । लक्ष्मणाहमिहायातो व्याजहारेति राघव' ॥ १९ ॥ लक्ष्मणोऽप्यवदच्चक्रे सिंहनादो मया न हि । श्रुतश्चार्येण तन्नून वय केनापि वञ्चिताः ॥ २० ॥ अपनेतु सत्यमार्यामपनीतोऽस्युपायतः । सिंहनादस्य करणे शङ्के स्तोक न कारणम् ॥ २१ ॥ ब्रुवन् साध्विति रामोऽपि स्वस्थानेऽगात्सलक्ष्मणः । सीतामपश्यन् कासीति विलपन्मूर्च्छितोऽपतत् । २२ ॥ त लब्धसज्ञ सौमित्रिरित्यूचे रुदितैरलम् । पौरुष पुरुषाणा हि व्यसनेषु प्रतिक्रिया ॥ २३ ॥

अत्रान्तरे पुमानेकः कश्चिदेत्य ननाम तौ । ताभ्यां पृष्टः स्ववृत्तान्तमेवं व्यज्ञपयच्च सः ॥ २४ ॥ हत्वा पाताललङ्केशं तातं चन्द्रोदरं मम । अश्वस्येव पदे तस्य खरं खररथोऽकरोत् ॥ २५ ॥ गुर्वी च नष्टा मन्माता विराधं नाम मां सुतम् । अन्यत्रासूत तस्याश्च कश्चिदाख्यदिदं मुनिः ॥ २६ ॥ यदा दाशरथिर्हन्ता खरादींस्त्वत्सुतं तदा । पाताललङ्काधिपतिं करिष्यति न संशयः ॥ २७ ॥ तदद्य समयं लब्ध्वा युष्मानस्मि समाश्रितः । पितृवैरिवधक्रीतं पत्तिं जानीथ मां निजम् ॥ २८ ॥ रामस्ततोऽदात्पाताललङ्कां तस्मै महाभुजः । फलन्ति समयज्ञानां स्वामिनः स्वयमेव हि ॥ २९ ॥ तं च स्थापयितुं तत्र गच्छन् रामः सलक्ष्मणः । हृतविद्यं पुरोऽपश्यद्भूस्थं भामण्डलानुगम् ॥ ३० ॥ अथ दाशरथी नत्वा स वृत्तान्तं व्यजिज्ञपत् । आत्मनश्च जटायोश्च सीताया रावणस्य च ॥ ३१ ॥ अथ पाताललङ्कायां ययौ रामः सलक्ष्मणः । सत्यसन्धो विराधं च पि(पै)त्र्ये राज्ये न्यवेशयत् ॥ ३२ ॥

इतश्च साहसगतिर्नाम विद्याधराग्रणीः । खे भ्रमन्नधिकिष्किन्धाधित्यकं समुपाययौ ॥ ३३ ॥ ययौ तदा च किष्किन्धाधिपतिः क्रीडितुं बहिः । सुग्रीवः सपरीवारो राज्ञां हि स्थितिरीदृशी ॥ ३४ ॥ ददर्श साहसगतिस्तदा चान्तःपुरस्थिताम् । सुग्रीवस्य प्रियां नाम्ना तारां तारविलोचनाम् ॥ ३५ ॥ तस्यां लावण्यकूलिन्यां स चिक्रीडिषुरुच्चकैः । इयेष नान्यतो गन्तुं घर्मार्त्त इव कुञ्जरः ॥ ३६ ॥ सोऽस्थात्तथैव तत्रैव निषिद्धगमनः क्षणात् । तां मूर्त्तामिव कामाज्ञामुल्लङ्घयितुमक्षमः ॥ ३७ ॥ रमणी रमणीयेयं रमणीया मया कथम् । इतीच्छाव्याकुलः सोऽप्युपायं क्षणमचिन्तयत् ॥ ३८ ॥ सहसा साहसगतिस्ततः सुग्रीवरूपताम् । स कुशीलत्वकुशलः कुशीलव इवाददे ॥ ३९ ॥ अथासौ विटसुग्रीवः सुग्रीव इति मानिभिः । अङ्गरक्षैरस्खलितः सुग्रीवभवनेऽविशत्

॥ ४० ॥ अन्तःपुरगृहद्वारं स ययौ यावदुत्सुकः । तावद्व्याघुट्य सुग्रीवः स्ववेश्मद्वारमाययौ ॥ ४१ ॥ सुग्रीवस्य प्रवेष्टुं न द्वारं प्राहरिका ददुः । अग्रे प्रविष्टो राजाऽस्ति त्वमन्योऽसीति वादिनः ॥ ४२ ॥ ततश्च सत्यसुग्रीवे स्खल्यमाने स्ववेत्रिभिः । अतुलस्तुमुलो जज्ञे मथ्यमान इवार्णवे ॥ ४३ ॥ सुग्रीवाद्वितयं दृष्ट्वा सन्देहाद्वालिनन्दनः । शुद्धान्तनिश्चव भ्रातुः तद्द्वारं त्वरितो ययौ ॥ ४४ ॥ शुद्धान्ते विटसुग्रीवः प्रविशन् वालिसूनुना । मार्गाद्रिणा सरित्पूर इव प्रस्खलितस्ततः ॥ ४५ ॥ अथामिलन् सैनिकानामक्षौहिण्यश्चतुर्दश । चतुर्दशजगत्सारसर्वस्वानीव सर्वतः ॥ ४६ ॥ द्वयोरपि तयोर्भेदमजानन्तोऽथ सैनिकाः । सत्यसुग्रीवतोऽर्द्धेऽर्द्धे विटसुग्रीवतोऽभवन् ॥ ४७ ॥ ततः प्रववृते युद्धं सैन्ययोरुभयोरपि । कुन्तपातैर्दिवं कुर्वदुल्कापातमयीमिव ॥ ४८ ॥ युयुधे सादिना सादी निषादी च निषादिना । पदातिना पदातिश्च रथिको रथिकेन च ॥ ४९ ॥ चतुरङ्गचमूचक्रविमर्दादथ मेदिनी । अवाप कम्पं मुग्धेव प्रौढप्रियसमागमात् ॥ ५० ॥ एह्येहि रे परगृहप्रवेशश्वन्निति ब्रुवन् । विटसुग्रीवमुद्ग्रीवः सुग्रीवो योद्धुमाह्वत ॥ ५१ ॥ ततश्च विटसुग्रीवो मत्तेभ इव वर्गितः । ऊर्जितं गर्जितं कुर्वन् सम्मुखीनो युधेऽभवत् ॥ ५२ ॥ युयुधाते महायोधौ तौ क्रोधारुणलोचनौ । विदधानौ जगत्त्रासं कीनाशस्येव सोदरौ ॥ ५३ ॥ तौ निशातैर्निशातानि शस्त्रैः शस्त्राण्यथो मिथः । चिच्छेदाते तृणच्छेदं रणच्छेकावुभावपि ॥ ५४ ॥ शस्त्रखण्डैरुच्छलद्भिर्दुद्रुवे खेचरीगणः । महायुद्धे तयोर्वृद्धखण्डो महिषयोरिव ॥ ५५ ॥ तौ छिन्नास्त्रावथान्योन्यममर्षणशिरोमणी । मल्लयुद्धेनास्फलतां पर्वताविव जङ्गमौ ॥ ५६ ॥ उत्पतन्तौ

---

परगृहप्रवेशो सारमेयसदृश ॥

क्षणाद्व्योम्नि निपतन्तौ क्षणाद्भुवि। ताम्रचूडाविवाभातां वीरचूडामणी उभौ ॥५७॥ तौ द्वावपि महाप्राणौ मिथो जेतुमनीश्वरौ। अपसृत्य च दूरेण वृषभाविव तस्थतुः ॥५८॥ पुनर्युद्धेन सुग्रीवः खिन्नः खिन्नतनुस्ततः। वहिर्निर्गत्य किष्किन्धापुरादावासमग्रहीत् ॥५९॥ तत्रैव विटसुग्रीवस्तस्थावस्वस्थमानसः। अन्तःपुरप्रवेशं तु न लेभे वालिनन्दनात् ॥६०॥ सुग्रीवो न्यञ्चितग्रीवमथैवं पर्य्यचिन्तयत्। अहो स्त्रीलम्पटः कूटपटुः कोऽप्येष नो द्विषन् ॥ ६१ ॥ आत्मीया अप्यनात्मीया द्विषन्मायावशीकृताः। अहो वभूवुस्तदसाववस्कन्दो निजैर्हयैः ॥६२॥ मायापराक्रमोत्कृष्टः कथं वध्यो द्विषन् मया। धिग्मां पराक्रमभ्रष्टं वालिनाम्नस्त्रपाकरम् ॥ ६३ ॥ धन्यो महाबली वाली योऽखण्डपुरुषव्रतः। राज्यं तृणमिव त्यक्त्वा यश्च भेजे परं पदम् ॥ ६४ ॥ चन्द्ररश्मिः कुमारो मे बलीयान् जगतोऽप्यसौ। किं तु द्वयोरभेदज्ञः कं रक्षतु निहन्तु कम् ॥ ६५ ॥ इदं तु विदधे साधु साध्वहो चन्द्ररश्मिना। तस्य पापीयसो रुद्धं शुद्धान्ते यत्प्रवेशनम् ॥६६॥ वधाय बलिनोऽमुष्य बलीयांसं श्रयामि कम्। यद् घात्या एव रिपवः स्वतोऽपि परतोऽपि वा ॥६७॥ भूर्भुवःस्वस्त्रयीवीरं मरुत्तमखभञ्जनम्। भजामि विद्विषद्घातहेतवे किं दशाननम् ॥६८॥ असौ किं तु प्रकृत्या स्त्रीलोलस्त्रैलोक्यकण्टकः। तं च मां च निहत्याशु तारामादास्यते स्वयम् ॥६९॥ ईदृशे व्यसने प्राप्ते साहाय्यं कर्तुमीश्वरः। आसीत् खरः खरतरो राघवेण हतः स तु ॥ ७० ॥ तावेव रामसौमित्री गत्वा मित्रीकरोमि तत्। तत्कालोपनतस्यापि यौ विराधस्य राज्यदौ ॥ ७१ ॥ तौ तु पाताललङ्कायामलंकर्मीणदोर्बलौ। विराधस्योपरोधेन तथैवाद्यापि तिष्ठतः ॥ ७२ ॥ एवं विमृश्य सुग्रीवोऽनुशिष्य रहसि स्वयम्। विराधपुर्यां विश्वासभूतं दूतं न्ययोजयत् ॥ ७३ ॥ गत्वा पाताललङ्कायां विराधाय प्रणम्य सः। स्वामिव्यसनवृत्तान्तं कथयित्वाऽब्रवीदिदम् ॥ ७४ ॥

महति व्यसने स्वामी पतितो नस्तदीदृशे । राघवौ शरणीकर्तुं तव द्वारेण वाञ्छति ॥ ७५ ॥ द्रुतमायातु सुग्रीव सता मङ्गो हि पुण्यत । तेनेत्युक्तो दूत एत्य सुग्रीवाय शशस तत् ॥ ७६ ॥ प्रचचालाथ सुग्रीवोऽश्वानां ग्रैवेयकस्वनैः । दिशो मुखरयन् सर्वा वेगाद्दूरमदूरयन् ॥ ७७ ॥ पातालंलङ्कां स प्राप क्षणेनाप्युपपदेरमभवत् । विराध चोपतस्थेऽसावभ्युत्तस्थौ स चापि तम् ॥ ७८ ॥ विराधोऽपि पुरोभूय रामभद्राय तायिने । त नमस्कारयामास तद् ख च व्यजिज्ञपत् ॥ ७९ ॥ सुग्रीवोऽप्येवमूचेऽस्मिन् दु खे त्वमसि मे गतिः । क्षुते हि सर्वथा मूढे शरण तरणि. खलु ॥ ८० ॥ स्वय दु'स्थ्यापि तद्दुःखच्छेद रामोऽभ्युपागमत् । स्वकार्यादधिको यत्नः परकार्ये महीयसाम् ॥ ८१ ॥ सीताहरणवृत्तान्त विराधेनावबोधितः । राम विज्ञपयामास सुग्रीवोऽथ कृताञ्जलिः ॥ ८२ ॥ त्रायमाणस्य ते निग्व तथा द्योतयतो रवेः । न कापि कारणापेक्षा देव वच्मि तथाप्यदः ॥ ८३ ॥ त्वत्प्रसादात् हतारिः सन् ससैन्योऽपि तवानुगः । आनेष्यामि प्रवृत्तिं च सीताया नचिरादहम् ॥ ८४ ॥ ससुग्रीवः प्रतस्थे च किष्किन्धां प्रति राघवः । विराधमनुगच्छन्त सबोध्य विससर्ज च ॥ ८५ ॥ रामभद्रेऽथ किष्किन्धास्कन्धावारमधिष्ठिते । सुग्रीवो विटसुग्रीवमाह्वास्त रणकर्मणे ॥ ८६ ॥ निनदन् विटसुग्रीवोऽप्यागादाह्वानमात्रतः । रणाय नालसाः शूरा भोजनाय द्विजा इव ॥ ८७ ॥ दुर्द्धरैश्चरणन्यासैः कम्पयन्तौ वसुन्धराम् । तावुभावप्ययुध्येतां मत्ताविव वनद्विपौ ॥ ८८ ॥ रामः सरूपौ तौ दृष्ट्वा कोऽस्मदीयः परश्च कः । इति सशयतस्तस्थावुदासीन इव क्षणम् ॥ ८९ ॥ मच-स्त्वेव तावदिति विमृशन् रघुपुङ्गव । वज्रावर्त्ताभिधधनुष्टङ्कारमकरोत्ततः ॥ ९० ॥ धनुष्टङ्कारतस्तस्मात्सा साहसगतेः क्षणात् । रूपान्तरकरी विद्या हरिणीव पलायत ॥ ९१ ॥ विमोह्य मायया सर्वे परदारे रिरससे । पापारोपय रे

चापमिति रामस्ततर्ज तम् ॥ ९२ ॥ एकेनापीषुणा प्राणांस्तस्याहार्षीद्रघूद्वहः । न द्वितीया चपेटा हि हरेर्हरिण-मारणे ॥ ९३ ॥ विराधमिव सुग्रीवं रामो राज्ये न्यवेशयत् । सुग्रीवोऽपि स्वलोकेन प्राग्वदेवानमस्यत ॥ ९४ ॥

इतश्च रामकार्यायागाद्विराधः समं बलैः । स्वामिकृत्यमकृत्वा हि कृतज्ञा नासते सुखम् ॥ ९५ ॥ भामण्डलोऽपि तत्रागाद् विद्याधरचमूवृतः । प्रभुकार्ये कुलीनानामुत्सवो ह्युत्सवादपि ॥ ९६ ॥ जाम्बुवद्धनुमन्नीलनलादीन् विदितौजसः । सुग्रीवश्च स्वसामन्तान् समन्तादप्यजूहवत् ॥ ९७ ॥ विद्याधरचमूचक्रेष्वायातेष्वथ सर्वतः । उपेत्य रामं सुग्रीवः प्रणम्यैवं व्यजिज्ञपत् ॥ ९८ ॥ हनूमानाञ्जनेयोऽयं विजयी पावनञ्जयिः । सीताप्रवृत्त्यै लङ्कायां त्वदादेशाद् व्रजिष्यति ॥ ९९ ॥ रामेणाज्ञापितो दत्त्वा स्वमभिज्ञानमूर्मिकाम् । नभस्वानिव नभसा नभस्वत्तनयो ययौ ॥ २०० ॥ सोऽगात्क्षणेन लङ्कायामुद्याने शिंशपातले । सीतामपश्यद्ध्यायन्तीं नाम रामस्य मन्त्रवत् ॥ १ ॥

तरुशाखातिरोभूतः सीतोत्सङ्गेऽङ्गुलीयकम् । हनूमान् पातयामास तद्दृष्ट्वा मुमुदे च सा ॥ २ ॥ तदैव गत्वा त्रिजटा दशकण्ठं व्यजिज्ञपत् । इयत्कालं विषण्णाऽऽसीत् सानन्दा त्वद्य जानकी ॥ ३ ॥ मन्ये विस्मृतरामेयं रिरंसुर्मयि संप्रति । तद्गत्वा बोध्यतामित्यादिचत् मन्दोदरीं स तु ॥ ४ ॥ ततश्च पत्युर्दूत्येन तत्र मन्दोदरी ययौ । प्रलोभनकृते सीतां विनीता सेत्यवोचत ॥ ५ ॥ अद्वैतैश्वर्य्यसौन्दर्य्यैवर्यस्तावद्दशाननः । त्वमप्यप्रतिरूपैव रूपलावण्यसम्पदा ॥ ६ ॥ यद्यप्यज्ञेन दैवेन युवयोरुभयोरपि । न व्यधाय्युचितो योगस्तथापि ह्यस्तु संप्रति ॥ ७ ॥

(१) हनुमानिति सर्वत्र पाठः ।

उपेत्य भजनीय त भजन्त भज रावणम् । अहमन्याश्च तद्दास्यस्त्वदाज्ञां सुभ्रु ! बिभ्रतु ॥ ८ ॥ सीताऽप्यवोचदा
पापे पतिदूत्यविधायिनि । त्वद्भर्तुरिव वीचेत ग्रस दुर्मुखि कस्तव ॥ ९ ॥ रामस्य पार्श्वे मां विद्धि सौमित्रिमिह
चागतम् । खरादीनिव हन्तु द्राक् धव तव सबान्धवम् ॥ १० ॥ उत्तिष्ठोत्तिष्ठ पापिष्ठे वच्मि नातः पर त्वया ।
सीतया तर्जितैव सा सकोपा प्रययौ ततः ॥ ११ ॥ अथावतीर्य हनुमान् सीता नत्वा कृताञ्जलिः । इत्यूचे देवि
जयति दिष्ट्या रामः सलक्ष्मणः ॥ १२ ॥ त्वत्प्रवृत्तिकृते रामेणादिष्टोऽहमिहागमम् । मयि तत्र गते राम इहैष्यति
रिपुच्छिदे ॥ १३ ॥ पतिदूत हनूमन्तमभिज्ञानसमर्पकम् । प्रीता सीताऽप्यथाशीभिरमोघाभिरनन्दयत् ॥ १४ ॥
हनूमदुपरोधेन रामोदन्तमुदा च सा । एकोनविंशत्युपवासान्ते व्यधित भोजनम् ॥ १५ ॥ प्राभञ्जनिः प्रभञ्जन
इवोद्यानस्य भञ्जने । प्रवृत्तो दशकण्ठस्य बलालोकनकौतुकात् ॥ १६ ॥ भज्यमान तदुद्यान तेन मानमिवोच्चकै ।
उपेत्य दशकण्ठस्याशसन्नुद्यानपालकाः ॥ १७ ॥ आरक्षा रावणादिष्टास्त निहन्तु समागताः । हता हनूमतैकेन
विचिना हि रणे गतिः ॥ १८ ॥ आदिष्टो दशकण्ठेन साटोपः शक्रजित्ततः । तद्बन्धायामुचत्पाशान् पाशैः
स्व सोऽप्यबन्धयत् ॥ १९ ॥ नीतश्चाग्रे दशास्यस्य दलयन् मुकुट पदा । उत्पपातापास्तपाशस्ताडिद्दण्ड इवानिलिः
॥ २० ॥ हन्यतां गृह्यता चैष इति जल्पति रावणे । अनाथामिव सोऽभाङ्क्षीत्तत्पुरीं पाददर्दरैः ॥ २१ ॥ क्रीडां
कृत्वैवमुत्पत्य सुपर्ण इव पावनिः । एत्य राम नमस्कृत्य त वृत्तान्त व्यजिज्ञपत् ॥ २२ ॥ रामस्त गाढमापीड्यो-
रसा सुतमिवौरसम् । लङ्काविजययात्रायै सुग्रीवादीनथादिशत् ॥ २३ ॥ समुद्र रावणारच वद्धा सेतु च राघवः ।
लङ्कापुरीं विमानस्थः सुग्रीवाद्यै सम ययौ ॥ २४ ॥ निवेश्य कटक रामो हसद्वीपान्तरे तत । अववेष्टद्बलैर्लङ्का-

मेकपाटकलीलया ॥ २५ ॥

अत्रान्तरे दशग्रीवं प्रणम्योचे विभीषणः । कनिष्ठस्यापि मे स्वामिन्नद्यैकं वचनं कुरु ॥ २६ ॥ आयातो रामभद्रोऽत्र निजां जायां च याचते । अर्प्यतां तदसौ सीता धर्मोऽप्येवं न बाध्यते ॥ २७ ॥ अथोचे रावणो रोषाद्रे बिभेषि विभीषण । तदेवमुपदेशं मे दत्से कापुरुषोचितम् ॥ २८ ॥ विभीषणो बभाषेऽथ दूरे रामः सलक्ष्मणः । तत्पत्तिरेको हनुमान् दृष्टो देवेन किं न हि ॥ २९ ॥ अस्मद्द्वेषी विपक्षानुरागी ज्ञातोऽसि याहि रे । इति निर्वासितस्तेन ययौ रामं विभीषणः ॥ ३० ॥ लङ्काधिपत्यमेतस्मै रामोऽपि प्रत्यपद्यत । न ह्यौचित्ये विमुह्यन्ति महात्मानः कदाचन ॥ ३१ ॥ बहिर्निर्गत्य लङ्केशसेना राघवसेनया । कांस्यतालं कांस्यतालेनेवास्फलदथोन्वणम् ॥ ३२ ॥ प्राणसर्वस्वदेविन्योर्मिथश्चम्वोर्गतागतम् । जयश्रीः श्रीरिवाकार्षीदुत्तमर्णाधमर्णयोः ॥ ३३ ॥ रामभ्रूसंज्ञयाऽऽज्ञप्ता हनूमत्प्रमुखास्ततः । जगाहिरे द्विपत्सैन्यं सुरा इव महोदधिम् ॥ ३४ ॥ हताः केऽपि धृताः केऽपि नाशिताः केऽपि राक्षसाः । प्रसरद्भी रामवीरैर्दुर्वारैर्वारणैरिव ॥ ३५ ॥ कुम्भकर्णस्तदाकर्ण्य क्रुद्धो वह्निरिव ज्वलन् । मेघनादश्च सावेशः प्रविवेश रणाङ्गणम् ॥ ३६ ॥ तावापतन्तौ कल्पान्तपवनज्वलनाविव । न हि सोढुमशक्येतां रामसैन्यैर्मनागपि ॥ ३७ ॥ सुग्रीवोऽथ रुषोत्पाट्य शिलामिव शिलोच्चयम् । अक्षिपत्कुम्भकर्णाय सोऽपि तं गदयाऽपिषत् ॥ ३८ ॥ पुनर्गदाप्रहारेण पातयित्वा कपीश्वरम् । कक्षायां न्यस्य पौलस्त्यो लङ्कां प्रत्यचलत्ततः ॥ ३९ ॥ मेघवन्निनदन्मेघनादोऽपि मुदितस्ततः । प्लवङ्गान् प्लावयामास निशातशरवृष्टिभिः ॥४०॥ डुढौके तिष्ठ तिष्ठेति भाषमाणोऽरुणेक्षणः । रामोऽथ कुम्भकर्णाय मेघनादाय लक्ष्मणः ॥ ४१ ॥ सुग्रीवोऽप्युत्प-

पाताश्च कृत्वौजो रावणानुजात् । मुष्टौ धृतः कियत्काल ननु तिष्ठति पारद ॥ ४२ ॥ वलित' कुम्भकर्णोऽपि रामेण युयुधे ततः । सौमित्रिणा मेघनादोऽप्रमादः क्षोभयन् जगत् ॥ ४३ ॥ मिलितौ रामपौलस्त्यावब्धी पूर्वापराविव । अभातामुत्तरापाच्याविव लक्ष्मणरावणौ ॥ ४४ ॥ रावणावरज रामो रावणिं लक्ष्मण पुनः । पातयित्वाऽग्रहीत्सत्य रक्षसामपि राक्षस' ॥ ४५ ॥ रावणैरावणो रोषादशेषकपिकुञ्जरान् । पिंषन्नथाययौ युद्धभुव भुवनभीषणः ॥ ४६ ॥ अलमार्य ! स्वय युद्धेनेति राम निवारयन् । सौमित्रिरभ्यमित्रीणो बभूवास्फालयन् धनुः ॥ ४७ ॥ चिर युद्ध्वाऽखिलैरस्त्रैरस्त्रविद्रावणस्तत । जघानामोघया शक्त्या मङ्क्षु वक्षसि लक्ष्मणम् ॥ ४८ ॥ शक्त्या भिन्नोऽपतत्क्षोण्यां लक्ष्मणस्तत्क्षणादपि । तथैव सद्यो रामोऽपि वलवच्छोकशङ्कुना ॥ ४९ ॥ कृत्वा वप्रान् भटैरष्टौ प्राणैरपि हितैषिण । सुग्रीवाद्यास्ततो राम सलक्ष्मणमवेष्टयन् ॥ ५० ॥ मरिष्यत्यद्य सौमित्रिस्तदभावे तदग्रजः । किं मुधा मे रणेनेति रावणोऽगात्पुरीं तत ॥ ५१ ॥ राघव परितो जाते वप्रद्वारचतुष्टये । सुग्रीवप्रमुखास्तस्थुरारक्षीभूय ते निशि ॥ ५२ ॥ भामण्डलमथोपेत्य दक्षिणद्वाररक्षणम् । पूर्वसस्तुत इत्यूचे कोऽपि विद्याधराग्रणी ॥५३॥ अयोध्याया योजनेषु द्वादशस्वस्ति पत्तनम् । कौतुकमङ्गलमिति तत्र द्रोणघनो नृप ॥५४॥ कैकेयीभ्रातुरस्यास्ति विशल्या नाम कन्यका । तस्या स्नानाम्भस स्पर्शे शल्य निर्याति तत्क्षणात् ॥ ५५ ॥ आप्रत्यूषाल्लक्ष्मणश्चेत्तत्स्नानपयसोक्ष्यते । गतशल्यस्तदा जीवेदन्यथा तु न जीवति ॥ ५६ ॥ ततो मत्प्रत्ययाद्रामभद्र विज्ञपय द्रुतम् । कस्यापि दापयादेश तदानयनहेतवे ॥ ५७ ॥ त्वय्यर्थितां स्वामिकार्याय प्रत्यूषे किं करिष्यथ । उदस्ते शकटे हन्त किं कुर्वीत गणाधिपः ॥ ५८ ॥ भामण्डलस्ततो गत्वा तद्रामाय व्यजिज्ञपत् ।

आदिक्षत्तत्कृते रामस्तमेव हनुमद्युतम् ॥ ५९ ॥ ईयतुस्तौ विमानेनायोध्यां पवनरंहसा । प्रासादाङ्के ददृशतुः शयानं भरतं ततः ॥ ६० ॥ भरतस्य प्रबोधाय तौ गीतं चक्रतुः कलम् । राजकार्येऽपि राजान उत्थाप्यन्ते ह्युपायतः ॥ ६१ ॥ विबुध्य भरतेनापि दृष्टः पृष्टः पुरो नमन् । ऊचे भामण्डलः कार्यं नाप्तस्याप्ते प्ररोचना ॥६२॥ सेत्स्यत्येतन्मया तत्रयुषेति भरतस्ततः । तद्विमानाधिरूढोऽगात्पुरं कौतुकमङ्गलम् ॥ ६३ ॥ भरतेन द्रोणघनो विशल्यामथ याचितः । स होद्वाह्य स्त्रीसहस्रसहितां तामदत्त च ॥ ६४ ॥ भामण्डलोऽप्ययोध्यायां मुक्त्वा भरतमुत्सुकः । आययौ सपरीवारविशल्यासंयुतस्ततः ॥ ६५ ॥ ज्वलद्दीपविमानस्थो भीतैः सूर्योदयभ्रमात् । क्षणं दृष्टो निजैः सोऽधाद्विशल्यामुपलक्ष्मणम् ॥ ६६ ॥ तया च पाणिना स्पृष्टाल्लक्ष्मणात्तत्क्षणादपि । निःसृत्य काप्यगाच्छक्तिर्यष्टिनेव महोरगी ॥ ६७ ॥ तस्याः स्नानाम्भसाऽन्येऽपि रामादेशादथोक्षिताः । निःशल्या जज्ञिरे सैन्याः पुनर्जाता इव क्षणात् ॥ ६८ ॥ अस्याः स्नानाम्भसा सेक्तुं कुम्भकर्णादयोऽपि ते । आनीयतामिहेत्युच्चैरादिदेश रघूद्वहः ॥ ६९ ॥ तदानीमेव तैर्देव प्रव्रज्या जगृहे स्वयम् । इति विज्ञपयामासुरारक्षा लक्ष्मणाग्रजम् ॥ ७० ॥ वन्द्यास्तेऽद्य महात्मानो मोच्या मुक्तिपथस्थिताः । इति रामगिराऽऽरक्षैर्नत्वाऽमुच्यन्त ते क्षणात् ॥ ७१ ॥ विशल्यां कन्यकास्ताश्च तदोपायंस्त लक्ष्मणः । रावणोऽपि रणायागादमर्षणशिरोमणिः ॥ ७२ ॥ प्रणम्य रामं सौमित्रिरुत्तस्थेऽधिज्यकार्मुकः । विवाहाद्युत्सवेभ्योऽपि वीराणामुत्सवो रणः ॥ ७३ ॥ यद्यदस्त्रं दशग्रीवो विससर्जातिदारुणम् । तत्ताच्चिच्छेद सौमित्रिरस्त्रैः कदलिकाण्डवत् ॥ ७४ ॥ अस्त्रच्छेदादथ क्रुद्धश्चक्रं चिक्षेप

१ हिते जने हितजनस्य प्ररोचना न भवति । २ ह इति स्फुटार्थेऽव्ययम् ।

रावण । तन्नन्दमणोरस्यपतच्चपेटावज्र धारया ॥ ७५ ॥ तदेवादाय सौमित्री रावणस्याच्छिदच्छिर । निजाश्वैर-
प्यवस्कन्दः पतेत् स्वस्य कदापि हि ॥ ७६ ॥ सीता स्वर्णशलाकेव निर्मला शीलशालिनी । रामेण जगृहे
लङ्काराज्ये न्यस्तो विभीषण ॥ ७७ ॥ शत्रु निहत्य ससहोदरदारमित्रो, रामो ययावथ निजां नगरीमयोध्याम् ।
उत्पन्नया परकलत्ररिरसयाऽपि, कृत्वा कुलक्षयमगात्नरक दशास्यः ॥ २७८ ॥
वसात् ।

॥ इति सीतारावणकथानकम् ॥ ६६ ॥

लावण्यपुण्यावयवां पद सौन्दर्यसम्पदः । कलाकलापकुशलामपि जह्यात्परस्त्रियम् ॥१००॥

दुस्त्यजामपि परस्त्रिय जह्यात्परिहरेत् । दुस्त्यजत्वे हेतूनाह—लावण्यपुण्यावयवा लावण्य स्पृहणीयतारूपादि-
भ्योऽतिरिक्त तेन पुण्याः पवित्रा अवयवा यस्यास्तां, पद स्थान सौन्दर्यसपदो रूपसम्पदः, कला द्वासप्ततिर्लेखाद्याः
स्त्रीजनोचिता तासां कलाप समूहस्तत्र कुशलां प्रवीणाम् । लावण्य, रूप, वैदग्ध्य च परदाराणा दुस्त्यजत्वे
हेतु । अपिशब्दस्त्रिष्वपि हेतुषु सम्बन्धनीयः ॥ १०० ॥

परस्त्रीगमने दोषानभिधाय परस्त्रीविरतान् प्रशसति—

अकलङ्कमनोवृत्ते. परस्त्रीसन्निधावपि । सुदर्शनस्य किं ब्रूमः सुदर्शनसमुन्नते. ? ॥ १०१ ॥

परस्त्रीसन्निधानेऽपि निष्कलङ्कचेतोवृत्तेः सुदर्शनाभिधानस्य महाश्रावकस्य किं ब्रूम कां स्तुतिं कुर्महे ? ।

वचनगोचरातीता स्तुतिरित्यर्थः। सुदर्शनस्य विशेषणं सुदर्शनसमुन्नतेः शोभना दर्शनसमुन्नतिर्यस्मात्तस्य, सुदर्शनप्रभावकस्येत्यर्थः।

सुदर्शनश्च संप्रदायगम्यः। स चायम्—

अस्त्यङ्गदेशेऽत्यलकापुरी चम्पेति तत्र च। दधिवाहन इत्यासीद्राजाऽतिनरवाहनः ॥ १ ॥ अभूत्तस्याभया नाम कलाकौशलशालिनी। महादेवी स्वलावण्यावज्ञातत्रिदशाङ्गना ॥ २ ॥ इतो नगर्यां तस्यां च समग्रवणिगग्रणीः। श्रेष्ठी वृषभदासोऽभूदासीनः श्रेष्ठकर्मणि ॥ ३ ॥ यथार्थनामिका जैनधर्मोपासनकर्मणा। अर्हद्दासीति तस्यासीद् वल्लभा शीलशालिनी ॥ ४ ॥ श्रेष्ठिनस्तस्य महिषीरक्षोऽभूत्सुभगाभिधः। अनैषीन्महिषीर्नित्यं स तु चारयितुं वने ॥ ५ ॥ वनान्निवृत्तः सोऽन्येद्युर्माघमासे दिनात्यये। अपश्यदप्रावरणं कायोत्सर्गस्थितं मुनिम् ॥ ६ ॥ अस्यां हिमानिशि स्थाणुरिव यः स्थास्यति स्थिरम्। असौ धन्यो महात्मेति चिन्तयन् स गृहं ययौ ॥ ७ ॥ महामुनिमवज्ञातहिमानीपातवेदनम्। तमेव चिन्तयन्नार्द्रमना रात्रिं निनाय सः ॥ ८ ॥ अविभातविभावर्यां गृहीत्वा महिषीस्ततः। स ययौ तत्र यत्रासीत् स मुनिः प्रतिमास्थितः ॥ ९ ॥ कल्याणीभक्तिरानम्योपासाञ्चक्रे स तं तदा। अहो नैसर्गिकः कोऽपि विवेकस्तादृशामपि ॥ १० ॥ अत्रान्तरे चण्डरोचिरारोहदुदयाचलम्। श्रद्धया तमिव द्रष्टुं कायोत्सर्गास्थितं मुनिम् ॥ ११ ॥ स नमो अरिहन्ताणमिति वाचमुदीरयन्। द्वितीय इव चण्डांशुरुत्पपात नभस्तले ॥ १२ ॥ आकाशगामिनी नूनमियं विद्येति बुद्धितः। नमस्कारपदं तं तु सुभगो निदधे हृदि ॥ १३ ॥ जाग्रत्स्वपन्नटंस्तिष्ठन्दिवा निशि गृहे बहिः। तदपाठीत् स उच्छिष्टोऽप्येकग्राह्या हि तादृशाः ॥१४॥

ततः पप्रच्छ त श्रेष्ठी विश्वोत्कृष्टप्रभावभृत् । प्राप्त पञ्चपरमेष्ठिनमस्कारपद कुतः ॥ १५ ॥ अशेष महिषीपाल:
कथयामास तत्ततः । साधु भोः साधु भद्रेति शसन् श्रेष्ठी जगाद तम् ॥१६॥ आकाशगमने हेतुरसौ विद्या न केवलम् ।
किन्तु हेतुरसावेव गतौ स्वर्गापवर्गयोः ॥ १७ ॥ यत्किञ्चित्सुन्दर वस्तु दुष्प्राप भुवनत्रये । लीलया प्राप्यते सर्वं
तदमुष्य प्रभावतः ॥ १८ ॥ अस्य पञ्चपरमेष्ठिनमस्कारस्य वैभवम् । परिमातु न शक्तोऽसि वारि वारिनिधेरिव
॥ १९ ॥ साधु प्राप्तमिद भद्र तत्त्वया पुण्ययोगत' । किन्तूच्छिष्टैर्ग्रहीतव्य गुरुनाम न जातुचित् ॥ २० ॥ व्यसनी
व्यसनामिथ न त्यक्तु क्षणमप्यद । अलमसीति तेनोक्त श्रेष्ठी हृष्टोऽब्रवीदिदम् ॥ २१ ॥ तदधीष्वाखिला
पञ्चपरमेष्ठिनमस्क्रियाम् । कल्याणानि यथा ते स्यु. परलोकेहलोकयो. ॥ २२ ॥ ततोऽशेपनमस्कार लब्धार्थमिव
वद्धनः । परावर्त्तयताजस्र सुभगः सुभगाशयः ॥ २३ ॥ महिषीपालकस्यास्य क्षुत्तृष्णावेदनाहरः । परमेष्ठिनमस्कार
प्रकाम समजायत ॥२४॥ एव तस्य नमस्कारपाठव्यसननिन सत. । कियत्यपि गते काले वर्षाकाल समाययौ
॥ २५ ॥ धारानाराचधोरण्या प्रसर्पिण्या निरन्तरम् । अकीलयदिव द्यावापृथिव्यौ नव्यवारिद' ॥२६॥ गृहाद्गृहीत्वा
महिषीः सुभगोऽपि वहिर्गतः । विनिवृत्तोऽन्तराऽपश्यद्घोरपूरा महानदीम् ॥२७॥ ता दृष्ट्वा स मनाग् भीतस्तस्थौ
किञ्चिद्विचिन्तयन् । नदीं तीर्त्वा परक्षेत्रे महिष्यः प्राविशस्तत ॥ २८ ॥ नमस्कार पठन् व्योमयानविद्याधिया
तत । उत्पपात कृतोत्फालो मध्येनदि पपात च ॥२९॥ तत्रान्त कर्दम मग्नः खर. खादिरकीलकः । कृतान्तदन्त-
सोदर्यो हृदयस्य प्रविशेश च ॥ ३० ॥ तथैवावर्त्तयन् पञ्चपरमेष्ठिनमस्क्रियाम् । तदा मर्माविधा तेन कालधर्ममियाय
सः ॥३१॥ श्रेष्ठिपत्न्यास्ततः सोऽर्हद्दास्या. कुक्षाववातरत् । नमस्काररतानां हि सद्गतिर्न विसवदेत् ॥३२॥ तस्मिन्

गर्भस्थिते मासि तार्त्तीयीके व्यतीयुषि। श्रेष्ठिनी श्रेष्ठिने स्वस्य दोहदानित्यचीकथत् ॥३३॥ गन्धोदकैः स्नपयितुं विलेप्तुं च विलेपनैः। आर्चितुं कुसुमैरिच्छाम्यर्हतां प्रतियातनाः ॥३४॥ प्रतिलम्भायितुं साधूनिच्छाम्याच्छादनादिभिः। संघं पूजयितुं दातुं दीनेभ्यश्च मतिर्मम ॥ ३५ ॥ इत्यादिदोहदांस्तस्याः श्रुत्वा मुदितमानसः। चिन्तामणिरिव श्रेष्ठिशिरोमणिरपूरयत् ॥३६॥ ततो नवसु मासेषु दिनेष्वर्द्धाष्टमेषु च। गतेषु श्रेष्ठिनी पुत्रमसूत शुभलक्षणम् ॥३७॥ सद्यो महोत्सवं कृत्वा श्रेष्ठी हृष्टः शुभे दिने। सूनोः सुदर्शन इति यथार्थं नाम निर्ममे ॥ ३८ ॥ वर्द्धमानः क्रमात्पित्रोर्मनोरथ इवोच्चकैः। सुदर्शनो यथौचित्यं जग्राह सकलाः कलाः ॥ ३९ ॥ कन्यां मनोरमां नाम मनोरमकुलाकृतिम्। साक्षादिव रमां श्रेष्ठी तेन तां पर्य्यणाययत् ॥ ४० ॥ सौम्यमूर्त्तिः स हर्षाय पित्रोरेव न केवलम्। जज्ञे राज्ञोऽपि लोकस्य सर्वस्य च शशाङ्कवत् ॥ ४१ ॥ इतो नगर्य्यां तत्राभूद्भूपतेर्हृदयङ्गमः। पुरोधाः कपिलः प्राप्तरोधा विद्यामहोदधेः ॥ ४२ ॥ समं सुदर्शनेनास्य मन्मथेन मधोरिव। अजायत परा प्रीतिः सर्वदाऽप्यविनश्वरी ॥ ४३ ॥ ( युग्मम् ) प्रायः सुदर्शनस्यैव स पुरोधा महात्मनः। रौहिणेय इवोष्णांशोः परिपार्श्वमवर्त्तत ॥ ४४ ॥ कपिलं कपिला नाम भार्याऽपृच्छत्तमन्यदा। विस्मरन्नित्यकर्माणि कियत्कालं नु तिष्ठसे ॥ ४५ ॥ पार्श्वे सुदर्शनस्याहं तिष्ठामीति तदीरिते। कोऽसौ सुदर्शन इति तयोक्तः प्रत्युवाच सः ॥ ४६ ॥ मम मित्रं सतां धुर्यं विश्वैकप्रियदर्शनम्। सुदर्शनं न चेद्वेत्सि तत्त्वं वेत्सि न किञ्चन ॥ ४७ ॥ तं ज्ञापयाधुनापीति तयोक्तः कपिलोऽवदत्। असावृषभदासस्य श्रेष्ठिनस्तनयः सुधीः ॥ ४८ ॥ एष रूपेण पञ्चेषुः

( १ ) प्रतिमाः ( १ ) प्राप्तपारः

कान्त्येन्दुस्तेजसा रविः । गाम्भीर्य्येण महाम्भोधिः क्षमया मुनिसत्तम ॥ ४९ ॥ दानैकचिन्तामाणिक्य गुणमाणिक्यरोहणः । प्रियालापसुधाकुण्ड वसुधामुखमण्डनम् ॥ ५० ॥ खलूक्त्वा खलु यद्वाऽस्य निखिलानपरान् गुणान् । गुणचूडामणेः शील यस्य न स्खलति क्वचित् ॥ ५१॥ कपिला कपिलाच्छ्रुत्वा तद्गुणान् कामविह्वला । चक्रेऽनुराग चपला' प्रायेण द्विजयोषित ॥ ५२ ॥ सुदर्शनाभिसरणोपाय प्रतिदिन ततः । कपिला चिन्तयामास परब्रह्मेव योगिनी ॥ ५३ ॥ अपरेद्युर्नृपादेशाद्ग्रामान्तरमुपेयुषि । कपिले कपिलेयाय सुदर्शननिकेतनम् ॥ ५४ ॥ सा मायाविन्यवोचत्तमद्य त्वत्सुहृदो महत् । शरीरापाटव तेन हेतुना नाययाविह ॥ ५५ ॥ अपाटव त्वद्विरहाद्वपुषो द्विगुण यतः । अतस्त्वामहमाह्वातु प्रेषिता सुहृदा तव ॥ ५६ ॥ नैतज्ज्ञात मयेत्युक्त्वा तदैवागात्स तद्गृहम् । नान्यमायां हि शङ्कन्ते सन्त स्वयममायिनः ॥ ५७ ॥ स तत्र प्रविशन्नूचे क्व नाम सुहृदस्ति मे । सोवाच गम्यतामग्रे शयान सुहृदस्ति ते ॥ ५८ ॥ किञ्चिच्च परिसृप्याग्रे पुनः प्रोचे सुदर्शनः । अत्रापि कपिलो नास्ति किमन्यत्र क्वचिद्ययौ ॥ ५९ ॥ सोचे स्थितो निवातेऽस्ति शरीरापाटवादसौ । मूलापवरक गच्छ वयस्य तत्र पश्य च ॥ ६० ॥ तत्रापि प्रविवेशायमपश्यन् सुहृद ततः । कपिले ! कपिलः क्वास्तीत्युवाच सरलाशयः ॥ ६१ ॥ अवरुद्ध्य ततो द्वार मदनोद्दीपनानि सा । किञ्चित्प्रकाश्य स्वाङ्गानि च्छादयन्त्यच्छवाससा ॥ ६२ ॥ दृढबन्धामपि नीवीं श्लथयित्वाऽभिबध्नती । विलोललोचनाऽवोचद्रोमाञ्चोदञ्चिकञ्चुका ॥ ६३ ॥ (युग्म) नास्तीह कपिलस्तस्मात्कपिलां प्रतिजागृहि । विभेदो भवतः को वा द्वयो कपिलयोर्ननु ॥ ६४ ॥ प्रतिजागरितव्य किं कपिलाया इति ब्रु-

(१) अलम् ।

वन् । सुदर्शनो निजगदे पुनः कपिलभार्यया ॥ ६५ ॥ त्वद्वयस्यः शशंस त्वां यदाऽद्भुतगुणं मम । ततः प्रभृति मामेष दुनोति मदनज्वरः ॥ ६६ ॥ दिष्ट्या मे विरहार्त्तायाश्छद्मनाऽपि त्वदागमः । भुवो ग्रीष्माभितप्ताया इव मेघसमागमः ॥ ६७ ॥ अद्य नाथामि तन्नाथ ! मन्मथोन्माथविह्वलाम् । निजाश्लेषसुधावर्षैराश्वासय चिराय माम् ॥ ६८ ॥ प्रपञ्चः कोऽप्यसावस्या दुर्विचिन्त्यो विधेरपि । धिक् स्त्रीरिति विचिन्त्योचे स प्रत्युत्पन्नधीरिदम् ॥६९॥ यूनां युक्तमिदं किन्तु पैण्डकोऽहमपण्डिते ! । मुधा पुरुषवेषेण मदीयेनासि वञ्चिता ॥ ७० ॥ ततो विरक्ता सद्यः सा याहि याहीति भाषिणी । द्वारमुद्घाटयामास निर्ययौ च सुदर्शनः ॥ ७१ ॥ स्तोकेन मुक्तो नरकद्वारादस्मीति चिन्तयन् । श्रेष्ठिसूनुर्द्रुतपदं प्रपेदे निजमन्दिरम् ॥ ७२ ॥ अतिराक्षसयः कूटादतिशाकिनयश्छलात् । अतिविद्युतश्चापलाद्दारुणाः किमपि स्त्रियः ॥ ७३ ॥ एताभ्यो भीरुरस्मीति प्रत्यश्रौषीद्विमृश्य सः । नातः परं परगृहे यास्यामि क्वचिदेककः ॥ ७४ ॥ निर्मिमाणः स धर्म्याणि कर्माणि शुभकर्मठः । सतां मूर्त्त इवाचारो नावद्यं किञ्चिदाचरत् ॥ ७५ ॥ एकदा तु यथाकालं पुरे तस्मिन्नवर्त्तत । समग्रजगदानन्दपदमिन्द्रमहोत्सवः ॥ ७६ ॥ सुदर्शनपुरोधोभ्यां सहोद्यानं ययौ नृपः । साक्षादिव शरत्कालश्चन्द्रागस्तिविराजितः ॥ ७७ ॥ इतः कपिलया युक्ताऽभया भूपतिमन्वगात् । समारूढा याप्ययाने विमान इव नाकिनी ॥ ७८ ॥ सुदर्शनस्य भार्याऽपि षड्भिः पुत्रैर्मनोरमा । तत्रागाद्यानमारुह्य सतीधर्म इवाङ्गवान् ॥ ७९ ॥ तां दृष्ट्वा कपिलाऽपृच्छत्केयं स्वामिनि ! वर्णिनी । रूपलावण्यसर्वस्वभाण्डागार इवाग्रतः ॥ ८० ॥ ततस्तामभयाऽवादीन्न ज्ञातेयमपि त्वया । सुदर्शनस्य गृहिणी गृहलक्ष्मीरिव

(१) क्लीबः । (२) देवी ।

स्त्रयम् ॥ ८१ ॥ तच्छ्रुत्वा विस्मिता स्माह कपिला देवि ! यद्यसौ । सुदर्शनस्य गृहिणी तदस्याः कौशलं महत् ॥ ८२ ॥ किमस्याः कौशलमिति राज्ञ्योक्ता साऽब्रवीत्पुनः । इयन्ति पुत्रभाण्डानि यदसौ समजीजनत् ॥ ८३ ॥ स्वाधीनपतिका पुत्रानङ्गना जनयेद्यदि । तत्किं कौशलमित्युक्ताऽभयया कपिलाऽवदत् ॥ ८४ ॥ एवं देवि ! भवत्येव पतिर्यदि पुमान् भवेत् । सुदर्शनः पुनरयं षण्डः पुरुषवेषभृत् ॥ ८५ ॥ कथमेतत्त्वया ज्ञातं राज्ञ्येति गदिता ततः । सा सुदर्शनवृत्तान्तं स्वानुभूतमचीकथत् ॥ ८६ ॥ अभयाऽप्यब्रवीदेवं यद्येवं वञ्चिताऽसि तत् । मूढे ! षण्डः परस्त्रीषु न त्वयं निजयोषिति ॥८७॥ ततो विलक्षा कपिला प्रललापेत्यसूयिता । वञ्चिता यद्यहं मूढा प्राज्ञायाः किं तवाधिकम् ॥८८॥ अनयोक्ते मया मुग्धे ! रागतः पाणिना धृतः । द्रवेद्ग्रावाऽपि निःसङ्गः ससङ्गः किं पुनः पुमान् ॥८९॥ साभ्यसूचे कपिलाऽप्येवं मा गर्वमुद्वह । गर्वं वहसि चेद्देवि ! रम्यतां तत्सुदर्शनः ॥ ९० ॥ व्याजहाराभया देवी साहङ्कारमिदं ततः । हला ! रमितमेवैनं मया विद्धि सुदर्शनम् ॥ ९१ ॥ रमणीभिर्विदग्धाभिः कठोरा वनवासिनः । तपस्विनोऽपि रमिताः कोऽसौ मृदुमना गृही ॥ ९२ ॥ रमयामि न यद्येनं प्रविशामि तदाऽनलम् । इत्यालपन्त्या-वुद्यानं प्रपेदाते क्षणेन ते ॥ ९३ ॥ तत्रारमयतां स्वैरं नन्दनेऽप्सरसाविव । अभयाकपिले श्रान्ते स्वं स्वं धाम गते ततः ॥ ९४ ॥ अथ तत्राभया राज्ञी स्वप्रतिज्ञामजिज्ञपत् । धात्रिकां पण्डितां नाम सर्वविज्ञानपण्डिताम् ॥ ९५ ॥ पण्डिताऽप्योचदाः ! पुत्रि ! न युक्तं मन्त्रितं त्वया । अज्ञेऽद्यापि न जानासि धैर्यशक्तिं महात्मनाम् ॥ ९६ ॥ जिनेन्द्रमुनिशुश्रूषानिष्कम्पीकृतमानसः । सुदर्शनः खल्वसौ तत्प्रतिज्ञां धिगिमां तव ॥ ९७ ॥ अन्योऽपि श्रावको नित्यं परनारीसहोदरः । किमुच्यते पुनरसौ महासत्त्वशिरोमणिः ॥९८॥ ब्रह्मचर्यधना नित्यं गुरवो यस्य साधवः ।

कथं कार्येत सोऽब्रह्म गुरुशीलाद्युपासकः ॥ ९९ ॥ सदा गुरुकुलासीनो ध्यानमौनाश्रितः सदा । आनेतुमभिसर्तुं वा स कथं नाम शक्यते ॥१००॥ वरं फणिफणारत्नग्रहणाय प्रतिश्रवः । कदापि न पुनस्तस्य शीलोल्लङ्घनकर्मणे ॥ १ ॥ अथाभयोचे कथमप्येकवारं तमानय । तत ऊर्ध्वमहं सर्वं करिष्यामि न ते च्छलम् ॥ २ ॥ विचिन्त्य चेतसा किञ्चिदित्यवोचत पण्डिता । यद्ययं निश्चयस्ते तदस्त्युपायोऽयमेककः ॥ ३ ॥ पर्वाहे शून्यगेहादौ कायोत्सर्गं करोति सः । तथास्थितो यदि परमानेतव्योऽन्यथा तु न ॥ ४ ॥ उपायः साधुरेषोऽस्मिन् यतितव्यं त्वयाऽन्वहम् । इत्युक्तवत्यां तात्पर्यादेव्यामोमित्युवाच सा ॥ ५ ॥ ततः परं व्यतीतेषु दिवसेषु कियत्स्वपि । विश्वानन्दकृत्कौमुदीमहोत्सव उपाययौ ॥ ६ ॥ अथ राज्ञोत्सवोत्सेकविधित्सोत्सुकचेतसा । आरक्षकाः समादिष्टाः पटहेनेत्यघोषयन् ॥ ७ ॥ सर्वर्द्ध्या सर्वलोकेन कौमुद्युत्सवमीक्षितुम् । अद्योद्यानेऽभिगन्तव्यमिति वो राजशासनम् ॥ ८ ॥ प्रातरेष्यच्चतुर्मासधर्मकर्मक्रियोन्मनाः । श्रुत्वा सुदर्शनस्तत्तु विषादादित्यचिन्तयत् ॥ ९ ॥ मनः श्रेद्धमिदं प्रातश्चैत्यवन्दनकर्मणे । उद्यानगतये चैतत्प्रचण्डं राजशासनम् ॥१०॥ क उपायो भवत्वेवं तावदित्यभिचिन्त्य सः । समर्प्योपायनं भूमिपतिमेवं व्यजिज्ञपत् ॥ ११ ॥ प्रातः पर्वदिनं युष्मत्प्रसादाद्विदधाम्यहम् । देवार्चादीनि (ति) तेनोक्तोऽनुमेने तन्महीपतिः ॥१२॥ द्वितीयेऽह्नि जिनेन्द्राणां भक्त्या स्नात्रं विलेपनम् । अर्चां च रचयंश्चैत्यपरिपाट्यां चचार सः ॥ १३ ॥ ततः सुदर्शनो रात्रौ गृहीत्वा पौषधव्रतम् । कायोत्सर्गेण कस्मिंश्चित्तस्थौ नगरचत्वरे ॥ १४ ॥ पण्डिताऽप्यभयामूचे कदाचित्ते मनोरथाः । पूर्यन्ते परमुद्या-

१ प्रतिज्ञा । २ उत्सुकम् ।

नमद्य त्वमपि मा गमः ॥ १५ ॥ शिरो मे बाधत इति कृत्वोत्तरमिलापतेः । तस्थौ राज्ञी प्रपञ्चे हि सिद्धसारस्वता स्त्रियः ॥ १६ ॥ ततो लेप्यमयीं काममूर्तिमाच्छाद्य वाससा । याने कृत्वा पण्डिताऽगात्प्रवेष्टुं राजवेश्मनि ॥ १७ ॥ किमेतदिति पृच्छद्भिर्वेत्रिभिः स्खलिता तु सा । इत्यूचे पण्डिता भाण्डागारिकी कूटसम्पदाम् ॥ १८ ॥ शरीरकारणाद्देवी नाद्योद्यानं ययौ ततः । पूजां स्मरादिदेवानां वेश्मन्येव करिष्यति ॥ १९ ॥ इयं प्रवेश्यते तस्मात्प्रतिमा पुष्पधन्वनः । अप्यन्यासां देवतानां प्रवेश्या ह्यद्य मूर्तयः ॥ २० ॥ तदिमां दर्शयित्वैव याहीति द्वाःस्थभाषिता । सा काममूर्तिमुद्धाट्यादर्शयच्च जगाम च ॥ २१ ॥ सा प्रतीहारमोहाय गृहीताऽपरमूर्तिका । द्वित्रिश्च प्रविवेशाहो नारीणां छद्मकौशलम् ॥ २२ ॥ याने सुदर्शनं न्यस्योत्तरीयेण पिधाय च । द्वाःस्थैरस्खलिताऽनीयाभयायाः पण्डिताऽर्पयत् ॥ २३ ॥ आविर्विकारा साऽनेकप्रकारं मदनातुरा । अभया सद्योभयितुमित्यभाषत तं ततः ॥ २४ ॥ कन्दर्पो मां दुनोत्येष निःशङ्कं निशितैः शरैः । कन्दर्पप्रतिरूपस्त्वच्छ्रितोऽसि शरणं मया ॥ २५ ॥ शरण्यः शरणायातामार्तां त्रायस्व नाथ ! माम् । परकार्ये महीयांसो ह्यकार्यमपि कुर्वते ॥ २६ ॥ आनीतश्छद्मनाऽसीति कार्यः कोपस्त्वया न हि । कार्ये त्राणे यदार्तानां गृह्यते न खलु च्छलम् ॥ २७ ॥ ततः सुदर्शनोऽप्युच्चैः परमार्थविचक्षणः । देवताप्रतिमेवास्थात्कायोत्सर्गेण निश्चलः ॥ २८ ॥ पुनरप्यभयाऽवादीद्भावहावमनोहरम् । नाथ ! सम्भाषमाणां मां तूष्णीकं किमुपेक्षसे ॥ २९ ॥ व्रतकष्टमिदं मुञ्च मा कृथास्त्वमतः परम् । मत्सम्प्राप्त्या व्रतफलं विद्धि ससिद्धमात्मनः ॥ ३० ॥ ताम्यन्तीं याचमानां मां नम्रां मानय मानद ! । दैवात्पतितमुत्सङ्गे रत्नं गृह्णासि किं न हि ॥ ३१ ॥ कियद्यापि सौभाग्यगर्वमुन्नाटयिष्यसि । इत्यालपन्त्या जगृहे तया

पाणौ स पाणिना ॥ ३२ ॥ निबिडं मण्डलीभूतपीनोत्तुङ्गस्तनं तया । भुजाभ्यां पद्मिनीनालमृदुलाभ्यां स सस्वजे ॥ ३३ ॥ एवं तदुपसर्गेषु निसर्गेण स धीरधीः । धर्मध्याने निश्चलोऽभूत् किं चलत्यचलः क्वचित् ॥ ३४ ॥ स दध्यौ चेति चेन्मुच्ये कथञ्चिदहमेतया । पारयामि तदोत्सर्गमन्यथाऽनशनं मम ॥ ३५ ॥ अमानिताऽथ घटितभ्रुकुटिः कुटिलाशया । अभया तं भापयितुमित्यभापत निर्भया ॥ ३६ ॥ मुमूर्षो ! मूर्ख ! मा कार्षीर्मान्याया मेऽवमाननाम् । न वेत्सि मानिनी नृणां निग्रहानुग्रहक्षमा ॥ ३७ ॥ मनोभववशाया मे वशमाविश रे जड ! । नो चेद्यमवशं यास्यस्यत्र नास्त्येव संशयः ॥ ३८ ॥ इति संरम्भकाष्ठायां साऽऽरुरोह यथा यथा । धर्मध्याने महात्माऽसावारुरोह तथा तथा ॥ ३९ ॥ एवं कदर्थितो रात्रिं तया ध्यानान्न सोऽचलत् । किं क्षुभ्यते महाम्भोधिः क्वापि नौदण्डताडनैः ॥ ४० ॥ ततः प्रेक्ष्य प्रभातं सा स्वं लिलेख नखैर्वपुः । कोऽप्यसौ मे बलात्कारकारीत्युच्चै रराास च ॥ ४१ ॥ ततः प्राहरिकास्तत्र संभ्रान्ता यावदागमन् । कायोत्सर्गस्थितं तावद्ददृशुस्ते सुदर्शनम् ॥४२॥ ओसन्न सम्भवत्येतदिति द्रुतमुपेत्य तैः । विज्ञप्तो भूपतिस्तत्रायया पप्रच्छ चाभयाम् ॥ ४३ ॥ सोचे संपृच्छ्य देव ! त्वामहं यावदिह स्थिता । एषोऽकस्मादिहायातो दृष्टस्तावत्पिशाचवत् ॥ ४४ ॥ एष मेष इवोन्मत्तो मन्मथव्यसनी ततः । रिरंसुर्मामयाचिष्ट पापिष्ठश्चाटुकोटिभिः ॥ ४५ ॥ ऊचे मयैष रे मैषीरसतीवत्सतीरपि । शक्यन्ते हि चणकवन्मरिचानि न चर्वितुम् ॥४६॥ ततः परं बलात्कारादेष एवं चकार मे । मया च पूत्कृतमन्यदबलानां बलं न हि ॥ ४७ ॥ असिम्भिदमसम्भाव्यमिति मत्वा महीपतिः । किमेतदिति पप्रच्छ बहुधैव सुदर्शनम् ॥ ४८ ॥ पृष्टोऽपि राज्ञा कृपया किञ्चिन्नोचे सुदर्शनः । परतापोपशान्त्यै हि निघृष्टमपि चन्दनम्

॥ ४९ ॥ ततः सम्भावयामास दोषं तस्यापि भूपतिः । पारदारिकदस्यूनां तूष्णीकत्वं हि लक्षणम् ॥ ५० ॥ इत्यादिदेश स क्रोधात्सकलेऽप्यत्र पत्तने । दोषप्रख्यापनां कृत्वा पाप एष निगृह्यताम् ॥ ५१ ॥ आरक्षपुरुषैर्दोर्भ्यां स धृत्वोत्पाटितस्ततः । वचसा सिद्धयो राज्ञां मनसेव दिवौकसाम् ॥ ५२ ॥ स मण्डितो मुखे मष्या शरीरे रक्तचन्दनैः । करवीरस्रजा मुण्डे कण्ठे कोशकमालया ॥ ५३ ॥ खरमारोप्य विधृतशूर्पच्छत्रः स तैस्ततः । वाद्यमानेनानकेनारेभे भ्रमयितुं पुरे ॥ ५४ ॥ कृतापराधः शुद्धान्ते वध्यतेऽसौ सुदर्शनः । नात्र दोषो नृपस्येति चक्रुराघोषणां च ते ॥५५॥ न युक्तं सर्वथाऽप्येतन्नेह सम्भवतीदृशम् । इति लोकप्रघोषोऽभूद् हाहारवयुतस्ततः ॥५६॥ एवं च भ्रम्यमाणोऽगाद् द्वारदेशे स्ववेश्मनः । अदृश्यत महासत्या स मनोरमयाऽपि च ॥५७॥ चिन्तयामास सा चैवं सदाचारः पतिर्मम । भूपतिश्च प्रियाचारो दुराचारो विधिर्ध्रुवम् ॥ ५८ ॥ इदमप्यसदथवा ध्रुवमस्य महात्मनः । उपस्थितं फलमिदं प्राक्तनाशुभकर्मणः ॥ ५९ ॥ कोऽपि नास्य प्रतीकारस्तथाप्येष भविष्यति । निश्चित्येति प्रविश्यान्तर्जिनार्चाः साऽर्चयत्ततः ॥ ६० ॥ कायोत्सर्गेण च स्थित्वा सोचे शासनदेवताः । भगवत्यो मम पत्युर्दोषसम्भावनाऽपि न ॥६१॥ परमश्रावकस्यास्य सान्निध्यं चेत्करिष्यथ । तदाऽहं पारयिष्यामि कायोत्सर्गमिमं खलु ॥६२॥ अन्यथैवस्थिताया मे भवत्वनशनं ध्रुवम् । धर्मध्वसे पतिध्वसे किं जीवन्ति कुलस्त्रियः ? ॥६३॥ इतश्च न्यधुरारक्षाः शूलिकायां सुदर्शनम् । अलङ्घनीया भृत्यानां राजाज्ञा हि भयङ्करा ॥ ६४ ॥ स्वर्णाब्जासनतां भेजे शूलाऽप्यस्य महात्मनः । देवतानां प्रभावेन यमदंष्ट्राऽपि कुण्ठति ॥ ६५ ॥ वधाय तस्य चारक्षैर्दृढं व्यापारितः शितः । करवालोऽपतत्कण्ठे पुष्पमाला च सोऽभवत् ॥६६॥ तद्दृष्ट्वा चाकितैरेत्य विज्ञप्तस्तैर्महीपतिः । आरुह्य हस्तिनीं वेगाद्-

यावाधिसुदर्शनम् ॥६७॥ तमालिङ्ग्य महीपालोऽनुतापादित्यवोचत । श्रेष्ठिन्नहि विनष्टोऽसि दिष्ट्याऽऽत्मीयप्रभावतः ॥ ६८ ॥ मया हि तावत्पापेन किं राज्ञाऽसि विनाशितः । नाथः सतामनाथानां धर्मो जागर्त्ति सर्वथा ॥ ६९ ॥ स्त्रीणां मायाप्रधानानां प्रत्ययास्त्वां निहन्ति यः । अविमृश्यकरः पापो नापरो दधिवाहनात् ॥ ७० ॥ किं च किञ्चिदिदं पापं भवताऽप्यस्मि कारितः । असकृद्यन्मया साधो ! तदा पृष्टोऽपि नावदः ॥ ७१ ॥ एवमालपता राज्ञा करिण्यामधिरोप्य सः । नीत्वा स्वहर्म्ये स्नपितश्चन्दनैश्च विलेपितः ॥ ७२ ॥ वस्त्रालङ्कारजातञ्च परिधाप्य सुदर्शनः । राज्ञा पृष्टो रात्रिवृत्तं यथातथमचीकथत् ॥ ७३ ॥ अथ राज्ञीं प्रति क्रुद्धो भूपतिर्निग्रहोद्यतः । सुदर्शनेन न्याषेधि शिरः प्रक्षिप्य पादयोः ॥ ७४ ॥ ततः श्रेष्ठी नृपेणेभमारोप्य पुरमध्यतः । महाविभूत्या तद्वेश्म नायितो न्यायतायिना ॥७५॥ अभयाऽप्येतदाकर्ण्योद्बध्यात्मानं व्यपद्यत । परद्रोहकराः पापाः स्वयमेव पतन्ति हि ॥७६॥ पण्डिताऽपि प्रणश्यागात्पाटलीपुत्रपत्तनम् । अवसद्देवदत्ताया गणिकायाश्च सन्निधौ ॥ ७७ ॥ तत्रापि पण्डिता नित्यं तथाऽऽशंसत्सुदर्शनम् । दर्शनेऽस्य यथा देवदत्ताऽभूद्भृशमुत्सुका ॥ ७८ ॥ सुदर्शनोऽपि संसारविरक्तो व्रतमग्रहीत् । उपसृत्य गुरोः पार्श्वे रत्नमम्भोनिधेरिव ॥ ७९ ॥ तपःकृशाङ्ग एकाङ्गविहारप्रतिमास्थितः । स क्रमा-द्विहरन् प्राप पाटलीपुत्रपत्तनम् ॥ ८० ॥ भिक्षार्थं पर्यटंस्तत्र दृष्टः पण्डितया च सः । कथितो देवदत्तायाः सा तया तमजूहवत् ॥ ८१ ॥ भिक्षाव्याजात्तयाऽऽहूतस्तत्रापि स मुनिर्ययौ । विमर्शमविधायैव सापायनिरपाययोः ॥ ८२ ॥ देवदत्ता ततो द्वारं पिधाय तमनेकधा । दिनं कदर्थयामास चुक्षोभ स मुनिर्न तु ॥ ८३ ॥ अथ मुक्तो-ऽनया सायमुद्यानं गतवानसौ । तत्रापि दृष्टोऽभयया व्यन्तरीभूतया तया ॥८४॥ कदर्थयितुमारेभे प्राक्कर्मस्मरणादसौ

ऋण वैर च जन्तूनां नश्येज्जन्मान्तरेऽपि न ॥ ८५ ॥ क्लिश्यमानो बहु तया महासत्त्व सुदर्शन । आरोहत् क्षपकश्रेणिमपूर्वकरणक्रमात् ॥ ८६ ॥ ततः स भगवान् प्राप केवलज्ञानमुज्ज्वलम् । तस्य केवलमहिमा सद्यश्चक्रे सुरासुरैः ॥ ८७ ॥ उद्दिधीर्षुर्भवाज्जन्तून् स चक्रे धर्मदेशनाम् । लोकोदयायाभ्युदयस्तादृशानां हि जायते ॥ ८८ ॥ तस्य देशनया तत्राबुद्ध्यन्तान्ये न केवलम् । देवदत्ता पण्डिता च व्यन्तरी च व्यबुद्ध्यत ॥८९॥ स्त्रीसंनिधावपि तेदवमदूषितात्मा, जन्तून् प्रबोध्य शुभदेशनया क्रमेण । स्थान सुदर्शनमुनिः परम प्रपेदे जैनेन्द्रशासनजुषां न हि तद्दुरापम् ॥ १९० ॥

॥ इति सुदर्शनश्रेष्ठिकथानकम् ॥ १०१ ॥

धर्म्ये कर्मणि न पुरुषा एवाधिक्रियन्ते किन्तु स्त्रीणामप्यधिकारश्चतुर्वर्गे सङ्घे तासामप्यङ्गभूतत्वात् तत पुरुषस्य परदारप्रतिषेधवत् स्त्रीणां परपुरुषगमन प्रतिषेधयति—

ऐश्वर्यराजराजोऽपि रूपमीनध्वजोऽपि च । सीतया रावण इव त्याज्यो नार्या नर पर ॥१०२॥

ऐश्वर्येण विभवेन, राजराजो धनदः स इव राजराज, आस्तामितर । रूपेण सौन्दर्येण, मीनध्वजोऽपि स्मरोऽपि, आस्तामन्यः । त्याज्य परिहरणीय नार्या स्त्रिया परः स्वपतेरन्यो नरः पुरुषः, क इव कया, सीतया रावण इव । सीताचरितमुक्तमेव ॥ १०२ ॥

स्त्रीपुंसयोर्द्वयोरपि परकान्तासक्तत्वस्य फलमाह—

नपुसकत्व तिर्यक्त्व दौर्भाग्य च भवे भवे । भवेन्नराणां स्त्रीणां चान्यकान्तासक्तचेतसाम् ॥१०३॥

नपुंसकत्वं पण्ढत्वं, तिर्यक्त्वं तिर्यग्भावः, दौर्भाग्यमनादेयता, भवे भवे जन्मनि जन्मनि, भवेत् जायेत, नराणां स्त्रीणां च। अन्यकान्तासक्तचेतसामिति श्लिष्टं द्वयोर्विशेषणम्। यदा पुरुषाणां तदा अन्यस्य कान्ता भार्या अन्यकान्ता तदासक्तचेतसाम्। यदा तु स्त्रीणां तदा अन्यः पत्युरपरः स चासौ कान्तश्च कामयिता तत्रासक्तचेतसाम् ॥१०३॥

अब्रह्मनिन्दां कृत्वा ब्रह्मचर्यस्यैहिकं गुणमाह—

**प्राणभूतं चरित्रस्य परब्रह्मैककारणम्। समाचरन् ब्रह्मचर्यं पूजितैरपि पूज्यते ॥ १०४ ॥**

प्राणभूतं जीवितभूतं, चरित्रस्य देशचारित्रस्य सर्वचारित्रस्य च, परब्रह्मणो मोक्षस्य, एकमद्वितीयं, कारणं समाचरन् पालयन्, ब्रह्मचर्यं जितेन्द्रियस्योपस्थनिरोधलक्षणं पूजितैरपि सुरासुरमनुजेन्द्रैः न केवलमन्यैः पूज्यते मनोवाक्कायोपचारपूजाभिः ॥ १०४ ॥

ब्रह्मचर्यस्य पारलौकिकं गुणमाह—

**चिरायुषः सुसंस्थाना दृढसंहनना नराः। तेजस्विनो महावीर्या भवेयुर्ब्रह्मचर्यतः ॥ १०५ ॥**

चिरायुषो दीर्घायुषोऽनुत्तरसुरादिषूत्पादात्, शोभनं संस्थानं समचतुरस्रलक्षणं येषां ते सुसंस्थानाः अनुत्तरसुरादिषूत्पादादेव, दृढं बलवत् संहननमस्थिसञ्चयरूपं वज्रऋषभनाराचाख्यं येषां ते दृढसंहननाः, एतच्च मनुजभवेषूत्पद्यमानानां देवेषु संहननाभावात्, तेजः शरीरकान्तिः प्रभावो वा विद्यते येषां ते तेजस्विनः, महावीर्या बलवत्तमाः तीर्थंकरचक्रवर्त्यादित्वेनोत्पादात्, भवेयुर्जायेरन्, ब्रह्मचर्यतो ब्रह्मचर्यानुभावात् ॥

अत्रान्तरश्लोकाः—

पश्यन्ति कृष्णकुटिलां कबरीमेव योषिताम् । तदभिष्वङ्गजन्मान न दुष्कर्मपरम्पराम् ॥ १ ॥ सीमन्तिनीनां सीमन्त पूर्ण सिंदूररेणुना । पन्थाः सीमन्तकाख्यस्य नरकस्येति लक्ष्यताम् ॥ २ ॥ भ्रूवल्लरीं वर्णिनीना वर्णयन्ति न जानते । मोक्षाध्वनि प्रस्थितानां पुरोगामुरगीमिमाम् ॥ ३ ॥ भङ्गुरान्नयनापाङ्गानङ्गनानां निरीक्षते । हतबुद्धिर्न तु निज भङ्गुर हन्त जीवितम् ॥ ४ ॥ नासावंश प्रशसन्ति स्त्रीणां सरलमुन्नतम् । निजवंश न पश्यन्ति अत्यन्तमनुरागिण ॥ ५ ॥ स्त्रीणां कपोले सङ्क्रान्तमात्मान वीक्ष्य हृष्यति । ससारसरसीपङ्के मज्जन्त वेत्ति नो जड ॥६॥ पिबन्ति रतिसर्वस्वबुद्ध्या बिम्बाधर स्त्रिया । न बुध्यन्ते यत्कृतान्त पिबत्यायुर्दिवानिशम् ॥ ७ ॥ योषिता दशनान् कुन्दसोदरान् बहु मन्वते । स्वदन्तभङ्ग नेक्षन्ते तरसा जरसा कृतम् ॥ ८ ॥ स्मरदोलाश्रिया कर्णपाशान् पश्यति योषिताम् । कण्ठोपकण्ठलुठितान् कालपाशास्तु नात्मन॰ ॥९॥ योषितां प्रोषितमतिर्मुख पश्यत्यनुक्षणम् । क्षणोऽपि हन्त नास्त्यस्य कृतान्तमुखवीक्षणे ॥ १० ॥ नरः स्मरपराधीन स्त्रीकण्ठमवलम्बते । नात्मनो वेत्त्यसनद्य श्वो वा कण्ठावलम्बिनः ॥ ११ ॥ स्त्रीणा भुजलताबन्ध बन्धुर बुध्यते कुधी । न कर्मबन्धनैर्बद्धमात्मानमनुशोचति ॥ १२ ॥ धत्ते स्त्रीपाणिभिः स्पृष्टो हृष्टो रोमाञ्चकण्टकान् । स्मारयन्ति न किं तेऽस्य कूटशाल्मलिकण्टकान् ॥ १३ ॥ कुचकुम्भौ समालिङ्ग्य स्त्रिया शेते सुख जडः । विस्मृता नूनमेतस्य कुम्भीपाकोद्भवा व्यथा ॥ १४ ॥ मध्यमध्यासते मुग्धा मुग्धाक्षीणां क्षणे क्षणे । एतन्मध्य भवाम्भोधेरिति नैते विविञ्चते ॥ १५ ॥ धिग-

( १ ) नष्टमति ।

ङ्गनानां त्रिवलीतरङ्गैर्ह्रियते जनः । त्रिवलीछद्मना ह्येतन्ननु वैतरणीत्रयम् ॥ १६ ॥ स्मरार्त्त मज्जति मनः पुंसां स्त्रीनाभिवापिषु । प्रमादेनापि किं नेदं साम्याम्भसि मुदास्पदे ॥१७॥ स्मरारोहणनिःश्रेणीं स्त्रीणां रोमलतां विदुः । नराः संसारकारायां न पुनर्लोहशृङ्खलाम् ॥ १८ ॥ जघन्या जघनं स्त्रीणां भजन्ति विपुलं मुदा । संसारसिन्धोः पुलिनमिति नूनं न जानते ॥१९॥ भजते करभोरूणामूरूनल्पमतिर्नरः । अनूरूक्रियमाणं तैः सद्गतौ स्वं न बुद्ध्यते ॥२०॥ स्त्रीणां पादैर्हन्यमानमात्मानं बहु मन्यते । हताशो न तु जानाति क्षेप्यमाणमधोगतौ ॥ २१ ॥ दर्शनात् स्पर्शनाच्छ्लेषाद् या हन्ति शमजीवितम् । हेयोग्रविषनागीव वनिता सा विवेकिभिः ॥ २२ ॥ इन्दुलेखेव कुटिला सन्ध्येव क्षणरागिणी । निम्नगेव निम्नगतिर्वर्जनीया नितम्बिनी ॥ २३ ॥ न प्रतिष्ठां न सौजन्यं न दानं न च गौरवम् । न च स्वान्यहितं वामाः पश्यन्ति मदनान्धलाः ॥२४॥ निरङ्कुशा नरे नारी तत्करोत्यसमञ्जसम् । यत्क्रुद्धाः सिंहशार्दूलव्याला अपि न कुर्वते ॥ २५ ॥ दूरतस्ताः परित्याज्याः प्रादुर्भावितदुर्मदाः । विश्वोपतापकारिण्यः करिण्य इव योषितः ॥२६॥ स कोऽपि स्मर्यतां मन्त्रः स देवः कोऽप्युपास्यताम् । न येन स्त्रीपिशाचीयं ग्रसते शीलजीवितम् ॥२७॥ शास्त्रेषु श्रूयते यच्च यच्च लोकेषु गीयते । संवादयन्ति दुःशीलं तन्नार्य्यः कामविह्वलाः ॥२८॥ संपिण्ड्ये-वाहिदंष्ट्राग्नियमजिह्वाविषाङ्कुरान् । जगज्जिघांसुना नार्य्यः कृताः क्रूरेण वेधसा ॥ २९ ॥ यदि स्थिरा भवेद्विद्युत्ति-ष्ठन्ति यदि वायवः । दैवात्तथापि नारीणां न स्थेम्ना स्थीयते मनः ॥३०॥ यद्विना मन्त्रतन्त्राद्यैर्वञ्च्यन्ते चतुरा अपि । इन्द्रजालमिदं हन्त नारीभिः शिक्षितं कुतः ॥३१॥ अपूर्वा वामनेत्राणां मृषावादेषु वैदुषी । प्रत्यक्षाण्यप्यकृ-त्यानि यदपह्नुवते क्षणात् ॥ ३२ ॥ पीतोन्मत्तो यथा लोष्टं सुवर्णं मन्यते जनः । तथा स्त्रीसङ्गजं दुःखं सुखं

मोहान्धमानसः ॥ ३३ ॥ जटी मुण्डी शिखी मौनी नग्नो वल्की तपस्व्यथ । ब्रह्माऽप्यब्रह्मशीलश्चेत्तदा मह्य न रोचते ॥ ३४ ॥ कण्डूयन् कच्छुर कच्छू यथा दुःख सुखीयति । दुर्वारमन्मथावेशविवशो मैथुन तथा ॥ ३५ ॥ नार्यो यैरुपमीयन्ते काञ्चनप्रतिमादिभिः । आलिङ्ग्यालिङ्ग्य तान्येव किमु कामी न तृप्यति ॥ ३६ ॥ यदेवाङ्ग कुत्सनीय गोपनीय च योषिताम् । तत्रैव हि जनो रज्येत् केनान्येन विरज्यताम् ॥ ३७ ॥ मोहादहह नारीणा-मङ्गैर्मांसास्थिनिर्मितै । चन्द्रेन्द्रीवरकुन्दादि सदृशीकृत्य दूषितम् ३८ ॥ नारीं नितम्बजघनस्तनभूरिभारा–मारोपयन्त्युरसि मूढधियो रताय । ससारवारिनिधिमध्यनिमज्जनाय जानन्ति तां न हि शिलां निजकण्ठबद्धाम् ॥ ३९ ॥ भवोदन्वद्वेलां मदनमृगयुव्याधहरिणीं, मदावस्थाहालां विषयमृगतृष्णामरुभुवम् । महामोहध्वान्तोच्चयबहुलपक्षान्तरजनीम्, विपत्खानिं नारीं परिहरत हे श्राद्धसुधिय. ! ॥ ४० ॥ १०५ ॥

सम्प्रति मूर्च्छाफलमुपदर्शयस्तन्नियन्त्रणारूप पञ्चममणुव्रतमाह—

**असन्तोषमविश्वासमारम्भं दु खकारणम् । मत्वा मूर्च्छाफल कुर्यात्परिग्रहनियन्त्रणम् ॥१०६॥**

दुःखकारणमित्यसन्तोषादिभिस्त्रिभिः प्रत्येकमभिसबध्यते । असन्तोषादीनि दुःखकारणानि मूर्च्छाया गर्द्धस्य फलत्वेन विज्ञाय मूर्च्छाहेतो परिग्रहस्य नियन्त्रण नैयत्यमुपासकः कुर्यादिति योग । तत्रासन्तोषस्तुष्ट्यभाव , स दु'खकारणम् । मूर्च्छावान् हि बहुभिरपि धनैर्न सतुष्यति, उत्तरोत्तराशाकदर्थितो दु खमेवानुभवति । परसप-

(१) काम एव मृगयु व्याध तस्य व्याधे वेधने हरिणीम् ।

दुत्कर्षश्च हीनसंपदमसन्तुष्टं दुःखाकरोति । यदाह—

असन्तोषवतां पुंसामपमानः पदे पदे । सन्तोषैश्वर्यसुखिनां दूरे दुर्जनभूमयः ॥ १ ॥

अविश्वासः खल्वपि दुःखकारणम्, अविश्वस्तो ह्यशङ्कनीयेभ्योऽपि शङ्कमानः स्वधनस्य रक्षां कुर्वन्न कचिद्विश्वसिति । यदाह—

उक्खणइ खणइ निहणइ रत्तिं न सुअइ दिआ वि अ ससंको । लिंपइ ठवेइ सययं लंछियपडिलंछियं कुणइ ॥ १ ॥

मूर्च्छापरिगतश्चारम्भं प्राणातिपातादिकं प्रतिपद्यते । तथाहि—

तनयः पितरं पिता च तनयं भ्राता च भ्रातरं हिनस्ति, गृहीतलञ्चश्च कूटसाक्षित्वदायी बह्वनृतं भाषते, बलप्रकर्षात्पथिकजनं मुष्णाति, खनति खात्रं, गृह्णाति बिन्दं, धनलोभात् परदारानभिगच्छति, तथा सेवाकृषिपाशुपाल्यवाणिज्यादि च करोति । मम्मणवणिगिव नद्यादिषु प्रविश्य काष्ठान्याकर्षति । ननु दुःखकारणं मूर्च्छाफलं ज्ञात्वा परिग्रहनियन्त्रणं कुर्यादिति केयं वाचो युक्तिः ? उक्तमत्र—मूर्च्छाकारणत्वात् परिग्रहोऽपि मूर्च्छैव, अथवा "मूर्च्छा परिग्रहः" इति सूत्रकारवचनात् मूर्च्छैव परिग्रह इति निश्चयनयमतेनोच्यते, मूर्च्छामन्तरेण धनधान्यादेरपरिग्रहत्वात् । यदाह—

अपरिग्रह एव भवेद्वस्त्राभरणाद्यलङ्कृतोऽपि पुमान् । ममकारविरहितः सति ममकारे सङ्गवान्नग्नः ॥१॥ तथा—

---

(१) उत्खनति खनति निहन्ति रात्रिं न स्वपिति दिवाऽपि च सशङ्कः । लिम्पति स्थापयति सततं लाञ्छितप्रतिलाञ्छितं करोति ॥ १ ॥ (२) 'बन्दं' इति प्रत्यन्तरपाठः साधीयान् ।

ग्राम गेह च विशन् कर्म च नोकर्म चाददानोऽपि । अपरिग्रहोऽममत्वोऽपरिग्रहो नान्यथा कश्चित् ॥ १ ॥
तथा—

'जं पि वत्थ व पाय वा कबल पायपुञ्छण । त पि सजमलज्जट्ठा धारंति परिहरति अ ॥ १ ॥
नं सो परिग्गहो वुत्तो नायपुत्तेण ताइणा । मुच्छा परिग्गहो वुत्तो इइ वुत्त महेसिणा ॥ २ ॥

इति सर्वमवदातम् ॥ १०६ ॥

प्रकारान्तरेण परिग्रहनियन्त्रणमाह—

परिग्रहमहत्त्वाद्धि मज्जत्येव भवाम्बुधौ। महापोत इव प्राणी त्यजेत्तस्मात् परिग्रहम्॥१०७॥

परिगृह्यत इति परिग्रहो धनधान्यादिस्तस्य महत्त्व निरवधित्व तस्माद्धेतोः मज्जत्येव, अवश्यमेव मज्जति, प्राणी शरीरी, भवे ससारे क इव क ? अम्बुधौ समुद्रे महापोत इव महायानपात्रमिव, यथा निरवधिधनधान्यादिभाराक्रान्तः पोतः समुद्रे मज्जति, तथैवापरिमितपरिग्रह प्राणी नरकादौ निमज्जति । यदाहुः—

" महारभयाए महापरिग्गहयाए कुणिमाहारेण पचिंदियवहेण जीवा नरयाउय अज्जति " । तथा बह्वारम्भ-परिग्रहत्व च नारकस्यायुष इति यस्मादेव तस्मात्त्यजेन्नियन्त्रयेत् परिग्रह धनधान्यादिरूप मूर्च्छारूप वा ॥१०७॥

---

(१) यदपि वस्त्र वा पात्र वा कम्बल वा पादप्रोञ्छनम् । तदपि सयमलज्जार्थ धारयन्ति परिभुञ्जते च ॥ १ ॥
(२) न स परिग्रह उक्त ज्ञातपुत्रेण तायिना । मूर्च्छा परिग्रह उक्त इत्युक्त महर्षिणा ॥ २ ॥
(१) महारम्भतया महापरिग्रहतया कुणिमाहारेण पञ्चेन्द्रियवधेन जीवा नरकायुष्कमर्जन्ति ।

सामान्येन परिग्रहदोषानाह—

**त्रसरेणुसमोऽप्यत्र न गुणः कोऽपि विद्यते। दोषास्तु पर्वतस्थूलाः प्रादुष्षन्ति परिग्रहे ॥१०८॥**

त्रसरेणवो गृहजालान्तःप्रविष्टसूर्यकिरणोपलक्ष्याः सूक्ष्मा द्रव्यविशेषास्तत्समोऽपि तत्प्रमाणोऽपि अत्र परिग्रहे न कश्चन गुणोऽस्ति, न हि परिग्रहबलादामुष्मिकः पुरुषार्थः सिद्ध्यति। यस्तु भोगोपभोगादिः स न गुणः प्रत्युत गर्द्धहेतुत्वाद्दोष एव। योऽपि जिनभवनविधानादिलक्षणः परिग्रहस्य गुणः शास्त्रे वर्ण्यते न स गुणः, किं तु परिग्रहस्य सदुपयोगव्यावर्णनं न तु तदर्थमेव परिग्रहधारणं श्रेयः। यदाहुः—

धर्मार्थं यस्य वित्तेहा तस्यानीहा गरीयसी। प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम् ॥ १ ॥ तथा—

[1]कंचणमणिसोवाणं थंभसहस्सोसियं सुवण्णतलं। जो कारिज्ज जिणहरं तओ वि तवसंजमो अहिओ* ॥ १ ॥

व्यतिरेकमाह—दोषास्तु दोषाः पुनः पर्वतस्थूला अतिमहान्तो वक्ष्यमाणाः परिग्रहे सति प्रादुष्षन्ति प्रादुर्भवन्ति ॥ १०८ ॥

दोषास्तु पर्वतस्थूला इति यदुक्तं तत् प्रपञ्चयति—

---

(१) काञ्चनमणिसोपानं स्तम्भसहस्रोच्छ्रितं सुवर्णतलम्। यः कारयेज्जिनगृहं ततोऽपि तपःसंयमोऽधिकः ॥ १ ॥

(२) 'अणंतगुणो' इति प्रत्यन्तरे * संबोधसत्तरिवृत्तौ तु—

कंचणमणिसोवाणे थम्भसहस्सूसिए सुवन्नतले। जो कारवेज्ज जिणहरे तओवि तवसंजमो अणंतगुणो त्ति ॥

एवं पाठो दृश्यते।

सङ्गाद्भवन्त्यसन्तोऽपि रागद्वेषादयो द्विष.। मुनेरपि चलेच्चेतो यत्तेनान्दोलितात्मन· ॥१०९॥

सङ्गात्परिग्रहाद्धेतोर्भवन्ति प्रादुर्भवन्ति असन्तोऽपि उदयावस्थामप्राप्ता अपि रागद्वेषप्रभृतय शत्रवः । सङ्गवतो हि तन्निबन्धनो राग. प्रादुर्भवति । सङ्गप्रतिपन्थिषु च द्वेष , एव मोहभयादयो वधबन्धादयो नरकपातादयश्च द्रष्टव्या' । तदिद पर्वतस्थूलत्व दोषाणाम् । कथमसन्तोऽपि रागादयो भवन्तीति ? उच्यते—यत् यस्मान्मुनेरपि आस्तामन्यस्य चलेत् प्रशमावस्थायाश्च्यवेत् चेतो मनः तेन सङ्गेन आन्दोलितात्मन अस्थिरीकृतात्मन । मुनिरपि हि सङ्गानङ्गीकुर्वन्मुनित्वाद् भ्रश्यत्येव । यदाह—

'छेओ भेओ वसण आयासकिलेसभयविवागो अ । मरण धम्मब्भसो अरई अत्थाओ सव्वाइ ॥ १ ॥

दोससयमूलजाल पुव्वरिसिविवज्जिय जई वत । अत्थ वहसि अणत्थ कीस निरत्थ तव चरसि ॥ २ ॥

वहबधणमारणसेहणाओ काओ परिग्गहे णत्थि। त जइ परिग्गहो चिय जइधम्मो तो णणु पवचो ॥३॥१०९॥

सामान्येन परिग्रहस्य दोषानभिधाय प्रकृतेन श्रावकधर्मेणाभिसबध्नाति—

संसारमूलमारम्भास्तेषां हेतुः परिग्रह. । तस्मादुपासक· कुर्यादल्पमल्प परिग्रहम् ॥११०॥

---

(१) छेदो भेदो व्यसन आयासक्लेशभयविपाकाश्च । मरण धर्मभ्रश अरतिरर्थात् सर्वाणि ॥ १ ॥

(२) दोषशतमूलजाल पूर्वर्षिविवर्जित यदि वान्तम् । अर्थं वहसि अनर्थं कस्मान्निरर्थं तपश्चरसि ॥ २ ॥

(३) वधबन्धनमारणसेधना का परिग्रहे न सन्ति । तद् यदि परिग्रह एव यतिधर्मस्ततो ननु प्रपञ्च ॥ ३ ॥

आरम्भाः प्राण्युपमर्दादयस्ते संसारस्य मूलम्; एतदविवादसिद्धं, ततः किं तेषामारम्भाणां हेतुः कारणं? परिग्रहः, यत एवं तस्मादुपासकः साधूपासकः परिग्रहं धनधान्यादिकमल्पमल्पं नियतपरिमाणं कुर्यात् ॥ ११० ॥

पुनरपि सिंहावलोकितेन परिग्रहदोषानाह—

**मुष्णन्ति विषयस्तेना दहति स्मरपावकः। रुन्धन्ति वनिताव्याधाः सङ्गैरङ्गीकृतं नरम् ॥१११॥**

सङ्गैर्धनधान्यहिरण्यादिपरिग्रहैरङ्गीकृतं वशीकृतं यथा बहुपरिग्रहं कान्तारगतं पुरुषं चौरा मुष्णन्ति तथा संसारकान्तारगतं विषयाः शब्दादयः संयमसर्वस्वापहारेण मुष्णन्ति निर्द्धनीकुर्वन्ति। यथा वा बहुपरिग्रहं नष्टुमशक्नुवन्तं दीप्तो दवाग्निर्दहति तथा संसारकान्तारगतं मन्मथाग्निश्चिन्तादिना दशप्रकारेण विकारेण दहत्युपतापयति। यथा वा बहुपरिग्रहं कान्तारगतं व्याधा लुब्धका धनशरीरलोभेन रुन्धन्ति पलायितुमपि न ददति, तथा भवकान्तारगतं वनिताः कामिन्यो धनार्थिन्यः शरीरभोगार्थिन्यश्च स्वातन्त्र्यवृत्तिनिषेधेन रुन्धन्ति। अपि च बहुनापि परिग्रहेण काङ्क्षावतां न तृप्तिः सम्भवति अपि त्वसन्तोष एव वर्द्धते। यन्मुनयः—

सुवण्णरुप्पस्स य पव्वया भवे सिआ हु केलाससमा असङ्खया।
नरस्स लुद्धस्स न तेहि किंचि इच्छा हु आगाससमा अणंतिआ ॥ १ ॥

(१) सुवर्णरूप्यस्य च पर्वता भवे स्युः खलु कैलाससमा असङ्ख्यका.।
नरस्य लुब्धस्य न तैः किञ्चित् इच्छा खलु आकाशसमाऽनन्तिका ॥ १ ॥

पुढवी साली जवा चेव हिरण्ण पसुभिस्सह । पडिपुण्ण नालमेगस्स इइ विज्जा तव चरे ॥ २ ॥

कवयोऽप्याहुः—

तृष्णा खनिरगाधेय दुष्पूरा केन पूर्यते । या महद्भिरपि क्षिप्तै पूरणैरेव खन्यते ॥ १ ॥

तथा—

तण्हा अखडिअ च्चिय विहवे अच्चुन्नए वि लहिऊण । सेल पि समारुहिऊण किं व गयणस्स आरूढ ॥१॥१११॥

एतदेवाह—

**तृप्तो न पुत्रैः सगर , कुचिकर्णो न गोधनै । न धान्यैस्तिलकश्रेष्ठी, न नन्द कनकोत्करै ॥११२॥**

सगरो द्वितीयश्चक्रवर्ती, न षष्टिसहस्रसख्यैः पुत्रैः सन्तुष्टस्तृप्तोऽभवत् । कुचिकर्णो नाम कश्चित् स बहुभिरपि गोधनैर्न तृप्तः । तिलको नाम श्रेष्ठी न धान्यैस्तृप्तः । न वा नन्दनृपति कनकराशिभिस्तृप्तः ततोऽसन्तोषहेतुरेव परिग्रह । सम्प्रदायगम्याश्च सगरादयः ।

स चायम्—

आसीत्पुर्यामयोध्यायां जितशत्रुर्महीपति । युवराज सुमित्रोऽभूदुभावप्यनिमावतु ॥ १ ॥ जितशत्रोरभूत्सनु-रजितस्वामितीर्थकृत् । सगरश्चक्रवर्ती च सुमित्रस्य महाभुज ॥ २ ॥ जितशत्रुसुमित्रौ च व्रतं जगृहतुस्ततः ।

( १ ) पृथ्वी शालयो यवा एव हिरण्य पशुभि सह । प्रतिपूर्णं नालमेकस्य इति विदित्वा तपश्चरेत् ।। २ ।।

( २ ) तृष्णा अखण्डिता एव विभवान् अत्युन्नतान् अपि लब्ध्वा । शैलमपि समारुह्य किं वा गगनस्य आरूढम् ॥१॥

राजाऽभूदजितस्वामी सगरो युवराट् पुनः ॥३॥ प्रवव्राजाजितस्वामी गते काले कियत्यपि । राजाऽभूत्सगरश्चक्रवर्त्ती ऋषभस्वनुवत् ॥ ४ ॥ अथ षष्टिसहस्राणि जज्ञिरे तस्य सूनवः । खेदच्छिदः संश्रितानां शाखा इव महातरोः ॥५॥ ज्येष्ठो जह्नुः कुमारोऽभूत्तेषां सगरजन्मनाम् । तेनैकदा तोषितोऽदाद्देवतेव पिता वरम् ॥ ६ ॥ त्वत्प्रसादेन दण्डादिरत्नैः सह सबान्धवः । महीं विचरितुं वाञ्छामीति जह्नुरयाचत ॥७॥ तद्दत्त्वा सगरेणापि विसृष्टः प्राचलत्ततः । जह्नुर्हृतसहस्रांशुः सहस्रैश्छत्रमण्डलैः ॥ ८ ॥ ऋद्ध्या महत्या भक्त्या चार्हच्चैत्यानि पदे पदे । सोऽर्चयन् विचरन्नुर्वी ययावष्टापदं क्रमात् ॥ ९ ॥ तमष्टयोजनोच्छ्रायं चतुर्योजनविस्तृतम् । आरोहत्सह सोदर्यैर्जह्नुर्मितपरिच्छदः ॥ १० ॥ तत्रैकयोजनायाममर्द्धयोजनविस्तृतम् । त्रिगव्यूत्युन्नतं चैत्यं चतुर्द्वारं विवेश सः ॥ ११ ॥ बिम्बानि स्वस्वसंस्थानमानवर्णानि तत्र सः । अर्हतामृषभादीनां यथावत्पर्यपूजयत् ॥ १२ ॥ ववन्दे भरतभ्रातृशतस्तूपांश्च पावनान् । किञ्चिद्विचिन्त्य श्रद्धालुरुच्चैरेवमुवाच च ॥१३॥ अष्टापदसमं स्थानं मन्ये क्वापि न विद्यते । कारयामो वयं यत्र चैत्यमेतदिवापरम् ॥ १४ ॥ मुक्तोऽपि भरतं भुङ्क्ते भरतश्चक्रवर्त्त्यहो । शैले भरतसारेऽस्मिंश्चैत्यव्याजादवस्थितः ॥१५॥ एतदेव कृतं चैत्यमस्माभिश्चेद्विधीयते । भविष्यत्पार्थिवैरस्य लुप्यमानस्य रक्षणम् ॥१६॥ ततः सुरसहस्राधिष्ठितमादाय पाणिना । स दण्डं भ्रामयामास परितोऽष्टापदाचलम् ॥१७॥ चेले योजनसहस्रं दीर्णा कूष्माण्डवन्मही । भ्राम्यता तेन भिन्नानि नागानां भुवनानि च ॥१८॥ तैर्भीतैः शरणं भेजे स्वस्वामी ज्वलनप्रभः । स ज्ञात्वाऽवधिनोपेत्य जह्नुमित्यब्रवीत् क्रुधा ॥ १९ ॥ अनन्तजन्तुनिर्घातकारणं किमकारणं । भवद्भिर्विदधे मच्चैर्दारुणं भूमिदारणम् ॥२०॥ अजितस्वामिभ्रातृव्यैः पुत्रैः सगरचक्रिणः । किमेतत्क्रियते पापमरे रे! कुलपांसनाः! ॥२१॥

जह्नुरूचे मयाऽत्रैत्य चैत्य त्रातुमद कृतम्। युष्मद्भवनमङ्गोऽभूद्यदज्ञानात्स सह्यताम् ॥२२॥ अज्ञानकृतमागोऽद सोढ ते मा कृथा' पुन । इत्युदीर्य निज धाम जगाम ज्वलनप्रभः ॥ २३ ॥ सानुजोऽचिन्तयज्जह्नु कृतेय परिखा परम्। परिपूरिष्यते पांशुपूरै कालेन गच्छता ॥ २४ ॥ तत स कृष्ट्वा दण्डेन गङ्गां तत्राक्षिपन्नृशम्। उपद्रुतानि तत्तोयै पुनर्वेश्मानि भोगिनाम् ॥ २५ ॥ क्रुद्धोऽथैत्य सम नागकुमारैर्ज्वलनप्रभः। तान् दृष्ट्वा भस्मसाच्चक्रे दवानल इव द्रुमान् ॥ २६ ॥ धिग्धिग्नः स्वामिनः प्लुष्टा क्लीबानामिव पश्यताम्। ह्रियेत्ययोध्यासविधे तस्थु-रागत्य सैनिकाः ॥२७॥ स्व मुख दर्शयिष्यामो वक्ष्यामोऽदः कथ प्रभो । इति मन्त्रयतां तेषां कोऽप्येत्येत्यवदद् द्विज' ॥ २८॥ कथयिष्याम्यदो राज्ञो न च मोहो भविष्यति। उत्तरिष्यत्यवद्य वो मा भूत व्याकुला ननु ॥२९॥ इत्युक्त्वा मृतक कञ्चिदादायानाथमभ्यगात् । राजद्वारे मृतापत्य इव स व्यलपत्ततः ॥ ३० ॥ राज्ञाऽप्रच्छि ततोऽवादीदयमेक' सुतो मम। दष्टः सर्पेण निश्चेष्टस्तद्देवो जीवयत्वमुम् ॥ ३१ ॥ अथादिष्टैर्नरेन्द्रेण नरेन्द्रैर्मन्त्र-कौशलम्। निज प्रयुक्त तत्राभूत्तद्भस्मनि हुतोपमम् ॥ ३२ ॥ मृतो जीवयितु शक्यो नाथ तावद्द्विजोऽप्ययम्। कथ नु च्छान्दसो बोध्य इत्यालोच्योचिरेऽथ ते ॥ ३३ ॥ यस्मिन् वेश्मनि नो कोऽपि मृतः पूर्वं ततोऽधुना । भूशमानीयतां रक्षा जीवयामस्तया त्वमुम् ॥ ३४ ॥ ततो द्वाःस्थैर्नृपादेशात्पुर्यां ग्रामेषु चेच्चितम्। गृहं न दृष्ट तत्किञ्चिन्मृतो यत्र न कश्चन ॥ ३५ ॥ राजाऽप्यूचे मदीयेऽपि कुले कुलकरा मृताः। भगवानृषभस्वामी भरतश्च-क्रवर्त्यपि ॥ ३६ ॥ राजा बाहुबलिः सूर्ययशाः सोमयशा अपि । अन्येऽप्यनेकशः केऽपि शिव केऽपि दिव ययु ॥ ३७ ॥ जितशत्रु शिव प्राप सुमित्रस्त्रिदिव तत । सर्वसाधारण मृत्यु स्वसूनोः सहसे न किम् ॥ ३८ ॥

विप्रोऽप्यूचे सत्यमेतत्तथाऽप्येको हि मे सुतः । रक्षणीयस्त्वया दीनानाथत्राणं सतां व्रतम् ॥ ३९ ॥ अथोचे चक्रवर्त्त्येवं हंहो ब्राह्मण ! मा मुहः । शरणं मरणार्त्तौ हि भववैराग्यभावना ॥ ४० ॥ व्याजहार द्विजोऽप्येवं यद्येवं साधु बुद्ध्यसे । महीश ! मा मुहः षष्टिसहस्रसुतमृत्युना ॥ ४१ ॥ ततः स यावद्भूपो हा किमेतदित्यचिन्तयत् । तावत्संकेतिताः सैन्याः सर्वमाख्यन्नुपेत्य ते ॥ ४२ ॥ उदन्तेन ततस्तेन दारुणेनाथ मूर्च्छितः । पपात भूपतिर्भूमौ पर्वतः पविनेव सः ॥ ४३ ॥ लब्धसंज्ञस्ततो राजा रुदित्वा जनवत्क्षणम् । भेजे संसारवैराग्यं चिन्तयामास चेत्यसौ ॥४४॥ अन्वयं मण्डयिष्यन्ति प्रीणयिष्यन्ति मां सुताः । इत्याशा धिग्ममासारं संसारं जानतोऽप्यभूत् ॥ ४५ ॥ द्वित्रैस्त्रिचतुरैः पञ्चषैर्वाऽन्येषां भवेत्कथम् । पुत्रैस्तृप्तिरियन्मात्रैरपि यन्मे बभूव न ॥ ४६ ॥ तृप्तिं कथममी कुर्युस्तावन्तोऽपि ममात्मजाः । ईदृग्गतिमकाण्डेऽयुरतृप्ताः प्राणितस्य ते ॥४७॥ इत्थं विचिन्त्याथ सुतैरतृप्तिकः, स तत्क्षये जह्नुसुतं भगीरथम् । राज्ये निवेश्याजितनाथसन्निधौ, प्रव्रज्य वव्राज तदक्षयं पदम् ॥ ४८ ॥

॥ इति सगरचक्रिकथानकम् ॥

ग्रामः सुघोषो नामाऽभून्मध्ये मगधनीवृतः । कुचिकर्णाभिधानश्च ग्रामणीस्तत्र विश्रुतः ॥ १ ॥ गवां शतसहस्राणि तस्य संजज्ञिरे क्रमात् । बिन्दुना बिन्दुना हन्त भ्रियते हि सरोवरम् ॥ २ ॥ गोपालानां पालनाय सोऽर्पयामास गास्ततः । भव्या मम न ते भव्या इत्ययुध्यन्त ते बहिः ॥ ३ ॥ कुचिकर्णो विभज्यैता आर्पयत् कस्यचित् सिताः । कृष्णाः कस्यापि कस्यापि रक्ताः पीताश्च कस्यचित् ॥ ४ ॥ पृथक् पृथगरण्येषु गोकुलानि न्यवेशयत् । भुञ्जानो दधिपयसी सोऽवसत्तेषु च क्रमात् ॥ ५ ॥ अन्वहं वर्द्धयामास गोष्ठे गोष्ठे स गोधनम् ।

अतृप्तो दधिपयसोः सुराया इव दुर्मद ॥ ६ ॥ तस्याभवदथाजीर्णमथ ऊर्ध्वे सरद्रसम् । प्रदीपनान्त पतितस्येव दाहो महानभूत् ॥ ७ ॥ हा धेनवो हा नवतर्णकाश्च, हा शाकरा वः क कदा च लप्स्ये । स गोधनैरेवमतृप्त एव, मृत्वाऽथ तिर्यग्गतिमाससाद ॥ ८ ॥ ॥ इति कुचिकर्णकथानकम् ।

श्रेष्ठ्यासीत्तिलको नाम पुरेऽचलपुरे पुरा । असौ पुरेषु ग्रामेषु चाकरोद्धान्यसंग्रहम् ॥ १ ॥ माषमुद्गतिलव्रीहि-गोधूमचणकादिकम् । ददौ सार्द्धिकया धान्य काले सार्द्ध च सोऽग्रहीत् ॥ २ ॥ धान्यैर्धान्य धनैर्धान्य धान्य जीवधनैरपि । उपायैश्चाग्रहीद्धान्य ध्यायन् धान्य स तत्त्ववत् ॥ ३ ॥ दुर्भिक्षकाले धान्येभ्यः प्रत्युपात्तैर्महाधनैः । बभार परितो धान्यैरिवासौ धान्यकोष्ठकान् ॥ ४ ॥ पुनः सुभिक्षे धान्य स क्रीत्वा क्रीत्वा समग्रहीत् । लब्धा स्वाद पुमान् यत्र तत्रासक्तिं न मुञ्चति ॥ ५ ॥ कीटकोटिवध नैषोऽजीगणत् कणसग्रहे । पीडां पञ्चेन्द्रियाणा-मप्यतिभाराधिरोपणात् ॥ ६ ॥ नैमित्तः कोऽपि तस्याख्यद्भाविदुर्भिक्षमैषम । सर्वस्वेनाथ सोऽक्रीणात्कणान् पुन-रद्यपिक ॥ ७ ॥ वृद्ध्याऽपि द्रव्यमाकृष्याग्रहीद्धान्यमनेकधा । स्थानाभावे गृहेऽचैप्सीत् किं न कुर्वीत लोभवान् ॥ ८ ॥ असौ जगदमित्रस्य मित्रस्येवोन्मनास्ततः । दुर्भिक्षस्यैष्यतो मार्गमीक्षाञ्चक्रे दिने दिने ॥ ९ ॥ अथ वर्षा प्रवेशेऽपि ववर्षोपेत्य सर्वतः । धारासारैर्घनस्तस्य हृदय दारयन्निव ॥ १० ॥ गोधूममुद्गकलमाश्चणका मकुष्टा, मा पास्तिलास्तदपरेऽपि कणा विनश्य । यास्यन्ति सम्प्रति हहेति स तैरतृप्तो, हृत्स्फोटजातमरणान्नरक प्रपेदे ॥११॥

इति तिलकश्रेष्ठिकथानकम् ॥

---

( १ ) वृषभा । ( २ ) जीवा गवादय त एव धनानि ते ।

प्राच्यां महेन्द्रनगरीप्रतिबिम्बमिवोच्चकैः । आख्यया पाटलीपुत्रमित्यस्ति प्रवरं पुरम् ॥ १ ॥ आसीत्तत्राति-सुत्रामा शत्रुवर्गविसूत्रणे । त्रिखण्डवसुधाधीशो नन्दो नाम नरेश्वरः ॥ २ ॥ सोऽकराणां करं चक्रे सकराणां महाकरम् । महाकराणामपि च किञ्चिच्चक्रे करान्तरम् ॥ ३ ॥ यं कञ्चिद्दोषमुत्पाद्य धनिभ्यो धनमग्रहीत् । छलं वहति भूपानां हलं नेति नयं वदन् ॥ ४ ॥ सर्वोपायैर्द्धनं लोकान्निष्कृपः स उपाददे । अपामब्धिर्नृपोऽर्थानां पात्रं नान्य इति ब्रुवन् ॥ ५ ॥ तथाऽर्थं सोऽग्रहील्लोकाल्लोकोऽभून्निर्धनो यथा । भूमावूर्णायुचीर्णायां न खलु प्राप्यते तृणम् ॥ ६ ॥ हिरण्यनाणकाऽऽख्याऽपि तेन लोकेषु नाशिता । प्रवृत्तो व्यवहारोऽपि चर्मणो नाणकैस्तदा ॥७॥ पाखण्डिनोऽपि वेश्या अप्यसावर्थमदण्डयत् । हुताशनः सर्वभक्षी न हि किञ्चिद्विमुञ्चति ॥ ८ ॥ श्रीवीरमोक्षादे-कोनविंशत्यब्दशतेषु यः । साग्रेषु भावी किं सोऽयं कल्कीति जनवागभूत् ॥ ९ ॥ आक्रोशान् पश्यतोऽप्यस्य भूमिभाजनभोजनः । जनो ददौ गतभयो, भयं भवति भाजने ॥१०॥ स स्वर्णैः पर्वतांश्चक्रे पूरयामास चावटान् । भाण्डागाराणि चापूरि पूर्णकामस्तु नाभवत् ॥ ११ ॥ आकर्ण्य तत्तथाऽयोध्यानाथेनाथ हितैषिणा । तं प्रबोध-यितुं वाग्मी दूतः प्रेषित आगमत् ॥ १२ ॥ सर्वतोऽप्याहृतश्रीकं निःश्रीकं तं तथापि हि । दूतो भूपमथापश्यन्नत्वा चोपाविशत्पुरः ॥ १३ ॥ सोऽनुज्ञातो नृपेणोचे श्रुत्वा मत्स्वामिवाचिकम् । कोपितव्यं न देवेन न हिताश्चाद्रु-भाषिणः ॥ १४ ॥ अवर्णवादो देवस्य यः परम्परया श्रुतः । स प्रत्यक्षीकृतो ह्यद्य न निर्मूला जनश्रुतिः ॥ १५ ॥ अन्यायतोऽर्थलेशोऽपि राज्ञः सर्वयशश्छिदे । अप्येकं तुम्बिकाबीजं गुडभारान् विनाशयेत् ॥ १६ ॥ आत्मभूताः प्रजा राज्ञो राजा न च्छेत्तुमर्हति । क्रव्यादा अपि न क्रव्यं निजमश्नन्ति जातुचित् ॥ १७ ॥ प्रजाः पुषाण पुष्ण-

न्ति पोषिता एव ता नृपम् । वश्याऽपि न झनब्वाही दत्ते दुग्धमपोषिता ॥ १८ ॥ सर्वदोषप्रसूर्लोभो लोभः सर्व-गुणापह । लोभस्तस्यऽयतामेतत्त्वच्छितो वक्ति मत्प्रभुः ॥ १९ ॥ नन्दोऽपि तद्गिरा दावदग्धभूरिव वारिखा । अत्युष्णबाष्पममुचद् दग्धुकाम इवाशु तम् ॥ २० ॥ राजदौवारिको जातु न वध्य इति नन्दराट् । उत्थाय गर्भ-वेश्मान्तः सशिरोऽर्चिरिवाविशत् ॥ २१ ॥ नासौ सदुपदेशानां जवासक इवाम्भसाम् । योग्य इत्यामृशन् दूतोऽ-प्यगात् स्वस्वामिनोऽन्तिकम् ॥ २२ ॥ नन्दोऽप्यन्यायपापोत्थैर्वेदनादानदारुणैः । रोगैरिहापि सम्प्राप्त परमाधार्मि-कैरिव ॥ २३ ॥ वेदनाभिर्दारुणाभिः पीड्यमानो यथा यथा । नन्दश्चक्रन्द लोकोऽभूज्जातानन्दस्तथा तथा ॥२४॥ पच्यमानो भृज्यमानो दह्यमान इव व्यथाम् । अवाप नन्द स्तोक हि सर्वे तादृक्तपाप्मनः ॥ २५ ॥ ये भूतले विनिहिता गिरिवच्च कूटीभूताश्च येऽद्य मम काञ्चनराशयस्ते । कस्य स्युरित्यभिगृणन्नवितृप्त एव, मृत्वा निरन्तभव-दु खमवाप नन्द ॥ २६ ॥

इति नन्दकथानकम् ॥ ११२ ॥

अपि च योगिनामपि परिग्रहमुपगृह्णतां लाममिच्छतां मूलक्षतिरायातेत्याह—

तप श्रुतपरीवारां शमसाम्राज्यसंपदम् । परिग्रहग्रहग्रस्तास्त्यजेयुर्योगिनोऽपि हि ॥ ११३ ॥

योगो रत्नत्रयप्राप्तिस्तद्वन्तो योगिनस्तेऽपि, आसतां पृथग्जना , परिग्रह एव ग्रहस्तद्ग्रस्ता पिशाचकिन इव शमसाम्राज्यसपद स्वाधीनामपि त्यजेयुः, शमस्य वितृष्णतायाः साम्राज्य परमैश्वर्य, तद्रूपा सम्पत् ताम् । साम्राज्य च नैकाकिनो भवतीत्याह—तपःश्रुतपरीवारां तपश्चारित्र, श्रुत सम्यग्ज्ञान, ते एव परीवार परिच्छदो

यस्यास्तां तथाविधाम् शमसाम्राज्यसंपदं स्वाधीनां परित्यज्य सुखार्थिनः परिग्रहलवलुब्धा मूलमुच्छेद्य लाभमिच्छन्तीत्यर्थः ॥ ११३ ॥

इदानीमसन्तोषफलोपदर्शनपूर्वकं सन्तोषफलमाह—

**असन्तोषवतः सौख्यं न शक्रस्य न चक्रिणः । जन्तोः सन्तोषभाजो यदभयस्येव जायते ॥११४॥**

सन्तोषरहितस्य तत्फलभूतं सौख्यं न शक्रस्य देवराजस्य, नापि चक्रिणो मनुजराजस्य, यत्सौख्यं सन्तोषवतो जन्मिनो जायते । कस्येवेत्याह—अभयस्य अभयकुमारस्य श्रेणिकराजपुत्रस्य । स हि पित्रोपनीतमपि राज्यं परिहृत्य शमसाम्राज्यसम्पदं परिगृहीतवानिति ।

कथानकं च सम्प्रदायगम्यम् । स चायम्—

अस्तीह भरतक्षेत्रे केदारमिव सुन्दरम् । विशालशालिकमलं नाम्ना राजगृहं पुरम् ॥ १ ॥ तत्र प्रसेनजिन्नाम नामिताशेषभूपतिः । पतिर्वीरामिवालब्धमध्योऽभूत्पृथिवीपतिः ॥ २ ॥ श्रीमत्पार्श्वजिनाधीशशासनाम्भोजषट्पदः । सम्यग्दर्शनपुण्यात्मा सोऽणुव्रतधरोऽभवत् ॥ ३ ॥ ओजसा तेजसा कान्त्या जितामरकुमारकाः । कुमारास्तस्य बहवो बभूवुः श्रेणिकादयः ॥ ४ ॥ को राज्ययोग्य इत्येषां परीक्षार्थं महीपतिः । एकत्र पायसस्थालान्यशनायैकदाऽऽर्पयत् ॥ ५ ॥ ततो भोक्तुं प्रवृत्तानां कुमाराणाममोचयत् । व्याघ्रानिव व्यात्तवक्त्रान् सारमेयान् स सारथीः ॥ ६ ॥ कुमारा द्रुतमुत्तस्थुरापतत्सु ततः श्वसु । एकस्तु श्रेणिकस्तस्थौ धिया धाम तथैव हि ॥ ७ ॥ सोऽन्यस्थालात्पायसान्नं स्तोकं स्तोकं शुनां ददौ । यावल्लिलिहिरे श्वानस्तावच्च बुभुजे स्वयम् ॥८॥ येन केनाप्युपायेन निषे-

धिप्पत्यरीनयम् । मोक्ष्यते च स्वयं पृथ्वीं राजा तेनेति रञ्जितः ॥ ९ ॥ राजा पुन परीक्षार्थं सुतानामन्यदा ददौ । मोदकानां करण्डांश्च पयस्कुम्भांश्च मुद्रितान् ॥ १० ॥ इमां मुद्रामभञ्जन्तो भुञ्जीध्वं मोदकानमून् । पयः पिबत मा कृत्य छिद्रमित्यादिशन्नृप ॥ ११ ॥ विना श्रेणिकमेतेषां कोऽपि नाभुक्त नापिबत् । बुद्धिसाध्येषु कार्येषु कुर्युरूर्जस्विनोऽपि किम् ? ॥ १२ ॥ चलयित्वा चलयित्वा श्रेणिकोऽथ करण्डकम् । बुभुजे मोदकक्षोद शलाकाविवरच्युतम् ॥ १३ ॥ रौप्यशुक्त्या घटस्याधो गलद्वार्बिन्दुपूर्णया । स पयोऽपि पपौ किं हि दु साध सुधियां धिय' ॥ १४ ॥ तत्प्रेक्ष्य नृपति प्रीतो जातेऽन्येद्युः प्रदीपने । यो यद्गृह्णाति मद्गेहात्तत्तस्येत्यादिशत्सुतान् ॥ १५ ॥ सर्वे गृहीत्वा रत्नानि कुमारा निर्ययुस्ततः । आदाय भम्भां त्वरित श्रेणिकस्तु विनिर्ययौ ॥ १६ ॥ किमेतत्कष्टमित्युक्तो नृपेण श्रेणिकोऽवदत् । जयस्य चिह्न भम्भेय प्रथम पृथिवीभुजाम् ॥ १७ ॥ अस्या शब्देन भूपानां दिग्यात्रामङ्गल भवेत् । रक्षणीया क्षमापालै॰ स्वामिंस्तादृशमात्मवत् ॥ १८ ॥ ततः परीक्षानिर्वाहज्ञात-बुद्धिर्महीपतिः । तस्य प्रीतो ददौ भम्भासार इत्यपराभिधाम् ॥ १९ ॥ राज्यार्हमानिनो मैन राज्यार्हं खलवोऽपरे। ज्ञासिषुरित्यवाज्ञासीच्छ्रेणिक पृथिवीपतिः ॥ २० ॥ पृथक् पृथक् कुमाराणां ददौ देशान्नरेश्वरः । न किञ्चिच्छ्रेणि-कस्यास्तु राज्यमस्यायतावितिं ॥ २१ ॥ ततोऽभिमानी स्वपुरात्कलभः काननादिव । निःसृत्य श्रेणिकोऽगच्छ सूर्ष वेणातट पुरम् ॥ २२ ॥ तत्र च प्रविशन् भद्राभिधस्य श्रेष्ठिनोऽथ स । कर्म लाभोदय मूर्त्तमिवोपाविश-दापणे ॥ २३ ॥ तदा च नगरे तस्मिन् विपुल कश्चिदुत्सव । नव्यदिव्यदुकूलाङ्गरागपौराऽऽकुलोऽभवत् ॥ २४ ॥ प्रभूतक्रायकैरासीत् स श्रेष्ठी व्याकुलस्तदा । कुमारोऽप्यार्पयत्तवृष्णाऽसै पुटीपुटिकादिकम् ॥ २५ ॥ द्रव्य कुमार-

माहात्म्याच्छ्रेष्ठी भूयिष्ठमार्जयत् । पुण्यपुंसां विदेशेऽपि सहचर्यो ननु श्रियः ॥ २६ ॥ अथावितथपुण्यस्य कस्यातिथिरसीत्यथ । श्रेणिकः श्रेष्ठिना पृष्टो भवतामित्यभाषत ॥ २७ ॥ नन्दायोग्यो वरो दृष्टः स्वप्नेऽद्य निशि यो मया । असौ साक्षात् स एवेति श्रेष्ठी चेतस्यचिन्तयत् ॥ २८ ॥ सोऽभाषिष्ट च धन्योऽस्मि यद्भवस्यातिथिर्मम । असावलसमध्येन ननु गङ्गा समागता ॥ २९ ॥ संधृत्याङ्कं ततः श्रेष्ठी तं नीत्वा निजवेश्मनि । स्नपयित्वा परिधाप्य सगौरवमभोजयत् ॥ ३० ॥ एवं च तिष्ठंस्तद्गेहे श्रेणिकः श्रेष्ठिनाऽन्यदा । कन्यां परिणयेमां मे नन्दां नाम्नेत्ययाच्यत ॥३१॥ ममाज्ञातकुलस्यापि कथं दत्से सुतामिति । श्रेणिकेनोक्त ऊचे स ज्ञातं तव गुणैः कुलम् ॥३२॥ ततस्तस्योपरोधेनोदधेरिव सुतां हरिः । श्रेणिकः पर्यणैषीत्तां भवद्धवलमङ्गलम् ॥३३॥ भुञ्जानो विविधान् भोगान् सह वल्लभया तया । अतिष्ठच्छ्रेणिकस्तत्र निकुञ्ज इव कुञ्जरः ॥३४॥ श्रेणिकस्य स्वरूपं तद्विवेदाशु प्रसेनजित् । सहस्राक्षा हि राजानो भवन्ति चरलोचनैः ॥३५॥ उग्रं प्रसेनजिद्रोगं प्रापाथान्तं विदन्निजम् । सुतं श्रेणिकमानेतुं शीघ्रानादिच्चदौष्ट्रिकान् ॥३६॥ औष्ट्रिकेभ्यो ज्ञातयाऽऽर्त्तः पितुरत्यर्त्तिवार्त्तया । नन्दां संबोध्य सस्नेहं प्रतस्थे श्रेणिकस्ततः ॥ ३७ ॥ वयं पाण्डुरकुड्या गोपाला राजगृहे पुरे । आह्वानमन्त्रप्रतिमान्यक्षराणीति चार्पयत् ॥ ३८ ॥ माऽन्या तातस्य रोगार्त्तेर्मदार्त्तिर्भूदिति द्रुतम् । उष्ट्रीं श्रेणिक आरुह्य ययौ राजगृहं पुरम् ॥ ३९ ॥ तं दृष्ट्वा मुदीतो राजा हर्षनेत्राश्रुभिः समम् । राज्येऽभ्यषिञ्चद्विमलैः सुवर्णकलशाम्बुभिः ॥४०॥ राजाऽपि संस्मरन् पार्श्वं जिनं पञ्चनमस्क्रियाम् । चतुःशरणमापन्नो विपद्य त्रिदिवं ययौ ॥४१॥ विश्वं विश्वम्भराभारं बभार श्रेणिकस्ततः । तेन सा गुर्विणी मुक्ता गर्भं नन्दाऽपि दुर्वहम् ॥४२॥ तस्या दोहद इत्यासीद्गजारूढा शरीरिणाम् । महाभूत्योपकुर्वाणा भवाम्यभयदा यदि ॥४३॥

विज्ञपय्याथ राजानं तत्पित्राऽपूरि दोहदः । पूर्णे काले च साऽसूत प्राची रविमिवार्भकम् ॥ ४४ ॥ दोहदार्थानुसारेण तस्याथ दिवसे शुभे । चक्रुरामयकुमार इति मातामहोऽभिधाम् ॥ ४५ ॥ स क्रमाद्ववृधे विद्या निरवद्या पपाठ च । अष्टवर्षोऽभवद्यो द्वासप्तत्यां कलासु च ॥ ४६ ॥ सवयाः कलहे कोऽपि तं कोपादित्यतर्जयत् । किं त्वं जल्पसि यस्याहो पिता विज्ञायते न हि ॥४७॥ ऊचेऽभयकुमारस्तं ननु भद्रः पिता मम । पिता भद्रो भवन्मातुः प्रत्युवाचेति सोऽभयम् ॥ ४८ ॥ नन्दां प्रत्यभयोऽप्यूचे मातः ! को मे पितेत्यथ । अयं तव पिता भद्रः श्रेष्ठी नन्देत्यचीकथत् ॥ ४९ ॥ भद्रस्तव पिता शास मदीयं पितरं ननु । पुत्रेणेत्युदिता नन्दा निरानन्देदमब्रवीत् ॥ ५० ॥ देशान्तरादागतेन परिणीताऽस्मि केनचित् । मम च त्वयि गर्भस्थे तमीयुः केचिदौष्ट्रिकाः ॥ ५१ ॥ रहः स किञ्चिदुक्त्वा तैः सहैव क्वचिदप्यगात् । अद्यापि तं न जानामि कुतस्त्यः कश्चिदित्यहम् ॥ ५२ ॥ स यान् किञ्चिज्जजल्प त्वामिति पृष्टाऽभयेन सा । अक्षराण्यर्पितान्येतानीति पत्रमदर्शयत् ॥ ५३ ॥ वद्धिमान्यामय प्रीतोऽब्रवीन्मम पिता नृपः । पुरे राजगृहे तत्र गच्छामो ननु सम्प्रति ॥५४॥ आपृच्छ्य श्रेष्ठिनं भद्रं सामग्रीसयुतस्ततः । नान्देयो नन्दया सार्द्धं ययौ राजगृहं पुरम् ॥ ५५ ॥ मातरं बहिरुद्याने विमुच्य सपरिच्छदाम् । तत्र स्वल्पपरीवारः प्रविवेशाभयः पुरे ॥ ५६ ॥ इतश्च मेलितान्यासंस्तदा श्रेणिकभूभुजा । शतानि पञ्चैकोनानि मन्त्रिणां मन्त्रसत्रिणाम् ॥ ५७ ॥ मन्त्रि-पञ्चशतीं पूर्णां कर्त्तुं नरपतिस्ततः । लोके गवेषयामास कञ्चिदुत्कृष्टपूरुषम् ॥ ५८ ॥ ततश्च तत्परीक्षार्थं शुष्ककूपे निजोर्मिकाम् । प्रचिक्षेप क्षितिपतिर्लोकानित्यादिदेश च ॥ ५९ ॥ आदास्यति करेणैतामूर्मिकां यस्तटस्थितः । तस्य धीकौशलक्रीता मदीया मन्त्रिधुर्यता ॥ ६० ॥ तेऽप्यूचुर्यदशक्यानुष्ठानमस्मादृशामिदम् । तारा करेण यः

कर्षेत् स इमामूर्मिकामपि ॥ ६१ ॥ ततोऽभयकुमारोऽपि संप्राप्तस्तत्र सस्मितम् । ऊचे किं गृह्यते नैषा, किमेतदपि दुष्करम् ॥ ६२ ॥ तं दृष्ट्वा च जना दध्युः कोऽप्यसावतिशायिधीः । समये मुखरागो हि नृणामाख्याति पौरुषम् ॥ ६३ ॥ ऊचुश्च ते महाभाग ! त्वं गृहाणेत्थमूर्मिकाम् । ऊर्मिकाकर्षणपणो धुर्यतां चैषु मन्त्रिषु ॥६४॥ ततोऽभयकुमारस्तामूर्मिकां कूपमध्यगाम् । आर्द्रगोमयपिण्डेन निजघानोपरि स्थितः ॥ ६५ ॥ प्रक्षिप्योपरि तत्कालं ज्वलन्तं तृणपूलकम् । सद्यः संशोषयामास गोमयं तन्महामतिः ॥ ६६ ॥ नन्दाया नन्दनः सद्यः कारयित्वाऽथ सारणिम् । वारिणाऽपूरयत् कूपं विस्मयेन च तं जनम् ॥ ६७ ॥ तद्गोमयं श्रेणिकसूः करेण तरसाऽऽददे । धीमद्भिः सुप्रयुक्तस्य किमुपायस्य दुष्करम् ? ॥ ६८ ॥ तस्मिन् स्वरूपे चारचैर्विज्ञप्ते जातविस्मयः । नृपोऽभयकुमारं द्रागाजुहावात्मसन्निधौ ॥ ६९ ॥ अभयं श्रेणिकः पुत्रप्रतिपत्त्याऽथ सस्वजे । बन्धुरज्ञायमानोऽपि दृष्टो मोदयते मनः ॥७०॥ कुतस्त्वमागतोऽसीति पृष्टः श्रेणिकभूभुजा । वेणातटादागतोऽहमिति चाभिदधेऽभयः ॥७१॥ राजाऽपृच्छभद्रमुख ! किं भद्र इति विश्रुतः । श्रेष्ठी तत्रास्ति तस्यापि नन्दानाम्नी च नन्दना ॥ ७२ ॥ अस्त्येव सम्यगित्युक्ते तेन भूयोऽपि भूपतिः । ऊचे नन्दोदरिण्यासीत्किमपत्यमजायत ? ॥७३॥ अथाख्यत्कान्तदन्तांशुश्रेणिः श्रेणिकसूरिदम् । देवाभयकुमाराख्यं सा नन्दनमजीजनत् ॥ ७४ ॥ किंरूपः किंगुणः सोऽस्तीत्युदिते सति भूभुजा । ऊचेऽभयः स एवाहं स्वामिन्नस्मीति चिन्त्यताम् ॥ ७५ ॥ परिष्वज्याङ्कमारोप्य समाघ्राय च मूर्द्धनि । स्नेहात् स्नपयितुमिव सिषेच नयनाम्बुभिः॥७६॥ कुशलं वत्स ! ते मातुरिति पृष्टे महीभुजा । इति विज्ञपयामास बद्धाञ्जलिपुटोऽभयः ॥७७॥ अनुस्मरन्ती भृङ्गीव त्वत्पादाम्भोजसङ्गमम् । स्वामिन्नायुष्मती मेऽम्बा बाह्योद्यानेऽस्ति संप्रति ॥७८॥

ततो नन्दां समानेतुममन्दानन्दकन्दलः । न्ययुङ्क्त सर्वसामग्रीमग्रेकृत्य नृपोऽभयम् ॥ ७६ ॥ ततः स्वयमपि प्राज्योत्कण्ठोल्लिखितमानस । नन्दामभिययौ राजा राजहंस इवाब्जिनीम् ॥८०॥ शिथिलीभूतवलयां कपोलश्चुलितालकाम्। अनङ्गनार्चां कवरीधारिणीं मलिनांशुकाम् ॥८१॥ तनोस्तनिम्ना दधतीं द्वितीयेन्दुकलातुलाम् । ददर्श राजा सानन्दो नन्दामुद्यानवासिनीम् ॥ ८२ ॥ (युग्मम्) नन्दामानन्द्य नृपतिर्नीत्वा च स्व निकेतनम् । पट्टराज्ञीपदेऽकार्षीत् सीतामिव रघूद्वह ॥८३॥ भक्तिव पितरि स्वस्य पदातिपरमाणुताम् । मन्वानः साधयामास दुःसाधान् भूभुजोऽभयः ॥ ८४ ॥ अन्यदोज्जयिनीपुर्याश्चण्डप्रद्योतभूपतिः । चलितः सर्वसामग्र्या रोद्धु राजगृह पुरम् ॥८५॥ प्रद्योतो बद्धमुकुटाश्चतुर्दश परे नृपा । तत्रायान्तो जनैर्दृष्टाः परमाधार्मिका इव ॥८६॥ पादूपट(टै)प्लुतैरश्वैः पाटयन्निव मेदिनीम् । आगच्छन् प्रणिधिभ्योऽथ शुश्रुवे श्रेणिकेन स ॥ ८७ ॥ किञ्चिच्च चिन्तयामास प्रद्योतोऽद्य समापतन् । क्रूरग्रह इव क्रुद्धः कार्यो हतबलः कथम् ? ॥ ८८ ॥ ततोऽभयकुमारस्यौत्पत्तिक्यादिधियां निधेः । नृपतिर्मुखमैक्षिष्ट सुधामधुरया दृशा ॥ ८६ ॥ यथार्थनामा राजानमभयोऽथ व्यजिज्ञपत् । का चिन्तोज्जयिनीशोऽद्य भूयाद्युद्धातिथिर्मम ॥६०॥ यदि वा बुद्धिसाध्येऽर्थे शस्त्राशस्त्रिकथा वृथा । बुद्धिमेव प्रयोक्ष्ये तद्बुद्धिर्हि जयकामधुक् ॥६१॥ अथ बाह्येऽरिसैन्यानामावासस्थानभूमिषु । लोहसम्पुटमध्यस्थान् दीनारान् स न्यचीखनत् ॥६२॥ प्रद्योतनृपतेः सैन्यैस्ततो राजगृह पुरम् । पर्यवेष्ट्यत भूगोलः पयोधिसलिलैरिव ॥ ६३ ॥ अथेत्थ प्रेषयामास लेख प्रद्योतभूपते[1] । अभयो गुप्तपुरुषैः परुषेतरभाषिभि ॥ ६४ ॥ शिवादेवीचेल्लणयोर्भेद नेचे मनागपि । तन्मान्योऽसि शिवादेवीस-

( १ ) गच्छद्भि

म्बन्धेनापि सर्वदा ॥ ९५ ॥ तदवन्तीश ! वच्मि त्वामेकान्तहितकाङ्क्षया । सर्वे श्रेणिकराजेन भेदितास्तव भूभुजः ॥ ९६ ॥ दीनाराः प्रेषिताः सन्ति तेभ्यस्तान् कर्त्तुमात्मसात् । ते तानादाय बध्ध्वा त्वामर्पयिष्यन्ति मत्पितुः ॥ ९७ ॥ तदावासेषु दीनारा निखाताः सन्ति तत्कृते । खानयित्वा पश्य को वा दीपे सत्याग्निमीक्षते ॥ ९८ ॥ विदित्वैवं स भूपस्यैकस्यावासमचीखनत् । लब्धास्तत्र च दीनारास्तान् दृष्ट्वाऽऽशु पलायत ॥ ९९ ॥ नष्टे तत्र तु तत्सैन्यं विलोड्याब्धिमिवाखिलम् । हस्त्यश्वाद्याददे सारं मगधेन्द्रः समन्ततः ॥ १०० ॥ नासारूढेन जीवेन वायुवाजेन वाजिना । ततः प्रद्योतनृपतिः कथञ्चित् स्वां पुरीं ययौ ॥ १ ॥ ये चतुर्दश भूपाला ये चान्येऽपि महारथाः । तेऽपि नेशुः काकनाशं हतं सैन्यं ह्यनायकम् ॥ २ ॥ असंयतलुलत्केशैश्छत्रशून्यैश्च मौलिभिः । राजानमनुयान्तस्तेऽप्यापुरुज्जयिनीं पुरीम् ॥ ३ ॥ अभयस्यैव मायेयं वयं नेदृशकारिणः । प्रत्यायितः सशपथं तैरथोज्जयिनीपतिः ॥४॥ कदाचिदूचेऽवन्तीशो मध्येसभममर्षणः । योऽर्पयत्यभयं बध्ध्वा मम सम्पत्स्यते स किम् ॥५॥ पताकं हस्तमुत्क्षिप्य काऽप्येका गणिका ततः । व्यजिज्ञपदवन्तीशमलमस्मीह कर्मणि ॥ ६ ॥ तामादिदेशावन्तीशो यद्येवमनुतिष्ठ तत् । करोम्यर्थादिसाहाय्यं ब्रूहि किं तव संप्रति ? ॥ ७ ॥ सा च दध्यौ यदभयो नोपायैर्गृह्यतेऽपरैः । धर्मच्छद्म तदादाय साधयामि समीहितम् ॥८॥ अयाचत ततश्च द्वे द्वितीयवयसौ स्त्रियौ । ते तदैवार्पयद्राजा ददौ द्रव्यं च पुष्कलम् ॥ ९ ॥ कृतादराः प्रतिदिनमुपास्योपास्य संयताः । बभूवुरुत्कटप्रज्ञास्तास्तिस्रोऽपि बहुश्रुताः ॥१०॥ तास्तिस्रोऽपि ततो जग्मुः श्रेणिकालङ्कृतं पुरम् । जगत्त्रयीं वञ्चयितुं मायाया इव मूर्त्तयः ॥११॥ बाह्योद्याने कृतावासा सा पणस्त्रीमतल्लिका । पत्तनान्तर्ययौ चैत्यपरिपाटीचिकीर्षया ॥ १२ ॥ सा विभूत्याऽतिशा-

यिन्या चैत्ये नृपतिकारिते। प्रविवेश सम ताभ्यां कृत्वा नैषेधिकीत्रयम् ॥ १३ ॥ मालवकैशिकीमुख्यभाषामधुरया गिरा। देव वन्दितुमारेभे सपर्य्यां विरचय्य सा ॥ १४ ॥ तत्राभयकुमारोऽपि ययौ देव विवन्दिषु । आत्मतृतीयां तामग्रे वन्दमानां ददर्श च ॥ १५ ॥ देवदर्शनविघ्नोऽस्या मा भूत्प्रविशता मया। द्वार्येवेत्यभयस्तस्थौ मण्डपान्तर्विवेश न ॥ १६ ॥ प्रणिधानस्तुतिं कृत्वा सा मुक्ताशुक्तिमुद्रया। यावदुत्तस्थुषी तावदभयोऽभ्याजगाम ताम् ॥ १७ ॥ तादृशीं भावनां तस्यास्त वेष प्रशम च तम्। अभयो वर्णयामास सानन्द च जगाद ताम् ॥ १८ ॥ दिष्ट्या भद्रेऽधुना त्वादृक्साधर्मिकसमागमः। साधर्मिकात्परो बन्धुर्न ससारे विवेकिनाम् ॥ १९ ॥ का त्व किमागमः का वा वासभूमिरिमे च के। यकाभ्यां स्वातिराधाभ्यामिन्दुलेखेव शोभसे ॥ २० ॥ व्याजहाराथ सा व्याजश्राविकाऽवन्तिवासिनः। महेभ्यवणिजः पाणिगृहीती विधवा त्वहम् ॥ २१ ॥ इमे च मम पुत्रस्य कलत्रे कालधर्मत। विच्छाय्यभूतां विधवे भग्नवृक्षे लते इव ॥ २२ ॥ व्रतार्थमापपृच्छाते उभे अपि तदैव माम्। विपन्नपतिकानां हि सतीना शरण व्रतम् ॥ २३ ॥ मयाऽप्युक्ते ग्रहीष्यामि निर्वीराऽहमपि व्रतम्। गार्हस्थ्यस्य फल किन्तु गृह्यतां तीर्थयात्रया ॥ २४ ॥ व्रते हि भावत पूजा युज्यते द्रव्यतो न तु। इत्यह तीर्थयात्रार्थमेताभ्यां सह निर्ययौ ॥२५॥ अथेत्थमभयोऽवोचदतिथीभवताद्य न। आतिथेय सतीर्थ्यानां तीर्था दप्यतिपावनम् ॥२६॥ प्रत्युवाचाभय साऽपि युक्तमाह भवान् परम्। कृततीर्थोपवासाऽह भवाम्यद्यातिथिः कथम्? ॥२७॥ अथ तन्निष्ठया हृष्टोऽभयस्तामवदत्पुनः। अवश्य मम तत्प्रातरागन्तव्य निकेतने ॥२८॥ साऽप्यूचे यत्क्षणेनापि जन्मिनो जन्म पूर्यते। अह प्रातरिद कर्ताऽस्मीति जल्पेत्कथ सुधीः? ॥२९॥ आस्त्विदानीमिय भूयः श्वो निमन्त्र्येति

चिन्तयन्। तां विसृज्याभयश्चैत्यं वन्दित्वा स्वगृहं ययौ ॥३०॥ तां निमन्त्र्याभयः प्रातर्गृहचैत्यान्यवन्दयत्। भोजयामास च प्राज्यवस्त्रदानादि च व्यधात् ॥३१॥ निमन्त्रितस्तयाऽन्येद्युर्मितीभूयाभयोऽप्यगात्। साधर्मिकोपरोधेन किं न कुर्वन्ति तादृशाः ? ॥३२॥ तया च विविधैर्भोज्यैरभयोऽकारि भोजनम्। चन्द्रहाससुरामिश्रपानकानि च पायितः ॥ ३३ ॥ भुक्तोत्थितश्च तत्कालं सुष्वाप श्रेणिकात्मजः। आदिमा मद्यपानस्य निद्रा सहचरी खलु ॥ ३४ ॥ तं रथेन स्थाने स्थाने स्थापितैश्चापरै रथैः। अवन्तीं प्रापयामास दुर्लक्ष्यच्छद्मसद्म सा ॥ ३५ ॥ ततोऽभयान्वेषणाय श्रेणिकेन नियोजिताः। स्थाने स्थानेऽन्वेषयन्तस्तत्रापीयुर्गवेषकाः ॥ ३६ ॥ किमिहाभय आयात इत्युक्ता तैरुवाच सा। इहाभयः समायातः परं यातस्तदैव हि ॥ ३७ ॥ वचनप्रत्ययात्तस्या अन्यत्रेयुर्गवेषकाः। स्थाने स्थाने स्थापिताश्वैः साऽप्यवन्तीं समाययौ ॥ ३८ ॥ सा प्रचण्डाऽभयं चण्डप्रद्योतस्यार्पयत्ततः। अभयाऽऽनयनोपायस्वरूपं च व्यजिज्ञपत् ॥ ३९ ॥ तां प्रद्योतोऽप्युवाचैवं न साधु विहितं त्वया। यदमुं धर्मविश्रब्धं त्वं धर्मच्छद्मनाऽऽनयः ॥ ४० ॥ कथासप्ततिसंशंसी मार्जार्य्येव शुकोऽनया। नीतिज्ञोऽपि गृहीतोऽसि जगादेत्यभयं च सः ॥४१॥ अभयोऽप्यब्रवीदेवं त्वमेव मतिमानसि। यस्यैवंविधया बुद्ध्या राजधर्मः प्रवर्द्धते ॥४२॥ लज्जितः कुपितश्चाथ चण्डप्रद्योतभूपतिः। राजहंसमिवाक्षैप्सीदभयं काष्ठपञ्जरे ॥ ४३ ॥ अग्निभीरू रथो देवी शिवा नलगिरिः करी। लोहजङ्घो लेखवाहो राज्ये रत्नानि तस्य तु ॥ ४४ ॥ लोहजङ्घं नृपः प्रैषीद्भृगुकच्छे मुहुर्मुहुः। तद्गतागतसंक्लिष्टास्तत्रत्या इत्यमन्त्रयन् ॥ ४५ ॥ आयात्ययं दिनेनापि पञ्चविंशतियोजनीम्। असकृद्व्याहरत्यस्मान् हन्मः संप्रत्यमुं ततः ॥ ४६ ॥ ते विमृश्येत्यदुस्तस्य शम्बले विषमोदकान्। तद्भस्त्राशम्बलं चान्यत्समन्तादप्यपाहरन् ॥ ४७ ॥

कश्चित्पन्थानमुल्लङ्घ्य नदीरोधसि शम्बलम् । तद्भोक्तुमवतस्थेऽसौऽभूवन्नशकुनान्यथ ॥ ४८ ॥ शकुनज्ञस्तु सोऽभुक्त्वोत्थाय दूरं ययौ ततः । क्षुधितो भोक्तुकामस्तद्वारितः शकुनैः पुनः ॥ ४९ ॥ दूरं गत्वा भोक्तुकामः शकुनैर्वारितः पुनः । ततो गत्वा स तत्सर्वं प्रद्योतस्य न्यवेदयत् ॥ ५० ॥ ततो राज्ञा समाहूय तत्पृष्टः श्रेणिकात्मजः । पाथेयभस्त्रामाघ्राय जगाद मतिमानिदम् ॥ ॥ ५१ ॥ अस्ति दृष्टिविषोऽत्राहिर्द्रव्यसंयोगसम्भवः । असौ दग्धो भवेन्नूनं भस्त्रामुद्घाटयेद्यदि ॥५२॥ ततः पराङ्मुखोऽरण्ये मोच्य इत्यभयोदिते । तथैव मुमुचे सद्यो दग्धा वृक्षा मृतश्च सः ॥ ५३ ॥ विना बन्धनमोक्षं त्वं वरं याचस्व मामिति । नृपेणोक्तेऽभयोऽवादीन्न्यासीभूतोऽस्तु मे वरः ॥ ५४ ॥ अन्यदाऽऽलानमुन्मूल्य पातयित्वा निषादिनौ । स्वैरं नलगिरिर्भ्राम्यन् क्षोभयामास नागरान् ॥ ५५ ॥ असाववशगो हस्ती वशं नेयः कथं न्विति । राज्ञा पृष्टोऽभयोऽशसद्गायन्नुदयनो नृपः ॥ ५६ ॥ पुत्र्या वासवदत्ताया गान्धर्वाधीतये धृतः । जगावुदयनस्तत्र समं वासवदत्तया ॥ ५७ ॥ तद्गीताकर्णनाक्षिप्तो बद्धो नलगिरिः करी । पुनर्ददौ वरं राजा न्यासीचक्रेऽभयस्तथा ॥ ५८ ॥ अभूदवन्त्यामन्येद्युर्निर्विच्छेदं प्रदीपनम् । पृष्टश्च तत्प्रतीकारं प्रद्योतेनाभयोऽवदत् ॥ ५९ ॥ विषस्येव विषं वह्नेर्वह्निरेव यदौषधम् । तदन्यः क्रियतां वह्निर्यथा शाम्येत् प्रदीपनम् ॥ ६० ॥ तत्तथा विदधे राज्ञाऽशाम्यत्तच्च प्रदीपनम् । तृतीयं च वरं सोऽदान्न्यासीचक्रेऽभयश्च तम् ॥ ६१ ॥ अशिवं महदन्येद्युरुज्जयिन्यां समुत्थितम् । तत्प्रशान्त्यै नरेन्द्रेण पृष्ट इत्यभयोऽब्रवीत् ॥ ६२ ॥ आगच्छन्त्वन्तरास्थानं देव्यः सर्वा विभूषिताः । युष्मान् जयति या दृष्ट्या कथनीया तु सा मम ॥६३॥ तथैव विदधे राज्ञा राज्ञ्योऽन्या विजिता दृशा । देव्या तु शिवया राजा कथितं चाभयाय तत् ॥ ६४ ॥

अभाषताभयोऽप्येवं महाराज्ञी शिवा स्वयम् । करोतु कूरबालिना भूतानामर्चनं निशि ॥ ६५ ॥ यद्यद्भूतं शिवारूपेणोत्तिष्ठत्यथ वासते । तस्य तस्य मुखे देव्या चेप्यः कूरबलिः स्वयम् ॥ ६६ ॥ विदधे शिवया तच्चाशिवशान्तिर्बभूव च । तुर्यं चादाद्वरं राजा ययाचे चाभयोऽप्यदः ॥ ६७ ॥ स्थितो नलगिरौ मेण्ठीभूते त्वयि शिवाङ्कगः । अहं विशाम्यग्निभीरुरथदारुकृतां चिताम् ॥ ६८ ॥ ततो विषण्णः प्रद्योतो वरान् दातुमशक्नुवन् । विससर्जाञ्जलिं कृत्वा कुमारं मगधेशितुः ॥ ६९ ॥ आशुश्रावाभयोऽप्येवं त्वयाऽऽनीतश्छलादहम् । दिवा रटन्तं पूर्मध्ये त्वां तु नेष्याम्यसावहम् ॥७०॥ ततोऽभयकुमारोऽगात् क्रमाद्राजगृहे पुरे । कथमप्यवतस्थे च कञ्चित्कालं महामतिः ॥७१॥ गृहीत्वा गणिकापुत्र्यौ रूपवत्यावथाभयः । वणिग्वेषोऽगादवन्त्यां राजमार्गेऽग्रहीद्गृहम् ॥ ७२ ॥ प्रद्योतेनेक्षिते ते च दारिके पथि गच्छता । ताभ्यां च सविलासाभ्यां प्रद्योतोऽपि निरीक्षितः ॥ ७३ ॥ प्रद्योतेन गृहे गत्वा रागिणा प्रेषिता ततः । दूतिकाऽनुनयन्त्याभ्यां क्रुद्धाभ्यामपहस्तिता ॥ ७४ ॥ द्वितीयस्मिन्नपि दिनेऽर्थयमाना नृपाय च । ताभ्यां शनैः सरोषाभ्यामवामन्यत दूतिका ॥ ७५ ॥ तृतीयेऽप्यह्नि निर्वेदादेत्य ते याचितेऽनया । ऊचतुश्च सदाचारो भ्राता नावेष रक्षति ॥ ७६ ॥ ततो बहिर्गतेऽमुष्मिन् सप्तमेऽह्नि समागते । इहायातु नृपश्छन्नस्ततः सङ्गो भविष्यति ॥ ७७ ॥ ततोऽभयेन प्रद्योतसदृगेकः पुमान्निजः । उन्मत्तो विदधे तस्य प्रद्योत इति नाम च ॥ ७८ ॥ ईदृशोऽयं मम भ्राता भ्राम्यतीतस्ततस्ततः । रक्षितव्यो मया हा किं करोमीत्यवदज्जने ॥ ७९ ॥ तं वैद्यसद्मनयनच्छद्मना प्रत्यहं बहिः । रटन्तं मञ्चकारूढं निनायार्त इवाभयः ॥८०॥ नीयमानश्च

(१) प्रतिज्ञां चकार ।

तेनोच्चै स उन्मत्तश्चतुष्पथे । प्रद्योतोऽहं ह्रियेऽनेनेत्युदश्रुवदनोऽरटत् ॥ ८१ ॥ सप्तमेऽह्नि नृपोऽप्येकस्तत्र प्रच्छन्न आययौ । कामान्ध सिन्धुर इव बद्धश्चाभयपूरुषैः ॥ ८२ ॥ नीयतेऽसौ वैद्यवेश्मेत्यभयेनाभिभाषिणा । पर्यङ्केन समं जह्रे पुरान्त स रटन् दिवा ॥ ८३ ॥ क्रोशे क्रोशे पुरा मुक्तै रथैरथ सुवाजिभि । पुरे राजगृहेऽनैषीत्प्रद्योतमभयोऽभयः ॥ ८४ ॥ ततो निनाय प्रद्योत श्रेणिकस्य पुरोऽभयः । दधावे खड्गमाकृष्य त प्रति श्रेणिको नृप ॥ ८५ ॥ ततोऽभयकुमारेण बोधितो मगधेश्वरः । समान्य वस्त्राभरणैः प्रद्योत व्यसृजन्मुदा ॥ ८६ ॥ अन्यदा गणभृद्देवसुधर्मस्वामिनोऽन्तिके । प्रव्रज्यामग्रहीत्कोऽपि विरक्त काष्ठभारिक ॥ ८७ ॥ विहरन् स पुरे पौरैः पूर्वावस्थाऽनुवादिभि । अमर्त्स्यतोपाहस्यतागर्ह्यतापि पदे पदे ॥८८॥ नावज्ञां सोढुमीशोऽत्र विहरामि तदन्यत । इति व्यज्ञपयत् स श्रीसुधर्मस्वामिन तत ॥ ८९ ॥ सुधर्मस्वामिनाऽन्यत्र विहारक्रमहेतवे । आपृच्छयताभयः पृच्छन् ज्ञापितस्तच्च कारणम् ॥ ९० ॥ दिनमेक प्रतीक्ष्यन्मूर्ध्वं यत्प्रतिभाति व । तद्विधत्तेत्ययाचिष्ट प्रणम्य श्रेणिकात्मजः ॥ ९१ ॥ सोऽथ राजकुलात्कृष्ट्वा रत्नकोटित्रयीं बहि । दास्याम्येतामेत लोका पटहेनेत्यघोषयत् ॥ ९२ ॥ ततश्चेयुर्जनाः सर्वेऽप्यवोचदभयोऽप्यदः । जलाग्निस्त्रीवर्जको यस्तस्य रत्नोच्चयोऽस्त्वयम् ॥ ९३ ॥ लोकोत्तरमिद लोकः स्वामिन् ! किं कर्त्तुमीश्वर ? । इति तेष्वाभाषमाणेष्वभयोऽपीत्यभाषत ॥ ९४ ॥ यदि वो नेदृशः कश्चिद्रत्नकोटीत्रय ततः । जलाग्निस्त्रीमुचः काष्ठभारिणोऽस्तु महामुने ॥ ९५ ॥ सम्यगीदृगय साधु पात्र दानस्य युज्यते । मुधाऽसौ जहसेऽस्माभिरिति तैर्जगदेऽभयः ॥ ९६ ॥ अस्य भर्त्सोपहासादि न कर्त्तव्यमतः परम् । आदिष्टमभयेनैव प्रतिपद्य ययुर्जना ॥ ९७ ॥ एव बुद्धिमहाम्भोधिः पितृभक्तिपरोऽभयः । निरीहो धर्मससक्तो

राज्यमन्वशिषत्पितुः ॥ ९८ ॥ वर्त्तमानः स्वयं धर्मे स प्रजा अप्यवर्त्तयन् । प्रजानां च पशूनां च गोपायत्ताः प्रवृत्तयः ॥ ९९ ॥ राजा चक्रे जजागार यथा द्वादशधा स्थिते । तथा श्रावकधर्मेऽसावप्रमद्वरमानसः ॥ २०० ॥ बहिरङ्गान् यथाऽजैषीद्दुर्जयानपि विद्विषः । अन्तरङ्गानपि तथा स लोकद्वयसाधकः ॥ १ ॥ तमूचे श्रेणिकोऽन्ये-द्युर्वत्स ! राज्यं त्वमाश्रय । अहं श्रयिष्ये श्रीवीरशुश्रूषासुखमन्वहम् ॥ २ ॥ पित्राज्ञाभङ्गसंसारभीरुरित्यभयोऽब्रवीत् । यदादिशत तत्साधु प्रतीक्षध्वं क्षणं परम् ॥ ३ ॥ इतश्च भगवान् वीरः प्रव्राज्योदायनं नृपम् । मरुमण्डलतस्तत्राभ्यागत्य समवासरत् ॥ ४ ॥ ततो गत्वाऽभयो नत्वा पप्रच्छ चरमं जिनम् । राजर्षिः कोऽन्तिमोऽथाख्यत्तत्रैवोदायनं प्रभुः ॥५॥ गत्वोचे श्रेणिकं सोऽस्मि राजा चेन्न ऋषिस्तदा । श्रीवीरोऽन्तिमराजर्षिं शशंसोदायनं यतः ॥६॥ श्रीवीरं स्वामिनं प्राप्य प्राप्य त्वत्पुत्रतामपि । नो छेत्स्ये भवदुःखं चेन्मत्तः कोऽन्योऽधमस्ततः ॥७॥ नाम्नाऽहमभयस्तात ! सभयोऽस्मि भवाद्भृशम् । भुवनाभयदं वीरं तच्छ्रयामि समादिश ॥ ८ ॥ तदलं मम राज्येनाभिमानसुखहेतुना । यतः सन्तोषसाराणि सौख्यान्याहुर्महर्षयः ॥ ९ ॥ निर्बन्धाद्ग्राह्यमाणोऽपि न यदा राज्यमग्रहीत् । तदाऽभयो व्रतायानुजज्ञे राज्ञा प्रमोदतः ॥ १० ॥ राज्यं तृणमिव त्यक्त्वा सन्तोषसुखभागसौ । दीक्षां चरमतीर्थेशवीरपादान्तिकेऽग्रहीत् ॥ ११ ॥ संतोषमेवमभयः सुखदं दधानः, सर्वार्थसिद्धिसुरधाम जगाम मृत्वा । सन्तोषमेवमपरोऽप्यवलम्बमान- स्तान्युत्तरोत्तरसुखानि नरो लभेत ॥ २१२ ॥

॥ इति श्रीअभयराजर्षिकथानकम् ॥ ११४ ॥

प्रकृतं सन्तोषमेव स्तौति—

सन्निधौ निधयस्तस्य कामगव्यनुगामिनी। अमरा किङ्करायन्ते सन्तोषो यस्य भूषणम् ॥११५॥

निधयो महापद्मादयः, सन्निधौ सन्निहिता, कामगवी कामधेनु, सा अनुगच्छतीत्येवंशीला अनुगामिनी, अमरा सुराः, किङ्करा इवाचरन्ति किङ्करायन्ते। तस्येति योगः। यस्य किम्? यस्य पुंसः सन्तोषो भूषणमलङ्करणम्। तथाहि—सन्तुष्टा मुनयः शमप्रभावात्तृणाग्रादपि रत्नसमूहान् पातयन्ति, कामितफलदायिनश्च सुरेन्द्रैरप्यहमहमिकयोपचर्यन्त इत्यत्र कः सन्देहः। अत्रान्तरश्लोकाः—

धनं धान्यं स्वर्णरूप्यकुप्यानि क्षेत्रवास्तुनी। द्विपाच्चतुष्पाच्चेति स्युर्नव बाह्याः परिग्रहाः॥१॥ रागद्वेषौ कषायाः शुग्हासौ रत्यरती भयम्। जुगुप्सा वेदमिथ्यात्वे आन्तराः स्युश्चतुर्दश ॥२॥ बाह्यात् परिग्रहात्प्रायः प्रकुप्यन्त्यान्तरा अपि। प्रावृषो मूषिकालर्कविषजोपद्रवा इव॥३॥ प्राप्तप्रतिष्ठानपि च वैराग्यादिमहाद्रुमान्। उन्मूलयति निर्मूलं परिग्रहमहाबलः ॥४॥ परिग्रहनिषण्णोऽपि योऽपवर्गं विमार्गति। लोहोडुपनिविष्टोऽसौ पारावारं तितीर्षति ॥५॥ बाह्या परिग्रहाः पुंसां धर्मस्य ध्वंसहेतवः। तज्जन्मानोऽपि जायन्ते समिधामिव वह्नयः॥६॥ बाह्यानपि हि यः सङ्गान्न नियन्त्रयितुं क्षमः। जयेत् क्लीबः कथं सोऽन्तः परिग्रहचमूममूम् ॥ ७ ॥ क्रीडोद्यानमविद्यानां वारिधिर्व्यसनार्णसाम्। कन्दस्तृष्णामहावल्लेरेक एव परिग्रहः ॥८॥ अहो आश्चर्यमुन्मुक्तसर्वसङ्गान्मुनीनपि। धनार्थित्वेन शङ्कन्ते धनरक्षापरायणाः ॥९॥ राजतस्करदायादवह्नितोयादिभीरुभिः। धनैकतानैर्धनिभिर्निशास्वपि न सुप्यते॥ १० ॥ दुर्भिक्षे वा सुभिक्षे

( १ ) वायु। ( १ ) जलानाम्।

वा वने जनपदेऽपि वा। शङ्काऽऽतङ्काकुलतया धनी सर्वत्र दुःखितः॥ ११॥ निर्दोषा वा सदोषा वा सुखं जीवन्ति निर्धनाः। बाध्यन्ते धनिनो लोके दोषैरुत्पादितैरपि॥ १२॥ अर्जने रक्षणे नाशे व्यये सर्वत्र दुःखदम्। धत्ते कर्णगृहीताच्छभल्ललीलां धनं नृणाम्॥ १३॥ धिग्धनं धनवन्तो यदेकामिषजिघृक्षुभिः। स्वजनैरपि बाध्यन्ते शुनकाः शुनकैरिव॥ १४॥ इत्थमर्थं लभेयाहं रक्षेयं वर्द्धयेय च। कृतान्तदन्तयन्त्रस्थोऽपीत्याशां न त्यजेद्धनी॥ १५॥ पिशाचीव धनाशेयं यावदुच्छृङ्खला भवेत्। तावत् प्रदर्शयेन्नृणां नानारूपां विडम्बनाम्॥ १६॥ यदीच्छसि सुखं धर्मं मुक्तिसाम्राज्यमेव च। तदा परपरीहारादेकामाशां वशीकुरु॥ १७॥ स्वर्गापवर्गनगरप्रवेशप्रतिरोधिनी। अभेद्या वज्रधाराभिराशैव हि महार्गला॥ १८॥ आशैव राक्षसी पुंसामाशैव विषमञ्जरी। आशैव जीर्णमदिरा धिगाशा सर्वदोषभूः॥१९॥ ते धन्याः पुण्यभाजस्ते तैस्तीर्णः क्लेशसागरः। जगत्संमोहजननी यैराशाऽऽशीविषी जिता॥ २०॥ पापवल्लीं दुःखखानिं सुखाग्निं दोषमातरम्। आशां निराशीकुरुते यस्तिष्ठति सुखेन सः॥ २१॥ आशादवाग्नेर्महिमा कोऽपि लोकपथातिगः। धर्ममेघं समाधिं यो विध्यापयति तत्क्षणात्॥ २२॥ दीनं जल्पन्ति गायन्ति नृत्यन्त्यभिनयन्ति च। आशापिशाचीविवशाः पुमांसो धनिनां पुरः॥२३॥ न यान्ति वायवो यत्र नाप्यर्केन्दुमरीचयः। आशामहोर्मयः पुंसां तत्र यान्ति निरर्गलाः॥२४॥ येनाशायै ददे स्वाम्यं तेनात्तं दास्यमात्मनः। आशा दासीकृता येन तस्य स्वाम्यं जगत्त्रये॥२५॥ नाशा नैसर्गिकी पुंसि या जीर्यति न जीर्यति। उत्पात एव कोऽप्येषा तस्यां सत्यां कुतः सुखम्॥२६॥ वलयो वलयाः पुंसां पलितानि स्रजः कृताः। किमन्यन्मण्डनं कृत्वा कृतार्थाऽऽशा भविष्यति॥२७॥ प्राप्तेभ्योऽप्यतिरिच्यन्ते तेऽर्थास्त्यक्ता य आशया। क्रोडीकरोति यानाशा ते तु स्वप्नेऽपि

दुर्लभा ॥२८॥ यानर्थान् बहुभिर्यत्नैरिच्छेत्साधयितु नर । अयत्नसिद्धा एवैते कृते ह्याशानिमीलने ॥२६॥ पुण्योदयोऽस्ति चेत् पुसां व्यर्थवाशापिशाचिका । अथ पुण्योदयो नास्ति व्यर्थैवाशापिशाचिका ॥३०॥ अधीती पण्डित प्राज्ञः पापभीरुस्तपोधनः। स एव येन हित्वाऽऽशां नैराश्यमुरीकृतम् ॥३१॥ सुख सन्तोषपीयूषजुषां यत् स्ववशात्मनाम्। तत्पराधीनवृत्तीनामसन्तोषवतां कुतः॥ ३२॥ सन्तोषवर्मणि व्यर्था आशानाराचपङ्क्तय' । ता. कथ प्रतिरोद्धव्या इति मा स्माकुलो भवः ॥ ३३ ॥ वाक्येनैकेन तद्वच्मि यद्वाच्य वाक्यकोटिभिः। आशापिशाची शान्ता च प्राप्त च परम पदम् ॥३४॥ तत्सन्त्यजाऽऽशावैवश्य मितीकृतपरिग्रह.। भजस्व द्रव्यसाधुत्व यतिधर्मानुरक्तधी ॥३५॥ मिथ्यादृग्भ्यो विशिष्यन्ते सम्यग्दर्शनिनो जना । तेभ्योऽपि देशविरता मितारम्भपरिग्रहा ॥ ३६ ॥ यामन्यतीर्थिका यान्ति गतिं तीव्रतपोजुषः । उपासका सोमिलवत्तां विराद्धव्रता अपि ॥ ३७ ॥ मासे मासे हि ये बालाः कुशाग्रेणैव भुञ्जते । सन्तुष्टोपासकानां ते कलां नार्हन्ति षोडशीम् ॥ ३८ ॥ अप्यद्भुततपोनिष्ठस्तामलिः पूरणोऽपि वा । सुश्रावकोचितगतेरतिहीनां गतिं ययौ ॥३९॥ आशापिशाचविवशः कुरु मा स्म चेत , सन्तोषमुद्वह परिग्रहनिग्रहेण । श्रद्धां विधेहि यतिधर्मधुरीणतायाः-मन्तर्भवाष्टकमुपैषि यथाऽपवर्गम् ॥ ४० ॥ ११५ ॥

इति परमार्हतश्रीकुमारपालभूपालशुश्रूषिते आचार्यश्रीहेमचन्द्रविरचिते अध्यात्मोपनिषन्नाम्नि सञ्जातपट्टबन्धे श्रीयोगशास्त्रे स्वोपज्ञ द्वितीयप्रकाशविवरणम् ।



(१) ' भावसाधुत्व ' इति प्रत्यन्तरम् ।



अर्हम्

## तृतीयः प्रकाशः ।

अथाणुव्रतव्यावर्णनानन्तरं गुणव्रतानामवसरस्तत्रापि प्रथमं गुणव्रतमाह—

**दशस्वपि कृता दिक्षु यत्र सीमा न लङ्घ्यते । ख्यातं दिग्विरतिरिति प्रथमं तद्गुणव्रतम् ॥१॥**

ऐन्द्री, आग्नेयी, याम्या, नैर्ऋती, वारुणी, वायव्या, कौबेरी, ऐशानी, नागी, ब्राह्मीति दश दिशस्तासु, अपिशब्दादेकद्वित्र्यादिदिक्ष्वपि, सीमा मर्यादा, कृता प्रतिपन्ना, यत्र व्रते सति, न लङ्घ्यते नातिक्रम्यते, तत्प्रथमं गुणव्रतम् । उत्तरगुणरूपं व्रतं गुणव्रतम्, गुणाय चोपकाराय अणुव्रतानां व्रतं गुणव्रतम्, ख्यातं प्रसिद्धं, तस्याभिधानं दिग्विरतिरिति ॥ १ ॥

ननु हिंसादिपापस्थानविरतिरूपाणि युक्तान्यणुव्रतानि, दिग्व्रते तु कस्य पापस्थानस्य निवृत्तिर्येनास्य व्रतत्वमुच्यते ? । उच्यते—अत्रापि हिंसादीनामेव पापस्थानानां विरतिरेतदेवाह—

**चराचराणां जीवानां विमर्दननिवर्त्तनात् तप्तायोगोलकल्पस्य सद्व्रतं गृहिणोऽप्यदः ॥ २ ॥**

चरास्त्रसा द्वीन्द्रियादयः, अचराः स्थावराः एकेन्द्रियाः; तेषां नियमितसीमाबहिर्वर्त्तिनां जीवानां, यद्विमर्दनं यातायातादिना हिंसा, तस्य निवर्त्तनाद्धेतोरिदमपि हिंसाप्रतिषेधपरमेव गृहस्थस्यापि सद्व्रतम् । हिंसाप्रतिषेधपरत्वे

च प्रमत्त्यादिप्रतिषेधपरताऽपि भुवनैव । यथेत्, साधूनामपि दिग्विरतिव्रतप्रसङ्ग इत्याह—तप्तायोगोलकल्पस्येति । गृहस्थो ह्यारम्भपरिग्रहपरत्वाद्यत्र यत्र याति, भुङ्क्ते, शेते, व्यापारान्तरं वा कुरुते, तत्र तप्तायोगोलक इव जीवोपमर्दं करोति । गृहिणोऽपीत्यपिशब्दस्तप्तायोगोलकल्पस्येत्यत्र सम्बध्यते, तप्तायोगोलकल्पस्यापीत्यर्थः । यदाह—

तत्तायगोलकप्पो पमत्तजीवोऽणिवारियप्पसरो । सव्वत्थ किं न कुज्जा पावं तक्कारणाणुगओ ॥ १ ॥

साधूनां तु समितिगुप्तिप्रधानव्रतशालिनां नायं दोष इति न तेषां दिग्विरतिव्रतम् ॥ २ ॥

लोभलक्षणपापस्थानविरतिपरमपि चैतद् व्रतमित्याह—

जगदाक्रममाणस्य प्रसरल्लोभवारिधेः । स्खलनं विदधे तेन येन दिग्विरतिः कृता ॥ ३ ॥

लोभ एव दुर्लङ्घ्यत्वाद्वारिधिः समुद्रः प्रसरश्चासौ नानाविकल्पकल्लोलाकुलतया लोभवारिधिश्च, तस्य विशेषणं जगदाक्रममाणस्य । वारिधिपक्षे जगल्लोकः, लोभपक्षे तु निःशेषमेव भुवनत्रयम् । लोभवशगो हि ऊर्ध्वलोकगतां सुरसम्पदं मध्यलोकगतां च चक्रवर्त्यादिसम्पदमधोलोकगतां च पातालप्रभुत्वादिसम्पदमभिलषस्त्रिभुवनमपि मनोरथैराक्रामतीति लोभस्य जगदाक्रमणम्, तेन स्खलनं प्रसरनिरोधः, तद्विदधे, येन किं ? येन पुरुषेण दिग्विरतिर्विहिता । दिग्विरतो हि प्रतिज्ञातसीमातः परतोऽगच्छंस्तत्रस्थसुवर्णरूप्यधनधान्यादिषु प्रायेण लोभं न कुरुते इति लोभलक्षणपापस्थानविरतिपरताऽस्य व्रतस्य । अत्रान्तरश्लोकाः—

---

(१) तप्तायोगोलकल्पः प्रमत्तजीवोऽनिवारितप्रसरः । सर्व्वत्र किं न कुर्यात् पापं तत्कारणानुगतः ॥

तदेतद्यावज्जीवं वा सद्व्रतं गृहमेधिनाम् । चतुर्मासादिनियमादथवा स्वल्पकालिकम् ॥ १ ॥ सदा सामायिकस्थानां यतीनां तु जितात्मनाम् । न दिशि क्वचन स्यातां विरत्यविरती इमे ॥ २ ॥ चारणानां हि गमनं यदूर्द्धं मेरुमूर्द्धनि । तिर्यग्रुचकशैले च नैषां दिग्विरतिस्ततः ॥ ३ ॥ गन्तुं सर्वासु यो दिक्षु विदध्यादवधिं सुधीः । स्वर्गादौ निरवधयो जायन्ते तस्य सम्पदः ॥ ४ ॥ ३ ॥

द्वितीयं गुणव्रतमाह—

**भोगोपभोगयोः संख्या शक्त्या यत्र विधीयते। भोगोपभोगमानं तद् द्वैतीयीकं गुणव्रतम् ॥४॥**

भोगोपभोगयोर्वक्ष्यमाणलक्षणयोः संख्या परिमाणं यत्र व्रते विधीयते, कया ? शक्त्या शरीरमनसोरनाबाधया, तद्भोगोपभोगमानं नाम गुणव्रतं, द्वितीयमेव द्वैतीयीकम्; स्वार्थे टीकण् ॥ ४ ॥

भोगोपभोगयोर्लक्षणमाह—

**सकृदेव भुज्यते यः स भोगोऽन्नस्रगादिकः । पुनःपुनः पुनर्भोग्य उपभोगोऽङ्गनादिकः ॥५॥**

सकृदेव एकवारमेव, भुज्यते सेव्यते इति भोगः, अन्नमोदनादि, स्रग्माल्यं, आदिशब्दात्ताम्बूलविलेपनोद्वर्त्तनधूपनस्नानपानादिपरिग्रहः । पुनःपुनरनेकवारं, भोग्यः सेव्यः, अङ्गना वनिता, आदिशब्दाद्वस्त्रालङ्कारगृहशयनासनवाहनादिपरिग्रहः ॥ ५ ॥

इदं च भोगोपभोगव्रतं भोक्तुं योग्येषु परिमाणकरणेन भवति, इतरेषु तु वर्जनेनेति श्लोकद्वयेन तद्वर्जनीयानाह—

मद्यं मांसं नवनीतं मधूदुम्बरपञ्चकम्। अनन्तकायमज्ञातफलं रात्रौ च भोजनम् ॥ ६ ॥
आमगोरससंपृक्तं द्विदलं पुष्पितौदनम्। दध्यहर्द्वितयातीतं कुथितान्नं च वर्जयेत् ॥ ७ ॥

तत्र मद्यं द्विधा-काष्ठनिष्पन्नं, पिष्टनिष्पन्नं च, मांसं त्रिधा-जलस्थलखचरमांसभेदेन। मांसग्रहणेन चर्मरुधिर-मेदोमज्जानः परिगृह्यन्ते। नवनीतं गोमहिष्यजाऽविसम्बन्धेन चतुर्द्धा। मधु त्रेधा-माक्षिकं, भ्रामरं, कौत्तिकं च। उदुम्बरपञ्चकादयो यथास्थानं व्याख्यास्यन्ते ॥ ६ ॥ ७ ॥

तत्र मद्यस्य वर्जनीयत्वहेतून् दोषान् श्लोकदशकेनाह—

मदिरापानमात्रेण बुद्धिर्नश्यति दूरतः। वैदग्धीबन्धुरस्यापि दौर्भाग्येणेव कामिनी ॥ ८ ॥

वैदग्धीबन्धुरस्यापि छेकस्यापि पुंसो, मदिरापानमात्रेण बुद्धिर्नश्यति क्षयं याति, दूरतो दूरं यावत् सर्वथा विनश्यतीत्यर्थः। अत्रोपमानं दौर्भाग्येणेव कामिनीति। वैदग्धीबन्धुरस्यापि दूरत इति चात्रापि सम्बध्यते। तेन यथा विदग्धस्यापि दौर्भाग्यदोषेण कामिनी नश्यति पलायते, दूरतो दूरादपि ॥ ८ ॥ तथा—

पापाः कादम्बरीपानविवशीकृतचेतसः। जननीं हा प्रियीयन्ति जननीयन्ति च प्रियाम् ॥९॥

कादम्बरी मदिरा, जननीं मातरं, हा इति खेदे, प्रियीयन्ति प्रियामिव जायामिवाचरन्ति, प्रियां च जननीयन्ति जननीमिवाचरन्ति। मदिरामदविह्वलत्वाज्जननीजाययोराचारव्यत्ययेन व्यवहरन्तीत्यर्थः ॥९॥ तथा—

न जानाति परं स्वं वा मद्याच्चलितचेतनः। स्वामीयति वराकः स्वं स्वामिनं किङ्करीयति ॥१०॥

मद्याद्धेतोः चलितचेतनो नष्टचैतन्यः सन्, स्वमात्मानं, परं वा आत्मव्यतिरिक्तं, न जानाति । अत्र हेतुमाह —यत आत्मानमजानन् स्वं स्वामिनामिवाचरति, वराकश्चैतन्यहीनत्वादनुकम्पनीयः । परमजानन् स्वामिनं नाथं किङ्करमिवाचरति ॥ १० ॥ तथा—

**मद्यपस्य शवस्येव लुठितस्य चतुष्पथे । मूत्रयन्ति मुखे श्वानो व्यात्ते विवरशङ्कया ॥११॥**

स्पष्टः ॥ ११ ॥ तथा—

**मद्यपानरसे मग्नो नग्नः स्वपिति चत्वरे । गूढं च स्वमभिप्रायं प्रकाशयति लीलया ॥१२॥**

मद्यस्य पानं तत्र रस आसक्तिस्तत्र मग्नो निषण्णः; मद्यपानव्यसनीत्यर्थः । अत एव वस्त्रमपि स्रस्तमजानन् नग्नः स्वपिति चत्वरे, न तु गृह एव । दोषान्तरं च—गूढं केनाप्यविदितं, स्वमभिप्रायं राजद्रोहादिकं प्रकाशयति प्रकटीकरोति लीलया बन्धनताडनादिव्यतिरेकेणापि ॥ १२ ॥ तथा—

**वारुणीपानतो यान्ति कान्तिकीर्तिमतिश्रियः । विचित्राश्चित्ररचना विलुठत्कज्जलादिव ॥१३॥**

वारुणीपानतो मद्यपानात्, यान्त्यपगच्छन्ति, कान्तिः शरीरतेजः, कीर्त्तिर्यशः, मतिस्तात्कालिकी प्रतिभा, श्रीः सम्पत् । विचित्रा इत्याद्युपमानं स्पष्टम् ॥ १३ ॥ तथा—

**भूतार्त्तवन्नरीनर्त्ति रारटीति सशोकवत् । दाहज्वरार्त्तवद्भूमौ सुरापो लोलुठीति च ॥ १४ ॥**

भूतार्त्तो व्यन्तरविशेषपरिगृहीतः, त्रीण्यपि क्रियापदानि भृशाभीक्ष्ण्ययोर्यङ्लुबन्तानि ॥ १४ ॥ तथा—

विदधत्यङ्गशैथिल्य ग्लपयन्तीन्द्रियाणि च। मूर्च्छामतुच्छां यच्छन्ती हाला हालाहलोपमा ॥१५॥

हाला सुरा, हालाहलोपमा हालाहलो विषविशेषस्तत्सदृशी। साधारणधर्मानाह–विदधती कुर्वाणा अङ्गशैथिल्य शरीरविशस्थुलत्वम्। ग्लपयन्ती कार्याक्षमाणि कुर्व्वती इन्द्रियाणि चक्षुरादीनि। मूर्च्छा चैतन्याभावस्तामतुच्छां प्रचुरां यच्छन्ती। अङ्गशैथिल्यादयो हालाहालाहलयो साधारणा धर्मा ॥ १५ ॥ तथा—

विवेक सयमो ज्ञान सत्य शौच दया क्षमा। मद्यात्प्रलीयते सर्वं तृण्या वह्निकणादिव ॥१६॥

विवेको हेयोपादेयज्ञान, सयम इन्द्रियवशीकार', ज्ञान शास्त्रावबोध', सत्य तथ्या भाषा, शौचमाचारशुद्धिः, दया करुणा, क्षमा क्रोधस्यानुत्पाद उत्पन्नस्य वा विफलीकरणम्। मद्यान्मद्यपानात् प्रलीयते नाशमुपयाति सर्वं विवेकादि। यथा वह्निकणात् तृण्या तृणसमूह'। तृणानां समूहस्तृण्या, पाशादित्वाल्य ॥ १६ ॥

दोषाणां कारण मद्य मद्य कारणमापदाम्। रोगातुर इवापथ्य तस्मान्मद्य विवर्जयेत् ॥१७॥

दोषाणां चौर्यपारदारिकत्वादीना कारण हेतु, मद्यपानरतो हि किं किमकार्यं न कुरुते? दोषकारणत्वादेव चापदां वधबन्धादीनां कारण, तस्मान्मद्य विवर्जयेदित्युपसहार.। रोगातुर इवापथ्यमित्युपमानम्। अत्रान्तरश्लोकाः–

रसोद्भवाश्च भूयांसो भवन्ति किल जन्तव.। तस्मान्मद्य न पातव्य हिंसापातकभीरुणा ॥ १ ॥ दत्त न दत्तमात्त च नात्त कृत च नो कृतम्। मृषोद्यराज्यादिव हा स्वैर वदति मद्यप' ॥ २ ॥ गृहे बहिर्वा मार्गे वा परद्रव्याणि मूढधीः। वधबन्धादिनिर्भीको गृह्णात्याच्छिद्य मद्यप ॥३॥ बालिका युवतीं वृद्धा ब्राह्मणीं श्वपचीमपि।

भुङ्क्ते परस्त्रियं सद्यो मद्योन्मादकदर्थितः ॥४॥ रटन् गायन् लुठन् धावन् कुप्यंस्तुष्यन् रुदन् हसन् । स्तभ्नन्नमन् भ्रमंस्तिष्ठन् सुरापः पापराट् नटः ॥५॥ श्रूयते किल शाम्बेन मद्यादन्धम्भविष्णुना । हतं वृष्णिकुलं सर्वं प्लोषिता च पुरी पितुः ॥ ६ ॥ पिबन्नपि मुहुर्मद्यं मद्यपो नैव तृप्यति । जन्तुजातं कवलयन् कृतान्त इव सर्वदा ॥ ७ ॥ लौकिका अपि मद्यस्य बहुदोषत्वमास्थिताः । यत्तस्य परिहार्यत्वमेवं पौराणिका जगुः ॥ ८ ॥ कश्चिदृषिस्तपस्तेपे भीत इन्द्रः सुरस्त्रियः । क्षोभाय प्रेषयामास तस्यागत्य च तास्तकम् ॥ ६ ॥ विनयेन समाराध्य वरदाभिमुखं स्थितम् । जगुर्मद्यं तथा मांसं सेवस्वाब्रह्म चेच्छया ॥ १० ॥ स एवं गदितस्ताभिर्द्वयोर्नरकहेतुताम् । आलोच्य मद्यरूपं च शुद्धकारणपूर्वकम् ॥ ११ ॥ मद्यं प्रपद्य तद्भोगान् नष्टधर्मास्थितिर्मदात् । विदंशार्थमजं हत्वा सर्वमेव चकार सः ॥ १२ ॥ अवद्यमूलं नरकस्य पद्धतिं, सर्वापदां स्थानमकीर्त्तिकारणम् । अभव्यसेव्यं गुणिभिर्विगर्हितं, विवर्जयेन्मद्यमुपासकः सदा ॥ १३ ॥ १७ ॥

अथ मांसदोषानाह—

**चिखादिषति यो मांसं प्राणिप्राणापहारतः। उन्मूलयत्यसौ मूलं दयाऽऽख्यं धर्मशाखिनः॥१८॥**

चिखादिषति खादितुमिच्छति, यः कश्चित्, मांसं पिशितं । असौ पुमान्, उन्मूलयति उत्खनति, किं तत् ? मूलं दयासंज्ञकं, कस्य ? धर्मशाखिनः पुण्यवृक्षस्य, । मांसखादने कथं धर्मतरोर्दयाख्यं मूलमुन्मूल्यते ? इत्याह—प्राणिप्राणापहारतः प्राणिप्राणापहाराद्धेतोः, न हि प्राणिप्राणापहारमन्तरेण मांसं संभवतीति ॥ १८ ॥

अथ मांस चिखादिषयपि प्राणिदयां करिष्यतीत्याह—

**अशनीयन् सदा मांस दयां यो हि चिकीर्षति। ज्वलति ज्वलने वल्लीं स रोपयितुमिच्छति ॥१९॥**

सदा सर्वदा, मांसमशनीयन् मांसमशनमिवाचरन्, पुत्रीयति च्छात्रमितिवत् "आधाराच्चोपमानादाचारे" ॥ ३ ॥ ४ ॥ २४ ॥ इति क्यनि रूपम्, दयां कृपां, यः कश्चित्, हि स्फुट, चिकीर्षति कर्तुमिच्छति। ज्वलतीत्यादिना निदर्शनम् यथा ज्वलत्यग्नौ वल्लीरोपणमशक्यम्, तथा मासमशनीयता दयाऽपि कर्तुमशक्येत्यर्थः ॥१९॥

नन्वन्यः प्राणिनां घातकोऽन्यश्च मांसभक्षक इति कथ मांसभक्षकस्य प्राणिप्राणापहरणमिति ? उच्यते—भक्षकोऽपि घातक एवेत्याह—

**हन्ता पलस्य विक्रेता सस्कर्त्ता भक्षकस्तथा। क्रेताऽनुमन्ता दाता च घातका एव यन्मनु ॥२०॥**

हन्ता शस्त्रादिना प्राणिनां प्राणापहारक, पलस्य विक्रेता यो मास विक्रीणीते। पलस्येत्युत्तरेष्वपि पदेषु सम्बन्धनीयम्। सस्कर्त्ता यो मांस सस्करोति, भक्षकः खादक, क्रेता यो मांस क्रीणाति, अनुमन्ता य प्राणिहिंसया मांसमुत्पाद्यमानमनुमोदते, दाता यो मांसमतिथ्यादिभ्यो ददाति, एते साक्षात्पारम्पर्येण वा घातका एव प्राणिप्राणापहारका एव, यन्मनुरिति सवादार्थम् ॥ २० ॥

मानवमेवोक्त दर्शयति—

**अनुमन्ता विशसिता निहन्ता क्रयविक्रयी। सस्कर्त्ता चोपहर्त्ता च खादकश्चेति घातका ॥२१॥**

अनुमन्ता अनुमोदकः, विशसिता हतस्याङ्गविभागकरः, निहन्ता व्यापादकः, क्रयविक्रयी क्रयविक्रयौ विद्येते यस्य स तथा, क्रेता विक्रेता चेत्यर्थः; संस्कर्त्ता मांसपाचकः, उपहर्त्ता परिवेष्टा, खादको भक्षकः; एते सर्वे घातकाः ॥ २१ ॥ द्वितीयमपि मानवं श्लोकमाह—

**नाकृत्वा प्राणिनां हिंसां मांसमुत्पद्यते क्वचित्। न च प्राणिवधः स्वर्ग्यस्तस्मान्मांसं विवर्जयेत् ॥२२॥**

यावत्प्राणिनो न हतास्तावन्मांसं नोत्पद्यते, हिंसा चातिशयेन दुःखावहा, तस्मान्मांसं विवर्जयेत्, उत्पद्यत इति मांसस्य हिंसानिमित्तत्वात् कर्तृव्यपदेश इति समानकर्तृकत्वमविरुद्धम्। न च स्वर्ग्य इति न स्वर्गानुत्पत्तिमात्रमभिप्रेतमपि तु नरकादिदुःखहेतुता ॥ २२ ॥

इदानीमन्यपरिहारेण भक्षकस्यैव वधकत्वमाह—

**ये भक्षयन्त्यन्यपलं स्वकीयपलपुष्टये। त एव घातका यन्न वधको भक्षकं विना ॥ २३ ॥**

अन्यपलमन्यमांसं स्वमांसपुष्टये ये भक्षयन्ति त एव परमार्थतो घातका न तु हन्तृविक्रेतृप्रभृतयः। अत्र युक्तिमाह—यद्यस्मान्न भक्षकं विना वधको भवति; ततो हन्तृप्रभृतिभ्यो भक्षकः पापीयान्, स्वकीयपलपुष्टय इति हिंसाभिप्रायं स्वपलपोषणमात्रप्रयोजनः कतिपयदिनजीवितः परजीवितप्रहाणं कुर्यात्। यदाह—

हंतूणं परपाणे अप्पाणं जे कुणंति सप्पाणं। अप्पाणं दिवसाणं कएण नासेंति अप्पाणं ॥१॥ तथा—

(१) हत्वा परप्राणान् आत्मानं ये कुर्वन्ति सप्राणम्। अल्पानां दिवसानां कृतेन नाशयन्ति आत्मानम् ॥

ऐकस्स कए नियजीवियस्स बहुआउ जीवकोडीओ । दुक्खे ठवंति जे केवि ताण किं *सासय जीय[1] ॥१॥ २३॥

एतदेव सजुगुप्समाह—

मिष्टान्नान्यपि विष्टासादमृतान्यपि मूत्रसात्। स्युर्यस्मिन्नङ्गकस्यास्य कृते क. पापमाचरेत्?॥२४॥

मिष्टान्नानि शालिमुद्गमाषगोधूमादीनि तान्यपि विष्टासाद्विष्टात्वेन स्युः सपद्येरन् । अमृतानि पय प्रभृतीनि तान्यपि मूत्रसान्मूत्रत्वेन स्यु. सपद्येरन् यस्मिन् ( अङ्गके ) । अस्य प्रत्यक्षस्य, अङ्गकस्य कुत्सितस्य शरीरस्य, कृते निमित्त, क सचेतनः पाप प्राणिघातलक्षणमाचरेत् विदधीत ? ॥ २४ ॥

इदानीं मांसभक्षण न दोषायेति वदतो निन्दति—

मांसाशने न दोषोऽस्तीत्युच्यते यैर्दुरात्मभि ।व्याधगृध्रवृकव्याघ्रशृगालास्तैर्गुरूकृताः ॥२५॥

मांसभक्षणे न दोषोऽस्तीति यैरुच्यते दुरात्मभिर्दु स्वभावै', यथा—

" न मांसभक्षणे दोषो न मद्ये न च मैथुने । प्रवृत्तिरेषा भूतानां निवृत्तिस्तु महाफला " ॥ १ ॥

इति । तैर्व्याधा लुब्धका., गृध्रा हिंस्रा पक्षिविशेषाः, वृका अरण्यश्वान , व्याघ्रा· शार्दूलाः, शृगाला जम्बुकाः, गुरूकृताः उपदेशका कृताः । न हि व्याधादीन् गुरून् विना कश्चिदेवंविध शिक्षयति, न चाशिक्षित

( १ ) एकस्य कृते निजजीवितस्य बहुका जीवकोटी । दु खे स्थापयन्ति ये केऽपि तेषा किं शाश्वतो जीव ? ॥

( * ) सासओ अप्पा । इतिमत्यन्तरे ।

महाजनपूज्या एवमुपदिशन्ति । अपि च । निवृत्तिस्तु महाफलेति वदद्भिर्येषां निवृत्तिर्महाफला तेषां प्रवृत्तिर्न दोषवतीति स्वयमेव स्ववचनविरोध आविष्कृत इति किमन्यद् ब्रूमहे ॥ २५ ॥

निरुक्तबलेनापि मांसस्य परिहार्यत्वमाह—

**मां स भक्षयिताऽमुत्र यस्य मांसमिहाद्म्यहम् । एतन्मांसस्य मांसत्वे निरुक्तं मनुरब्रवीत् ॥२६॥**

मां स भक्षयितेति अत्र स इति सर्वनामसामान्यापेक्षं योग्येनार्थेन निराकाङ्क्षीकरोति—यस्य मांसमहमद्मि, इहेति इहलोके, अमुत्रेति परलोके, एतन्मांसस्य मांसत्वे मांसरूपतायां, निरुक्तं नामधेयनिर्वचनं मनुरब्रवीत् ॥ २६ ॥

मांसभक्षणे महादोषमाह—

**मांसास्वादनलुब्धस्य देहिनं देहिनं प्रति । हन्तुं प्रवर्त्तते बुद्धिः शाकिन्या इव दुर्धियः ॥२७॥**

मांसभक्षणलम्पटस्य देहिनं देहिनं प्रति यं यं पश्यति जलचरं मत्स्यादिकं, स्थलचरं मृगवराहादि अजाऽविकादि च, खेचरं तित्तिरिलावकादि, अन्ततो मूषिकाद्यपि तं तं प्रति हन्तुं हननाय बुद्धिः प्रवर्त्तते; दुर्धियो दुर्बुद्धेः । शाकिन्या इव—यथा हि शाकिनी यं यं पुरुषं स्त्रियमन्यं वा प्राणिनं पश्यति, तं तं हन्तुं तस्या बुद्धिः प्रवर्त्तते, तथा मांसास्वादनलुब्धस्यापीति ॥ २७ ॥

अपि च मांसभक्षिणामुत्तमपदार्थपरिहारेण नीचपदार्थोपादानं महद्बुद्धिवैगुण्यं दर्शयतीति दर्शयन्नाह—

**ये भक्षयन्ति पिशितं दिव्यभोज्येषु सत्स्वपि । सुधारसं परित्यज्य भुञ्जते ते हलाहलम् ॥२८॥**

दिव्यभोज्येषु सकलधातुवृद्धकेषु सर्वेन्द्रियप्रीतिप्रदेषु चीरचैरेयीकिलाटीकूर्चिकारसालादध्यादिषु मोदकमण्डकमण्डिकाखाद्यकपर्पटिकाघृतपूरादिषु इण्डेरिकापूरणवटकवटिकापर्पटादिषु इक्षुगुडखण्डशर्करादिषु द्राचासहकारकदलदाडिमनालिकेरनारङ्गखर्जूराचोटराजादनपनसादिषु च सत्स्वपि तान्यनादृत्य ये मूढा विस्रगन्धिजुगुप्साकर शूकाप्रधानानां वान्तिकर मांस भक्षयन्ति ते जीवितवृद्धिहेत्वमृतरसपरिहारेण जीवितान्तकर हलाहल विषभेद भुञ्जते। बालोऽपि हि दृषत्परिहारेण सुवर्णमेवादत्त इति बालादपि मांसभक्षिणो बाला ॥ २८ ॥

भङ्ग्यन्तरेण मांसभक्षणदोषमाह—

**न धर्मो निर्दयस्यास्ति पलादस्य कुतो दया। पललुब्धो न तद्वेत्ति विद्याद्वोपदिशेन्न हि ॥२९॥**

निर्दयस्य कृपारहितस्य, धर्मो नास्ति, धर्मस्य दया मूलमिति ह्यामनन्ति। ततः प्रस्तुते किमायातमत आह— पलादस्य कुतो दया, पलादस्य मांसोपजीविनः, कुतो दया ? नैव दयेत्यर्थः, भक्षकस्य वधकत्वेनोक्तत्वात्, वधकश्च कथ सदयो नाम इति पलादस्य निर्धर्मतालक्षणो दोषः। ननु सचेतन कथमात्मनि धर्माभाव सहेत ? उच्यते—पललुब्धो न तद्वेत्ति मांसलोभेन न तत्पूर्वार्धोक्त जानाति। अथ कथञ्चिद्विद्याज्जानीयात्तर्हि स्वय मांसलुब्धो मांसनिवृत्तिं कर्तुमशक्नुवन् सर्वेऽपि मम सदृशा भवन्त्विति परेभ्यो मांसनिषेध नोपादिशेदाजिणकवत्। श्रूयते हि कश्चिदाजिणको मार्गे गच्छन्नेकया सर्पिण्या भक्षितस्तत्सर्वेऽपि भक्ष्यन्तामनयेति बुद्ध्या परेभ्यो नाख्यातवानिति द्वितीयोऽपि तथैव दष्टो नान्येषां कथितवान्, एव यावत्सप्त दष्टाः। मांसभक्षकोऽपि मांसभक्षणात्स्वय नरके पतन् " स्वय नष्टा दुरात्मानो नाशयन्ति परानपि " इति न परेभ्य उपदिशति ॥ २९ ॥

इदानीं मांसभक्षकाणां मूढतामुपदर्शयति—

**केचिन्मांसं महामोहादश्नन्ति न परं स्वयम्। देवपित्रतिथिभ्योऽपि कल्पयन्ति यदूचिरे ॥३०॥**

केचित् कुशास्त्रविप्रलब्धा महतो मोहान्न केवलं स्वयं मांसमश्नन्ति किन्तु देवेभ्यः पितृभ्योऽतिथिभ्यश्च कल्पयन्ति, यद्यस्मादूचिरे तद्धर्मशास्त्रकाराः ॥ ३० ॥

उक्तमेवाह—

**क्रीत्वा स्वयं वाऽप्युत्पाद्य परोपहृतमेव वा। देवान् पितॄन् समभ्यर्च्य खादन् मांसं न दुष्यति ॥३१॥**

मृगपक्षिमांसविषयमेतच्छास्त्रं, तेन सूनापणमांसं विना व्याधशाकुनिकादिभ्यः क्रीत्वा मूल्येन । सूनापणमांसे तु देवपूजादावनधिकृतेः । तथा स्वयमुत्पाद्य—ब्राह्मणो याञ्चया, क्षत्रियो मृगयाकर्मणा, अथवा परेणोपहृतं ढौकितं तेन मांसेन देवानां पितॄणां चार्चनं कृत्वा मांसं खादन्न दुष्यति, एतच्च महामोहादिति वदद्भिरस्माभिर्दूषितमेव । स्वयमपि हि प्राणिघातहेतुकं मांसं भक्षयितुमयुक्तं किं पुनर्देवादिभ्यः कल्पयितुम् । देवा हि सुकृतसम्भारलब्धात्मानोऽधातुकशरीरा अकावलिकाहाराः कथं मांसं भक्षयेयुः ? अभक्षयद्भ्यस्तत्कल्पनं मोह एव। पितरश्च स्वसुकृतदुष्कृतवशेन प्राप्तगतिविशेषाः स्वकर्मफलमनुभवन्तो न पुत्रादिकृतेनापि सुकृतेन तार्यन्ते किं पुनर्मांसढौकनदुष्कृतेन ? । न च पुत्रादिकृतं सुकृतं तेषामुपतिष्ठते । न ह्याम्रेषु सेकः कोविदारेषु फलं दत्ते । अतिथिभ्यश्च सत्कारार्हेभ्यो नरकपातहेतोर्मांसस्य ढौकनं महते अधर्माय । एवं परेषां महामोहचेष्टितम् । श्रुतिस्मृ-

तिविहितत्वादनोद्यमेतदिति चेन्न । श्रुतिभाषितेष्वप्रामाणिकेषु प्रत्ययस्य कर्तुमशक्यत्वात् । श्रूयन्ते हि श्रुतिवचांसि—यथा पापघ्नो गोस्पर्शः, द्रुमाणां च पूजा, छागादीनां वधः स्वर्ग्यः । ब्राह्मणभोजनं पितृप्रीणनं, मायावीन्यधिदैवतानि, वह्नौ हुतं देवप्रीतिप्रदम् । तदेवंविधेषु श्रुतिभाषितेषु युक्तिकुशलाः कथं श्रद्दधीरन् ? । यदाह—

स्पर्शोऽमेध्यभुजां गवामघहरो वन्द्या विसंज्ञा द्रुमाः, स्वर्गश्छागवधाद्धिनोति च पितॄन् विप्रोपभुक्ताशनम् ।
आप्ताश्छद्मपराः सुराः शिखिहुतं प्रीणाति देवान् हविः, स्फीतं फल्गु च वल्गु च श्रुतिगिरां को वेत्ति लीलायितम् ? ॥१॥

तस्मान्महामोह एवायं मांसेन देवपूजाऽऽदिकमित्यलं विस्तरेण ॥ ३१ ॥

ननु मन्त्रसंस्कृतो वह्निर्न दहति पचति वा, तन्मन्त्रसंस्कृतं मांसं न दोषाय स्यात् । यन्मनुः—

असंस्कृतान् पशून्मन्त्रैर्नाद्याद्विप्रः कथञ्चन । मन्त्रैस्तु संस्कृतानद्याच्छाश्वतं विधिमास्थितः ॥ १ ॥

शाश्वतो नित्यो वैदिक इत्यर्थः ॥ अत्राह—

मन्त्रसंस्कृतमप्यद्याद्यवाल्पमपि नो पलम् । भवेज्जीवितनाशाय हालाहललवोऽपि हि ॥३२॥

मन्त्रसंस्कृतमपि मन्त्रपूतमपि, पलं नाद्यात्, न हि मन्त्रा अग्नेर्दहनशक्तिवन्नरकादिप्रापणशक्तिं मांसस्य प्रतिबध्नन्ति । तथा सति सर्वपापानि कृत्वा पापघ्नमन्त्रानुस्मरणमात्रात् कृतार्थीभवेयुः । एवं च सर्वपापप्रतिषेधोऽपि

निरर्थकः स्यात्, सर्वपापानां मन्त्रादेव नाशप्रसक्तेः । अथ यथा स्तोकं मद्यं न मदयति तथा स्वल्पं मांसं न पापाय स्यात् । उच्यते-यवाल्पमपि यवतुल्यप्रमाणमपि नाद्यात् पलमिति संबध्यते, तदपि दोषाय, अत्रोत्तरार्द्धेन निदर्शनम् ॥ ३२ ॥ इदानीमनुत्तरं मांसस्य दोषमुपदर्शयन्नुपसंहरति—

सद्यः संमूर्च्छितानन्तजन्तुसन्तानदूषितम् । नरकाध्वनि पाथेयं कोऽश्नीयात्पिशितं सुधीः? ॥३३॥

सद्यो जन्तुविशसनकाल एव संमूर्च्छिता उत्पन्ना अनन्ता निगोदरूपा ये जन्तवस्तेषां सन्तानः पुनः पुनर्भवनं तेन दूषितम् । यदाह—

आमासु अ पक्कासु अ विपचमाणासु मंसपेसीसु । सययं चिय उववाओ भणिओ उ निगोअजीवाणं ॥ १ ॥

तत एव नरकाध्वनि पाथेयम्, पिशितभक्षणस्य पाथेयत्वे पिशितमपि पाथेयमुक्तं, कोऽश्नीयात्पिशितं सुधीरित्युपसंहारः । अत्रान्तरश्लोकाः—

मांसलुब्धैरमर्यादैर्नास्तिकैः स्तोकदर्शिभिः । कुशास्त्रकारैर्वैयात्याद्गदितं मांसभक्षणम् ॥१॥ नान्यस्ततो गतघृणो नरकार्चिष्मदिन्धनम् । स्वमांसं परमांसेन यः पोषयितुमिच्छति ॥ २ ॥ स्वाङ्गं पुष्णन्नृगूथेन वरं हि गृहशूकरः । प्राणिघातोद्भवैर्मांसैर्न पुनर्निर्घृणो नरः ॥ ३ ॥ निःशेषजन्तुमांसानि भक्ष्याणीति य ऊचिरे । नृमांसं वर्जितं शङ्के

( १ ) आमासु च पक्कासु च विपच्यमानासु मांसपेशीषु । सततमेव उपपातो भणितस्तु निगोदजीवानाम् ॥ १ ॥

स्ववधाशङ्कयैव ते ॥ ४ ॥ विशेषं यो न मन्येत नृमांसपशुमांसयोः । धार्मिकस्तु ततो नान्यः पापीयानपि नापरः ॥ ५ ॥ शुक्रशोणितसम्भूतं विष्टारसविवर्द्धितम् । लोहितं स्त्यानतामाप्तं कोऽश्नीयादकृमिः पलम् ? ॥ ६ ॥ अहो द्विजातयो धर्मं शौचमूलं वदन्ति च । सप्तधातुकदेहोत्थं मांसमश्नन्ति चाधमाः ॥ ७ ॥ येषां तु तुल्ये मांसान्ने सतृणाभ्यवहारिणाम् । विषामृते समे तेषां मृत्युजीवितदायिनी ॥ ८ ॥ भक्षणीयं सतां मांसं प्राण्यङ्गत्वेन हेतुना । ओदनादिवदित्येवं ये चानुमिमते जडाः ॥ ९ ॥ गोसम्भवत्वाच्चे मूत्रं पयोवत्त्र पिबन्ति किम् ? । प्राण्यङ्गतानिमित्ता च नौदनादिषु भक्ष्यता ॥ १० ॥ शङ्खादि शुचि नास्थ्यादि प्राण्यङ्गत्वे समे यथा । ओदनादि तथा भक्ष्यमभक्ष्यं पिशितादिकम् ॥ ११ ॥ यस्तु प्राण्यङ्गमात्रत्वात् प्राह मांसौदने समे । स्त्रीत्वमात्रान्मातृपत्न्योः स किं साम्यं न कल्पयेत् ? ॥ १२ ॥ पञ्चेन्द्रियस्यैकस्यापि वधे तन्मांसभक्षणात् । यथा हि नरकप्राप्तिर्न तथा धान्यभोजनात् ॥ १३ ॥ न हि धान्यं भवेन्मांसं रसरक्तविकारजम् । अमांसभोजिनस्तस्मान्न पापा धान्यभोजिनः ॥ १४ ॥ धान्यपाके प्राणिवधः परमेकोऽवशिष्यते । गृहिणां देशयमिनां स तु नात्यन्तबाधकः ॥ १५ ॥ मांसखादकगतिं विमृशन्तः, सस्यभोजनरता इह सन्तः । प्राप्नुवन्ति सुरसम्पदमुच्चै-र्जैनशासनजुषो गृहिणोऽपि ॥१६॥२३॥

क्रमप्राप्तं नवनीतभक्षणदोषमाह—

अन्तर्मुहूर्तात्परतः सुसूक्ष्मा जन्तुराशयः । यत्र मूर्छन्ति तन्नाद्यं नवनीतं विवेकिभिः ॥२४॥

अन्तर्मध्यं मुहूर्तस्य अन्तर्मुहूर्तं, तस्मात् परत ऊर्ध्वं, अतिशयेन सूक्ष्माः सुसूक्ष्माः, जन्तुराशयो जन्तुसमूहाः

यस्मिन्नवनीते, मूर्च्छन्ति उत्पद्यन्ते, तन्नवनीतं, नाद्यं न भक्षणीयं, विवेकिभिः ॥ ३४ ॥

एनमेवार्थं भावयति—

**एकस्यापि हि जीवस्य हिंसने किमघं भवेत् ?। जन्तुजातमयं तत् को नवनीतं निषेवते ? ॥३५॥**

एकस्यापि हि जन्तोर्वधे किं निर्देष्टुमशक्यमघं पापं भवेत् तत्तस्माज्जन्तुजातं प्रकृतमस्मिंस्तज्जन्तुजातमयं नवनीतं को निषेवते कः सविवेकोऽश्नाति ? ॥ ३५ ॥

क्रमप्राप्तान्मधुदोषानाह—

**अनेकजन्तुसङ्घातनिघातनसमुद्भवम्। जुगुप्सनीयं लालावत् कः स्वादयति माक्षिकम्? ॥३६॥**

अनेकस्य जन्तुसङ्घातस्य यन्निघातनं विनाशस्तस्मात् समुद्भवो यस्य तत्तथा। निघातनमिति हन्त्यर्थाश्चेति हन्तेश्चुरादिपाठात् णिजन्तस्य रूपम् । अयं परलोकविरोधो दोषः, जुगुप्सनीयं कुत्सनीयं, लालावल्लालामिव, अयमिहलोकविरोधो दोषः, कः सचेतनः, स्वादयति भक्षयति, मक्षिकाभिः कृतं माक्षिकं मधु । एतच्च भ्रामरादीनामुपलक्षणम् ॥ ३६ ॥ इदानीं मधुभक्षकाणां पापीयस्तां दर्शयति—

**भक्षयन्माक्षिकं क्षुद्रजन्तुलक्षक्षयोद्भवम्। स्तोकजन्तुनिहन्तृभ्यः शौनिकेभ्योऽतिरिच्यते ॥३७॥**

क्षुद्रजन्तुरनस्थिः स्यादथवा क्षुद्र एव यः। शतं वा प्रसृतिर्येषां केचिदा नकुलादपि ॥ १ ॥

तेषां क्षुद्रजन्तूनां लक्षाणि, लक्षग्रहणं बहुत्वोपलक्षणम्। तेषां क्षयो विनाशस्तस्मादुद्भवो यस्य तत्तथा,

तद्भक्षयन् स्तोकपश्वादिजन्तुनिहन्तृभ्य: शौनिकेभ्यः खट्टिकेभ्योऽतिरिच्यते अधिकीभवति, भक्षकोऽपि घातक इत्युक्तप्रायम् ॥ ३७ ॥

लौकिकानामप्युच्छिष्टभोजनत्याजिनामुच्छिष्टत्वान्मधु परिहर्त्तव्यमेवेत्याह—

**एकैककुसुमक्रोडाद्रसमापीय मक्षिकाः । यद्वमन्ति मधूच्छिष्ट तदश्नन्ति न धार्मिकाः ॥३८॥**

एकैकस्य कुसुमस्य यः क्रोड उत्सङ्गस्तस्माद्रस मकरन्दमापीय पीत्वा, मक्षिका यद्वमन्ति उद्गिरन्ति, तदुच्छिष्ट मधु, धर्मं चरन्ति धार्मिकास्ते नाश्नन्ति । अनुच्छिष्टभोजन हि धर्मो लौकिकानाम् ॥ ३८ ॥

ननु 'त्रिदोषशमन मधु' नातःपरमौषधमस्तीति रोगोपशान्तये मधुभक्षणे को दोष इत्याह—

**अप्यौषधकृते जग्ध मधु श्वभ्रनिबन्धनम् । भक्षित प्राणनाशाय कालकूटकणोऽपि हि ॥३९॥**

आस्तां रसास्वादलाम्पटोन यावदौषधकृतेऽपि औषधनिमित्तमपि मधु जग्ध यद्यपि रोगापहारक, तथापि श्वभ्रस्य नरकस्य निबन्धनम्, हि यस्मात् प्रमादाज्जीवितार्थितया वा कालकूटस्य विषस्य कणोऽपि लवोऽपि भक्षित सन् प्राणनाशाय भवति ॥ ३९ ॥

ननु खर्जूरद्राक्षादिरसवन्मधु मधुरमिति सर्वेन्द्रियाप्यायकत्वात् कथ परिहार्यं स्यादित्याह—

**मधुनोऽपि हि माधुर्यमबोधैरहहोच्यते । आसाद्यन्ते यदास्वादाच्चिर नरकवेदनाः ॥ ४० ॥**

सत्यमस्ति मधुनो माधुर्यं व्यवहारत, परमार्थतस्तु नरकवेदनाहेतुत्वादत्यन्तकटुकत्वमेव । अबोधैरिति पर-



मार्थपरिशीलनाविकलैः, नरकवेदनाहेतोरपि मधुनो माधुर्यवर्णनमबोधानामित्यहहेत्यनेन विषादो द्योत्यते । यस्य मधुन आस्वादान्नरकवेदनाश्चिरमासाद्यन्ते प्राप्यन्ते ॥ ४० ॥

पवित्रत्वात् मधु देवस्नानोपयोगीति ये मन्यन्ते तानुपहसति—

**मक्षिकामुखनिष्ठ्यूतं जन्तुघातोद्भवं मधु । अहो पवित्रं मन्वाना देवस्नाने प्रयुञ्जते ॥ ४१ ॥**

मक्षिकाणां मुखानि तैर्निष्ठ्यूतं वान्तं जन्तुघातात्प्राणिघातादुद्भवो यस्य तत्तादृशमपवित्रं मधु, पवित्रं शुचि मन्वाना अभिमन्यमानाः, देवानां शङ्करादीनां, स्नाने स्नाननिमित्तं, प्रयुञ्जते व्यापारयन्ति अहो इत्युपहासे । यथा—

करभाणां विवाहे तु रासभास्तत्र गायनाः । परस्परं प्रशंसन्ति अहो रूपमहो ध्वनिः ॥ १ ॥ ४१ ॥

क्रमप्राप्तान् पञ्चोदुम्बरदोषानाह—

**उदुम्बरवटप्लक्षकाकोदुम्बरशाखिनाम् । पिप्पलस्य च नाश्नीयात्फलं कृमिकुलाकुलम् ॥४२॥**

उदुम्बरवटप्लक्षकाकोदुम्बरिकापिप्पलानां पञ्चोदुम्बरसंज्ञितानां फलं नाश्नीयात् । अनशने कारणमाह— कृमिकुलाकुलं, एकस्मिन्नपि फले तावन्तः कृमयः सम्भवन्ति ये परिसंख्यातुमपि न शक्यन्ते ।

यल्लौकिका अपि पेठुः—



कोऽपि क्वापि कुतोऽपि कस्यचिदहो चेतस्यकस्माज्जनः, केनापि प्रविशत्युदुम्बरफलप्राणिक्रमेण त्वणात् । येना-

स्मिन्नपि पाटिते विघटिते वित्रासिते स्फोटिते, निष्पिष्टे परिगालिते विदलिते निर्यात्यसौ वा न वा ॥॥१ इति ॥४२॥

पञ्चोदुम्बरफलविरताना स्तुतिमाह—

**अप्राप्नुवन्नन्यभक्ष्यमपि क्षामो बुभुक्षया । न भक्षयति पुण्यात्मा पञ्चोदुम्बरज फलम् ॥४३॥**

य पुण्यात्मा पवित्रात्मा पुरुष', स पञ्चोदुम्बरज फल न भक्षयति, आस्तां सुलभधान्यफलसमृद्धे देशे काले वा, यावद्देशदोषात् कालदोषाद्वा अप्राप्नुवन्नप्यन्यभक्ष्य धान्यफलादिभक्ष्य, अपिशब्द उत्तरत्रापि सम्बध्यते, बुभुक्षया क्षामोऽपि कृशोऽपि, अबुभुक्षितस्य स्वस्थस्य व्रतपालन नातिदुष्करम्, यस्तु अप्राप्तभोज्यः क्षुत्क्षामश्च व्रत पालयति स पुण्यात्मेति प्रशस्यते ॥ ४३ ॥

क्रमप्राप्तमनन्तकायनियम श्लोकत्रयेण दर्शयति—

**आर्द्र कन्द समग्रोऽपि सर्वः किशलयोऽपि च। स्नुही लवणवृक्षत्वक् कुमारी गिरिकर्णिका ॥४४॥**
**शतावरी विरूढानि गुडूची कोमलाम्लिका । पल्यङ्कोऽमृतवल्ली च वल्ल. शूकरसञ्ज्ञितः ॥४५॥**
**अनन्तकाया सूत्रोक्ता अपरेऽपि कृपापरै· । मिथ्यादृशामविज्ञाता वर्जनीया प्रयत्नत. ॥४६॥**

आर्द्रोऽशुष्कः, शुष्कस्य तु निर्जीवत्वादनन्तकायत्व न भवति, कन्दो भूमिमध्यगो वृक्षावयव समग्रोऽपि, सर्वे कन्दा इत्यर्थ । ते च सूरणआर्द्रकलशुनवज्रकन्दहरिद्राकच्चूरपलाशकन्दगृञ्जनलोढककसेरुकमुद्गरमुस्तामूलक-आलुकपिण्डालुकहस्तिकन्दमनुष्यकन्दप्रभृतय , किशलय' पत्रादर्वाग् बीजस्योच्छूनावस्था सर्वा न तु काचिदेव,

स्नुही वज्रतरुः; लवणनाम्नो वृक्षस्य त्वक्, त्वगेव न त्वन्ये अवयवाः, कुमारी मांसलप्रणालाकारपत्रा, गिरिकर्णिका वल्लीविशेषः, शतावरी वल्लीविशेष एव, विरूढानि अङ्कुरितानि द्विदलधान्यानि, गुडूची वल्लीविशेषः, कोमलाऽम्लिका कोमला अबद्धास्थिका अम्लिका चिञ्चिणिका; पल्ल्यङ्कः शाकभेदः, अमृतवल्ली वल्लीविशेषः, वल्लः शूकरसंज्ञितः शूकरवल्ल इत्यर्थः; शूकरसंज्ञितग्रहणं धान्यवल्लनिषेधार्थम्। एते आर्यप्रसिद्धाः। म्लेच्छप्रसिद्धास्तु अन्येऽपि सूत्रोक्ताः; सूत्रं जीवाभिगमः। अपरेऽपि कृपापरैः सुश्रावकैर्वर्जनीयाः। ते च मिथ्यादृष्टीनामविज्ञाताः मिथ्यादृशो हि वनस्पतीनपि जीवत्वेन न मन्यन्ते कुतः पुनरनन्तकायान्॥ ४४॥ ४५॥ ४६॥

अथ क्रमप्राप्तमज्ञातफलं वर्जयितुमाह—

**स्वयं परेण वा ज्ञातं फलमद्याद्विशारदः। निषिद्धे विषफले वा मा भूदस्य प्रवर्तनम्॥४७॥**

अज्ञातमिति संबन्धिविशेषानिर्देशात् स्वयमात्मना, परेण वा अन्येन, ज्ञातं फलमद्याद्भक्षयेद्विशारदो धीमान्; यत्तु स्वयं परेण वा न ज्ञातं तदज्ञातफलं वर्जयेत्; अज्ञातफलभक्षणे दोषोऽयम्—निषिद्धे फले विषफले वा अज्ञानादस्य विशारदस्य मा भूत्प्रवृत्तिः। अज्ञानतो हि प्रतिषिद्धे फले प्रवर्त्तमानस्य व्रतभङ्गः, विषफले तु जीवितनाशः॥ ४७॥

अथ क्रमप्राप्तं रात्रिभोजनं निषेद्धुमाह—

**अन्नं प्रेतपिशाचाद्यैः सञ्चरद्भिर्निरङ्कुशैः। उच्छिष्टं क्रियते यत्र तत्र नाद्याद्दिनात्यये॥ ४८॥**

प्रेता अधमा व्यन्तराः, पिशाचा व्यन्तरा एव; आद्यग्रहणाद्राक्षसादिपरिग्रहः, निशाचरत्वान्निरङ्कुशैः सर्वत्र

सम्बराद्धिः स्पर्शादिनोच्छिष्टमभोज्य क्रियते यत्र दिनात्यये रात्रौ, तत्र नाद्यान्न भुञ्जीत । यदाहुः—

मालिंति महिम्मल जामिणीसु रयणीअरा समंतेण । ते विट्टालेंति *फुड रयणीए भुजमाण तु ॥ १ ॥ ४८ ॥

तथा—

घोरान्धकाररुद्धाक्षै पतन्तो यत्र जन्तव । नैव भोज्ये निरीक्ष्यन्ते तत्र भुञ्जीत को निशि ? ।४९।

प्रबलान्धकारनिरुद्धलोचनै' कृमिपिपीलिकामक्षिकादयः पतन्तो घृततैलतक्रादौ भोज्ये न दृश्यन्ते यत्र, तत्र तस्यां निशि सचेतनः को भुञ्जीत ? ॥ ४६ ॥

रात्रिभोजने दृष्टान् दोषान् श्लोकत्रयेणाह—

मेधां पिपीलिका हन्ति यूका कुर्याज्जलोदरम् । कुरुते मक्षिका वान्ति कुष्ठरोग च कोलिक ।५०।

कण्टको दारुखण्ड च वितनोति गलव्यथाम् । व्यञ्जनान्तर्निपतितस्तालु विध्यति वृश्चिक ।५१।

विलग्नश्च गले वाल स्वरभङ्गाय जायते । इत्यादयो दृष्टदोषा' सर्वेषां निशि भोजने ।५२।

पिपीलिका कीटिका, अन्नादिमध्ये भुक्ता सती, मेधा बुद्धिविशेष, हन्ति, पिपीलिकेति जातावेकवचनम् । तथा यूका जलोदरमुदररोगविशेष कुर्यात्, तथैव मक्षिका वान्ति वमन करोति तथैव कोलिको मर्कटकः, कुष्ठरोग,

---

( १ ) मालयन्ति महीतल यामिनीषु रजनीचरा समन्तात् । तेऽपि च्छलन्ति स्फुट रजन्या भुञ्जान तु ॥ १ ॥

* ते वि छलति हु इति रत्नशेखरसूरिकृतश्रावकप्रतिक्रमणसूत्रटीकायाम् ।

करोति, कण्टको बदर्यादिसंबन्धी, दारुखण्डं च काष्ठशकलं, तथैव गलव्यथां वितनोति, व्यञ्जनानि शाकादीनि तेषां मध्ये निपतितो वृश्चिकस्तालु विध्यति । ननु पिपीलिकादयः सूक्ष्मत्वान्न दृश्यन्ते, वृश्चिकस्तु स्थूलत्वाद् दृश्यत एव तत्कथमयं भोज्ये निविशेत? उच्यते—व्यञ्जनमिह वार्त्ताकुशाकरूपमभिप्रेतं तद्वृन्तं च वृश्चिकाकारमेव भवतीति वृश्चिकस्य तन्मध्यपतितस्यालक्ष्यत्वाद्भोज्यता सम्भवतीति । विलग्नश्च गले वाल इत्यादि स्पष्टम्; एवमादयो रात्रिभोजने दृष्टा दोषाः सर्वेषां मिथ्यादृशामपि । यदाहुः—

[1]मेहं पिपीलिआओ हणंति वमणं च मच्छिया कुणइ । जूया जलोयरत्तं कोलियओ कोढरोगं च ॥ १ ॥

वालो सरस्स भङ्गं कण्टो लग्गइ गलम्मि दारुं च । तालुम्मि विंधइ अली वंजणमज्झम्मि भुंजंतो ॥ २ ॥

अपि च निशाभोजने क्रियमाणे अवश्यं पाकः संभवी तत्र च षड्जीवनिकायवधोऽवश्यंभावी, भाजनधावनादौ च जलगतजन्तुविनाशः, जलोज्झनेन भूमिगतकुन्थुपिपीलिकादिजन्तुघातश्च भवति, तत्प्राणिरक्षणकाङ्क्षया अपि निशाभोजनं न कर्त्तव्यम् । यदाहुः—

जीवाण कुंथुमाईण घायणं भायणधोयणाईसु । एमाइरयणिभोयणदोसे को साहिउं तरइ ? ॥१॥५०॥५१॥५२॥

---

( १ ) मेधां पिपीलिका घ्नन्ति ( हन्ति ) वमनं च मक्षिका करोति । यूका जलोदरत्वं कोलिकः कुष्ठरोगं च ॥ १ ॥
वालः स्वरस्य भङ्गं कण्टको लगति गले दारु च । तालुनि विध्यति अलिर्व्यञ्जनमध्ये भुज्यमानः ॥ २ ॥

( २ ) जीवानां कुन्थ्वादीनां घातनं भाजनधावनादिषु । एवमादिरजनीभोजनदोषान् कः कथयितुं शक्नोति ? ॥१ ॥

ननु यत्राऽन्नस्य न पाको न वा भाजनधावनादिसंभवस्तत्सिद्धं मोदकादि खर्जूरद्राक्षादि च भक्षयतः क इव दोष इत्याह—

नाप्रेक्ष्यसूक्ष्मजन्तूनि निश्यद्यात्प्रासुकान्यपि। अप्युद्यत्केवलज्ञानैर्नादृतं यन्निशाऽशनम् ।५३।

प्रासुकान्यपि अचेतनान्यपि उपलक्षणत्वात्तदानीमपक्वान्यपि मोदकफलादीनि न निश्यद्यात्। कुत ? अप्रेक्ष्यसूक्ष्मजन्तूनि अप्रेक्ष्याः प्रेक्षितुमशक्याः सूक्ष्माः कुन्थुपनकादयो जन्तवो यत्र तानि विशेषणद्वारेण हेतुवचनं, अप्रेक्ष्यसूक्ष्मजन्तुत्वादित्यर्थः, यद् यस्मादुत्पन्नकेवलज्ञानैः केवलज्ञानबलेनाधिगतसूक्ष्मेतरजन्तुसंपातैर्निर्जन्तुकस्याहारस्याभावान्नादृतं निशाभोजनम्। यदुक्तं निशीथभाष्ये—

जइवि हु फासुगदव्वं कुंथूपणगावि तहवि दुप्पस्सा। पच्चक्खनाणिणो वि हु राईभत्तं परिहरंति ॥ १ ॥
जइवि हु पिवीलगाई दीसंति पईवमाइउज्जोए। तहवि खलु अणाइन्नं मूलवयविराहणा जेण ॥ २ ॥ ५३ ॥

लौकिकसंवाददर्शनेनापि रात्रिभोजनं प्रतिषेधति—

धर्मविन्नैव भुञ्जीत कदाचन दिनात्यये। बाह्या अपि निशाभोज्यं यदभोज्यं प्रचक्षते ॥५४॥

धर्मवित् श्रुतधर्मवेदी न कदाचिन्निशि भुञ्जीत, बाह्या जिनशासनबहिर्भूता लौकिकास्तेऽपि यत् यस्मात् निशि

---

( १ ) यद्यपि खलु प्रासुकद्रव्यं कुन्थुपनका अपि तथापि दुर्दर्शाः। प्रत्यक्षज्ञानिनोऽपि खलु रात्रिभक्तं परिहरन्ति ॥१॥
यद्यपि खलु पिपीलिकादयो दृश्यन्ते प्रदीपाद्युद्द्योते। तथापि खलु अनाचीर्णं मूलव्रतविराधना येन ॥ २ ॥

भोज्यमभोज्यं प्रचक्षते॥ ५४ ॥

येन शास्त्रेण बाह्या निशाभोज्यमभोज्यं प्रचक्षते तच्छास्त्रोपदर्शनार्थं तद्यथेति तच्छास्त्रमेव पठति— तद् यथा—

**त्रयीतेजोमयो भानुरिति वेदविदो विदुः। तत्करैः पूतमखिलं शुभं कर्म समाचरेत् ॥ ५५॥**

त्रयी ऋग्यजुःसामलक्षणा तस्यास्तेजः प्रकृतं प्रस्तुतमस्मिन् त्रयीतेजोमयो भानुरादित्यः, त्रयीतनुरिति ह्यादित्यस्य नाम। इति वेदविदो जानन्ति। तत इति शेषः। तत्करैर्भानुकरैः पूतं पवित्रीकृतमखिलं समस्तं शुभं कर्म समाचरेत्; तदभावे शुभं कर्म न कुर्य्यात् ॥ ५५ ॥ एतदेवाह—

**नैवाहुतिर्न च स्नानं न श्राद्धं देवतार्चनम्। दानं वा विहितं रात्रौ भोजनं तु विशेषतः ॥५६॥**

आहुतिरग्नौ समिदाद्याधानं, स्नानमङ्गप्रक्षालनं, श्राद्धं पितृकर्म, देवतार्चनं देवपूजा, दानं विश्राणनं; न विहितमिति सर्वत्र नञो योगः; भोजनं तु विशेषतो न विहितमिति। ननु नक्तभोजनं श्रेयसे श्रूयते, न च रात्रिभोजनं विना तद्भवति? उच्यते—नक्तशब्दार्थापरिज्ञानादेवमुच्यते ॥ ५६ ॥ तदेवाह—

**दिवसस्याष्टमे भागे मन्दीभूते दिवाकरे। नक्तं तु तद्विजानीयान्न नक्तं निशि भोजनम् ॥५७॥**

दिवसस्य दिनस्याष्टमे भागे पाश्चात्येऽर्द्धप्रहरे यद्भोजनं तन्नक्तमिति विजानीयात्। द्विविधा हि शब्दस्य प्रवृत्तिर्मुख्या गौणी च; तत्र क्वचिन्मुख्यया व्यवहारः, क्वचिन्मुख्यार्थबाधायां सत्यां गौण्या; नक्तशब्दस्य

रात्रिभोजनलक्षणमुख्यार्थबाधा, रात्रिभोजनस्य तत्र तत्र प्रतिषिद्धत्वादिति गौणार्थ एव नक्तशब्द इत्यसौ दिवसशेषभोजने वर्त्तते । तत्र निमित्तमुक्त-मन्दीभूते दिवाकरे, मुख्यार्थप्रतिषेधाच्च न निशि भोजनं नक्तम् ॥ ५७ ॥

रात्रिभोजनप्रतिषेधमेव परकीयेण श्लोकद्वयेनाह—

देवैस्तु भुक्त पूर्वाह्ने मध्याह्ने ऋषिभिस्तथा । अपराह्ने च पितृभिः सायाह्ने दैत्यदानवैः ॥५८॥
सन्ध्यायां यक्षरक्षोभि' सदा भुक्त कुलोद्वह । सर्ववेलां व्यतिक्रम्य रात्रौ भुक्तमभोजनम् ॥५९॥

पूर्वमह्न पूर्वाह्णः तस्मिन् देवैर्भुक्त मध्यमह्नो मध्याह्नस्तस्मिन्नृषिभिर्भुक्त, अपरमह्नो ऽपराह्णस्तस्मिन् पितृभिर्भुक्तम्, सायमह्नः सायाह्नो विकालस्तस्मिन् दैत्यैर्दितिजैर्दानवैर्दनुजैर्भुक्तम्, सन्ध्या रजनीदिनयोः प्रवेशनिष्काशौ तस्यां यक्षैर्गुह्यकै रक्षोभी राक्षसैर्भुक्तम् । कुलोद्वहेति युधिष्ठिरस्यामन्त्रणम् । सर्वेषां देवादीनां वेला अवसरस्तां व्यतिक्रम्य रात्रौ भुक्तमभोजनम् ॥ ५८ ॥ ५९ ॥

## ॥ आयुर्वेदेऽप्युक्तम् ॥

एव पुराणेन रात्रिभोजनप्रतिषेधस्य सवादमभिधायायुर्वेदेन सवादमाह—आयुर्वेदेऽप्युक्तमित्यनेन । आयुर्वेदस्तु—
हृन्नाभिपद्मसङ्कोचश्चण्डरोचिरपायत. । अतो नक्तं न भोक्तव्यं सूक्ष्मजीवादनादपि ॥६०॥

इह शरीरे द्वे पद्मे; हृत्पद्म च यदधोमुख, नाभिपद्म च यदूर्ध्वमुख, द्वयोरपि च पद्मयोः रात्रौ सङ्कोच,

कुतः ? चण्डरोचिषः सूर्यस्यापायादस्तमयात् । अतो हृत्पद्मनाभिपद्मसङ्कोचाद्धेतोर्नक्तं रात्रौ न भोक्तव्यम्; सूक्ष्मजीवादनादपीति द्वितीयं निशिभोजनप्रतिषेधकारणम् । सूक्ष्मा ये जीवास्तेषामदनं भक्षणं, तस्मादपि रात्रौ न भोक्तव्यम् ॥ ६० ॥

परपक्षसंवादमभिधाय स्वपक्षं समर्थयते—

**संसजज्जीवसङ्घातं भुञ्जाना निशि भोजनम् । राक्षसेभ्यो विशिष्यन्ते मूढात्मानः कथं नु ते? ॥ ६१ ॥**

संबध्यमानजीवसमूहं, भोजनं भोज्यं, भुञ्जाना निशि रात्रौ, राक्षसेभ्यः क्रव्यादेभ्यः कथं नु कथं नाम, विशिष्यन्ते भिद्यन्ते ? राक्षसा एव ते इत्यर्थः । मूढात्मानो जडाः; अपि च, लब्धे मानुषत्वे जिनधर्मपरिष्कृते विरतिरेव कर्तुमुचिता, विरतिहीनस्तु शृङ्गपुच्छहीनः पशुरेव ॥ ६१ ॥

एतदेवाह—

**वासरे च रजन्यां च यः खादन्नेव तिष्ठति । शृङ्गपुच्छपरिभ्रष्टः स्पष्टं स पशुरेव हि ॥ ६२ ॥**

स्पष्टम् ॥ ६२ ॥ रात्रिभोजननिवृत्तेभ्योऽपि सविशेषपुण्यवतो दर्शयति—

**अह्नो मुखेऽवसाने च यो द्वे द्वे घटिके त्यजन् । निशाभोजनदोषज्ञोऽश्नात्यसौ पुण्यभाजनम् ॥**

अह्नो मुखे आरम्भे, अवसाने पश्चिमे भागे, द्वे द्वे घटिके मुहूर्त्ते मुहूर्त्ते रात्रेः प्रत्यासन्नं त्यजन् परिहरन्, योऽश्नाति स पुण्यभाजनम् । निशाभोजनदोषज्ञ इति निशाभोजने सम्पातिमजन्तुसम्पातलक्षणा ये

दोषास्तान् जानन् रात्रिप्रत्यासन्नमपि मुहूर्तं मुहूर्तं सदोषत्वेन जानाति, अत एवागमे सर्वजघन्य प्रत्याख्यान मुहूर्तप्रमाणनमस्कारसहितमुच्यते । पाश्चात्यमुहूर्त्तादप्यर्वाक् श्रावको भोजन करोति, तदनन्तर रात्रिभोजन प्रत्याख्याति ॥ ६३ ॥

ननु यो दिवैव भुङ्क्ते तस्य रात्रिभोजनप्रत्याख्याने फल नास्ति, फलविशेषो वा कश्चिदुच्यतामित्याह—

अकृत्वा नियम दोषाभोजनाद्दिनभोज्यपि। फल भजेन्न निर्व्याज न वृद्धिर्भाषितं विना ॥६४॥

नियम निवृत्तिं, रात्रिभोजनादकृत्वा दिने भोक्तु शीलमस्यासौ दिनभोजी सोऽपि निशाभोजनविरतेः फल निर्व्याज निश्छद्म, न भजेत् न लभेत । कुत इत्याह—न वृद्धिर्भाषित विना, वृद्धिः कलान्तर, भाषित जल्पित विना न स्यात् । लौकिकमेतद्, यथा भाषितमेव कलान्तर भवेदिति ॥ ६४ ॥

पूर्वोक्तस्य विपर्ययमाह—

ये वासर परित्यज्य रजन्यामेव भुञ्जते । ते परित्यज्य माणिक्य काचमाददते जडा· ॥६५॥

दिवस परित्यज्य तच्छीलतया रात्रावेव ये भुञ्जते, दृष्टान्त स्पष्टः ॥ ६५ ॥

ननु नियमः सर्वत्र फलवान्, ततो यस्य 'रात्रावेव मया भोक्तव्य न दिवसे' इति नियमस्तस्य का गतिरित्याह—

वासरे सति ये श्रेयस्काम्यया निशि भुञ्जते। ते वपन्त्यूषरक्षेत्रे शालीन् सत्यपि पल्वले ॥६६॥

श्रेयोहेतौ वासरभोजने सत्यपि कुशास्त्रसंस्कारान्मोहाद्वा श्रेयस्काम्यया ये रात्रावेव भुञ्जते ते शालिवपनयोग्ये

पल्वले सत्यपि ऊषरे क्षेत्रे शालीन् वपन्ति । यथा ह्यूषरे क्षेत्रे शालिवपनं निरर्थकं, तथा रात्रावेव मया भोक्तव्यमिति निष्फलो नियमः । अधर्मनिवृत्तिरूपो हि नियमः फलवानयं तु धर्मनिवृत्तिरूप इत्यफलो विपरीतफलो वा ।।६६।।

रात्रिभोजनस्य फलमाह—

**उलूककाकमार्जारगृध्रशम्बरशूकराः । अहिवृश्चिकगोधाश्च जायन्ते रात्रिभोजनात् ॥ ६७ ॥**

रात्रिभोजनादुलूकादिषु जन्म भवति। उलूकादय उपलक्षणं; तेनान्येष्वप्यधमतिर्यक्षु रात्रिभोजिनो जायन्ते । ६७॥

वनमालोदाहरणेन रात्रिभोजनदोषस्य महत्तां दर्शयति—

**श्रूयते ह्यन्यशपथाननादृत्यैव लक्ष्मणः । निशाभोजनशपथं कारितो वनमालया ॥ ६८ ॥**

श्रूयते रामायणे दशरथनन्दनो लक्ष्मणः पितृनिदेशात् सह रामेण सीतया च दक्षिणापथे प्रस्थितोऽन्तरा कूबरनगरे महीधरराजतनयां वनमालामुपयेमे; ततश्च रामेण सह परतो देशान्तरं यियासन् स्वभार्यां वनमालां प्रतिमोचयति स्म; सा तु तद्विरहकातरा पुनरागमनमसम्भावयन्ती लक्ष्मणं शपथानकारयत् । यथा प्रिये ! रामं मनीषिते देशे परिस्थाप्य यद्यहं भवतीं स्वदर्शनेन न प्रीणयामि, तदा प्राणातिपातादिपातकिनां गतिं यामीति; सा तु तैः शपथैरतुष्यन्ती "यदि रात्रिभोजनकारिणां शपथं करोषि, तदा त्वां प्रतिमुञ्चामि, नान्यथेति" तमुवाच; स तथेत्यभ्युपगत्य देशान्तरं प्रस्थितवान् । एवमन्यशपथाननादृत्य लक्ष्मणो वनमालया रात्रिभोजनशपथं कारितः । विशेषचरितं तु ग्रन्थगौरवभयान्नेह लिख्यते ॥ ६८ ॥

शास्त्र निदर्शनं च विना सकलजनानुभवसिद्धं रात्रिभोजनविरतेः फलमाह—

**करोति विरतिं धन्यो यः सदा निशि भोजनात्। सोऽर्द्धं पुरुषायुषस्य स्यादवश्यमुपोषितः ॥६९॥**

यः कश्चिद्धर्मधनो हि रात्रिभोजनस्य विरतिं करोति, सोऽर्द्धं पुरुषायुषस्योपोषितः स्यात्। उपवासस्य चैकस्यापि निर्जराकारणत्वान्महाफलत्वं पञ्चाशद्वर्षसम्मितानां तूपवासानां कियत्फलं सम्भाव्यते? इदं च शतवर्षायुषं पुरुषानधिकृत्योक्तम्। पूर्वकोटीजीविनस्तु प्रति तदर्द्धमुपवासानां न्यायसिद्धमेव ॥ ६९ ॥

तदेवं रात्रिभोजनस्य भूयांसो दोषास्तत्परिवर्जने तु ये गुणास्तान् वक्तुमस्माकमशक्तिरेवेत्याह—

**रजनीभोजनत्यागे ये गुणाः परितोऽपि तान्। न सर्वज्ञादृते कश्चिदपरो वक्तुमीश्वरः ॥७०॥**

स्पष्टम् ॥ ७० ॥ अथ क्रमप्राप्तमामगोरससम्पृक्तद्विदलादिभोजनप्रतिषेधमाह—

**आमगोरससम्पृक्तद्विदलादिषु जन्तवः। दृष्टाः केवलिभिः सूक्ष्मास्तस्मात्तानि विवर्जयेत् ॥७१॥**

इह हीयं स्थितिः—केचिद्भावा हेतुगम्याः, केचित्त्वागमगम्यास्तत्र ये यथा हेत्वादिगम्यास्ते तथैव प्रवचनधरैः प्रतिपादनीयाः। आगमगम्येषु हेतून्, हेतुगम्येषु त्वागममात्रं प्रतिपादयन्नाज्ञाविराधकः स्यात्। यदाह—

[1]जो हेउवायपक्खम्मि हेउओ आगमे य आगमिओ। सो ससमयपन्नवओ सिद्धंतविराहओ अन्नो ॥ १ ॥

इत्यामगोरससम्पृक्तद्विदलादौ न हेतुगम्यो जीवसद्भावः, किन्त्वागमगम्य एव। तथाहि–आमगोरससम्पृक्ते

(१) यो हेतुवादपक्षे हेतुक आगमे चागमिकः। स स्वसमयप्रज्ञापकः सिद्धान्तविराधकोऽन्यः।

द्विदले आदिशब्दात्पुष्पितौदने, अहर्द्वितयातीते दध्नि, कुथितान्ने च, ये जन्तवस्ते केवलज्ञानिभिर्दृष्टा इति जन्तुमिश्रामगोरसमिश्रद्विदलादिभोजनं वर्जयेत्। तद्भोजनाद्धि प्राणातिपातलक्षणो दोषः। न च केवलिनां निर्दोषत्वेनाप्तानां वचनानि विपरियन्ति ॥ ७१ ॥

अपि च। न मद्यादीनि कुथितान्नपर्यवसानान्येवाभोज्यानि, किन्त्वन्यान्यपि जीवसंसक्तिबहुलान्यागमादुपलभ्य वर्जनीयानीत्याह—

जन्तुमिश्रं फलं पुष्पं पत्रं चान्यदपि त्यजेत्। सन्धानमपि संसक्तं जिनधर्मपरायणः ॥७२॥

जन्तुभिर्मिश्रं फलं मधूकबिल्वादेः, पुष्पमरणिशिग्रुमधूकादेः, पत्रं प्रावृषि तण्डुलीयकादेः, अन्यदपि मूलादि त्यजेत्। सन्धानमाम्रफलादीनां यदि संसक्तं भवेत्, तदा जिनधर्मपरायणः कृपालुत्वात्त्यजेदिति संबन्धः। इदं च भोजनतो भोगोपभोगयोर्व्रतमुक्तम्; भोगोपभोगकारणं धनोपार्जनमपि भोगोपभोग उच्यते, उपचारात्। तत्परिमाणमपि भोगोपभोगव्रतम्। यथा श्रावकस्य खरकर्मपरिहारेण कर्मान्तरेण जीविका। एतच्च सङ्क्षेपार्थमतिचारप्रकरण एव वक्ष्यति। अवसितं भोगोपभोगव्रतम् ॥ ७२ ॥

अथानर्थदण्डस्य तृतीयगुणव्रतस्यावसरः तच्चतुर्द्धेति श्लोकद्वयेनाह—

आर्त्तं रौद्रमपध्यानं पापकर्मोपदेशिता। हिंसोपकारिदानं च प्रमादाचरणं तथा ॥ ७३ ॥
शरीराद्यर्थदण्डस्य प्रतिपक्षतया स्थितः। योऽनर्थदण्डस्तत्त्यागस्तृतीयं तु गुणव्रतम् ॥७४॥

अपकृष्ट ध्यानमपध्यान, तदनर्थदण्डस्य प्रथमो भेदः। तच्च द्वेधा—आर्त्तं रौद्रं च, तत्र ऋत दुःख तत्र भवमार्त्त, यदि वा अर्त्तिः पीडा यातन च, तत्र भवमार्त्तम्। तच्चतुर्द्धा—अमनोज्ञानां शब्दादीनां सम्प्रयोगे तद्विप्रयोगचिन्तनमसम्प्रयोगप्रार्थना च प्रथमम्। शूलादिरोगसम्भवे च तद्वियोगप्रणिधान तदसम्प्रयोगचिन्ता च द्वितीयम्। इष्टानां च शब्दादीनां विषयाणां सातवेदनायाश्चावियोगाध्यवसान सम्प्रयोगाभिलाषश्च तृतीयम्। देवेन्द्रचक्रवर्त्यादिविभवप्रार्थनारूप निदान चतुर्थम्। यदाहुः—

अमणुण्णाण सद्दाइविसयवत्थूण दोसमइलस्स। धणिअं विओअचिंतणमसपओगाणुसरणं च ॥ १ ॥

तह सूलसीसरोगाइवेयणाए विओअपणिहाणं। तदसपओगचिंता तप्पडियाराउलमणस्स ॥ २ ॥

इट्ठाण विसयाईण वेयणाए अ रागरत्तस्स। अविओगज्झवसाणं तह संजोगाभिलासो अ ॥ ३ ॥

देविंदचक्कवट्टित्तणाइगुणरिद्धिपत्थणामइयं। अहमं नियाणचिंतणमन्नाणाणुगयमच्चंतं ॥ ४ ॥

एयं चउव्विहं रागदोसमोहंकियस्स जीवस्स। अट्टज्झाणं संसारवद्धणं तिरियगइमूलं ॥ ५ ॥

---

(१) अमनोज्ञाना शब्दादिविषयवस्तूना द्वेषमलिनस्य। अत्यर्थं वियोगचिन्तनमसम्प्रयोगानुसरण च ॥ १ ॥

(२) तथा शूलशिरोरोगादिवेदनाया वियोगप्रणिधानम्। तदसम्प्रयोगचिन्ता तत्प्रतीकाराकुलमनस ॥ २ ॥

(३) इष्टाना विषयादीना वेदनायाश्च रागरक्तस्य। अवियोगाध्यवसान तथा सयोगाभिलाषश्च ॥ ३ ॥

(४) देवेन्द्रचक्रवर्त्तित्वादिगुणर्द्धिप्रार्थनामयम्। अधम निदानचिन्तनमज्ञानानुगतमत्यन्तम् ॥ ४ ॥

(५) एतत् चतुर्विधं रागद्वेषमोहाङ्कितस्य जीवस्य। आर्त्तध्यान ससारवर्द्धन तिर्य्यग्गतिमूलम् ॥ ५ ॥

रोदयत्यपरानिति रुद्रो दुःखहेतुस्तेन कृतं तस्य वा कर्म रौद्रम्। तच्चतुर्द्धा—हिंसानुबन्धि मृषानुबन्धि स्तेयानुबन्धि धनसंरक्षणानुबन्धि च। यदाहुः—

सत्तवहवेहबंधणदहणंकणमारणाइपणिहाणं। अइकोहग्गहघत्थं निग्घिणमणसोऽहमविवागं ॥ १ ॥

पिसुणासब्भासब्भूयघायाइवयणपणिहाणं। मायाविणो अइसंधणपरस्स पच्छन्नपावस्स ॥ २ ॥

तह तिव्वकोहलोहाउलस्स भूओवघायणमणज्जं। परदव्वहरणचित्तं परलोगावायनिरवेक्खं ॥ ३ ॥

सद्दाइविसयसाहणधणसंरक्खणपरायणमणिट्ठं। सव्वाभिसंकणपरोवघायकलुसाउलं चित्तं ॥ ४ ॥

एयं चउव्विहं रागदोसमोहंकियस्स जीवस्स। रोद्दज्झाणं संसारवद्धणं निरयगइमूलं ॥ ५ ॥

एवमार्त्तरौद्रध्यानात्मकमपध्यानमनर्थदण्डस्य प्रथमो भेदः। पापकर्मोपदेशिता वक्ष्यमाणा द्वितीयः। हिंसोपकारिणां शस्त्रादीनां दानमिति तृतीयः। प्रमादानां गीतनृत्तादीनामाचरणं चतुर्थः। शरीरादिनिमित्तं यः प्राणिनां दण्डः सोऽर्थाय प्रयोजनाय दण्डोऽर्थदण्डस्तस्य शरीराद्यर्थदण्डस्य यः प्रतिपक्षरूपोऽनर्थदण्डो निष्प्रयोजनो

---

(१) सत्त्ववधवेधबन्धनदहनाङ्कनमारणादिप्रणिधानम्। अतिक्रोधग्रहग्रस्तं निर्घृणमनसोऽधमविपाकम् ॥ १ ॥

(२) पिशुनासभ्यासद्भूतभूतघातादिवचनप्रणिधानम्। मायाविनोऽतिसन्धानपरस्य प्रच्छन्नपापस्य ॥ २ ॥

(३) तथा तीव्रक्रोधलोभाकुलस्य भूतोपघातनमनार्यम्। परद्रव्यहरणचित्तं परलोकापायनिरपेक्षम् ॥ ३ ॥

(४) शब्दादिविषयसाधनधनसंरक्षणपरायणमनिष्टम्। सर्वाभिशङ्कनपरोपघातकलुषाकुलं चित्तम् ॥ ४ ॥

(५) एवं चतुर्विधं रागद्वेषमोहाङ्कितस्य जीवस्य। रौद्रध्यानं संसारवर्द्धनं नरकगतिमूलम् ॥ ५ ॥

दण्ड इति यावत्, तस्य त्यागोऽनर्थदण्डविरतिस्तृतीय गुणव्रतम् । यदाह—

'ज इदियसयणाई पडुच पाव करेज सो होइ । अत्थे दडो एत्तो अण्णो उ अणत्थदडो उ ॥ १ ॥ ७३ ॥ ७४ ॥

अपध्यानस्य स्वरूप परिमाण चाह—

**वैरिघातो नरेन्द्रत्व पुरघाताग्निदीपने । खचरत्वाद्यपध्यान मुहूर्त्तात्परतस्त्यजेत् ॥ ७५ ॥**

वैरिघातपुरघाताग्निदीपनादिविषय रौद्रध्यानमपध्यान, नरेन्द्रत्व खचरत्वमादिशब्दादप्सरोविद्याधरीपरिभोगादि, तेष्वार्त्तध्यानरूपमपध्यान, तस्य तत्परिमाणरूप व्रत मुहूर्त्तात्परतस्त्यजेदिति ॥ ७५ ॥

अथ पापोपदेशस्वरूप तद्विरतिं चाह—

**वृषभान् दमय क्षेत्रं कृष षण्ढय वाजिन । दाक्षिण्याविषये पापोपदेशोऽय न कल्पते ॥ ७६ ॥**

वृषभान् वत्सतरान् प्रसङ्गादिना दमय दान्तान् कुरु, प्रत्यासीदति खलु वर्षाकालः, तथा क्षेत्र बीजावापभुव कृष, वृष्टः खलु मेघो, यास्यति वापकालो, भृता वा केदारा गाह्यन्तां, सार्द्धदिनत्रयमध्ये उप्यन्ता च व्रीहय , तथा नेदीयोऽश्व प्रयोजन राज्ञामिति षण्ढय वर्द्धितकान् कुरु वाजिनोऽश्वान् उपलक्षण चैतदन्येषां ग्रीष्मे दवाग्निदानादीनाम् , अय पापरूप उपदेश , श्रावकाणां न कल्पते न युज्यते । सर्व्वत्र पापोपदेशनियम कर्तुमशक्तेभ्योऽपवा-

---

(१) यदिन्द्रियस्वजनादीन् प्रतीत्य पाप कुर्यात् स भवति । अर्थे दण्ड इत अन्यस्तु अनर्थदण्डस्तु ॥ १ ॥

(२) समीपतर प्रयोजनमश्व ।

दोऽयमुच्यते । दाक्षिण्याविषय इति । बन्धुपुत्रादिविषयदाक्षिण्यवतः पापोपदेशोऽशक्यपरिहारः । दाक्षिण्याभावे तु यथा तथा मौखर्येण पापोपदेशो न कल्पते ॥ ७६ ॥

अथ हिंसोपकारीणि तद्दानपरिहारं चाह—

यन्त्रलाङ्गलशस्त्राग्निमुशलोदूखलादिकम् । दाक्षिण्याविषये हिंस्रं नार्पयेत्करुणापरः ॥७७॥

यन्त्रं शकटादि, लाङ्गलं हलं, शस्त्रं खड्गादि, अग्निर्वह्निः, मुशलमयोऽग्रं, उदूखलमुलूखलं, आदिशब्दाद्धनुर्भस्त्रादिपरिग्रहः । हिंस्रं वस्तु, करुणापरः श्रावको नार्पयेत्; दाक्षिण्याविषय इति पूर्ववत् ॥ ७७ ॥

अथ प्रमादाचरणमनर्थदण्डस्य चतुर्थभेदं तत्परिहारं च श्लोकत्रयेणाह—

कुतूहलाद्गीतनृत्तनाटकादिनिरीक्षणम् । कामशास्त्रप्रसक्तिश्च द्यूतमद्यादिसेवनम् ॥७८॥
जलक्रीडाऽऽन्दोलनादिविनोदो जन्तुयोधनम् । रिपोः सुतादिना वैरं भक्तस्त्रीदेशराट्कथाः ॥७९॥
रोगमार्गश्रमौ मुक्त्वा स्वापश्च सकलां निशाम् । एवमादि परिहरेत्प्रमादाचरणं सुधीः ॥८०॥

कुतूहलात्कौतुकाद्धेतोर्गीतस्य नृत्तस्य नाटकस्य आदिशब्दात्प्रकरणादेर्निरीक्षणं, तेन तेनेन्द्रियेण यथोचितं विषयीकरणम् । कुतूहलग्रहणाज्जिनयात्रादौ प्रासङ्गिकनिरीक्षणे च न प्रमादाचरणम् । तथा कामशास्त्रे वात्स्यायनादिकृते, प्रसक्तिः पुनः पुनः परिशीलनम्; तथा द्यूतमक्षकादिभिः क्रीडनम्; मद्यं सुरा; आदिशब्दान्मृगयादिः; तेषां सेवनं परिशीलनं; तथा जलक्रीडा तडागजलयन्त्रादिषु मज्जनोन्मज्जनशृङ्गिकाच्छोटनादिरूपा; तथा आन्दो-

लन वृक्षशाखादौ दोलाखेलन, आदिशब्दात्पुष्पावचयादि, तथा जन्तूनां कुक्कुटादीनां योधन परस्परेणाभ्याहननम्, तथा रिपोः शत्रोः सम्बन्धिना पुत्रपौत्रादिना वैरम्, अयमर्थो येन तावत्कथञ्चिदायात वैर तद्यः परिहर्तु न शक्नोति तस्यापि पुत्रपौत्रादिना यद्वैर तत्प्रमादाचरणम्, तथा भक्तकथा यथा इद चेद च मांसाकमापमोदकादि साधु भोज्य, साध्वनेन भुज्यते, अहमपि वा इद भोक्ष्ये इत्यादिरूपा, तथा स्त्रीकथा स्त्रीणां नेपथ्याङ्गहारहावभावादिवर्णनरूपा " कर्णाटी सुरतोपचारचतुरा लाटी विदग्धप्रिया " इत्यादिरूपा वा, तथा देशकथा, यथा दक्षिणापथः प्रचुरान्नपान स्त्रीसम्भोगप्रधान, पूर्वदेशो विचित्रवस्त्रगुडखण्डशालिमद्यादिप्रधान , उत्तरापथे शूराः पुरुषा जविनो वाजिनो गोधूमप्रधानानि धान्यानि सुलभ कुङ्कुम मधुराणि द्राक्षादाडिमकपित्थादीनि, पश्चिमदेशे सुखस्पर्शानि च वस्त्राणि सुलभा इक्षवः शीत वारीत्येवमादि, राट्कथा राजकथा यथा शूरोऽस्मदीयो राजा, सधनश्चौडः, गजपतिर्गौडः , अश्वपतिस्तुरुष्क इत्यादि । एव प्रतिकूला अपि भक्तादिकथा वाच्या, तथा रोगो ज्वरादि , मार्गश्रमो मार्गखेदः, तौ मुक्त्वा सकलां निशां स्वापो निद्रा । रोगमार्गश्रमयोस्तु न प्रमादाचरणम् । एवमादिपूर्वोक्तस्वरूप प्रमादाचरण परिहरेत् । सुधीः श्रमणोपासकः । प्रमादाचरित च—

[1]मज्ज विसयकसाया निद्दा विगहा य पञ्चमी भणिया । एए पञ्च पमाया जीव पाडेन्ति ससारे ॥ १ ॥

इति पञ्चविधस्य प्रमादस्य प्रपञ्चः ॥ ७८ ॥ ७६ ॥ ८० ॥

देशविशेषे प्रमादपरिहारमाह—

---

( १ ) मद्य विषयकषाया निद्रा विकथा च पञ्चमी भणिता । एते पञ्च प्रमादा जीव पातयन्ति ससारे ॥ १ ॥

विलासहासनिष्ठ्यूतनिद्राकलहदुष्कथाः । जिनेन्द्रभवनस्यान्तराहारं च चतुर्विधम् ॥८१॥

जिनेन्द्रभवनस्यान्तारित्यादित आरभ्य संबध्यते; तेन जिनेन्द्रभवनस्य मध्ये विलासं कामचेष्टां, हासं कहकहध्वानं हसनं, निष्ठ्यूतं निष्ठीवनं, निद्रां स्वापं, कलहं राटीं, दुष्कथां चौरपारदारिकादिकथां, चतुर्विधं चाहारम्—अशनपानखाद्यस्वाद्यस्वरूपं परिहरेत्। परिहरेदिति पूर्वतः सम्बन्धनीयम्। तत्राशनं शाल्यादि मुद्गादि सक्त्वादि पेयादि मोदकादि क्षीरादि सूरणादि मण्डकादि च। यदाह—

(१)असणं ओअणसत्तुगमुग्गजगाराइ खज्जगविही य। खीराइसूरणाई मंडगपभिई अ विण्णेअं ॥ १ ॥

पानं सौवीरं यवादिधावनं सुरादि सर्वश्चाप्कायः कर्कटकजलादिकं च। यदाह—

(२)पाणं सोवीरजवोदगाइ चित्तं सुराइयं चेव। आउकाओ सव्वो ककडगजलाइयं च तहा ॥ १ ॥

खाद्यं भृष्टधान्यं गुलपर्पटिकाखर्जूरनालिकेरद्राक्षाकर्कट्याम्रपनसादि। यदाह—

(३)भत्तोसं दंताई खज्जूरं नालिएरदक्खाई। ककडिगंबगफणसाइ बहुविहं खाइमं नेयं ॥ १ ॥

स्वाद्यं दन्तकाष्ठं ताम्बूलतुलसिकापिण्डार्जकमधुपिप्पलीसुण्ठीमरिचजीरकहरीतकीबिभीतक्यामलक्यादि। यदाह—

---

(१) अशनमोदनसक्तुकमुद्गजगार्यादि खाद्यकविधिश्च। क्षीरादि सूरणादि मण्डकप्रभृति च विज्ञेयम् ॥ १ ॥

(२) पानं सौवीरयवोदकादि चित्रं सुरादिकं चैव। अप्कायः सर्वः कर्कटकजलादिकं च तथा ॥ १ ॥

(३) भक्तौषं दन्त्यादि खर्जूरं नालिकेरद्राक्षादि। कर्कटिकाम्रपनसादि बहुविधं खादिमं ज्ञेयम् ॥ १ ॥

दंतवण तबोल चित्त तुलसीकुहेडगाईय । महुपिप्पलिसुठाई अणेगहा साइम होइ ॥ १ ॥ ८१ ॥

उक्तानि त्रीणि गुणव्रतानि । अथ चत्वारि शिक्षाव्रतान्युच्यन्ते, तत्रापि सामायिकदेशावकाशिकपौषधोपवासातिथिसंविभागलक्षणेषु चतुर्षु शिक्षाव्रतेषु प्रथम सामायिकाख्य शिक्षाव्रतमाह—

**त्यक्तार्त्तरौद्रध्यानस्य त्यक्तसावद्यकर्मणः । मुहूर्त्तं समता या तां विदुः सामायिकव्रतम् ॥८२॥**

मुहूर्त्त मुहूर्त्तकाल, या समता रागद्वेषहेतुषु मध्यस्थता, तां सामायिकव्रत विदु॰, समस्य रागद्वेषविनिर्मुक्तस्य सतः आयो ज्ञानादीनां लाभः प्रशमसुखरूपः समाय , समाय एव सामायिकम्, विनयादित्वादिकण् । समायः प्रयोजनमस्येति वा सामायिकम् । तच्च सामायिक मनोवाक्कायचेष्टापरिहार विना न भवतीति त्यक्तार्त्तरौद्रध्यानस्येत्युक्त, त्यक्तसावद्यकर्मण इति च, त्यक्त सावद्य वाचिक कायिक च कर्म येन तस्य । सामायिकस्थश्च श्रावक गृहस्थोऽपि यतिरिव भवति । यदाह—

सामाइयमि उ कए समणो इव सावओ हवइ जम्हा । एएण कारणेणं बहुसो सामाइय कुज्जा ॥ १ ॥

अत एव तस्य देवस्नात्रपूजादौ नाधिकार । ननु गर्हित कर्म कुर्वाणस्य देवस्नात्रादौ को दोषः, सामायिक हि सावद्यव्यापारनिषेधात्मक, निरवद्यव्यापारविधानात्मक च, तत्स्वाध्यायपठनपरिवर्त्तनादिवत् देवपूजादौ को

( १ ) दन्तपावन ताम्बूल चित्र तुलसीकुहेडकादिकम् । मधुपिप्पलिसुण्ठ्यादि अनेकधा स्वादिम भवति ॥ १ ॥
( २ ) सामायिक एव (के तु ) कृते श्रमण इव श्रावको भवति यस्मात् । एतेन कारणेन बहुश सामायिक कुर्यात् ॥ १ ॥

दोषः ? नैवम्, यतेरिव देवस्नात्रपूजनादौ नाधिकारः । भावस्तवार्थं च द्रव्यस्तवोपादानम् ; सामायिके च सति संप्राप्तो भावस्तव इति किं द्रव्यस्तवकरणेन ? । यदाह—

दव्वत्थओ य भावत्थओ य दव्वत्थओ बहुगुणो त्ति बुद्धि सिया । अणिउणजणवयणमिणं छज्जीवहियं जिणा बिंति ।१।

इह श्रावकः सामायिककर्त्ता द्विविधो भवति—ऋद्धिमाननृद्धिकश्च; योऽसावनृद्धिकः स चतुर्षु स्थानेषु सामायिकं करोति–जिनगृहे, साधुसमीपे, पौषधशालायां, स्वगृहे वा; यत्र वा विश्राम्यति, निर्व्यापारो वा आस्ते तत्र च । तत्र यदा साधुसमीपे करोति तदायं विधिः; यदि कस्माचिदपि भयं नास्ति, केनाचिद्विवादो नास्ति, ऋणं वा न धारयति; मा भूत्तत्कृताकर्षणापकर्षणनिमित्तश्चित्तसंक्लेशः; तदा स्वगृहेऽपि सामायिकं कृत्वा ईर्यां शोधयन्, सावद्यां भाषां परिहरन्, काष्ठलेष्ट्वादिना यदि कार्यं तदा तत्स्वामिनमनुज्ञाप्य प्रतिलिख्य प्रमार्ज्य च गृह्णन्, खेलसिङ्घाणकादींश्चाविवेचयन् विवेचयंश्च स्थण्डिलं प्रत्यवेक्ष्य प्रमृज्य च; एवं पञ्चसमितिसमितस्त्रिगुप्तिगुप्तः साध्वाश्रयं गत्वा साधून्नमस्कृत्य सामायिकं करोति यथा—

करेमि भंते सामाइयं सावज्जं जोगं पच्चक्खामि जाव साहू पज्जुवासामि दुविहं तिविहेणं मणेणं वायाए काएणं न करेमि न कारवेमि तस्स भंते पडिक्कमामि निंदामि गरिहामि अप्पाणं वोसिरामि ॥

सामायिकसूत्रस्यायमर्थः—करेमि अभ्युपगच्छामि; भंते इति गुरोरामन्त्रणम्, हे भदन्त ! भदन्ते सुखवान् कल्याणवांश्च भवति; भदुङ् सुखकल्याणयोः, अस्य औणादिकान्तप्रत्ययान्तस्य निपातनात् रूपम् । आमन्त्रणं च

(१) द्रव्यस्तवश्च भावस्तवश्च द्रव्यस्तवो बहुगुण इति बुद्धिः स्यात् । अनिपुणजनवचनमिदं षड्जीवहितं जिना ब्रुवते ॥ १ ॥

प्रत्यक्षस्य गुरोस्तदभावे परोक्षस्यापि बुद्ध्या प्रत्यक्षीकृतस्य भवति, यथा जिनानामभावे जिनप्रतिमाया आरोपितजिनत्वायाः स्तुतिपूजासम्बोधनादिक भवति, गुरोश्चाभिमुखीकरण तदायत्त सर्वो धर्म इति प्रदर्शनार्थम्। यदाह—

नाणस्स होइ भागी थिरयरओ दसणे चरित्ते य। धन्ना आवकहाए गुरुकुलवास न मुचति ॥ १ ॥

अथवा भवान्तहेतुत्वाद्भवान्त, भन्ते इत्यार्षत्वात्। मध्यव्यञ्जनलोपे रूप भन्ते इति "अत एत्सौ पुसि मागध्याम्" ॥ ८ । ४ । २८७ ॥ इत्येकारोऽर्द्धमागधत्वादार्षस्य। सामायिकसुक्तनिर्वचनम्। अवद्य पाप, सहावद्येन सावद्यः, युज्यते इति योगो व्यापारस्त प्रत्याख्यामि, प्रतीति प्रतिषेधे आङाऽऽभिमुख्ये ख्यांक् प्रकथने, ततश्च प्रतीपमभिमुख ख्यापक सावद्ययोगस्य करोमीत्यर्थः। अथवा पच्चक्खामीति प्रत्याचक्षे, चक्षिक् व्यक्तायां वाचीत्यस्य प्रत्याङ्पूर्वस्य रूपम्, प्रतिषेधस्यादरेणाभिधान करोमीत्यर्थ। जाव साहू पज्जुवासामि, यावच्छब्दः परिमाणमर्यादाऽवधारणवचनस्तत्र परिमाणे यावत्साधुपर्युपासन मम तावत्प्रत्याख्यामीति, मर्यादायां साधुपर्युपासनादर्वाक्, अवधारणे यावत्साधुपर्युपासन तावदेव न तस्मात्परत इत्यर्थः। दुविह तिविहेण, द्वे विधे यस्य स द्विविधः सावद्यो योग स च प्रत्याख्येयत्वेन कर्म सम्पद्यते; अतस्त द्विविध योग करणकारणलक्षणमनुमतिप्रतिषेधस्य गृहस्थै कर्तुमशक्यत्वात् पुत्रभृत्यादिकृतस्य व्यापारस्य स्वयमकरणेऽप्यनुमोदनात्। त्रिविधेनेति करणे तृतीया। मणेण वायाए काएण इति त्रिविधस्यैव सूत्रोपात्त विवरण मनसा वाचा कायेन चेति त्रिविधेन करणेन। न करोमि न कारयामीति सूत्रोपात्तमेव द्विविधमित्यस्य विवरणम्। किं पुनः कारणमुद्देशक्रममतिलङ्घ्य व्यत्यासेन

(१) ज्ञानस्य भवति भागी स्थिरतरको दर्शने चरित्रे च। धन्या यावत्कथाया (थ) गुरुकुलवास न मुञ्चन्ति ॥ १ ॥

तीक्ष्णानि शिक्षावशतो व्रतान्यपि तथा सुधीः ॥३॥ माघमासे विभावर्यां सोऽन्यदा वासवेश्मनि । आदीपज्वलनं स्थास्यामीति सामायिके स्थितः ॥४॥ तच्छय्यापालिका ध्वान्तं स्वामिनो मा स भूदिति । याते प्राग्यामिनीयामे प्रदीपे तैलमक्षिपत् ॥ ५ ॥ गते यामे द्वितीयस्मिन्नपि सा भक्तमानिनी । जाग्रती दीपके क्षीणतैले तैलं न्यधात्पुनः ॥ ६ ॥ त्रियामायास्तृतीयस्मिन्नपि यामे व्यतीयुषि । मल्लिकायां प्रदीपस्य तैलं चिक्षेप सा पुनः ॥ ७ ॥ विभातायां विभावर्यामवसानमथासदत् । श्रमोत्पन्नव्यथाक्रान्तो राजा स इव दीपकः ॥८॥ सामायिकं समधिगम्य निहत्य कर्म, चन्द्रावतंसनृपतिस्त्रिदिवं ततोऽगात् । सामायिकव्रतजुषो गृहिणोऽपि सद्यः, क्षीयेत कर्म निचितं सुगतिर्भवेच्च ॥९॥

॥ इति चन्द्रावतंसराजर्षिकथानकम् ॥ ८३ ॥

द्वितीयं शिक्षाव्रतमाह—

**दिग्व्रते परिमाणं यत्तस्य संक्षेपणं पुनः । दिने रात्रौ च देशावकाशिकव्रतमुच्यते ॥ ८४ ॥**

दिग्व्रते प्रथमगुणव्रते यद्दशस्वपि दिक्षु गमनपरिमाणं तस्य दिवा रात्रौ चोपलक्षणत्वात्प्रहरादौ च यत् सङ्क्षेपणं तद्देशावकाशिकव्रतम् । देशे दिग्व्रतगृहीतपरिमाणस्य विभागे अवकाशोऽवस्थानं देशावकाशः सोऽत्रास्तीति देशावकाशिकं "अतोऽनेकस्वरात्" ॥ ७ । २ । ६ ॥ इतीकः । दिग्व्रतसंक्षेपकरणमणुव्रतादिसंक्षेपकरणस्याप्युपलक्षणं द्रष्टव्यम्, एषामपि संक्षेपस्यावश्यं कर्त्तव्यत्वात् । प्रतिव्रतं च संक्षेपकरणस्य विभिन्नव्रतत्वे द्वादश व्रतानीति संख्याविरोधः स्यात् ॥ ८४ ॥

१ पात्रे.

अथ तृतीयं शिक्षाव्रतमाह—

चतुष्पर्व्यां चतुर्थादिकुव्यापारनिषेधनम् । ब्रह्मचर्यक्रियास्नानादित्यागः पोषधव्रतम् ॥८५॥

चतुष्पर्वी अष्टमी–चतुर्दशी–पूर्णिमा–अमावास्यालक्षणा, चतुर्णां पर्वणां समाहारश्चतुष्पर्वी । पर्वशब्दोऽकारान्तोऽप्यस्ति, तस्यां चतुर्थादिकं तपः, कुव्यापारस्य सावद्यव्यापारस्य निषेधः, ब्रह्मचर्यक्रिया ब्रह्मचर्यस्य करणं स्नानादेः शरीरसत्कारस्य त्यागः । आदिशब्दादुद्वर्त्तनवर्णकविलेपनपुष्पगन्धविशिष्टवस्त्राभरणादिपरिग्रहः । पोषं पुष्टिं प्रक्रमाद्धर्मस्य धत्ते पोषधः स एव व्रतं पोषधव्रतम् सर्वतः पोषध इत्यर्थः । द्विविधं हि पोषधव्रतं देशतः सर्वतश्च । तत्राहारपोषधो देशतो विवक्षितविकृतेरविकृतेराचामाम्लस्य वा सकृदेव द्विरेव वा भोजनमिति । सर्वतस्तु चतुर्विधस्याप्याहारस्याहोरात्रं यावत्प्रत्याख्यानम्, कुव्यापारनिषेधपोषधस्तु देशतः एकतरस्य कस्यापि कुव्यापारस्याकरणं, सर्वतस्तु सर्वेषामपि कृषिसेवावाणिज्यपाशुपाल्यगृहकर्मादीनामकरणं, ब्रह्मचर्यपोषधोऽपि देशतो दिवैव रात्रावेव वा, सकृदेव द्विरेव वा स्त्रीसेवां मुक्त्वा ब्रह्मचर्यकरणम्, सर्वतस्तु अहोरात्रं यावत् ब्रह्मचर्यपालनम् । देशतः स्नानादेः शरीरसत्कारस्यैकतरस्याकरणं सर्वतस्तु सर्वस्यापि तस्याकरणम्; इह च देशतः कुव्यापारनिषेधपोषधं यदा करोति तदा सामायिकं करोति वा न वा, यदा तु सर्वतः करोति तदा सामायिकं नियमात्करोति, अकरणे तु तत्फलेन वञ्च्यते । सर्वतः पोषधव्रतं च चैत्यगृहे वा, साधुमूले वा, गृहे वा, पोषधशालायां वा त्यक्तमणिसुवर्णाद्यलङ्कारो व्यपगतमालाविलेपनवर्णकः परिहृतप्रहरणः प्रतिपद्यते । तत्र च कृते पठति च पुस्तकं वाचयति धर्मध्यानं ध्यायति, यथैतान् साधुगुणानहं मन्दभाग्यो न समर्थो धारयितुमिति ।

इह च यद्याहारशरीरसत्कारब्रह्मचर्यपोषधवत् कुव्यापारपोषधव्रतमप्यन्यत्रानाभोगेनेत्याद्याकारोच्चारणपूर्वकं प्रतिपद्यते तदा सामायिकमपि सार्थकं स्यात् । स्थूलत्वात्पोषधप्रत्याख्यानस्य सूक्ष्मत्वाच्च सामायिकस्येति । तथा पोषधवताऽपि सावद्यव्यापारा न कार्या एव ततः सामायिकमकुर्व्वंस्तल्लाभाद्भ्रंशयतीति । यदि पुनः सामाचारीविशेषात् सामायिकमिव द्विविधं त्रिविधेनेत्येवं पोषधं प्रतिपद्यते तदा सामायिकार्थस्य पोषधेनैव गतत्वान्न सामायिकमत्यन्तं फलवत् । यदि परं पोषधसामायिकलक्षणं व्रतद्वयं प्रतिपन्नं मयेत्याभिप्रायात् फलवदिति ॥ ८५ ॥

इदानीं पोषधव्रतकर्तॄन् प्रशंसति—

**गृहिणोऽपि हि धन्यास्ते पुण्यं ये पोषधव्रतम् । दुष्पालं पालयन्त्येव यथा स चुलनीपिता ॥८६॥**

यतयस्तावद् धन्या एव गृहिणोऽपि गृहस्था अपि ते धन्याः धर्मधनं लब्धारः ये निःसत्त्वजनदुष्पालं पुण्यं पवित्रं पोषधव्रतं पालयन्ति, यथा स चुलनीपितेति दृष्टान्तः; स च सम्प्रदायगम्यः । स चायम्—

अस्ति वाराणसी नामानुगङ्गं नगरी वरा । विचित्ररचनारम्या तिलकश्रीरिवावनेः ॥ १ ॥ सुत्रामेवामरावत्यामविस्रंत्रितविक्रमः । जितशत्रुरभूत्तत्र धरित्रीधवपुङ्गवः ॥ २ ॥ आसीद्गृहपतिस्तस्यां महेभ्यश्चुलनीपिता । प्राप्तो मनुष्यधर्मेव मनुष्यत्वं कुतोऽपि हि ॥ ३ ॥ जगदानन्दिनस्तस्यानुरूपा रूपशालिनी । श्यामा नामाभवद्भार्या श्यामेव तुहिनद्युतेः ॥ ४ ॥ अष्टौ निधानेऽष्टौ वृद्धावष्टौ च व्यवहारगाः । इति तस्याभवन् हेम्नश्चतुर्विंशतिकोटयः ॥ ५ ॥ एकैकशो गोसहस्रैर्दशभिः प्रमितानि तु । तस्यासन् गोकुलान्यष्टौ कुलवेश्मानि सम्पदाम्

॥ ६ ॥ तस्यां पुर्यामथान्येद्युरुद्याने कोष्ठकाभिधे । भगवान् समवसृतो विहरश्चरमो जिनः ॥ ७ ॥ ततो भगवत पादवन्दनाय सुरासुराः । सेन्द्रा समाययुस्तत्र जितशत्रुश्च भूपतिः ॥ ८ ॥ पद्भ्यां चचाल चुलनीपिताऽप्युचित-भूषण । वन्दितु नन्दितमनाः श्रीवीर त्रिजगत्पतिम् ॥ ९ ॥ भगवन्त ततो नत्वोपविश्य चुलनीपिता । शुश्राव परया भक्त्या प्राञ्जलिर्धर्मदेशनाम् ॥ १० ॥ अथोत्थितायां सदसि प्रणम्य चरणौ प्रभो । इति विज्ञपयामास विनीतश्चुलनीपिता ॥ ११ ॥ स्वामिन्नस्मादृशां बोधहेतोर्विहरसे महीम् । जगद्बोध विना नान्यो ह्यर्थश्चङ्क्रमणे रवे ॥१२॥ सर्वोऽपि याच्यते गत्वा स दत्ते यदि वा न वा । आगत्य याचितो धर्म दत्से हेतु कृपाऽत्र ते ॥१३॥ जानामि यतिधर्म चेत् गृह्णामि स्वामिनोऽन्तिके । योग्यता परमियती मन्दभाग्यस्य नास्ति मे ॥१४॥ याचे श्रावक-धर्मं तु स्वामिन्! देहि प्रसीद मे । आदत्तेऽब्धावप्युदङ्को भरण निजमेव हि ॥१५॥ यथासुख गृहाणेति स्वामिनाऽनु-मतस्ततः । स प्रत्याख्यत्स्थूलहिंसां मृषावाद च चौरिकाम् ॥१६॥ प्रत्याख्यच्च स्वभार्यायाः श्यामाया अपरस्त्रियम् । अष्टाष्टकोट्यभ्यधिक स्वर्णं निध्यादिषु त्रिषु ॥१७॥ व्रजेभ्योऽन्यानथाष्टभ्यः प्रत्याचख्यौ व्रजानपि । हलपञ्चशती-तोऽन्यां कृषियोग्यां महीमपि ॥१८॥ अनःशतेभ्य. पञ्चभ्यो दिग्यायिभ्योऽपर त्वनः। संवहद्भ्यश्च पञ्चभ्य प्रत्याचख्यौ महामति. ॥ १९ ॥ दिग्यात्रिकाणि चत्वारि चत्वारि प्रवहन्ति च । वाहनानि विना सोऽथ प्रत्याख्यदितराणि तु ॥२०॥ अन्यत्र गन्धकाषाय्याः प्रत्याख्यदङ्गपुसनम् । आर्द्राया मधुकयष्टेरितरदन्तधावनम् ॥२१॥ अन्यतः क्षीरामल-कात्प्रत्याचख्यौ फलान्यपि । सहस्रशतपाकाभ्या तैलाभ्यां म्रक्षणान्तरम् ॥ २२ ॥ गन्धाढ्यादन्यत प्रत्याचख्या वुद्वर्तनान्यपि । अष्टाभ्य औष्ट्रिकेभ्योऽम्भःकुम्भेभ्योऽधिकमज्जनम् ॥२३॥ वस्त्र प्रत्याख्यदन्यच्च कार्पासाद्वस्त्रयुग्म-

कात् । विलेपनानि चान्यत्र कुङ्कुमागरुचन्दनात् ॥ २४ ॥ पुष्पं प्रत्याख्यदन्यच्च पद्माज्जातिस्रजोऽपि च । कर्णिका-नाममुद्राभ्यामन्यानि भूषणानि च ॥ २५ ॥ मुमोच धूपमगरुतुरुष्काभ्यामथापरम् । अन्याश्च काष्ठपेयायाः पेया अपि समन्ततः ॥२६॥ खण्डखाद्याद् घृतपूराच्चेतरत् खाद्यमत्यजत् । ओदनान्यपि निःशेषाण्यन्यतः कलमौदनात् ॥ २७॥ कलायमुद्गमाषेभ्य इतरं सूपमत्यजत् । शरत्कालभवात्सर्वं गोघृतादपरं घृतम् ॥ २८ ॥ शाकं पल्यङ्कमण्डू-कीशाकाभ्यामन्यम(द)त्यजत् । विना स्नेहाम्लदाल्यम्ले तीमनान्यपि सर्वतः ॥२९॥ अन्तरिक्षोदकादन्यदुदकं पर्यवर्ज-यत् । मुखवासं च ताम्बूलात्पञ्चसौगन्धिकादृते ॥ ३० ॥ अपध्यानं हिंस्रदानं प्रमादाचरितं तथा । पापकर्मोपदेशं चानर्थदण्डानवर्जयत् ॥ ३१ ॥ एवं श्रावकधर्मं स सम्यक् सम्यक्त्वपूर्वकम् । सर्वातिचाररहितं प्रपेदे पुरतः प्रभोः ॥ ३२ ॥ भगवन्तं ततो नत्वा गत्वा च निजवेश्मनि । प्रतिपन्नं तथा धर्मं स्वभार्यायै न्यवेदयत् ॥ ३३ ॥ तेनाथ साऽप्यनुज्ञाता रथमारुह्य तत्क्षणम् । उपेत्य भगवत्पार्श्वे गृहिधर्ममशिश्रियत् ॥ ३४ ॥ तदा च गौतमो नत्वा पप्रच्छेति जगत्पतिम् । महाव्रतधरः किं स्यान्न वाऽयं चुलनीपिता ? ॥ ३५ ॥ अथोचे स्वामिना नैष यतिधर्मं प्रपत्स्यते । गृहिधर्मरतः किं तु मृत्वा सौधर्ममेष्यति ॥ ३६॥ अरुणाभे विमाने च चतुष्पल्योपमस्थितिः। ततश्च्युत्वा विदेहेषूत्पद्य निर्वाणमेष्यति ॥ ३७ ॥ ( युग्मम् ) गृहभारं ज्येष्ठपुत्रे न्यस्याथ चुलनीपिता । तस्थौ पोषधशालायां पालयन् पोषधव्रतम् ॥ ३८ ॥ तस्याथ पोषधस्थस्य मायामिथ्यात्ववान् सुरः । निशीथे कश्चिदाग-च्छत्पार्श्वे व्रतजिघांसया ॥ ३९ ॥ घोराकारः पुरोभूय खड्गमाकृष्य भीषणम् । स इत्यूचे तमत्युच्चैश्चुलनीपितरं सुरः ॥ ४० ॥ अप्रार्थितप्रार्थक रे ! श्रमणोपासकव्रतम् । त्वया किमिदमारब्धं मदादेशेन मुच्यताम् ॥ ४१ ॥

प्रसीद न चेचेऽग्रे ज्येष्ठपुत्रमहं तव । कुष्माण्डमिव खड्गेन खण्डयिष्यामि खण्डशः ॥ ४२ ॥ भवतः प्रेक्षमाणस्य पुरस्तत्पिशितान्यहम् । क्षिप्त्वा कटाहे पक्ष्यामि शूलैर्भक्ष्यामि तत्क्षणात् ॥४३॥ आचमिष्यामि तन्मांसशोणितानि तथाऽधुना । प्रेक्षमाणो यथा हि त्वं स्वयमेव विपत्स्यसे ॥४४॥ देवब्रुवे विब्रुवति तत्रैव चुलनीपिता । न चकम्पे केसरीव गर्जत्यूर्जितमम्बुदे ॥ ४५ ॥ अक्षोभं प्रेक्षमाणस्तु चुलनीपितरं सुरः । विभीषयितुकामस्तं तथैवोचे पुनः पुनः ॥ ४६ ॥ एवं विभाषमाणस्य सुरस्य चुलनीपिता । न सन्मुखमपि प्रेक्षाञ्चक्रे शुन इव द्विपः ॥ ४७ ॥ स विकृत्य पुरो ज्येष्ठतनयं चुलनीपितुः । निस्त्रिंशेन नृशंसात्मा पशुवद् व्यशसत्ततः ॥ ४८॥ छित्वा क्षिप्त्वा कटाहान्तस्तन्मांसानि पपाच च । बभञ्ज च शितैः शूलैराचचाम च सोऽमरः ॥ ४९ ॥ अधिसेहे च तत्सर्वं तत्त्वज्ञः चुलनीपिता । अन्यत्वभावनाभाजां स्वाङ्गच्छेदोऽपि नार्त्तये ॥५०॥ अथोचे स सुरो रे रे ! व्रतमद्यापि नोज्झसि । तद् ज्येष्ठमिव ते पुत्रं हन्मि मध्यममप्यहम् ॥ ५१ ॥ ततोऽहन्मध्यमं पुत्रं तथैवोचे पुनः पुनः । निरीक्ष्याक्षुभितं तं च कनिष्ठं चावधीत्सुतम् ॥ ५२ ॥ तत्राप्यालोक्य निष्कम्पं तं क्रुद्धः स सुरोऽब्रवीत् । नाद्याप्युज्झसि पाखण्डं मातरं ते विहन्मि तत् ॥ ५३ ॥ भद्रां नामाथ चुलनीपितुर्मातरमातुराम् । विकरोति स्म रुदतीं करुणं कुररीमिव ॥ ५४ ॥ स सुरः पुनरप्यूचे मुच्यतां प्रकृतं त्वया । स्वकुटुम्बप्रणाशाय कृत्यातुल्यमिदं व्रतम् ॥ ५५ ॥ अन्यथा कुलमेढिं ते मातरं हरिणीमिव । हत्वा भ्रक्ष्यामि पक्ष्यामि भक्षयिष्यामि च क्षणात् ॥ ५६ ॥ ततोऽप्यभीतं चुलनीपितरं वीक्ष्य सोऽमरः । भद्रामाराटयच्चार सूनान्यस्तामजामिव ॥ ५७ ॥ यया भारं इवोढस्त्वमुदरेणोदरभरिः । मातरं हन्यमानां तां पश्येत्यूचे पुनः सुरः ॥ ५८ ॥ अथैवं चिन्तयामास चेतसा चुलनीपिता । अहो

दुरात्मा कोऽप्येष परमाधार्मिकोपमः ॥ ५९ ॥ पुत्रत्रयं मे पुरतो जघान च चखाद च । क्रव्यादिव ममाम्बाम-प्यधुना हन्तुमुद्यतः ॥६०॥ यावन्न हन्त्यमूं तावद्गृह्णामीति चचाल सः। कुर्वाणेन महाशब्दमुत्पेते च सुरेण खे ॥६१॥ तं च कोलाहलं श्रुत्वा भद्रा द्रुतमुपैत्य तम्। किमेतदिति चापृच्छत्सोऽशंसत्तदशेषतः ॥ ६२ ॥ ततोऽभाषिष्ट भद्रैवं मिथ्यादृक्कोऽप्ययं सुरः। पोषधव्रतविघ्नं ते चक्रे कृत्रिमभीषणैः ॥ ६३ ॥ पोषधव्रतभङ्गस्य कुरुष्वालोचनं ततः । पापाय व्रतभङ्गस्य स्यादनालोचनं यतः ॥ ६४ ॥ तथैव प्रतिपेदेऽथ तद्वाचं चुलनीपिता। चकारालोचनां तस्य व्रतभङ्गस्य शुद्धधीः ॥ ६५ ॥ अथैकादश भेजेऽसौ श्रावकप्रतिमाः क्रमात् । सोपानानीव स स्वर्गसौधारो-हणकर्मणे ॥६६॥ निस्त्रिंशधारानिशितं स एवं श्रावकव्रतम् । सुचिरं पालयामास भगवद्वचनोचितम् ॥६७॥ ततः संलेखनापूर्वं प्रपद्यानशनं सुधीः । मृत्वा सौधर्म उत्पेदे विमाने सोऽरुणप्रभे ॥ ६८ ॥ दुष्पालमेवं चुलनीपिता यथा, तत्पालयामास स पोषधव्रतम् । ये पालयन्त्येव तथा परेऽप्यदो, दृढव्रतास्ते खलु मुक्तिगामिनः ॥ ६९ ॥

॥ इति चुलनीपितुः कथानकम् ॥ ८६ ॥

इदानीं चतुर्थं शिक्षाव्रतमाह—

**दानं चतुर्विधाहारपात्राच्छादनसद्मनाम् । अतिथिभ्योऽतिथिसंविभागव्रतमुदीरितम् ॥८७॥**

अतिथिभ्यस्तिथिपर्वाद्युत्सवरहितेभ्यो भिक्षार्थं भोजनकाले उपस्थितेभ्यः साधुभ्यो, दानं विश्राणनं, चतुर्विध-स्याशनपानखाद्यस्वाद्यरूपस्याहारस्य, पात्रस्यालाब्वादेः, आच्छादनस्य वस्त्रस्य कम्बलस्य वा, सद्मनो वसतेरुप-लक्षणात्पीठफलकशय्यासंस्तारकादीनामपि । अनेन हिरण्यादिदाननिषेधस्तेषां यतेरनधिकारात् । तदेतदतिथिसंवि-

भागव्रतमुच्यते। अतिथे सङ्गतो निर्दोषो विभाग पश्चात्कर्मादिदोषपरिहारायांशदानरूपोऽतिथिसविभागस्तद्रूप व्रतमतिथिसविभागव्रतम्। आहारादीनां च न्यायार्जितानां प्रासुकैषणीयानां कल्पनीयानां च देशकालश्रद्धा-सत्कारपूर्वकमात्मानुग्रहबुद्ध्या यतिभ्यो दानमतिथिसविभागः। यदुक्तु —"नायागयाण कप्पणिज्जाण अन्नपाणा-ईण दव्वाण देसकालसद्धासक्कारकमजुअं पराए भत्तीए आयाणुग्गहबुद्धीए संजयाण दाणं अतिहिसविभागो।" अनूदित चैतत्—

प्रायः शुद्धैस्त्रिविधविधिना प्रासुकैरेषणीयै, कल्प्यप्रायैः स्वयमुपहृतैर्वस्तुभि' पानकाद्यै। काले प्राप्तान् सद-नमसमश्रद्धया साधुवर्गान्, धन्या केचित्परमवहिता हन्त! समानयन्ति ॥ १ ॥ अशनमखिल खाद्य स्वाद्य भवे-दथ पानक, यतिजनहित वस्त्र पात्र सकम्बलप्रोञ्छनम्। वसतिफलकप्रख्य मुख्य चरित्रविवर्द्धन, निजकमनस प्रीत्याधायि प्रदेयमुपासके ॥ २ ॥ तथा—

साहूण कप्पणिज्ज ज न वि दिन्न कहिंचि किंचि तहिं। धीरा जहुत्तकारी सुसावगा त न भुंजति ॥१॥
वसहीसयणासणभत्तपाणभेसज्जवत्थपत्ताई। जइ वि न पज्जत्तधणो थोवाओ वि थोवय देइ ॥ २ ॥

---

(१) न्यायागताना कल्पनीयाना अन्नपानादीना द्रव्याणा देशकालश्रद्धासत्कारक्रमयुत परया भक्त्या आत्मानुग्रहबुद्ध्या संयताना दान अतिथिसविभाग।

(२) साधूना कल्पनीय यद् नापि दत्त कस्मिंश्चित् किञ्चित् तस्मिन्। धीरा यथोक्तकारिण सुश्रावकास्तन्न भुञ्जते ॥१॥

(३) वसतिशयनासनभक्तपानभैषज्यवस्त्रपात्रादि। यद्यपि न पर्याप्तधन स्तोकादपि स्तोक दद्यात् ॥ २ ॥

वाचकमुख्यस्त्वाह—

किञ्चिच्छुद्धं कल्प्यमकल्प्यं स्यात् स्यादकल्प्यमपि कल्प्यम् । पिण्डः शय्या वस्त्रं पात्रं वा भेषजाद्यं वा ॥१॥
देशं कालं पुरुषमवस्थामुपयोगशुद्धिपरिणामान् । प्रसमीक्ष्य भवति कल्प्यं नैकान्तात्कल्पते कल्प्यम् ॥ २ ॥

ननु यथा शास्त्रे आहारदातारः श्रूयन्ते न तथा वस्त्रादिदातारः, न च वस्त्रादिदानस्य फलं श्रूयते, तन्न वस्त्रादिदानं युक्तम् । नैवम् । भगवत्यादौ वस्त्रादिदानस्य साक्षादुक्तत्वात् । यथा—"समणे निग्गंथे फासुएणं एसणिज्जेणं असणपाणखाइमसाइमेणं वत्थपडिग्गहकंबलपायपुंछणेणं पीढफलगसेज्जासंथारएणं पडिलाभेमाणे विहरइ ।"

इत्याहारवत्संयमाधारशरीरोपकारकत्वाद्वस्त्रादयोऽपि साधुभ्यो देयाः । संयमोपकारित्वं च वस्त्रस्य तावत् तृणग्रहणानलसेवानिवारणार्थत्वेन, धर्मशुक्लध्यानसाधनार्थत्वेन, ग्लानपीडापरिहारार्थत्वेन, मृतकपरिष्ठापनार्थत्वेन च । यदाहुः—

तणगहणानलसेवानिवारणा धम्मसुक्कझाणट्ठा । दिट्ठं कप्पग्गहणं गिलाणमरणट्ठया चेव ॥ १ ॥

वाचकोऽप्याह—

शीतवातातपैर्दंशैर्मशकैश्चापि खेदितः । मा सम्यक्त्वादिषु ध्यानं न सम्यक् संविधास्यति ॥ १ ॥ इत्यादि

---

(१) श्रमणान् निर्ग्रन्थान् प्रासुकेन एषणीयेन अशनपानखादिमस्वादिमेन वस्त्रपतद्ग्रहकम्बलपादप्रोञ्छनेन पीठफलकशय्यासंस्तारकेण प्रतिलाभ्यमानान् विहारयति ।

( २ ) तृणग्रहणाऽनलसेवानिवारणाय धर्मशुक्लध्यानार्थम् । दिष्टं कल्पग्रहणं ग्लानमरणार्थं चैव ॥ १ ॥

पात्रस्याप्युपयोगः, अशुद्धस्याशादेर्ग्रहणेन तत्परिष्ठापन, ससक्तासस्याविराधनात् । प्रमादात्पूतरकसहितस्य तण्डुलोदकादेर्ग्रहणे सति तत्परिष्ठापनासुख च । एवमादयोऽन्येऽपि पात्रग्रहणे गुणाः । यदाहुः—

छक्कायरक्खणट्ठा पायग्गहण जिणेहिं पन्नत्त । जे अ गुणा सभोए हवंति ते पायगहणे वि ॥ १ ॥

अतरतबालवुड्ढा सेहाऽऽएसा गुरूअसहवग्गे । साहारणोग्गहालद्धिकारणा पायग्गहण तु ॥ २ ॥

ननु तीर्थकराणा वस्त्रपात्रपरिभोगो न श्रूयते, तीर्थकरचरितानुकारश्च तच्छिष्याणां युक्तः । वदन्ति हि—" जारिसय गुरुलिङ्ग सीसेण वि तारिसेण हविअव्वम् " इति । मैव वोच —अच्छिद्रपाणयस्तीर्थकराः, अपि चन्द्रादित्यौ यावच्छिखा गच्छति, न तु पानीयबिन्दुरप्यधः पतति, चतुर्विधज्ञानबलाच्च ते ससक्तासंसक्तमक्तसत्रसमनस च जलादि ज्ञात्वा निर्दोषमेवोपाददते, इति नैषां पात्रधारणे गुण । वस्त्र तु दीक्षाकाले तीर्थकरा अपि गृह्णन्ति । यदाहु —

सव्वे वि एगदूसेण निग्गया जिणवरा चउव्वीस । न य नाम अण्णलिंगे न य गिहिलिंगे कुलिंगे वा ॥ १ ॥

---

( १ ) षट्कायरक्षणार्थं पात्रग्रहण जिनै प्रज्ञप्तम् । ये च गुणा सभोगे भवन्ति ते पात्रग्रहणेऽपि ॥ १ ॥

( २ ) ग्लानबालवृद्धात् शिक्षकात् प्राघूर्णिकाद् गुरोरसहिष्णुवर्गात् । साधारणावग्रहालब्धिकारणात् पात्रग्रहण तु ॥ २ ॥

( ३ ) यादृश गुरुलिङ्ग शिष्येणापि तादृशेन भवितव्यम् ।

( ४ ) सर्वेऽपि एकदूष्येण निर्गता जिनवराश्चतुर्विंशति । न च नामान्यलिङ्गे न च गृहिलिङ्गे कुलिङ्गे वा ॥ १ ॥

परमार्षे च—

'सेवेमि जे अईया जे अणागया जे अ वट्टमाणा ते सव्वे सोवहिधम्मो देसियव्वो त्ति कट्टु एगं देवदूसमादाय निक्खमिंसु निक्खामंति निक्खमिस्संति वा ।

प्रव्रज्योत्तरकालं च सर्वबाधासहत्वान्न वस्त्रेण प्रयोजनमिति यथाकथञ्चित्तदपैतु नाम । गुरुलिङ्गानुवर्तनं च तच्छिष्याणां यदुक्तं, तदैरावणानुकरणमिव सामान्यकरिणाम् । किं च तीर्थकरानुकारमिच्छद्भिर्मठे निवसनमाधाकर्मिकादिपरिभोगस्तैलाभ्यङ्गोऽङ्गारशकटीसेवनं तृणपटीपरिधानं कमण्डलुधारणं बहुसाधुमध्ये निवासश्छद्मस्थानां धर्मदेशनायाः करणं शिष्यशिष्यादीचादिकं सर्वमविधेयं स्यात्, तच्च कुर्वन्ति ।

कम्बलस्य च वर्षासु बहिर्निर्गतानां तात्कालिकवृष्टावप्कायरक्षणमुपयोगः, बालवृद्धग्लाननिमित्तं वर्षत्यपि जलधरे भिक्षार्थं निःसरतां कम्बलावृतदेहानां न तथाविधाप्कायविराधना, उच्चारप्रस्रवणादिपीडितानां कम्बलावृतदेहानां गच्छतामपि न तथाविधा विराधना । छत्राद्याच्छादितानां कम्बलमन्तरेणापि गच्छतां को दोष ? इति चेत् न 'छत्तस्स य धारणट्ठाए' इत्यागमेन छत्रस्य प्रतिषिद्धत्वात् ॥ रजोहरणं पुनः साक्षाज्जीवरक्षार्थं प्रतिलेखनाकारित्वादुपयोगीति कस्तत्र विवादं कुर्यात् ? । मुखवस्त्रमपि सम्पातिमजीवरक्षणादुष्णमुखवातविराध्यमानबाह्यवायुकायजीवरक्षणान्मुखे धूलिप्रवेशरक्षणाच्चोपयोगि । पीठफलकयोर्वर्षासु पनककुन्थ्वादिसंसक्तायां भुवि भूशयनस्य

---

(१) सेवे येऽतीता येऽनागता ये च वर्तमानास्ते सर्वे सोपधिधर्मो देष्टव्य इति कृत्वा एकं देवदूष्यमादाय निरक्रमिषुः निष्कामन्ति निष्क्रमिष्यन्ति वा ।

प्रतिषिद्धत्वाच्छयनासनादावुपयोगः। शय्यासंस्तारकयोश्च शीतोष्णकालयोः शयनादावुपयोग । वसतिश्च निवासार्थं यतीनामत्यन्तोपकारिणी । यदाह—

जो देइ उवस्सय मुणिवराण णेगगुणजोगधारीण । तेण दिण्णा वत्थण्णपाणसयणासणविकप्पा ॥ १ ॥

जं तत्थ ठियाण भवे सव्वेसिं तेण तेसिमुवओगो । रक्खणपरिपालणा वि, अतो दिण्णा एव ते सव्वे ॥ २ ॥

सीयायवचोराण दसाण तह य वालमसगाण । रक्खंतो मुणिवसभे सुरलोयसुहं समज्जिणइ ॥ ३ ॥

एवं यदन्यदप्यौधिकमौपग्रहिकं वा धर्मोपकरणं तत्साधूनां धारयतां न दोषः, तद्दातॄणां तु सुतरां गुण एव ॥ उपकरणमानं तु—

जिणा बारसरूवाओ थेरा चोद्दसरूविणो । अज्जाण पण्णवीसं तु अओ उड्ढं उवग्गहो ॥ १ ॥

इत्याद्यागमादवगन्तव्यं, इह तु ग्रन्थगौरवभयान्न प्रतन्यते । इह वृद्धोक्ता सामाचारी—श्रावकेण पोषधं पारयता नियमात्साधुभ्यो दत्त्वा भोक्तव्यम् । कथम् ? यदा भोजनकालो भवति तदा आत्मनो विभूषां कृत्वा प्रतिश्रयं गत्वा साधून् निमन्त्रयते; भिक्षां गृह्णीतेति ॥ साधूनां च तं प्रति का प्रतिपत्तिः ? उच्यते—तदैकं पटलकमन्यो

---

( १ ) यो ददात्युपाश्रयं मुनिवराणामनेकगुणयोगधारिणाम् । तेन दत्ता वस्त्रान्नपानशयनासनविकल्पा ॥ १ ॥

( २ ) यत्तत्र स्थितानां भवेत् सर्वेषां तेन तेषामुपयोग । रक्षणपरिपालना अपि, अतो दत्ता एव ते सर्वे ॥ २ ॥

( ३ ) शीतातपचौरेभ्यो दंशेभ्यस्तथा च वालमशकेभ्य । रक्षन् मुनिवृषभान् सुरलोकसुखं समर्जति ॥ ३ ॥

( ४ ) जिना द्वादशरूपा स्थविराश्चतुर्दशरूपिण । आर्याणां पञ्चविंशतिस्तु अत ऊर्ध्वमुपग्रह ॥ १ ॥

मुखानन्तकमपरो भाजनं प्रत्यवेक्षते; माऽन्तरायदोषाः स्थापनादोषा वा भूवन्निति । स च यदि प्रथमायां पौरुष्यां निमन्त्रयते; अस्ति च नमस्कारसहितप्रत्याख्यानी, ततस्तद्गृह्यते । अथ नास्त्यसौ तदा न गृह्यते, यतस्तद्वोढव्यं भवति । यदि पुनर्घनं लगेत्, तदा गृह्यते संस्थाप्यते च; यो वा उद्घाटपौरुष्यां पारयति पारणकवानन्यो वा तस्मै तद्दीयते; पश्चात्तेन श्रावकेण समं सङ्घाटको व्रजति, एको न वर्त्तते प्रेषयितुं, साधुपुरतः श्रावकस्तु मार्गे गच्छति, ततोऽसौ गृहं नीत्वा तावासनेनोपनिमन्त्रयते; यदि निविशेते, तदा भव्यम्, अथ न निविशेते, तथापि विनयप्रयुक्तो भवति, ततोऽसौ भक्तं पानं च स्वयमेव ददाति, भाजनं वा धारयति, स्थित एवा( एव वा )स्ते यावद्दीयते । साधू अपि पश्चात्कर्मपरिहरणार्थं सावशेषं गृह्णीतः, ततो वन्दित्वा विसर्जयति, अनुगच्छति कतिचित्पदानि; ततः स्वयं भुङ्क्ते ॥ यदि पुनस्तत्र ग्रामादौ साधवो न भवन्ति तदा भोजनवेलायां द्वारावलोकनं करोति, विशुद्धभावेन च चिन्तयति–"यदि साधवोऽभविष्यन् तदा निस्तारितोऽहमभविष्यमिति" । एष पोषधपारणके विधिः । अन्यदा तु दत्त्वा भुङ्क्ते, भुक्त्वा वा ददातीति । अत्रान्तरश्लोकाः—

अन्नादीनामिदं दानमुक्तं धर्मोपकारिणाम् । धर्मोपकारबाह्यानां स्वर्णादीनां न तन्मतम् ॥ १ ॥ दत्तेन येन दीप्यन्ते क्रोधलोभस्मरादयः । न तत्स्वर्णं चरित्रिभ्यो दद्याच्चारित्रनाशनम् ॥ २ ॥ यस्यां विदार्यमाणायां म्रियन्ते जन्तुराशयः । क्षितेस्तस्याः प्रशंसन्ति न दानं करुणापराः ॥ ३ ॥ यद्यच्छस्त्रं महाहिंस्रं तत्तद्येन विधीयते । तदहिंस्रमना लोहं कथं दद्याद्विचक्षणः ? ॥ ४ ॥ संमूर्च्छन्ति सदा यत्र भूयांसस्त्रसजन्तवः । तेषां तिलानां को दानं मनागप्यनुमन्यते ? ॥५॥ दद्यादर्द्धप्रसूतां गां यो हि पुण्याय पर्वणि । म्रियमाणामिव हहा ! वर्ण्यते सोऽपि

धार्मिक ॥ ६ ॥ यस्या अपाने तीर्थानि मुखेनाश्नाति याऽशुचिम् । तां मन्वानाः पवित्रां गां धर्माय ददते जडाः ॥ ७ ॥ प्रत्यह दुह्यमानायां यस्यां वत्सः प्रपीड्यते । सुरादिभिर्जन्तूनां तां दद्याद्वां श्रेयसे कथम् ? ॥ ८ ॥ स्वर्णमयी रूप्यमयी तिलमय्याज्यमय्यपि । विभज्य भुज्यते धेनुस्तद्दातु किं फल भवेत् ? ॥ ९ ॥ कामगर्द्धकरी बन्धुस्नेहद्रुमदवानल । कले' कलितकर्दुर्गदुर्गतिद्वारकुञ्चिका ॥ १० ॥ मोक्षद्वारार्गला धर्मधनचौरी विपत्करी । या कन्या दीयते साऽपि श्रेयसे कोऽयमागम ? ॥११॥ विवाहसमये मूढैर्धर्मबुद्ध्या विधीयते । यत्तु यौतुकदान तत्स्या द्भस्मनि हुतोपमम् ॥ १२ ॥ यत् सङ्क्रान्तौ व्यतीपाते वैधृते पर्वणोरपि । दान प्रवर्त्तित लुब्धैर्मुग्धसमोहन हि तत् ॥ १३ ॥ मृतस्य तृप्त्यै ये दान तन्वन्ति तनुबुद्धयः । ते हि सिञ्चन्ति मुशल सलिलैः पल्लवेच्छया ॥ १४ ॥ विप्रेभ्यो भोजने दत्ते प्रीयन्ते पितरो यदि । एकस्मिन् भुक्तवत्यन्य पुष्टः किं न भवेदिह ? ॥ १५ ॥ अपत्यदत्त चेद्दान पितॄणां पापमुक्तये । पुत्रेण तप्ते तपसि तदा मुक्तिं पिताऽऽप्नुयात् ॥ १६ ॥ गङ्गागयादौ दानेन तरन्ति पितरो यदि । तत्रोत्क्षिप्ता प्ररोहाय गृहे दग्धा द्रुमास्तदा ॥ १७ ॥ गत्वानुगतिकै रत्नत्रय न दद्यादुपयाचितम् । फलन्ति हन्त ! पुण्यानि पुण्याभावे मुधैव तत् ॥ १८ ॥ न ह्येऽपि प्रदत्ते श्रातु पूर्वे काले सुरैरपि । दत्तोपयाचितैस्तेषां विघ्नैस्त्राण महाद्भुतम् ॥ १९ ॥ महोच्च या महाज्ञ या भोगिभ्यो योपकल्पयन् । दाताऽत्मान च पात्र च पातयेत्वरकावटे ॥ २० ॥ ददद्धर्मधिया दाता न तथाऽन्येन निष्प्रये । जानन्नपि यथा दोष ग्रहीता मांसलोलुपः ॥ २१ ॥ अपात्रप्राणिनो हत्वा पात्र पुष्णन्ति ये पुनः । अनेकभेकघातेन ते प्रीणन्ति भुजङ्गमम् ॥ २२ ॥ न स्वर्णादीनि दानानि देयानीत्यर्हतां मतम् । अन्नादीन्यपि

पात्रेभ्यो दातव्यानि विपश्चिता ॥ २३ ॥ ज्ञानदर्शनचारित्ररूपरत्नत्रयान्विताः । समितीः पञ्च बिभ्राणा गुप्तित्रितयशालिनः ॥ २४ ॥ महाव्रतमहाभारधरणैकधुरन्धराः । परीषहोपसर्गारिचमूजयमहाभटाः ॥ २५ ॥ निर्ममत्वाः शरीरेऽपि किमुतान्येषु वस्तुषु ? । धर्मोपकरणं मुक्त्वा परित्यक्तपरिग्रहाः ॥ २६ ॥ द्विचत्वारिंशता दोषैरदुष्टं भैक्षमात्रकम् । आददाना वपुर्धर्मयात्रामात्रप्रवृत्तये ॥ २७ ॥ नवगुप्तिसनाथेन ब्रह्मचर्येण भूषिताः । दन्तशोधनमात्रेऽपि परस्वे विगतस्पृहाः ॥ २८ ॥ मानापमानयोर्लाभालाभयोः सुखदुःखयोः । प्रशंसानिन्दयोर्हर्षशोकयोस्तुल्यवृत्तयः ॥ २९ ॥ कृतकारितानुमतिप्रभेदारम्भवर्जिताः । मोक्षैकतानमनसो यतयः पात्रमुत्तमम् ॥ ३० ॥ सम्यग्दर्शनवन्तस्तु देशचारित्रयोगिनः । यतिधर्मेच्छवः पात्रं मध्यमं गृहमेधिनः ॥ ३१ ॥ सम्यक्त्वमात्रसन्तुष्टा व्रतशीलेषु निःसहाः । तीर्थप्रभावनोद्युक्ता जघन्यं पात्रमुच्यते ॥ ३२ ॥ कुशास्त्रश्रवणोत्पन्नवैराग्यान्निष्परिग्रहाः । ब्रह्मचर्यरताः स्तेयमृषाहिंसापराङ्मुखाः ॥३३॥ घोरव्रता मौनजुषः कन्दमूलफलाशिनः । शिलोञ्छवृत्तयः पत्रभोजिनो भैक्षजीविनः ॥ ३४ ॥ कषायवस्त्रा निर्वस्त्राः शिखामौण्ड्यजटाधराः । एकदण्डास्त्रिदण्डा वा गृहारण्यनिवासिनः ॥ ३५ ॥ पञ्चाग्निसाधका ग्रीष्मे गलन्तीधारिणो हिमे । भस्माङ्गरागाः खट्वाङ्गकपालास्थिविभूषणाः ॥ ३६ ॥ स्वबुद्ध्या धर्मवन्तोऽपि मिथ्यादर्शनदूषिताः । जिनधर्मद्विषो मूढाः कुपात्रं स्युः कुतीर्थिनः ॥ ३७ ॥ प्राणिप्राणापहरणा मृषावादपरायणाः । परस्वहरणोद्युक्ताः प्रकामं कामगर्दभाः ॥ ३८ ॥ परिग्रहारम्भरता न सन्तुष्टाः कदाचन । मांसाशिनो मद्यरताः कोपनाः कलहप्रियाः ॥ ३९ ॥ कुशास्त्रमात्रपाठेन सदा पण्डितमानिनः । तत्त्वतो नास्तिकप्राया अपात्रमिति शंसिताः ॥ ४० ॥ इत्यपात्रं कुपात्रं च परिहृत्य विवेकिनः । पात्रदाने प्रवर्त्तन्ते सुधियो मोक्ष-

काङ्क्षिण ॥ ४१ ॥ दान स्वात्मफल पात्रे कुपात्रापात्रयोरपि । पात्रे धर्माय तच्च स्यादधर्माय तदन्ययो ॥ ४२ ॥ पय पान भुजङ्गाना यथा विषविवृद्धये । कुपात्रापात्रयोर्दान तद्भवविवृद्धये ॥ ४३ ॥ स्वादु क्षीर यथा क्षिप्त कटूवलाबुनि दुष्यति । दान दत्त शुद्धमपि कुपात्रापात्रयोस्तथा ॥ ४४ ॥ दत्ता कुपात्रापात्राभ्या सर्वोर्व्यपि फलाय न । पात्राय दत्तो ग्रासोऽपि श्रद्धया स्यान्महाफलः ॥ ४५ ॥ इय मोक्षफले दाने पात्रापात्रविचारणा । दयादान तु तत्त्वज्ञैः कुत्रापि न निषिध्यते ॥ ४६ ॥ शुद्धयशुद्धिकृता भङ्गाश्चत्वार पात्रदानयो । आद्यः शुद्धो द्वितीयो वैकल्पिकोऽन्यौ तु निष्फलौ ॥ ४७ ॥ दानेन भोगानाप्नोतीत्यविमृश्यैव भाष्यते । अनर्घ्यपात्रदानस्य क्षुद्रा भोगाः कियत्फलम् ? ॥ ४८ ॥ पात्रदाने फल मुख्य मोक्ष सस्य कृषेरिव । पलालमिव भोगास्तु फल स्यादानुषङ्गिकम् ॥ ४९ ॥ जिनानां दानदातारः प्रथमे मोक्षगामिनः । धनादयो दानधर्माद्बोधिबीजमुपार्जयन् ॥ ५० ॥ जिनानां पारणे भिक्षादातृणा मन्दिराजिरे । हर्षोत्कर्षपराः सद्य पुष्पवृष्टिं व्यधु सुराः ॥ ५१ ॥ इत्यतिथिसविभागव्रतमेतदुदीरित प्रपञ्चेन । देयादेये पात्रापात्रे ज्ञात्वा यथोचित कुर्यात् ॥ ५२ ॥ ८७ ॥

यद्यपि विवेकिनः श्रद्धावतः सत्पात्रदाने साक्षात्पारम्पर्येण वा मोक्ष फल, तथापि मुग्धजनानुग्रहार्थं पात्रदानस्य प्रासङ्गिक फलमाह—

पश्य सङ्गमको नाम सम्पद वत्सपालक. । चमत्कारकरीं प्राप मुनिदानप्रभावत· ॥ ८८ ॥

---

( १ ) न त्वपात्रकुपात्रयो इति वा पाठ

पश्येत्यनेन मुग्धबुद्धिमभिमुखयति । सङ्गमको नामेति सङ्गमकाभिधानः, वत्सपालो वत्सपालनजीवकः, चमत्कारकरीं सम्पदं प्राप; कुतः ? मुनिदानप्रभावतः । अत्र सङ्गमकस्य पारम्पर्येण मोक्षोऽपि फलमस्ति, तथापि प्रासङ्गिकफलाभिधानरभसेन स नोक्तः । सङ्गमकचरितं च सम्प्रदायगम्यम् । स चायम्—

मगधेष्वस्ति निःसीमरत्नप्राग्भारभासुरम् । पुरं समुद्रवद्राजगृहं कुलगृहं श्रियः ॥ १ ॥ राजा पुरं तदपरैरनुल्लङ्घितशासनः । शशास श्रेणिकः पाकशासनः स्वःपुरीमिव ॥ २ ॥ शालिग्रामेऽथ धन्येति काचिदुच्छिन्नवंशिका । बालं सङ्गमकं नाम समादाय समाययौ ॥ ३ ॥ वसंस्तत्र स पौराणां वत्सरूपाण्यचारयत् । अनुरूपा ह्यसौ रोरबालानां मृदुजीविका ॥ ४ ॥ अथापरेद्युः संजाते तत्र कस्मिंश्चिदुत्सवे । पायसं सङ्गमोऽपश्यद् भुज्यमानं गृहे गृहे ॥ ५ ॥ गत्वा स्वगेहे जननीं ययाचे सोपि पायसम् । साऽप्युवाच दरिद्राऽसि मद्गेहे पायसं कुतः ? ॥ ६ ॥ बालेन तेनाज्ञतया याच्यमाना मुहुर्मुहुः । स्मरन्ती पूर्वविभवं तारतारं रुरोद सा ॥ ७ ॥ तस्या रुदितदुःखेनानुविद्धहृदया इव । आगत्य प्रातिवेश्मिन्यः पप्रच्छुर्दुःखकारणम् ॥ ८ ॥ ताभ्योऽभ्यधत्त सा दुःखकारणं गद्गदाक्षरैः । क्षीराद्यदुश्च तास्तस्यै साऽपचत् पायसं ततः ॥ ९ ॥ खण्डाज्यपायसैर्भृत्वा स्थालं बालस्य तस्य सा । आर्पयत्प्रययौ चान्तर्गृहं कार्येण केनचित् ॥ १० ॥ अत्रान्तरे च कोऽप्यागान्मुनिर्मासमुपोषितः । पारणाय भवोदन्वत्तारणायास्य नौरिव ॥ ११ ॥ सोऽचिन्तयदिदं चिन्तामाणिक्यमिव चेतनम् । जङ्गमः कल्पशाखीव कामधेनुरिवापशुः ॥ १२ ॥ साधु साधु महासाधुर्मद्भाग्यैरयमाययौ । कुतोऽन्यथा वराकस्य ममेदृक्पात्रसङ्गमः ? ॥ १३ ॥ भाग्योदयेन केनापि ममाद्य समपद्यत । चित्तं वित्तं च पात्रं च त्रिवेणीसङ्गमो ह्ययम् ॥ १४ ॥ इत्यसौ स्थालमुत्पाट्य पायसं साधवे

ददौ । जग्राहानुग्रहायास्य महाकारुणिको मुनिः ॥ १५ ॥ ययौ च स मुनिर्गेहान्मध्याद् धन्याऽपि निर्ययौ । मन्ये भुक्तमनेनेति ददौ सा पायसं पुनः ॥ १६ ॥ तत्पायसमतृप्तः सन्नाकण्ठं बुभुजेऽथ सः । तदजीर्णेन यामिन्यां स्मरन् साधु व्यपद्यत ॥ १७ ॥ तेन दानप्रभावेण सोऽथ राजगृहे पुरे । गोभद्रेभ्यस्य भार्याया भद्राया उदरेऽभवत् ॥ १८ ॥ शालिक्षेत्रं सुनिष्पन्नं स्वप्नेऽपश्यच्च सा ततः । भर्तुः शशंस सोऽप्यस्याः सूनुः स्यादित्यचीकथत् ॥ १९ ॥ चैत्यदानधर्मकर्माणि करोमीति बभार सा । दोहदं तं तु गोभद्रः पूरयामास भद्रधीः ॥ २० ॥ पूर्णे काले ततो भद्रा द्युतिद्योतितदिङ्मुखम् । असूत तनयं रत्नं विदूरगिरिभूरिव ॥ २१ ॥ दृष्टस्वप्नानुसारेण सूनोस्तस्य शुभे दिने । चक्रतुः पितरौ शालिभद्र इत्यभिधां शुभाम् ॥ २२ ॥ धात्रीभिः पञ्चभिः पाल्यमानः स ववृधे क्रमात् । किञ्चिद् नाष्टवर्षः सन् पित्राऽप्यध्यापितः कलाः ॥ २३ ॥ सम्प्राप्तयौवनश्चासौ युवतीजनवल्लभः । सवयोभिः समं रेमे प्रद्युम्न इव नूतनः ॥ २४ ॥ तत्पुरश्रेष्ठिनोऽथैत्य कन्या द्वात्रिंशतं निजाः । प्रदातुं शालिभद्राय भद्रानाथं ययाचिरे ॥ २५ ॥ अथ प्रहृष्टो गोभद्रः शालिभद्रेण सादरम् । सर्वलक्षणसम्पूर्णाः कन्यकाः पर्यणाययत् ॥ २६ ॥ शालिभद्रस्ततो रम्ये विमान इव मन्दिरे । विललास समं ताभिः पतिर्दिविषदामिव ॥ २७ ॥ विवेदानन्दमग्नोऽयं न रात्रिं न च वासरम् । तस्यापूरयतां भोगसामग्रीं पितरौ स्वयम् ॥ २८ ॥ श्रीवीरपादमूलेऽथ गोभद्रो व्रतमग्रहीत् । कृत्वा चानशनं मृत्वा देवलोकं जगाम च ॥ २९ ॥ अवधिज्ञानतो ज्ञात्वा शालिभद्रं निजात्मजम् । तत्पुण्यावर्जितः सोऽभूत्पुत्रवात्सल्यतत्परः ॥ ३० ॥ दिव्यानि वस्त्रनेपथ्यादीन्यस्य प्रतिवासरम् । सभार्यस्यार्पयामास कल्पशाखीव सोऽमरः ॥ ३१ ॥ यद्यन्मर्त्योचितं कार्यं भद्रा तत्तदसाधयत् । पूर्वदानप्रभावेण भोगान् सोऽभुङ्क्त केवलम् ॥ ३२ ॥

वणिग्भिः कैश्चिदन्येद्युर्गृहीत्वा रत्नकम्बलान् । शिश्रिये श्रेणिकस्तांश्च महार्घत्वेन नाग्रहीत् ॥ ३३ ॥ ततस्ते वणिजो जग्मुः शालिभद्रानिकेतनम् । तदुक्तार्घेण तान् भद्राऽप्यग्रहीद्रत्नकम्बलान् ॥३४॥ मद्योग्यो गृह्यतामेको महामूल्योऽपि कम्बलः । इत्यूचे चेल्लणादेव्या तदा च श्रेणिको नृपः ॥ ३५ ॥ राज्ञाऽपि मूल्यपूर्वं ते कम्बलं वणिजोऽर्थिताः । भद्रा जग्राह तान् सर्वान् कम्बलानित्यचीकथन् ॥ ३६ ॥ श्रेणिकः प्राहिणोदेकं प्रवीणं पुरुषं ततः । भद्रापार्श्वे मूल्यदानात्कम्बलादानहेतवे ॥ ३७ ॥ याचिता तेन भद्रोचे छित्त्वा तान् रत्नकम्बलान् । शालिभद्रप्रियापादप्रो-ञ्छनीकृतवत्यहम् ॥ ३८ ॥ कार्यं निष्पद्यते किञ्चिज्जीर्णैश्चेद्रत्नकम्बलैः । तद्दत्वाऽऽपृच्छ्य राजानमागच्छामून् गृहाण च ॥ ३९ ॥ आख्यद्गत्वा स तद्राज्ञे राज्यूचे चेल्लणाऽप्यदः । पश्यास्माकं वणिजां च [1]रीरिहेम्नोरिवान्तरम् ॥ ४० ॥ तमेव पुरुषं प्रेष्य श्रेणिकेन कुतूहलात् । आकारिते शालिभद्रे भद्रोपेत्य व्यजिज्ञपत् ॥ ४१ ॥ बहिर्न हि महीनाथ ! जातु याति मदात्मजः । प्रसादः क्रियतां देव ! मद्गृहागमनेन मे ॥४२॥ कौतूहलाच्छ्रेणिकोऽपि तत्तथा प्रत्यपद्यत । तं च क्षणं प्रतीक्ष्याथ साऽग्रे भूत्वा गृहं ययौ ॥ ४३ ॥ विचित्रवस्त्रमाणिक्यचित्रकत्वच्चर्यी ततः । आराजहर्म्यं स्वगृहादट्टशोभां व्यधत्त सा ॥ ४४ ॥ तयाऽऽहूतस्ततो राजा कृतां सद्यः सुरैरिव । विभावयन् हट्टशोभां शालि-भद्रगृहं ययौ ॥४५॥ स्वर्णस्तम्भोपरि प्रेङ्खदिन्द्रनीलाश्मतोरणम् । मौक्तिकस्वस्तिकश्रेणिदन्तुरद्वारभूतलम् ॥४६॥ दिव्यवस्त्रकृतोल्लोचं सुगन्धिद्रव्यधूपितम् । भुवि दिव्यविमानानां प्रतिमानमिव स्थितम् ॥ ४७ ॥ तद्विवेश विशामीशो विस्मयस्मेरलोचनः । भूमिकायां चतुर्थ्यां तु सिंहासन उपाविशत् ॥ ४८ ॥ सप्तम्यां भुवि भद्रैत्य

(१) पित्तलसुवर्णयोः ।

शालिभद्र ततोऽवदत् । इहायातः श्रेणिकोऽस्ति त द्रष्टु क्षणमेहि तत् ॥ ४९ ॥ अम्ब ! त्वमेव यद्वेत्सि तमर्थ कारय स्वयम् । किं मया तत्र कर्त्तव्य स भद्रामित्यभाषत ॥५०॥ ततो भद्राऽप्युवाचैन क्रेतव्य वस्तु न ह्यदः । किन्त्वसौ सर्वलोकानां युष्माकमपि च प्रभु ॥ ५१ ॥ तच्छ्रुत्वा शालिभद्रोऽपि सविषादमचिन्तयत् । धिक् सांसारिकमैश्वर्य यन्ममाप्यपरः प्रभुः ॥ ५२ ॥ भोगिभोगैरिवैभिर्मे भोगैरलमतः परम् । दीक्षां मङ्क्षु ग्रहीष्यामि श्रीवीरचरणान्तिके ॥ ५३ ॥ एव सवेगयुक्तोऽपि स मातुरुपरोधतः । सभार्योऽभ्येत्य राजानमनमद्विनयान्वित' ॥ ५४ ॥ सस्वजे श्रेणिकेनाथ स्वाङ्के सुत इवासितः । स्नेहाच्छिरसि चाघ्रातः क्षणाच्चाश्रूणि सोऽमुचत् ॥ ५५ ॥ ततो भद्रा जगादैव देवाय मुच्यतां यत । मानुष्यमाल्यगन्धेन मनुष्योऽप्येष बाध्यते ॥ ५६ ॥ देवभूय गतः श्रेष्ठी सभार्यस्यास्य यच्छति । दिव्यनेपथ्यवस्त्राङ्गरागादीन् प्रतिवासरम् ॥ ५७ ॥ ततो राज्ञा विसृष्टोऽसौ ययौ सप्तमभूमिकाम् । इहैव भोक्तव्यमिति विज्ञप्तो भद्रया नृपः ॥ ५८ ॥ भद्रादाक्षिण्यतो राजा प्रत्यपद्यत तत्तथा । सद्य साऽसाधयत्सर्व श्रीमतां किं न सिध्यति ? ॥ ५९ ॥ स्नातो स्नानीयतैलाम्बुचूर्णैस्तूर्ण ततो नृपः । अङ्गुलीय तदङ्गुल्याः क्रीडावाप्यां पपात च ॥ ६० ॥ यावदन्वेषयामास भूपतिस्तदितस्तत । तावद्भद्राऽऽदिशद्दासीं वाप्यम्भोऽन्यत्र नाप्यताम् ॥ ६१ ॥ तथा कृते तया चित्रदिव्याभरणमध्यगम् । अङ्गाराभ स्वाङ्गुलीय दृष्ट्वा राजा विसिष्मिये ॥ ६२ ॥ किमेतदिति राज्ञोक्ता दास्यवोचदिहान्वहम् ! । निर्माल्य शालिभद्रस्य सभार्यस्य निधीयते ॥ ६३ ॥ सर्वथा धन्य एवैष धन्योऽहमपि सप्रति । राज्ये यस्येदृशा सन्ति विममर्शेति भूपतिः ॥ ६४ ॥ बुभुजे सपरीवारो भूभुजामग्रणीस्ततः । चित्रालङ्कारवस्त्राद्यैरर्चितश्च गृह ययौ ॥ ६५ ॥ शालिभद्रोऽपि ससारविमोच

यावदिच्छति । अभ्येत्य धर्मसुहृदा विज्ञप्तस्तावदीदृशम् ॥ ६६ ॥ आगाच्चतुर्ज्ञानधरः सुरासुरनमस्कृतः । मूर्त्तो धर्म इवोद्याने धर्मघोषाभिधो मुनिः ॥ ६७ ॥ शालिभद्रस्ततो हर्षादधिरुह्य रथं ययौ । आचार्यपादान् वन्दित्वा साधूंश्चोपाविशत्पुरः ॥ ६८ ॥ स सूरिर्देशनां कुर्वन् नत्वा तेनेत्यपृच्छ्यत । भगवन् ! कर्मणा केन प्रभुरन्यो न जायते ? ॥६९॥ भगवानप्युवाचेदं दीक्षां गृह्णन्ति ये जनाः । अशेषस्यापि जगतः स्वामिभावं भजन्ति ते ॥७०॥ यद्येवं नाथ ! तद्गत्वा निजामापृच्छ्य मातरम् । ग्रहीष्यामि व्रतमिति शालिभद्रो व्यजिज्ञपत् ॥ ७१ ॥ न प्रमादो विधातव्य इत्युक्तः सूरिणा ततः । शालिभद्रो गृहं गत्वा भद्रां नत्वेत्यभाषत ॥७२॥ धर्मः श्रीधर्मघोषस्य सूरेरद्य मुखाम्बुजात् । विश्वदुःखविमोक्षस्योपायभूतो मया श्रुतः ॥७३॥ अकार्षीः साध्विदं वत्स ! पितुस्तस्यासि नन्दनः । प्रशशंसेति भद्राऽपि शालिभद्रं प्रमोदतः ॥ ७४ ॥ सोऽप्यवोचदिदं मातरेवं चेत्तत् प्रसीद मे । ग्रहीष्यामि व्रतमहं ननु तस्य पितुः सुतः ॥ ७५ ॥ साऽप्यवादीदिदं वत्स ! युक्तस्तेऽसौ व्रतोद्यमः । किन्त्वत्र लोहचणकाश्चर्वणीया निरन्तरम् ॥ ७६ ॥ सुकुमारः प्रकृत्याऽपि दिव्यभोगैश्च लालितः । स्यन्दनं तर्णक इव कथं त्वं वक्ष्यसि व्रतम् ? ॥७७॥ शालिभद्रोऽप्युवाचैवं पुमांसो भोगलालिताः । असह्य व्रतकष्टानां कातरा एव नेतरे ॥७८॥ त्यज भोगान् क्रमान्मर्त्यमाल्यगन्धान् सहस्व च । इत्यभ्यासाद्व्रतं वत्स ! गृह्णीया इत्युवाच सा ॥७९॥ शालिभद्रस्ततो भद्राव-चनं प्रतिपद्य तत् । भार्यामेकां तूलिकां च मुञ्चति स्म दिने दिने ॥८०॥ इतश्च तस्मिन् नगरे धन्यो नाम महाधनः । बभूव शालिभद्रस्य कनिष्ठभगिनीपतिः ॥८१॥ शालिभद्रस्वसा साश्रु स्नपयन्ती तु तं तदा । किं रोदिषीति तेनोक्ता जगादेति सगद्गदम् ॥८२॥ व्रतं ग्रहीतुं मे भ्राता त्यजत्येकां दिने दिने । भार्यां च तूलिकां चाहं हेतुना तेन रोदिमि

॥८३॥ य एव कुरुते फेरुरिव भीरुस्तपस्यसौ। हीनसत्त्वस्तव भ्रातेत्यूचे धन्यः सनर्मकम् ॥८४॥ सुकर चेद्व्रत नाथ ! क्रियते किं न हि त्वया ? । एव सहासमन्याभिर्भार्याभिर्जगदेऽथ स ॥८५॥ धन्योऽप्यूचे व्रते विघ्नो भवत्यस्ताश्च पुण्यतः। अनुमन्त्योऽद्य मेऽभूवन् प्रव्रजिष्यामि तद् द्रुतम् ॥ ८६ ॥ ता अप्यूचु प्रसीदेदमस्माभिर्नर्मणोदितम्। मा स्म त्याक्षीः श्रियोऽस्मांश्च मनस्विन् ! नित्यलालिताः ॥८७॥ अनित्य स्त्रीधनाद्येतत्प्रोज्झ्य नित्यपदेच्छया अवश्य प्रव्रजिष्यामीत्यालपन् धन्य उत्थित ॥ ८८ ॥ त्वामनु प्रव्रजिष्याम एवमुक्तवतीश्च ताः। अन्वमन्यत धन्योऽपि धन्यमन्यो महामना ॥ ८९ ॥ इतश्च वैभारगिरौ श्रीवीर' समवासरत्। विदाञ्चकार त सद्यो धन्यो धर्मसुहृद्गिरा ॥ ९० ॥ दत्तदानः सदारोऽसावारुह्य शिबिकां तत । भवभीतो महावीरचरणौ शरण ययौ ॥ ९१ ॥ सदारः सोऽग्रहीद् दीक्षा ततो भगवदन्तिके। तच्छ्रुत्वा शालिभद्रोऽपि जितमन्य प्रतत्वरे ॥ ९२ ॥ सोऽन्वीयमानस्तदनु श्रेणिकेन महीभुजा। उपेत्य श्रीमहावीरपादमूलेऽग्रहीद् व्रतम् ॥ ९३ ॥ ततः सपरिवारोऽपि स्वामी सिद्धार्थनन्दनः। विहरन्नन्यतोऽगच्छत् सयूथ इव हस्तिराट् ॥९४॥ धन्यश्च शालिभद्रश्च तावभूतां बहुश्रुतौ। महत्तपश्च तेपाते खड्गधारासहोदरम् ॥ ९५ ॥ पक्षाद् मासाद् द्विमास्यास्त्रिमास्या मासचतुष्टयात्। शरीरनिरपेक्षौ तौ चक्रतुः पारण मुनी ॥ ९६ ॥ तपसा समजायेतां निर्मांसरुधिराङ्गकौ। चर्मभस्त्रोपमौ शालिभद्रधन्यौ महामुनी ॥ ९७ ॥ अन्येद्यु श्रीमहावीरस्वामिना सह तौ मुनी। आजग्मतू राजगृह पुर जन्मभुव निजाम् ॥ ९८ ॥ ततः समवसरणस्थित नन्तु जगत्पतिम्। श्रद्धाऽतिशययोगेनाच्छिन्नमीयुर्जनाः पुरात् ॥९९॥ मासपारणके शालिभद्रधन्यावुभावपि। काले विहर्तु भिक्षार्थं भगवन्त प्रणेमतुः ॥ १०० ॥ मातृपार्श्वात्पारण तेऽद्येत्युक्तः स्वामिना ततः। इच्छामीति

भणन् शालिभद्रो धन्ययुतो ययौ ॥ १ ॥ गत्वा भद्रागृहद्वारि तावुभावपि तस्थतुः । तपःक्षामतया तौ च न केनाप्युपलक्षितौ ॥ २ ॥ श्रीवीरं शालिभद्रं च धन्यमप्यद्य वन्दितुम् । यामीति व्याकुला भद्राऽप्यज्ञासीदुत्सुका न तौ ॥ ३ ॥ क्षणमेकमवस्थाय तत्र तौ जग्मतुस्ततः । महर्षी नगरद्वारप्रतोल्या च निरीयतुः ॥ ४ ॥ तदाऽऽयान्ती पुरे तस्मिन्विक्रेतुं दधिसर्पिषी । शालिभद्रस्य प्राग्जन्ममाता धन्याऽभवत्पुरः ॥ ५ ॥ शालिभद्रं तु सा प्रेक्ष्य सञ्जातप्रस्नवस्तनी । वन्दित्वा चरणौ भक्त्या द्वाभ्यामपि ददौ दधि ॥६॥ श्रीवीरस्यान्तिके गत्वा तदालोच्य कृताञ्जलिः । शालिभद्रोऽवदत्स्वामिन्मातृतः पारणं कथम् ? ॥७ ॥ सर्वज्ञोऽप्याचचक्षेऽथ शालिभद्र ! महामुने ! । प्राग्जन्ममातरं धन्यामन्यदप्यन्यजन्मजम् ॥ ८ ॥ कृत्वा पारणकं दध्नोऽऽपृच्छ्य च स्वामिनं ततः । वैभाराद्रिं ययौ शालिभद्रो धन्यसमन्वितः ॥ ९ ॥ शिलातले शालिभद्रः सधन्यः प्रतिलेखिते । पादपोपगमं नाम तत्रानशनमाश्रयत् ॥ १० ॥ तदा च भद्रा तन्माता श्रेणिकश्च महीपतिः । आजग्मतुर्भक्तियुक्तौ श्रीवीरचरणान्तिकम् ॥ ११ ॥ ततो भद्राऽवदद्धन्यशालिभद्रौ क्व तौ मुनी ? । भिक्षार्थं नागतौ कस्मादस्मद्वेश्म जगत्पते ! ॥ १२ ॥ सर्वज्ञोऽपि बभाषे तौ त्वद्वेश्मनि मुनी गतौ । ज्ञातौ न तु भवत्येहागमनव्यग्रचित्तया ॥ १३ ॥ प्राग्जन्ममाता त्वत्सूनोर्धन्या यान्ती पुरं प्रति । ददौ दधि तयोस्तेन पारणं चक्रतुश्च तौ ॥ १४ ॥ उभावथ महासत्त्वौ सत्वरौ भवमुज्झितुम् । वैभारपर्वते गत्वाऽनशनं तौ प्रचक्रतुः ॥ १५ ॥ श्रेणिकेन समं भद्रा वैभाराद्रिं ययौ ततः । तथास्थितावपश्यच्च तावश्मघटिताविव ॥ १६ ॥ तत्कष्टमथ पश्यन्ती स्मरन्ती तत्सुखानि च । साऽरोदीद्रोदयन्तीव वैभाराद्रिं प्रतिस्वनैः ॥१७॥ आयातोऽपि गृहं वत्स ! मया तु स्वल्पभाग्यया । न ज्ञातोऽसि प्रमादेनाप्रसादं मा कृथा मयि ॥ १८ ॥ यद्यपि

त्यक्तवानस्त्व तथापि निजदर्शनात् । आनन्दयिष्यसि दृशौ पुरेत्यासीन्मनोरथः ॥ १९ ॥ आरम्भेणामुना पुत्र ! शरीरत्यागहेतुना । मनोरथ तमपि मे भङ्क्तुमस्युद्यतोऽधुना ॥ २० ॥ आरब्ध यत्तपस्तत्र न ते विघ्नीभवाम्यहम् । किन्त्वेतत्कर्कशतम शिलातलमितो भव ॥२१॥ अथोचे श्रेणिको हर्षस्थाने किमम्ब ! रोदिषि ? । ईदृग् यस्याः सुत स्त्रीषु त्वमेका पुत्रवत्यसि २२। तत्त्वज्ञोऽय महासत्त्वस्त्यक्त्वा तृणमिव श्रियम् । प्रपेदे स्वामिन पादान् साक्षादिव पर पदम् २३ असौ जगत्स्वामिशिष्यानुरूप तप्यते तपः । मुधाऽनुतप्यते मुग्धे ! किं त्वया स्त्रीस्वभावतः ॥ २४ ॥ भद्रैव बोधिता राज्ञा वन्दित्वा तौ महामुनी । विमनस्का निज धाम जगाम श्रेणिकस्तथा ॥ २५ ॥ मृत्वा ततस्तौ सर्वार्थसिद्धस्वर्गे बभूवतुः । सुरोत्तमौ त्रयस्त्रिशत्सागरप्रमितायुषौ ॥ २६ ॥ सत्पात्रदानफलसम्पदमद्वितीयां, स प्राप सङ्गमक आयतिवर्द्धमानाम् । कार्यो नरैरवितथातिथिसविभागे, भाग्यार्थिभिर्ननु ततः सतत प्रयत्नः ॥ १२७ ॥

॥ इति सङ्गमककथानकम् ॥ ८८ ॥

उक्तानि द्वादशव्रतानि, अथ तत्क्षेपमतिचाररक्षणलक्षण प्रस्तोतुमाह—

व्रतानि सातिचाराणि सुकृताय भवन्ति न । अतिचारास्ततो हेया. पञ्च पञ्च व्रते व्रते ॥८९॥

अतिचारो मालिन्य तद्युक्तानि व्रतानि न सुकृताय भवन्ति, तदर्थमेवैकैकस्मिन् व्रते पञ्च पञ्चातिचारा परिहरणीयाः । ननु सर्वविरतावेवातिचारा भवन्ति, सज्वलनोदय एव तेषामभिधानात् । यदाह—

सव्वे वि अ अइआरा सजलणाण तु उदयतो हुति । मूलच्छिज्ज पुण होइ बारसण्ह कसायाण ॥ १ ॥

---

१ सर्वेऽपि च अतिचारा सज्वलनाना तु उदयतो भवन्ति । मूलच्छेद्य पुन भवति द्वादशाना कषायाणाम् ॥ १ ॥

संज्वलनोदयश्च सर्वविरतानामेव, देशविरतानां तु प्रत्याख्यानावरणोदय इति न देशविरतावतिचारसम्भवः। युज्यते चैतत्, अल्पीयस्त्वात्तस्याः, कुन्थुशरीरे व्रणाद्यभाववत्। तथाहि—

प्रथमाणुव्रते स्थूलं सङ्कल्पं निरपराधं द्विविधं त्रिविधेनेत्यादिविकल्पैर्विशेषितत्वेनातिसूक्ष्मतां गते देशाभावात्कथं देशविराधनारूपा अतिचारा भवन्तु ? अतः सर्वनाश एव तस्योपपद्यते। महाव्रतेषु तु ते संभवन्ति, महत्त्वादेव; हस्तिशरीरे व्रणपट्टबन्धादिवदिति। उच्यते—देशविरतावतिचारा न संभवन्तीत्यसङ्गतम्। उपासकदशादिषु प्रतिव्रतमातिचारपञ्चकाभिधानात्। अथ भङ्गा एव ते, न त्वतिचाराः। नैवम्, भङ्गाद्भेदेनातिचारस्यागमे संमतत्वात्। यच्चोक्तम् सर्वेऽप्यतिचाराः संज्वलनोदय एव, तत्सत्यम्। केवलम् सर्वविरतिचारित्रमेवाश्रित्य तदुच्यते, न तु सम्यक्त्वदेशविरती। यतः—सव्वे वि अ अइयारा इत्यादि गाथाया एवं व्याख्या—संज्वलनानामेवोदये सर्वविरतावतिचारा भवन्ति, शेषोदये तु मूलच्छेद्यमेव तस्याम्। एवं च न देशविरतावतिचाराभावः ॥ ८९ ॥

तत्र प्रथमव्रते तानाह—

**क्रोधाद्बन्धश्छविच्छेदोऽधिकभाराधिरोपणम्। प्रहारोऽन्नादिरोधश्चाहिंसायां परिकीर्त्तिताः ॥९०॥**

अहिंसायां प्रथमाणुव्रते अमी पञ्चातिचाराः—बन्धो रज्ज्वादिना गोमहिष्यादीनां नियन्त्रणम्; स्वपुत्रादीनामपि विनयग्राहणार्थं क्रियते, अतः क्रोधादित्युक्तम्; क्रोधात् प्रबलकषायोदयाद्यो बन्धः स प्रथमोऽतिचारः १। छविः शरीरं त्वग्वा, तस्याः छेदो द्वैधीकरणम्; स च पादवल्मीकोपहतपादस्य पुत्रादेरपि क्रियते इति क्रोधादित्य-

नुवर्त्तते । क्रोधाद्यः छविच्छेदः स द्वितीयोऽतिचार २। अधिकस्य वोढुमशक्यस्य भारस्यारोपण गो-करभ-रासभ-मनुष्यादेः स्कन्धे पृष्ठे शिरसि वा वाहनायाधिरोपणम्, इहापि क्रोधादित्यनुवर्त्तते, तेन क्रोधात्तदुपलक्षिताल्लोभाद्वा यदधिकभारारोपण स तृतीयोऽतिचारः ३। प्रहारो लगुडादिना ताडन क्रोधादेवेति चतुर्थोऽतिचारः ४। अन्नादिरोधो भोजनपानादेर्निषेधः क्रोधादेवेति पञ्चमोऽतिचारः ५। अत्र चायमावश्यकचूर्ण्याद्युक्तो विधिः—बन्धो द्विपदानां चतुष्पदाना वा स्यात्, सोऽपि सार्थकोऽनर्थको वा, तत्रानर्थकस्तावद् विधातु न युज्यते, सार्थक पुनरसौ द्विविधः, सापेक्षो निरपेक्षश्च, तत्र सापेक्षो यो दामग्रन्थिना शिथिलेन, यश्च प्रदीपनादिषु मोचयितु छेत्तु वा शक्यते। निरपेक्षो यत् निश्चलमत्यर्थञ्च बध्यते। एव तावत् चतुष्पदाना बन्धो, द्विपदानामपि दासदासीचौरपाठादिप्रमत्तपुत्रादीना यदि बन्धस्तदा सविक्रमणा एव बन्धनीया रक्षणीयाश्च, यथाऽग्निभयादिषु न विनश्यन्ति, तथा द्विपदचतुष्पदा श्रावकेण त एव सगृहीतव्या ये अबद्धा एवासते इति। छविच्छेदोऽपि तथैव, नवरम् निरपेक्षो हस्तपादकर्णनासिकादि यन्निर्दय छिनत्ति, सापेक्ष पुनर्गण्ड वा अरुर्वा छिन्याद्वा दहेद्वेति, तथाऽधिकभारोऽपि नारोपयितव्यः, पूर्वमेव हि या द्विपदादिवाहनेन जीविका सा श्रावकेण मोक्तव्या, अथान्याऽसौ न भवेत्, तदा द्विपदोऽय भार स्वयमुत्क्षिपति अवतारयति च त वाह्यते, चतुष्पदस्य तु यथोचितभारः किञ्चिदूनः क्रियते हलशकटादिषु पुनरुचितवेलायामसौ मुच्यत इति। प्रहारोऽपि तथैव, नवरम् निरपेक्षः प्रहारो निर्दयताडना, सापेक्ष पुनः श्रावकेणादित एव भीतपर्षदा भवितव्य, यदि पुनः कोऽपि न करोति विनय तदा त मर्माणि मुक्त्वा लतया दवरकेण वा सकृद् द्विर्वा ताडयेदिति। तथा अन्नपानादिरोधो न कस्यापि कर्त्तव्यस्तीक्ष्णबुभुक्षो ह्येव

सति म्रियते; स्वभोजनवेलायां तु ज्वरितादीन् विना नियमत एवान्यान् विधृतान् भोजयित्वा स्वयं भुञ्जीत। अन्नादिरोधोऽपि सार्थकानर्थकभेदो बन्धवत् द्रष्टव्यः, नवरम् सापेक्षो रोगचिकित्सार्थं स्यात्, अपराधकारिणि च वाचैव वदेद्—अद्य ते न दास्यते भोजनादि । शान्तिनिमित्तं चोपवासादि कारयेत् । किं बहुना ? मूलगुणस्याहिंसालक्षणस्यातिचारो यथा न भवति तथा यतनया वर्त्तनीयम्। ननु हिंसैव श्रावकेण प्रत्याख्याता ततो बन्धादिकरणेऽपि न दोषो हिंसाविरतेरखण्डितत्वात्; अथ बन्धादयोऽपि प्रत्याख्यातास्तदा तत्करणे व्रतभङ्ग एव, विरतिखण्डनात्। किञ्च बन्धादीनां प्रत्याख्येयत्वे व्रतेयत्ता विशीर्येत; प्रतिव्रतमतिचारव्रतानामाधिक्यादिति। एवं च न बन्धादीनामतिचारतेति। उच्यते—सत्यं, हिंसैव प्रत्याख्याता न बन्धादयः, केवलं तत्प्रत्याख्याने अर्थतस्तेऽपि प्रत्याख्याता द्रष्टव्याः, हिंसोपायत्वात्तेषाम्। न च बन्धादिकरणेऽपि व्रतभङ्गः किन्त्वतिचार एवं। कथम्? इह द्विविधं व्रतम्—अन्तर्वृत्त्या बहिर्वृत्त्या च; तत्र मारयामीति विकल्पाभावेन यदा कोपाद्यावेशात्परप्राणप्रहाणमविगणयन् बन्धादौ प्रवर्त्तते, न च हिंसा भवति, तदा निर्दयताविरत्यनपेक्षप्रवृत्तत्वेनान्तर्वृत्त्या व्रतस्य-भङ्गः, हिंसाया अभावाच्च बहिर्वृत्त्या पालनमिति देशस्य भञ्जनाद्देशस्यैव पालनादतिचारव्यपदेशः प्रवर्त्तते तदुक्तम्—

न मारयामीति कृतव्रतस्य विनैव मृत्युं क इहातिचारः ? ।
निगद्यते यः कुपितो वधादीन् करोत्यसौ स्यान्नियमानपेक्षः ॥ १ ॥
मृत्योरभावान्नियमोऽस्ति तस्य कोपाद्दयाहीनतया तु भग्नः ।
देशस्य भङ्गादनुपालनाच्च पूज्या अतीचारमुदाहरन्ति ॥ २ ॥

यथोक्तम्—व्रतेयत्ता विशीर्येत इति तदयुक्तम्, विशुद्धाहिंसासद्भावे हि बन्धादीनामभाव एव। तत् स्थितमेतद्बन्धादयोऽतिचारा एव। बन्धादिग्रहणस्य चोपलक्षणत्वान्मन्त्रप्रयोगादयोऽन्येऽप्यतिचारतया ज्ञेयाः ॥ ९० ॥

अथ द्वितीयस्य व्रतस्यातिचारानाह—

मिथ्योपदेश. सहसाऽभ्याख्यानं गुह्यभाषणम्। विश्वस्तमन्त्रभेदश्च कूटलेखश्च सूनृते ॥९१॥

मिथ्योपदेशोऽसदुपदेश , प्रतिपन्नसत्यव्रतस्य हि परपीडाकर वचनमसत्यमेव, तत प्रमादात्परपीडाकरणे उपदेशे अतिचारो यथा-वाह्यन्तां खरोष्ट्रादयो हन्यन्तां दस्यव इति। यद्वा यथास्थितोऽर्थस्तथोपदेशः साधीयान्, विपरीतस्तु अयथार्थोपदेशो, यथा—परेण सन्देहापन्नेन पृष्टे न तथोपदेशः। यद्वा विवादे स्वय परेण वा अन्यतराभिसन्धानोपायोपदेश इति प्रथमोऽतिचारः १। सहसा अनालोच्याभ्याख्यानमसद्दोषाध्यारोपण, यथा-चौरस्त्व पारदारिको वेत्यादि। अन्ये तु सहसाऽभ्याख्यानस्थाने रहसाभ्याख्यान पठन्ति, व्याचक्षते च-रह एकान्तस्तत्र भव रहस्य रहस्येनाभ्याख्यानमभिशंसनमसदध्यारोपणं, रहस्याभ्याख्यान यथा-यदि वृद्धा स्त्री ततस्तस्यै कथयति-अय तव भर्ता तरुण्यामतिप्रसक्त', अथ तरुणी तत एवमाह-अय ते भर्ता प्रौढचेष्टितायां मध्यमवयसि योषिति प्रसक्तः, तथाऽय खरकामो मृदुकाम इति वा परिहसति, तथा स्त्रियमभ्याख्याति भर्तु' पुरः यथा-पत्नी ते कथयति एवमय मा रहसि कामगर्दभ खलीकरोति, अथवा दम्पत्योरन्यस्य वा पुसः स्त्रिया वा येन रागप्रकर्ष उत्पद्यते तेन तादृशा रहस्येनानेकप्रकारेणाभिशसन हास्यक्रीडादिना न त्वभिनिवेशेन, तथा सति

व्रतभङ्ग एव स्यात् । यदाह—

सहसाभक्खाणाई जाणंतो जइ करेज्ज तो भंगो । जइ पुण णाभोगाईहिंतो तो होइ अइयारो ॥ १ ॥

इति द्वितीयोऽतिचारः २ । तथा गुह्यं गूहनीयं न सर्वस्मै यत्कथनीयं राजादिकार्य्यसंबद्धं तस्यानधिकृतेनैवाकारेङ्गितादिभिर्ज्ञात्वाऽन्यस्मै प्रकाशनं गुह्यभाषणं यथा—एते हीदमिदं च राजविरुद्धादिकं मन्त्रयन्ते, अथवा गुह्यभाषणं पैशुन्यं यथा—द्वयोः प्रीतौ सत्यामेकस्याकारादिनोपलभ्याभिप्रायमितरस्य तथा कथयति यथा प्रीतिः प्रणश्यति । इति तृतीयोऽतिचारः ३ । तथा विश्वस्ता विश्वासमुपगता ये मित्रकलत्रादयस्तेषां मन्त्रो मन्त्रणं तस्य भेदः प्रकाशनं तस्यानुवादरूपत्वेन सत्यत्वात् यद्यपि नातिचारता घटते तथापि मन्त्रितार्थप्रकाशनजनितलज्जादितो मित्रकलत्रादेर्मरणादिसम्भवेन परमार्थतोऽस्यासत्यत्वात् कथञ्चिद्भङ्गरूपत्वेनातिचारतैव । गुह्यभाषणे गुह्यमाकारादिना विज्ञायानधिकृत एव गुह्यं प्रकाशयति, इह तु स्वयं मन्त्रयित्वैव मन्त्रं भिनत्तीत्यनयोर्भेदः । इति चतुर्थोऽतिचारः ४ । तथा कूटमसद्भूतं तस्य लेखो लेखनं कूटलेखः, अन्यस्वरूपान्तरमुद्राकरणम्, एतच्च यद्यपि कायेनासत्यां वाचं न वदामीत्यस्य, न वदामि न वादयामीत्यस्य वा व्रतस्य भङ्ग एव, तथापि सहसाकारानाभोगादिना अतिक्रमादिना वाऽतिचारः; अथवा असत्यमित्यसत्यभणनं मया प्रत्याख्यातमिदं पुनर्लेखनमिति भावनया व्रतसापेक्षस्यातिचार एवेति पञ्चमोऽतिचारः ५ ॥ ९१ ॥

अथ तृतीयव्रतातिचारानाह—

---

( १ ) सहसाभ्याख्यानादीन् जानन् यदि कुर्यात् ततो भङ्गः । यदि पुनरनाभोगादिभ्यस्ततो भवत्यतिचारः ॥ १ ॥

स्तेनानुज्ञा–तदानीतादान द्विड्राज्यलङ्घनम्। प्रतिरूपक्रिया मानान्यत्व चास्तेयसंश्रिता. ॥६२॥

स्तेनाश्चौरास्तेषामनुज्ञा–हरत यूयमिति हरणक्रियायां प्रेरणा, अथवा स्तेनोपकरणानि कुशिकाकर्त्तरिकाघर्घरिकादीनि तेषामर्पण विक्रयण वा स्तेनानुज्ञा। अत्र च यद्यपि चौर्यं न करोमि न कारयामीत्येव प्रतिपन्नव्रतस्य स्तेनानुज्ञाव्रतभङ्ग एव, तथापि किमधुना यूय निर्व्यापारास्तिष्ठत ?, यदि वो भक्तादि नास्ति तदाऽह तद्ददामि, भवदानीतमोषस्य वा यदि विक्रायको न विद्यते तदाऽह विक्रेष्ये, इत्येवविधवचनैश्चौरान् व्यापारयतः स्वकल्पनया तद्व्यापारण परिहरतो व्रतसापेक्षस्यासावतिचार । इति प्रथमोऽतिचारः १। तथा तच्छब्देन स्तेनपरामर्श स्तेनैरानीतमाहृत कनकवस्त्रादि तस्यादान ग्रहण मूल्येन मुधिकया वा तदानीतादान, स्तेनानीत हि काणक्रयेण मुधिकया वा प्रच्छन्न गृह्णश्चौरो भवति, ततश्चौर्यकरणाद्व्रतभङ्गः, वाणिज्यमेव मया क्रियते न चौरिकेत्यध्यवसायेन व्रतसापेक्षत्वान्न तद्भङ्ग इति भङ्गाभङ्गरूपोऽतिचारः। इति द्वितीयः २। तथा द्विषोर्विरुद्धयो राज्ञोरिति शेषः, राज्य नियमिता भूमिः कटक वा, तस्य लङ्घन व्यवस्थाऽतिक्रमः, व्यवस्था च परस्परविरुद्धराजकृतैव, तल्लङ्घन चान्यतरराज्यनिवासिन इतरराज्ये प्रवेशः, इतरराज्यनिवासिनो वा अन्यतरराज्ये प्रवेश , द्विड्राज्यलङ्घनस्य यद्यपि स्वस्वामिना अननुज्ञातस्य 'सामिजीवादत्त तित्थयरेण तहेव य गुरूहिं' इत्यदत्तादानलक्षणयोगेन तत्कारिणां च चौर्यदण्डयोगेन अदत्तादानरूपत्वाद्व्रतभङ्ग एव, तथापि द्विड्राज्यलङ्घन कुर्वता मया वाणिज्यमेव कृत न चौर्यमिति भावनया व्रतसापेक्षत्वाल्लोके न चौरोऽयमिति व्यपदेशाभावादतिचा-

(१) स्वामिजीवादत्त तीर्थकरेण तथैव च गुरुभि ।

रता। इति तृतीयः ३। तथा प्रतिरूपं सदृशं व्रीहीणां पलञ्जिः, घृतस्य वसा, हिङ्गोः खदिरादिवेष्टः, तैलस्य मूत्रं, जात्यसुवर्णरूप्ययोर्युक्तिसुवर्णरूप्ये, इत्यादिप्रतिरूपेण क्रियाव्यवहारः, व्रीह्यादिषु पलञ्ज्यादि प्रक्षिप्य तत्तद्विक्रीणीते। यद्वा, अपहृतानां गवादीनां सम्भृङ्गाणामग्निपक्वकालिङ्गीफलस्वेदादिना शृङ्गाण्यधोमुखानि प्रगुणानि तिर्यग्वलितानि वा यथारुचि विधायान्यविधत्वमिव तेषामापाद्य सुखेन धारणविक्रयादि करोति। इति चतुर्थः ४। तथा मीयतेऽनेनेति मानं कुडवादि, पलादि, हस्तादि, तस्यान्यत्वं हीनाधिकत्वं, हीनमानेन ददाति, अधिकमानेन गृह्णाति। इति पञ्चमः ५। प्रतिरूपक्रिया मानान्यत्वं च परव्यसनेन परधनग्रहणरूपत्वाद्भङ्ग एव, केवलं खात्रखननादिकमेव चौर्य्यं प्रसिद्धं, मया तु वणिक्कलैव कृतेति भावनया व्रतरक्षणोद्यतत्वादतिचारावेवेति। अथवा स्तेनानुज्ञादयः पञ्चाप्यमी व्यक्तचौर्य्यरूपा एव, केवलं सहसाकारादिना अतिक्रमव्यतिक्रमादिना वा प्रकारेण विधीयमाना अतिचारतया व्यपदिश्यन्ते। न चैते राजसेवकादीनां न सम्भवन्ति, तथाहि—आद्ययोः स्पष्ट एव सम्भवः, द्विड्राज्यलङ्घनं तु यदा सामन्तादिः कश्चित् स्वस्वामिनो वृत्तिमुपजीवति, तद्विरुद्धस्य च सहायो भवति, तदाऽस्यातिचारो भवति। प्रतिरूपक्रिया मानान्यत्वं च यदा राजा भाण्डागारे द्रव्याणां विनिमयं मानान्यत्वं च कारयति तदा राज्ञोऽप्यतिचारो भवति। एते च पञ्चाप्यस्तेयव्रताश्रिता अतिचाराः ॥ ९३ ॥

अथ चतुर्थव्रतातिचारानाह—

इत्वरात्तागमोऽनात्तागतिरन्यविवाहनम्। मदनात्याग्रहोऽनङ्गक्रीडा च ब्रह्मणि स्मृताः ।९४।

ब्रह्मणि ब्रह्मचर्यव्रते, एतेऽतिचारा स्मृताः । इत्वरी प्रतिपुरुषमयनशीला, वेश्या इत्यर्थः, सा चासावात्ता च कञ्चित्कालं भाटीप्रदानादिना सगृहीता पुंवद्भावे इत्वरात्ता । अथवा इत्वरं स्तोकमप्युच्यते, इत्वरं स्तोकमल्पमात्ता इत्वरात्ता, विस्पष्टपटुवत् समासः । अथवा इत्वरकालमात्ता इत्वरात्ता, मयूरव्यंसकादित्वात् समासः, कालशब्दलोपश्च । तस्यां गमः आसेवनम् । इयं चात्र भावना—भाटीप्रदानादित्वरकालस्वीकारेण स्वकलत्रीकृत्य वेश्यां सेवमानस्य स्वबुद्धिकल्पनया स्वदारत्वेन व्रतसापेक्षचित्तत्वान्न भङ्गः, अल्पकालपरिग्रहाच्च वस्तुतोऽन्यकलत्रत्वाद्भङ्गः, इति भङ्गाभङ्गरूपत्वादित्वरात्तागमोऽतिचारः । इति प्रथमः १ । तथा अनात्ता अपरिगृहीता वेश्या स्वैरिणी, प्रोषितभर्तृका कुलाङ्गना वाऽनाथा तस्यां गतिरासेवनम् । इयं चानाभोगादिना अतिक्रमादिना वा अतिचारः । इमौ चातिचारौ स्वदारसन्तोषिण एव, न तु परदारवर्जकस्य, इत्वरात्ताया वेश्यात्वेन अनात्तायाः स्वनाथतयैवापरदारत्वात्, शेषास्त्वतिचारा द्वयोरपि, इदं च सूत्रानुपाति । यदाहुः—"[1] सदारसंतोसस्स इमे पञ्च अइयारा जाणियव्वा न समायरिअव्वा ।"

अन्ये त्वाहुः—इत्वरात्तागमः स्वदारसन्तोषव्रतोऽतिचारस्तत्र भावना कृतैव, अनात्तागतिस्तु परदारवर्जिनः । अनात्ता हि वेश्या, यदा तां गृहीतान्यसत्कभाटिकामभिगच्छति, तदा परदारगमनजन्यदोषसम्भवात् कथञ्चित् परदारत्वाच्चाभङ्गत्वेन भङ्गाभङ्गरूपोऽतिचारः । इति द्वितीयः २ । तथाऽन्येषां स्वस्वापत्यव्यतिरिक्तानां विवाहनं विवाहकरणं कन्याफललिप्सया, स्नेहसम्बन्धादिना वा परिणयनविधानम् । इदं च स्वदारसन्तोषव्रता

(१) स्वदारसन्तोषस्येमे पञ्चातिचारा ज्ञातव्या, न समाचरितव्या ।

स्वकलत्रात् परदारवर्जकेन च स्वकलत्रवेश्याभ्यामन्यत्र मनोवाक्कायैर्मैथुनं न कार्य्यं न च कारणीयमिति यदा प्रतिपन्नं व्रतं भवति तदा अन्यविवाहकरणं मैथुनकारणमर्थतः प्रतिषिद्धमेव भवति, तद्व्रती तु मन्यते—विवाह एवाऽयं मया विधीयते न मैथुनं कार्य्यते इति व्रतसापेक्षत्वादतिचार इति, कन्याफललिप्सा च सम्यग्दृष्टेरव्युत्पन्नाऽवस्थायां सम्भवति, मिथ्यादृष्टेस्तु भद्रकावस्थायामनुग्रहार्थं व्रतादाने सा सम्भवति। नन्वन्यविवाहनवत् स्वापत्यविवाहनेऽपि समान एव दोषः? सत्यम्, यदि स्वकन्याया विवाहो न कार्यते, तदा स्वच्छन्दचारिणी स्यात्, ततश्च शासनोपघातः स्यात्; विहितविवाहा तु पतिनियन्त्रितत्वेन न तथा स्यात्। परेऽप्याहुः—

पिता रक्षति कौमारे भर्ता रक्षति यौवने। पुत्रस्तु स्थविरे भावे न स्त्री स्वातन्त्र्यमर्हति ॥ १ ॥

यस्तु दाशार्हस्य कृष्णस्य चेटकराजस्य च स्वापत्येष्वपि विवाहनियमः श्रूयते, स चिन्तकान्तरसद्भावे द्रष्टव्यः। अन्ये त्वाहुः—अन्यस्य कलत्राऽन्तरस्य विशिष्टसन्तोषाभावात् स्वयं विवाहनमन्यविवाहनम्। अयं स्वदारसन्तुष्टस्याऽतिचारः। इति तृतीयः ३। मदने कामेऽत्याग्रहः परित्यक्तान्यसकलव्यापारस्य तदध्यवसायतः योषामुखकक्षोरूपस्थान्तरेष्ववितृप्ततया प्रक्षिप्य प्रजननं महतीं वेलां निश्चलो मृत एवास्ते, चटक इव चटकायां मुहुर्मुहुर्योषायामारोहति, जातबलक्षयश्च वाजीकरणान्युपयुङ्क्ते; अनेन खल्वौषधप्रयोगेण गजप्रसेकी तुरगावमर्दीव पुरुषो भवतीति बुद्ध्या। इति चतुर्थः ४। तथा अनङ्गः कामः, स च पुंसः स्त्रीपुंनपुंसकेषु सेवनेच्छा, हस्तकर्मादीच्छा वा वेदोदयात्। योषितोऽपि योषिन्नपुंसकपुरुषासेवनेच्छा हस्तकर्मादीच्छा वा, नपुंसकस्यापि नपुंसकपुरुषस्त्रीसेवनेच्छा हस्तकर्मादीच्छा वा। एषोऽनङ्गो नान्यः कश्चित् तेन तस्मिन्

वा क्रीडा रमणमनङ्गक्रीडा । यद्वा आहार्यैः काष्ठपुस्तफलमृत्तिकाचर्मादिभिर्घटितैः प्रजनने स्वलिङ्गेन कृतकृत्योऽपि योषितामवाच्यदेशं भूयो भूयः कुश्नाति, केशाकर्षणप्रहारदानदन्तनखकदर्थनाऽऽदिप्रकारैश्च मोहनीयकर्मावेशात् तथा क्रीडति यथा बलवान् रागः प्रसूयते । अथवाऽङ्गं देहावयवो मैथुनापेक्षया योनिर्मेहनं वा तद्व्यतिरिक्तान्यङ्गानि कुचकक्षोरूवदनादीनि तेषु क्रीडा अनङ्गक्रीडा । इह च श्रावकोऽत्यन्तपापभीरुतया ब्रह्मचर्यं चिकीर्षुरपि यदा वेदोदयासहिष्णुतया तद्विधातु न शक्नोति, तदा यापनामात्रार्थं स्वदारसन्तोषादि प्रतिपद्यते । मैथुनमात्रेणैव च यापनायां सम्भवन्त्यां मदनात्याग्रहानङ्गक्रीडे अर्थतः प्रतिषिद्धे । तत्सेवने न च कश्चिद्गुणः, प्रत्युत तात्कालिकी छिदा राजयक्ष्मादयश्च रोगा दोषा एव भवन्ति । एवं प्रतिषिद्धाचरणाद्भङ्गो नियमाबाधनाच्चाभङ्ग इत्यतिचारावेतौ । अन्येत्वन्यथाऽतिचारद्वयमपि भावयन्ति—स हि स्वदारसन्तोषी मैथुनमेव मया प्रत्याख्यातमिति स्वकल्पनया वेश्यादौ तत् परिहरति, नालिङ्गनादि, परदारविवर्जकोऽपि परदारेषु मैथुनं परिहरति, नालिङ्गनादि, इति कथञ्चिद्व्रतसापेक्षत्वादतिचारौ । एवं स्वदारसन्तोषिणः पञ्चातिचाराः परदारवर्जकस्य तूत्तरे त्रय एवेति स्थितम् । अन्ये त्वन्यथाऽतिचारान् विचारयन्ति यथा—

परदारवज्जिणो पञ्च हुन्ति तिण्णि उ सदारसंतुट्ठे । इत्थीउ तिण्णि पञ्च व भंगविगप्पेहि अइयारा ॥ १ ॥

इत्वरकालं या परेण भाट्यादिना परिगृहीता वेश्या, तां गच्छतः परदारवर्जिनो भङ्गः, कथञ्चित् परदारत्वात्तस्याः, लोके तु परदारत्वारूढेर्न भङ्ग इति भङ्गाभङ्गरूपोऽतिचारः । अपरिगृहीतायामनाथकुलाङ्गनायां या गतिः

---

( १ ) परदारवर्जिनः पञ्च भवन्ति त्रयस्तु स्वदारसन्तुष्टे । स्त्रियास्त्रयः पञ्च वा भङ्गविकल्पैरतिचाराः ॥ १ ॥

परदारवर्जिनः सोऽप्यतिचारः ; तत्कल्पनयाऽपरस्य भर्तुरभावेनापरदारत्वादभङ्गः, लोके च परदारतया रूढेर्भङ्ग इति पूर्ववदतिचारः । शेषास्तु त्रयो द्वयोरपि भवेयुः, स्त्रियास्तु स्वपुरुषसन्तोषपरपुरुषवर्जनयोर्न भेदः ; स्वपुरुषव्यतिरेकेणाऽन्येषां परपुरुषत्वात् । अन्यविवाहनादयस्तु त्रयः स्वदारसन्तोषिण इव स्वपुरुषाविषयाः स्युरिति पञ्च वा । कथम् ? आद्यस्तावद्यदा स्वकीयपतिर्वारकदिने सपत्न्या परिगृहीतो भवति, तदा सपत्नीवारकं विलुप्य तं परिभुञ्जानाया अतिचारः, द्वितीयस्त्वतिक्रमादिना परपुरुषमभिसरन्त्या अतिचारः, ब्रह्मचारिणं वा स्वपतिमतिक्रमादिनाऽभिसरन्त्या अतिचारः । शेषास्त्रयः स्त्रियाः पूर्ववत् ॥ ९४ ॥

अथ पञ्चमव्रतस्याऽतिचारानाह—

**धनधान्यस्य कुप्यस्य गवादेः क्षेत्रवास्तुनः । हिरण्यहेम्नश्च संख्याऽतिक्रमोऽत्र परिग्रहे ।९५।**

अत्र श्रावकधर्मोचिते परिग्रहव्रते यः संख्याऽतिक्रमः सोऽतिचारः कस्य कस्येत्याह—धनं गणिमधरिममेयपरीक्ष्यलक्षणम् । यदाह—

गणिमं जाईफलफोप्फलाइ धरिमं तु कुङ्कुमगुडाइ । मेज्जं चोप्पडलोणाइ रयणवत्थाइ परिच्छेज्जं ॥ १ ॥

धान्यं सप्तदशविधम् । यदाह—

" व्रीहिर्यवो मसूरो गोधूममुद्गमाषतिलचणकाः । अणवः प्रियङ्गुकोद्रवमकुष्टकाः शालिराढक्यः ॥ १ ॥

---

( १ ) गणिमा जातिफलपूगफलादि धरिमा तु कुङ्कुमगुडादि । मेयं म्रक्षणलवणादि रत्नवस्त्रादि परिछेद्यम् ॥ १ ॥

किञ्च कलायकुलत्थौ सप्तसप्तदशानि धान्यानि ।"

धनं च धान्यं च धनधान्यं तस्य धनधान्यस्य । अत्रोत्तरत्र च समाहारनिर्देशः परिग्रहस्य पञ्चविधत्वज्ञापनार्थं । तथा सति ह्यतिचारपञ्चकं सुयोजं भवति । कुप्यं रूप्यसुवर्णव्यतिरिक्तं कांस्यलोहताम्रसीसकत्रपुमृद्भाण्डत्वचिसारविकारोदङ्किकाष्ठमञ्चकमञ्चिकामसूरकरथशकटहलप्रभृति द्रव्यं, तस्य कुप्यस्य । गौरनड्वाननड्वाही च, ता आदिर्यस्य द्विपदचतुष्पदवर्गस्य स गवादिः । आदिशब्दान्महिषमेषाऽविककरभरासभतुरगहस्त्यादिचतुष्पदानां हंसमयूरकुर्कुटशुकसारिकापारापतचकोरादिपक्षिद्विपदानां पत्नीउपरुद्धादासीदासकर्मकरपदात्यादिमनुष्याणां च संग्रहः । क्षेत्रं सस्योत्पत्तिभूमिः, तत् त्रिविधं, सेतुकेतूभयभेदात् । तत्र सेतुक्षेत्रं यदरघट्टादिजलेन सिच्यते, केतुक्षेत्रमाकाशोदकपातनिष्पाद्यसस्यम्, उभयमुभयजलनिष्पाद्यसस्यम् । वास्तु गृहादि ग्रामनगरादि च । तत्र गृहादि त्रिविधं, खातं भूमिगृहादि, उच्छ्रितं प्रासादादि, खातोच्छ्रितं भूमिगृहस्योपरि गृहादिसन्निवेशः। क्षेत्रं च वास्तु चेति समाहारद्वन्द्वः ।तथा हिरण्यं रजतं, घटितमघटितं चाऽनेकप्रकारं पात्र्यादि, एवं सुवर्णमपि, हिरण्यं च हेम चेत्यत्राऽपि समाहारः । सङ्ख्या व्रतकाले यावज्जीवं चतुर्मासादिकालावधि वा यत्परिमाणं गृहीतं तस्या अतिक्रम उल्लङ्घनं सङ्ख्यातिक्रमोऽतिचारः ॥ ९५ ॥

ननु प्रतिपन्नव्रतसङ्ख्याऽतिक्रमो भङ्ग एव स्यात्, कथमतिचार ? इत्याह—

**बन्धनाद्भावतो गर्भाद्योजनाद् दानतस्तथा । प्रतिपन्नव्रतस्यैष पञ्चधाऽपि न युज्यते ॥९६॥**

न साक्षात् सङ्ख्याऽतिक्रमः, किन्तु व्रतसापेक्षस्य बन्धनादिभिः पञ्चभिर्हेतुभिः स्वबुद्ध्या व्रतभङ्गमकुर्वत

एवातिचारो भवति; बन्धनादयश्च यथासंख्येन धनधान्यादीनां परिग्रहविषयाणां सम्बध्यन्ते । तत्र धनधान्यस्य बन्धनात् संख्याऽतिक्रमो यथा–कृतधनधान्यपरिमाणस्य कोऽपि लभ्यमन्यद्वा धनं धान्यं वा ददाति, तच्च व्रतभङ्गभयाच्चतुर्मास्यादिपरतो गृहगतधनादिविक्रये वा कृते ग्रहीष्यामीति भावनया बन्धनात्, यन्त्रणात् रज्ज्वादिसंयमनात्, सत्यङ्कारदानादिरूपाद्वा स्वीकृत्य तद्गृह एव तत् स्थापयतोऽतिचारः १ । कुप्यस्य भावतः संख्याऽतिक्रमो यथा–कुप्यस्य या संख्या कृता तस्याः कथञ्चिद् द्विगुणत्वे सति व्रतभङ्गभयाद् भावतो द्वयोर्द्वयोर्मीलनेन एकीकरणरूपात् पर्यायान्तरात् स्वाभाविकसंख्याबाधनात् संख्यामात्रपूरणाच्चातिचारः । अथवा भावतोऽभिप्रायादर्थित्वलक्षणाद्विवक्षितकालावधेः परतो ग्रहीष्यामि अतो नान्यस्मै देयमिति पराप्रदेयतया व्यवस्थापयतोऽतिचारः २ । तथा गोमहिषीवडवादेर्विवक्षितसंवत्सराद्यवधिमध्य एव प्रसवे अधिकगवादिभावाद् व्रतभङ्गः स्यादिति तद्भयात् कियत्यपि काले गते गर्भतो गर्भग्रहणाद्गर्भस्थगवादिभावेन बहिस्तदभावेन कथञ्चिद्व्रतभङ्गाद् व्रतिनोऽतिचारः ३ । तथा क्षेत्रवास्तुनो योजनात् क्षेत्रवास्त्वन्तरमीलनाद्गृहीतसंख्याया अतिक्रमोऽतिचारः । तथाहि–किलैकमेव क्षेत्रं वास्तु चेत्यभिग्रहवतोऽधिकतरतदभिलाषे सति व्रतभङ्गभयात् प्राक्तनक्षेत्रवास्तुप्रत्यासन्नं तद् गृहीत्वा पूर्वेण सह तस्यैकत्वकरणार्थं वृत्ति( ति )भित्त्याद्यपनयनेन तत्तत्र योजयतो व्रतसापेक्षत्वात् कथञ्चिद्विरतिबाधनाच्चातिचारः ४ । तथा हिरण्यहेम्नोर्दानाद्वितरणाद् गृहीतसंख्याया अतिक्रमः । यथा केनापि चतुर्मासाद्यवधिना हिरण्यादिसंख्या प्रतिपन्ना, तेन च तुष्टराजादेः सकाशात् तदधिकं तल्लब्धं तदन्यस्मै व्रतभङ्गभयाद् ददाति पूर्णेऽवधौ ग्रहीष्यामीत्यभिप्रायेणेति व्रतसापेक्षत्वादतिचारः । एष गृहीतसंख्याऽतिक्रमः, पञ्चधा-

ऽपि पञ्चभिरपि प्रकारैः, प्रतिपन्नव्रतस्य श्रावकस्य न युज्यते, कर्तुमिति शेषः, व्रतमालिन्यहेतुत्वात् । पञ्चेत्युपलक्षणमन्येषां सहसाकारानाभोगादीनाम् । उक्ता अणुव्रतानां प्रत्येकं पञ्च पञ्चातिचाराः ५ ॥ ९६ ॥

अथ गुणव्रतानामवसरः, तत्राऽपि प्रथमगुणव्रतस्य दिग्विरतिलक्षणस्याऽतिचारानाह—

स्मृत्यन्तर्धानमूर्ध्वाधस्तिर्यग्भागव्यतिक्रमः । क्षेत्रवृद्धिश्च पञ्चेति स्मृता दिग्विरतिव्रते ॥९७॥

दिग्विरतिव्रते पञ्चातिचाराः, इत्यनेन रूपेण, स्मृताः पूर्वाचार्यैः । तद्यथा—स्मृतेर्योजनशतादिरूपदिक्परिमाणविषयाया अतिव्याकुलत्वप्रमादित्वमत्यपाटवादिनाऽन्तर्धानं भ्रंशः । तथाहि—केनचित् पूर्वस्यां दिशि योजनशतरूपं परिमाणं कृतमासीत्, गमनकाले च स्पष्टतया न स्मरति, किं शतं परिमाणं कृतमुत पञ्चाशत् ? तस्य चैवं पञ्चाशतमतिक्रामतोऽतिचारः शतमतिक्रामतो भङ्गः, सापेक्षत्वान्निरपेक्षत्वाच्चेति । तस्मात् स्मर्तव्यमेव गृहीतव्रतं, स्मृतिमूलं हि सर्वमनुष्ठानमिति प्रथमोऽतिचारः १ । तथा ऊर्ध्वं पर्वततरुशिखरादेः, अधो ग्रामभूमिगृहकूपादेः, तिर्यक् पूर्वादिदिक्षु, योऽसौ भागो नियमितः प्रदेशः तस्य व्यतिक्रमः; एते त्रयोऽतिचाराः । यत्सूत्रम्—"उड्ढदिसिपमाणाइक्कमे अहोदिसिपमाणाइक्कमे तिरियदिसिपमाणाइक्कमे" इति ॥ एते च अनाभोगातिक्रमादिभिरेवाऽतिचारा भवन्ति, अन्यथाप्रवृत्तौ तु भङ्गा एव । यस्तु न करोमि न कारयामीति वा नियमं करोति, स विनाचितवेनात् परतः स्वयं गमनतः परेण नयनानयनाभ्यां च दिक्प्रमाणातिक्रमं परिहरति, तदन्य-

(१) ऊर्ध्वदिक्प्रमाणातिक्रमोऽधोदिक्प्रमाणातिक्रमस्तिर्यग्दिक्प्रमाणातिक्रमः ॥

स्य तु तथाविधप्रत्याख्यानाऽभावात् परेण नयनानयनयोर्न दोषः २ । ३। ४। तथा क्षेत्रस्य पूर्वादिदेशस्य दिग्व्रतविषयस्य ह्रस्वस्य सतः वृद्धिर्वर्धनं पश्चिमादिक्षेत्रान्तरपरिमाणप्रक्षेपेण दीर्घीकरणं क्षेत्रवृद्धिरिति पञ्चमोऽतिचारः। तथाहि—केनापि पूर्वापरदिशोः प्रत्येकं योजनशतं गमनपरिमाणं कृतं, स चोत्पन्नप्रयोजन एकस्यां दिशि नवतिं योजनानि व्यवस्थाप्य अन्यस्यां दिशि तु दशोत्तरयोजनशतं करोति, उभाभ्यामपि प्रकाराभ्यां योजनशतद्वयरूपस्य परिमाणस्याव्याहतत्वादित्येवमेकत्र क्षेत्रं वर्धयतो व्रतसापेक्षत्वादतिचार इति। यदि वाऽनाभोगात् क्षेत्रपरिमाणमतिक्रान्तो भवति तदा निवर्तितव्यं, ज्ञाते वा न गन्तव्यम्, अन्योऽपि न विसर्जनीयः। अथानाज्ञया कोऽपि गतो भवेत् तदा यत् तेन लब्धं, स्वयं वा विस्मृतितो गतेन लब्धं तत् परिहर्तव्यम् ॥ ९७ ॥

अथ द्वितीयगुणव्रतस्य भोगोपभोगमानरूपस्यातिचारानाह—

**सचित्तस्तेन सम्बद्धः सन्मिश्रोऽभिषवस्तथा। दुष्पक्वाहार इत्येते भोगोपभोगमानगाः ॥९८॥**

सह चित्तेन चेतनया वर्तते यः स सचित्त आहार एव, आहारस्तु दुष्पक्वाहार इत्यस्मादाकृष्य सम्बध्यते, एवमुत्तरेष्वप्याहारशब्दो योजनीयः। सचित्तस्तु कन्दमूलफलादिः पृथ्वीकायादिर्वा। इह च निवृत्तिविषयीकृतप्रवृत्तौ भङ्गसद्भावेऽप्यतिचाराभिधानं व्रतसापेक्षस्यानाभोगातिक्रमादिना प्रवृत्तौ द्रष्टव्यम् १। तेन सचित्तेन सम्बद्धः प्रतिबद्धः सचित्तसंबद्धः, सचेतनवृक्षादिना सम्बद्धो गुन्दादिः पक्वफलादिर्वा, सचित्तान्तर्बीजः खर्जूराम्रादिः, तदाहारो हि सचित्ताहारवर्जकस्यानाभोगादिना सावद्याहारप्रवृत्तिरूपत्वादतिचारः। अथवा बीजं त्यक्ष्यामि तस्यैव सचेतनत्वात्, कटाहं तु भक्षयिष्यामि तस्याचेतनत्वादिति बुद्ध्या पक्वं खर्जूरादिफलं मुखे प्रक्षिपतः सचित्तवर्जकस्य

सचित्तप्रतिबद्धाहारो द्वितीयः २ । तथा सचित्तेन मिश्रं शबलः आहारः सन्मिश्राहारः । यथा—आर्द्रकदाडिम-बीजकुलिकाचिर्भटिकादिमिश्रः पूरणादिः, तिलमिश्रो यवधानादिर्वा, अयमप्यनाभोगातिक्रमादिनाऽतिचार । अथवा सम्भवत्सचित्तावयवस्यापक्वकणिकादेः पिष्टत्वादिना अचेतनमिति बुद्ध्या आहारः सन्मिश्राहारः व्रतसापेक्षत्वादतिचार इति तृतीयः ३ । अभिषवोऽनेकद्रव्यसधाननिष्पन्नः सुरासौवीरकादिः, मांसप्रकारखण्डादिर्वा, सुरामध्वाद्यभिस्यन्दिवृष्यद्रव्योपयोगो वा, अयमपि सावद्याहारवर्जकस्यानाभोगातिक्रमादिनाऽतिचार इति चतुर्थः ४ । तथा दुष्पक्वो मन्दपक्वः स चासावाहारश्च दुष्पक्वाहारः, स चार्धस्विन्नपृथुकतन्दुलयवगोधूमस्थूलमण्डककर्कटकफलादिरैहिकप्रत्यवायकारी यावता चांशेन सचेतनस्तावता परलोकमप्युपहन्ति पृथुकादेर्दुष्पक्वतया सम्भवत्सचेतनावयवत्वात् पक्वत्वेनाचेतन इति भुञ्जानस्याऽतिचार इति पञ्चमः ५। केचित् त्वपक्वाहारमप्यतिचारत्वेन वर्णयन्ति। अपक्वं चाग्न्यादिना यदसंस्कृतम् । एष च सचित्ताहारे प्रथमातिचारेऽन्तर्भवति । तुच्छौषधिभक्षणमपरे केचिदतिचारमाहुः । तुच्छौषधयश्च मुद्गादिकोमलशिम्बीरूपास्ताश्च यदि सचित्तास्तदा सचित्तातिचार एवान्तर्भवन्ति, अथ अग्निपाकादिना अचित्तास्तर्हि को दोषः ? इति । एवं रात्रिभोजनमद्यादिनिवृत्तिष्वपि अनाभोगातिक्रमादिभिरतिचारा भावनीयाः एते पञ्चातिचारा भोगोपभोगपरिमाणगता बोद्धव्याः ॥ ६८ ॥

अथ भोगोपभोगातिचारानुपसंहरन् भोगोपभोगव्रतस्य लक्षणान्तरं वक्तांश्चातिचारानुपदर्शयितुमाह—

**अमी भोजनतस्त्याज्याः कर्मतः खरकर्म तु । तस्मिन् पञ्चदश मलान् कर्मादानानि संत्यजेत् ।६९।**

अमी उक्तस्वरूपाः पञ्चातिचाराः, भोजनतो भोजनमाश्रित्य, त्याज्या वर्जनीयाः । भोगोपभोगमानस्य च

व्याख्यानान्तरं—भोगोपभोगसाधनं यद्द्रव्यं तदुपार्जनाय यत्कर्म व्यापारस्तदपि भोगोपभोगशब्देनोच्यते, कारणे कार्य्योपचारात् । ततश्च कर्मतः कर्माश्रित्य, खरं कठोरं प्राणिबाधकं यत्कर्म कोट्टपालनगुप्तिपालनवीतपालनादिरूपं तत्त्याज्यं, तस्मिन् खरकर्मत्यागलक्षणे भोगोपभोगव्रते, पञ्चदश मलानतिचारान् संत्यजेत्। ते च कर्मादानशब्दे-नोच्यन्ते; कर्मणां पापप्रकृतीनामादानानि कारणानीति कृत्वा ॥ ९९ ॥

तानेव नामतः श्लोकद्वयेन दर्शयति—

अङ्गारवनशकटभाटकस्फोटजीविका। दन्तलाक्षारसकेशविषवाणिज्यकानि च ॥ १०० ॥
यन्त्रपीडा निर्लाञ्छनमसतीपोषणं तथा । दवदानं सरःशोष इति पञ्चदश त्यजेत् ॥१०१॥

जीविकाशब्दः प्रत्येकं सम्बध्यते। अङ्गारजीविका १ वनजीविका २ शकटजीविका ३ भाटकजीविका ४ स्फोटजीविका ५। उत्तरार्धेऽपि वाणिज्यशब्दः प्रत्येकमभिसम्बध्यते ।दन्तवाणिज्यं ६ लाक्षावाणिज्यं ७ रसवाणिज्यं ८ केशवाणिज्यं ९ विषवाणिज्यं १० यन्त्रपीडा ११ निर्लाञ्छनं १२ असतीपोषणं १३ दवदानं १४ सरःशोषः १५ इत्येतान् पञ्चदशातिचारान् त्यजेत् ॥ १०० ॥ १०१ ॥

क्रमेण पञ्चदशाप्यतिचारान् व्याचष्टे तत्राङ्गारजीविकामाह—

अङ्गारभ्राष्ट्रकरणं कुम्भायःस्वर्णकारिता ।ठठारत्वेष्टकापाकाविति ह्यङ्गारजीविका ॥१०२॥

अङ्गारकरणे काष्ठदाहेनाङ्गारनिष्पादनं तद्विक्रयश्च, अङ्गारकरणे हि षण्णां जीवनिकायानां विराधनासम्भवः ।

एव च ये येऽग्निविराधनारूया आरम्भास्ते तेऽङ्गारकर्मण्यन्तर्भवन्ति, प्रपञ्चार्थं तु भेद उक्त । भ्राष्ट्रकरण, भ्राष्ट्र-जीविकेत्यर्थः । तथा कुम्भकारिता कुम्भकरणपाचनविक्रयनिमित्ता जीविका । तथा अयो लोह तस्य करणघटना-दिना जीविका । स्वर्णकारिता सुवर्णरूप्ययोर्गालनघटनादिना जीविका। कुम्भायःस्वर्णानि करोतीत्येव शीलस्तस्य भावस्तत्ता । तथा ठठारत्व शुल्वनागवङ्गकांसपित्तलादीनां करणघटनादिना जीविका, इष्टकापाकः इष्टकाकवे-ल्लुकादीनां पाकस्तेन जीविका । इत्येवप्रकारा अङ्गारजीविका ॥ १०२ ॥

अथ वनजीविकामाह—

छिन्नाच्छिन्नवनपत्रप्रसूनफलविक्रय । कणानां दलनात् पेषाद् वृत्तिश्च वनजीविका ॥१०३॥

छिन्नस्य द्विधाकृतस्य अच्छिन्नस्य च वनस्य वनस्पतिसमूहस्य पत्राणां प्रसूनानां फलानां च छिन्नाच्छिन्नानां विक्रयो वनजीविकेत्युत्तरेण सम्बन्धः । कणानां च घरट्टादिना दलनाद् द्वैधीकरणात्, शिलाशिलापुत्रकादिना पेषात् चूर्णीकरणाद्या वृत्ति सा वनजीविका । वनजीविका च वनस्पतिकायादिघातसम्भवा ॥ १०३ ॥

अथ शकटजीविकामाह—

शकटाना तदङ्गानां घटन खेटन तथा । विक्रयश्चेति शकटजीविका परिकीर्तिता ॥ १०४ ॥

शकटानां चतुष्पदवाह्यानां वाहनानां, तदङ्गाना शकटाङ्गानां चक्रादीनां, घटन स्वय परेण वा निष्पादनं, खेटन वाहन, तच्च शकटानामेव सम्भवति स्वय परेण वा, विक्रयश्च शकटानां तदङ्गानां च, इति सकलभूतोपम-

र्देजननी गवादीनां च वधबन्धादिहेतुः शकटजीविका प्रकीर्तिता ॥ १०४ ॥

अथ भाटकजीविकामाह—

**शकटोक्षलुलायोष्ट्रखराश्वतरवाजिनाम् । भारस्य वाहनाद् वृत्तिर्भवेद्भाटकजीविका ॥१०५॥**

शकटशब्द उक्तार्थः, उक्षाणो बलीवर्दाः, लुलाया महिषाः, उष्ट्राः करभाः, खरा रासभा, अश्वतरा वेसराः, वाजिनोऽश्वाः, एतेषां भाटकनिमित्तं यद्भारवाहनं, तस्माद् या वृत्तिः सा भाटकजीविका ॥ १०५ ॥

अथ स्फोटजीविकामाह—

**सरःकूपादिखननशिलाकुट्टनकर्मभिः । पृथिव्यारम्भसम्भूतैर्जीवनं स्फोटजीविका ॥ १०६ ॥**

सरसः कूपस्य आदिग्रहणाद् वापीदीर्घिकादेः खननमोड्डकर्म, हलादिना वा क्षेत्रादेर्भूविदारणं, शिलाकुट्टनकर्म पाषाणघटनकर्म; एतैः पृथिव्याः पृथिवीकायस्य य आरम्भ उपमर्दस्तस्य सम्भूतं सम्भवो येभ्यस्तैः पृथिव्यारम्भसम्भूतैः ; उपलक्षणं चैतद् भूमिखनने वनस्पतित्रसादिजन्तुघातानाम् । एभिर्जीवनं स्फोटजीविका; स्फोटः पृथिव्या विदारणं तेन जीविका स्फोटजीविका ॥ १०६ ॥

अथ दन्तवाणिज्यमाह—

**दन्तकेशनखास्थित्वग्रोम्णो ग्रहणमाकरे । त्रसाङ्गस्य वणिज्यार्थं दन्तवाणिज्यमुच्यते ॥१०७॥**

दन्ता हस्तिनां उपलक्षणत्वादन्येऽपि त्रसजीवावयवा दन्तग्रहणेन गृह्यन्ते । तदेवाह—केशाश्चमर्यादीनां, नखा

घूकादीनां, अस्थीनि शङ्खादीनां, त्वक् चित्रकादीनां, रोमाणि हंसादीनां, तेषां ग्रहणं मूल्यादिना स्वीकारः, रोम्ण इत्येकवचनं प्राण्यङ्गत्वात् । आकरे तदुत्पत्तिस्थाने, त्रसाङ्गस्य त्रसजीवावयवस्य, वाणिज्यार्थं वाणिज्यनिमित्तं, आकरे हि दन्तादिग्रहणार्थं पुलिन्द्राणां यदा द्रव्यं ददाति तदा तत्प्रति(वि)क्रयार्थं हस्त्यादिवधं ते कुर्वन्ति, आकरग्रहं चानाकरे दन्तादेर्ग्रहणे विक्रये च न दोष इति ज्ञापनार्थम् ॥ १०७ ॥

अथ लाक्षावाणिज्यमाह—

लाक्षामनःशिलानीलीधातकीटङ्कणादिनः । विक्रयः पापसदनं लाक्षावाणिज्यमुच्यते ॥१०८॥

लाक्षा जतु अत्रापि लाक्षाग्रहणमुपलक्षणमन्येषां सावद्यानां मनःशिलादीनाम् । तान्येवाह—मनःशिला कुनटी, नीली गुलिका, धातकी वृक्षविशेषः तस्याः त्वक् पुष्पं च मद्यसन्धानहेतुर्धातकी, टङ्कणः क्षारविशेषः, आदिशब्दात् सकूटादयो गृह्यन्ते, तेषां विक्रयः । स च पापसदनं टङ्कणमनःशिलयोर्बाह्यजीवघातकत्वेन, नील्या जन्तुघाताविनाभावेन, धातक्या मद्यहेतुत्वेन तत्कल्कस्य च कृमिहेतुत्वेन पापसदनत्वं ततस्तद्विक्रयस्याऽपि पापसदनत्वम् । तदेतद् लाक्षावाणिज्यमुच्यते ॥ १०८ ॥

अथ रसकेशवाणिज्ये एकेनैव श्लोकेनाह—

नवनीतवसाक्षौद्रमद्यप्रभृतिविक्रयः । द्विपाच्चतुष्पाद्विक्रयो वाणिज्यं रसकेशयोः ॥ १०९ ॥

नवनीतं दधिसारं, वसा मेदः, क्षौद्रं मधु, मद्यं सुरा, प्रभृतिग्रहणात् मज्जादिग्रहः । एषां विक्रयो रसवाणिज्यम्,

द्विपदां मनुष्यादीनां चतुष्पदां गवाश्वादीनां विक्रयः केशवाणिज्यम्, सजीवानां विक्रयः केशवाणिज्यमजीवानां तु जीवाङ्गानां विक्रयो दन्तवाणिज्यमिति विवेकः । रसकेशयोरिति यथासंख्येन योगः । दोषास्तु नवनीते जन्तुसंमूर्च्छनं, वसाक्षौद्रयोर्जन्तुघातोद्भवत्वं, मद्यस्य मदनजननं तद्गतकृमिविघातश्चेति; द्विपाच्चतुष्पाद्विक्रये तु तेषां पारवश्यं वधबन्धादयः क्षुत्पिपासापीडा चेति ॥ १०९ ॥

अथ विषवाणिज्यमाह—

विषास्त्रहलयन्त्रायोहरितालादिवस्तुनः । विक्रयो जीवितघ्नस्य विषवाणिज्यमुच्यते ॥११०॥

विषं शृङ्गिकादि तच्चोपलक्षणं जीवघातहेतूनामस्त्रादीनाम् । तान्येवाह—अस्त्रं खड्गादि, हलं लाङ्गलं, यन्त्र-मरघट्टादि, अयः कुशीकुद्दालादिरूपं, हरितालं वर्णकविशेषः । आदिशब्दादन्येषामुपविषाणां ग्रहणम् । एवमादि-वस्तुनो विक्रयो विषवाणिज्यं विषादेर्विशेषणं-जीवितघ्नस्य, अमीषां जीवितघ्नत्वं प्रसिद्धमेव ॥ ११० ॥

अथ यन्त्रपीडाकर्माह—

तिलेक्षुसर्षपैरण्डजलयन्त्रादिपीडनम् । दलतैलस्य च कृतिर्यन्त्रपीडा प्रकीर्तिता ॥ १११ ॥

यन्त्रशब्दः प्रत्येकमभिसम्बध्यते । तिलयन्त्रं तिलपीलनोपकरणम्, इक्षुयन्त्रं कोल्हुकादि, सर्षपैरण्डयन्त्रे तत्पीलनोपकरणे, जलयन्त्रमरघट्टादि, दलतैलं यत्र दलं तिलादि दीयते तैलं च प्रतिगृह्यते तद्दलतैलं तस्य कृति-र्विधानमिति, यन्त्रपीडा यन्त्रपीडनं यन्त्रपीडाकर्मणश्च पीडनीयतिलादिक्षोदाच्चद्गतत्रसजीववधाच्च सदोषत्वम् ।

लौकिका अपि ह्याचक्षते—दशशूनासमं चक्रमिति ॥ १११ ॥

अथ निर्लाञ्छनकर्माह—

नासावेधोऽङ्कनं मुष्कच्छेदनं पृष्ठगालनम् । कर्णकम्बलविच्छेदो निर्लाञ्छनमुदीरितम् ॥११२॥

नितरां लाञ्छनमङ्गावयवच्छेदः, तेन कर्म जीविका निर्लाञ्छनकर्म । तद्भेदानाह—नासावेधो गोमहिषादीनाम्, अङ्कनं गवाश्वादीनां चिह्नकरणं, मुष्कोऽण्डस्तस्य च्छेदनं वर्धितकीकरणं गवाश्वादीनामेव, पृष्ठगालनं करभाणां, गवां च कर्णकम्बलविच्छेदः । एषु जन्तुबाधा व्यक्तैव ॥ ११२ ॥

अथासतीपोषणमाह—

सारिकाशुकमार्जारश्वकुर्कुटकलापिनाम् । पोषो दास्याश्च वित्तार्थमसतीपोषणं विदुः ॥११३॥

असत्यो दुःशीलास्तासां पोषणं, लिंगमतन्त्रम्, शुकादीनां पुंसामपि पोषणमसतीपोषणं, सारिका व्यक्तवाक् पक्षिविशेषः, शुकः कीरः, मार्जारो बिडालः, श्वा कुकुरः, कुर्कुटस्ताम्रचूडः, कलापी मयूरः, एतेषां तिरश्चां पोषः पोषणं, दास्याश्च पोष इति वर्तते, स च भाटीग्रहणार्थमसतीपोषः । एषां च दुःशीलानां पोषणं पापहेतुरेव ॥११३॥

अथ दवदानसरःशोषावेकेन श्लोकेनाह—

व्यसनात् पुण्यबुद्ध्या वा दवदानं भवेद् द्विधा । सरःशोषः सरःसिन्धुह्रदादेरम्बुसंप्लवः ॥११४॥

दवस्य दवाग्नेः तृणादिदहननिमित्तं दानं वितरणं दवदानं, तच्च द्विधा संभवति—व्यसनात् फलनिरपेक्षता-

त्पर्य्यात् यथा वनेचरा एवमेवाग्निं ज्वालयन्ति; पुण्यबुद्ध्या वा यथा मे दवा देया मरणकाले इयन्तो मम श्रेयोऽर्थं धर्मदीपोत्सवाः करणीया इति, अथवा तृणदाहे सति नवतृणाङ्कुरोद्भेदाद् गावश्चरन्तीति क्षेत्रे वा सस्यसम्पत्तिवृद्ध्येऽग्निज्वालनम् । अत्र जीवकोटीनां वधः स्यात् । सरसः शोषः सरःशोषः सरोग्रहणमुपलक्षणं जलाशयान्तराणाम् । तदेवाह–सरःसिन्धुह्रदादिभ्यो योऽम्बुनो जलस्य संप्लवः सारणीकर्षणं धान्यवपनार्थं, आदिशब्दात् तडागादिपरिग्रहः । तत्राऽखातं सरः, खातं तडागम् । सरःशोषे च जलस्य तद्गतानां त्रसानां तत्प्लावितानां च षण्णां जीवनिकायानां वध इति सरःशोषदोषः । इत्युक्तानि पञ्चदशकर्मादानानि, दिङ्मात्रं चेदम्, एवंजातीयानां बहूनां सावद्यकर्मणां न पुनः परिगणनमिति । इह चैवं विंशतिसंख्याऽतिचाराभिधानमन्यत्राऽपि पञ्चातिचारसंख्यया तज्जातीयानां व्रतपरिणामकालुष्यनिबन्धनविधीनामपरेषां संग्रह इति ज्ञापनार्थम् । तेन स्मृत्यन्तर्धानादयो यथासम्भवं सर्वव्रतेष्वतिचारा द्रष्टव्याः । नन्वङ्गारकर्मादयः कथं खरकर्मण्यतिचाराः ?, खरकर्मरूपा एव ह्येते । सत्यम्, खरकर्मरूपा एवैते, किन्त्वनाभोगादिना क्रियमाणा अतिचाराः, उपेत्य क्रियमाणास्तु भङ्गा एवेति ॥ ११४ ॥

अथानर्थदण्डविरतिव्रतस्याऽतिचारानाह—

**संयुक्ताधिकरणत्वमुपभोगातिरिक्तता । मौखर्य्यमथ कौत्कुच्यं कन्दर्पोऽनर्थदण्डगाः ॥११५॥**

अनर्थदण्डगा इत्यनर्थदण्डविरतिव्रतगामिन एते पञ्चातिचाराः । तद्यथा–अधिक्रियते दुर्गतावात्माऽनेनेत्यधिकरणमुदूखलादिसंयुक्तम्, उदूखलेन मुशलं, हलेन फालः, शकटेन युगं, धनुषा शराः, एवमेकमधिकरणमधिकरणान्तरेण संयुक्तं संयुक्ताधिकरणं तस्य भावस्तत्त्वम् । इह च श्रावकेण संयुक्तमधिकरणं न धारणीयम् ।

तथा सति हि य कश्चिद् संयुक्तमधिकरणमाददीत, वियुक्ताधिकरणतायां तु सुखेन परः प्रतिषेधयितु शक्यते । एतच्च हिंस्रप्रदानरूपस्यानर्थदण्डस्यातिचार' १ । तथा उपभोगस्योपलक्षणत्वाद्भोगस्य चोक्तनिर्वचनस्य यदतिरिक्तत्वमतिरेक. सा उपभोगातिरिक्तता । अथ प्रमादाचरितस्याऽतिचारः । इह च स्नानपानभोजनचन्दनकुङ्कुमकस्तूरिकावस्त्राभरणादीनामतिरिक्तानामारम्भोऽनर्थदण्ड ।अत्राऽपि वृद्धसम्प्रदाय –अतिरिक्तानि बहूनि तैलामलकानि यदि गृह्णाति, तदा तल्लौल्येन बहव स्नानार्थं तडागादौ व्रजन्ति, ततश्च पूतरकाप्कायादिवधोऽधिकः स्यात्, न चैव कल्पते, तत को विधि' ? तत्र स्नानेच्छुना तावद्गृह एव स्नातव्यम् तदभावे तु तैलामलकैर्गृह एव शिरो घर्षयित्वा तानि सर्वाणि शाटयित्वा तडागादीना तटे निविष्टोऽञ्जलिभिः स्नाति । तथा येषु पुष्पादिषु ससक्तिः सम्भवति तानि परिहरति, एव सर्वत्र वाच्यमिति द्वितीयोऽतिचार २ । तथा मुखमस्यास्तीति मुखरोऽनालोचितभाषी वाचाट' तस्य भावो मौखर्यं धार्ष्ट्यप्रायमसभ्यासम्बद्धबहुप्रलापित्वम्, अयं च पापोपदेशस्यातिचार', मौखर्ये सति पापोपदेशसम्भवादिति तृतीय' ३ । तथा कुदिति कुत्सायां निपातो, निपातानामानन्त्यात् । कुत् कुत्सित कुचति भ्रूनयनौष्ठनासाकरचरणमुखविकारैः सङ्कुचतीति कुत्कुचस्तस्य भावः कौत्कुच्यम्, अनेकप्रकारा भण्डादिविडम्बनक्रिया इत्यर्थः । अथवा कौकुच्यमिति पाठ , तत्र कुत्सित कुचः कुकुचः सङ्कोचादिक्रियाभाक् तद्भाव कौकुच्यम्, अत्र च येन परो हसति, आत्मनश्च लाघव भवति, न तादृश वक्तु चेष्टितु वा कल्पते, प्रमादात्तथाचरणे चातिचार इति चतुर्थः ४ । तथा कन्दर्प कामस्तद्धेतुस्तत्प्रधानो वा वाक्प्रयोगोऽपि कन्दर्पः । इह च सामाचारी–श्रावकेण न तादृश वक्तव्य येन स्वस्य परस्य वा मोहोद्रेको भवतीति पञ्चमः ५ । एतौ द्वावपि

प्रमादाचरितस्यातिचारा, इत्यवसिता गुणव्रतातिचाराः ॥ ११५ ॥

अथ शिक्षाव्रतातिचारावसरः । तत्रापि सामायिकस्य तावदतिचारानाह—

**कायवाङ्मनसां दुष्टप्रणिधानमनादरः । स्मृत्यनुपस्थापनं च स्मृताः सामायिकव्रते ॥११६॥**

कायस्य वाचो मनसश्च प्रणिहितिः प्रणिधानम्, दुष्टं च तत्प्रणिधानं दुष्टप्रणिधानं सावद्ये प्रवर्तनं कायदुष्प्रणिधानं, वाग्दुष्प्रणिधानं, मनोदुष्प्रणिधानं चेत्यर्थः । तत्र शरीरावयवानां पाणिपादादीनामनिभृतताऽवस्थापनं कायदुष्प्रणिधानम्, वर्णसंस्काराभावोऽर्थानवगमश्चापलं च वाग्दुष्प्रणिधानम्, क्रोधलोभद्रोहाऽभिमानेर्ष्यादयः कार्यव्यासङ्गसम्भ्रमश्च मनोदुष्प्रणिधानम्; एते त्रयोऽतिचाराः । यदाहुः—

अनिरिक्खियापमज्जियथण्डिल्ले ठाणमाइ सेवन्तो । हिंसाभावे वि न सो कडसामाइओ पमायाउ ॥ १ ॥
कडसामाइउ पुव्विं बुद्धीए पेहिऊण भासिज्जा । सइ निरवज्जं वयणं अन्नह सामाइयं न हवे ॥ २ ॥
सामाइयं तु काउं घरचिन्तं जो उ चिन्तए सड्ढो । अट्टवसट्टोवगओ निरत्थयं तस्स सामाइयं ॥ ३ ॥

तथाऽनादरोऽनुत्साहः प्रतिनियतवेलायां सामायिकस्याकरणम्, यथाकथञ्चिद्वा करणम्, प्रबलप्रमादादिदोषात्

---

( १ ) अनिरीक्षिताऽप्रमार्जितस्थण्डिले स्थानादि सेवमानः । हिंसाभावेऽपि न स कृतसामायिकः प्रमादात् ॥ १ ॥
कृतसामायिकः पूर्वं बुद्ध्या प्रेक्ष्य भाषेत । सदा निरवद्यं वचनमन्यथा सामायिकं न भवेत् ॥ २ ॥
सामायिकं तु कृत्वा गृहचिन्तां यस्तु चिन्तयेत् श्राद्धः । आर्तवशार्तोपगतो निरर्थकं तस्य सामायिकम् ॥ ३ ॥

करणानन्तरमेव पारयति च । यदाहु —

काऊण तक्खण चिअ पारेइ करेइ वा जहिच्छाए । अणवट्ठियसामाइय अणायराओ न त सुद्ध ॥ १ ॥

इति चतुर्थः ॥ ४ ॥ स्मृतौ स्मरणे सामायिकस्याऽनुपस्थापन स्मृत्यनुपस्थापन सामायिक मया कर्तव्य न कर्तव्यमिति वा, सामायिक मया कृत न कृतमिति वा, प्रबलप्रमादाद्यदा न स्मरति तदा अतिचार', स्मृतिमूलत्वान्मोक्षसाधनाऽनुष्ठानस्य । यदाहुः—

न सरइ पमायजुत्तो जो सामाइय कया य कायव्व । कयमकय वा तस्स हु कय पि विहल तय नेय ॥ १ ॥

ननु कायदुष्प्रणिधानादौ सामायिकस्य निरर्थकत्वादिप्रतिपादनेन वस्तुतोऽभाव एवोक्त, अतिचारश्च मालिन्यरूप एव भवतीति कथ समायिकाभावे स भवेत् ?, अतो भङ्गा एवैते नातिचारा इति चेत् उच्यते— अनाभोगतोऽतिचारत्वम् । ननु द्विविध त्रिविधेन सावद्यप्रत्याख्यान सामायिक, तत्र च कायदुष्प्रणिधानादौ प्रत्याख्यानभङ्गात् सामायिकाभाव एव, तद्भङ्गजनित च प्रायश्चित्त विधेय स्यात् मनोदुष्प्रणिधान चाशक्यपरिहार मनसोऽनवस्थितत्वादतः सामायिकप्रतिपत्तेः सकाशात्तदप्रतिपत्तिरेव श्रेयसी । यदाहु —" अविधिकृताद्वरमकृतमिति " । नैवम्, यत' सामायिक द्विविध त्रिविधेन प्रतिपन्नम्, तत्र च मनसा वाचा कायेन सावद्य न करोमि न कारयामीति पद् प्रत्याख्यानानि इत्येकतरप्रत्याख्यानभङ्गेऽपि शेषसद्भावान्मिथ्यादुष्कृतेन मनोदुष्प्रणिधानमात्रशुद्धेश्च

( १ ) कृत्वा तत्क्षणमेव पारयति करोति वा यथेच्छम् । अनवस्थितसामायिकमनादराद् न तद् शुद्धम् ॥ १ ॥

( २ ) न स्मरति प्रमादयुक्तो य सामायिक कदा च कर्तव्यम् । कृतमकृत वा तस्य खलु कृतमपि विफल तज्ज्ञेयम् ॥ १ ॥

न सामायिकस्यात्यन्ताभावः, सर्वविरतिसामायिकेऽपि च तथाऽभ्युपगतम्; यतो गुप्तिभङ्गे मिथ्यादुष्कृतं प्रायश्चित्तमुक्तम् । किञ्च सातिचारादप्यनुष्ठानादभ्यासतः कालेन निरतिचारमनुष्ठानं भवति । यदाहुर्बाह्या अपि—अभ्यासो हि कर्मणां कौशलमावहति, न हि सकृन्निपातमात्रेणोदबिन्दुरपि ग्रावणि निम्नतामादधाति । न चाविधिकृताद् वरमकृतमिति युक्तम्, असूयावचनत्वादस्य । यदाहुः—

अविहिकया वरमकयं असूयवयणं भणन्ति समयन्नू । पायच्छित्तं जम्हा अकए गुरुअं कए लहुअं ॥ १ ॥

केचित्तु पोषधशालायां सामायिकमेकेनैव कार्यं न बहुभिः, 'एगे अबीए' इति वचनप्रामाण्यादित्याहुः । नायमेकान्तो वचनान्तरस्याऽपि श्रवणात् । व्यवहारभाष्येऽप्युक्तम्—"रायसुयाई पञ्च वि पोसहसालाइ संमिलिआ" । इत्यलं प्रसङ्गेन ॥ ११६ ॥

एते पञ्चातिचाराः सामायिकव्रते उक्ताः, इदानीं देशावकाशिकव्रतातिचारानाह—

**प्रेष्यप्रयोगानयने पुद्गलक्षेपणं तथा । शब्दरूपाऽनुपातौ च व्रते देशावकाशिके ॥ ११७ ॥**

दिग्व्रतविशेष एव देशावकाशिकव्रतम्, इयांस्तु विशेषः—दिग्व्रतं यावज्जीवं संवत्सरचतुर्मासीपरिमाणं वा, देशावकाशिकं तु दिवसप्रहरमुहूर्तादिपरिमाणम् । तस्य च पञ्चातिचाराः । तद्यथा—प्रेष्यस्याऽऽदेश्यस्य प्रयोगो

---

(१) अविधिकृताद् वरमकृतमसूयावचनं भणन्ति समयज्ञाः । प्रायश्चित्तं यस्मादकृते गुरुकं कृते लघुकम् ॥ १ ॥

(१) राजसुतादयः पञ्चाऽपि पोषधशालायां संमिलिताः ।

विवक्षितक्षेत्राद्बहिष्प्रयोजनाय व्यापारणम्, स्वयं गमने हि व्रतभङ्गः स्यादिति प्रेष्यप्रयोग । देशावकाशिकव्रतं हि मा भूद् गमनागमनादिव्यापारजनितप्राण्युपमर्द इत्यभिप्रायेण गृह्यते, स तु स्वयं कृतोऽन्येन कारित इति न कश्चित् फले विशेषः, प्रत्युत स्वयं गमने ईर्यापथविशुद्धेर्गुणः, परस्य पुनरनिपुणत्वादीर्यासमित्यभावे दोष इति प्रथमोऽतिचारः १ । आनयनं विवक्षितक्षेत्राद् बहिः स्थितस्य सचेतनादिद्रव्यस्य विवक्षितक्षेत्रे प्रापणं सामर्थ्यात् प्रेष्येण; स्वयं गमने हि व्रतभङ्गः स्यात्, परेण तु आनयने न व्रतभङ्गः स्यादिति बुद्ध्या प्रेष्येण यदाऽऽनाययति सचेतनादि द्रव्यं तदाऽतिचार इति द्वितीयः २ । तथा पुद्गलाः परमाणवस्तत्संघातसमुद्भवा बादरपरिणामं प्राप्ता लोष्टेष्टका काष्ठशलाकादयोऽपि पुद्गलास्तेषां क्षेपणं प्रेरणम् । विशिष्टदेशावग्रहे हि सति कार्यार्थी परतो गमननिषेधाद्यदा लोष्टादीन् परेषां बोधनाय क्षिपति, तदा लोष्टादिपातसमनन्तरमेव ते तत्समीपमनुधावन्ति, ततश्च तान् व्यापारयतः स्वयमनुपमर्दकस्यातिचारो भवतीति तृतीयः ३ । शब्दरूपानुपातो चेति शब्दानुपातो रूपानुपातश्च । तत्र स्वगृहवृत्ति(ति)प्राकारादिव्यवच्छिन्नभूदेशाभिग्रहे प्रयोजने उत्पन्ने स्वयमगमनाद् वृत्ति(ति)प्राकारप्रत्यासन्नवर्ती भूत्वा अभ्युत्कासितादिशब्दं करोति, आह्वानीयानां श्रोत्रेऽनुपातयति, ते च तच्छब्दश्रवणात्तत्समीपमागच्छन्ति इति शब्दानुपातोऽतिचारः । तथा रूपं स्वशरीरसम्बन्धि उत्पन्नप्रयोजनः शब्दमनुच्चारयन् आह्वानीयानां दृष्टावनुपातयति, तद्दर्शनाच्च ते तत्समीपमागच्छन्तीति रूपानुपातः । इयमत्र भावना–विवक्षितक्षेत्राद्बहिःस्थितं कञ्चन नरं व्रतभङ्गभयादाह्वातुमशक्नुवन् यदा स्वकीयशब्दश्रावणरूपदर्शनव्याजेन तमाकारयति, तदा व्रतसापेक्षत्वाच्छब्दानुपातरूपानुपातावतिचाराविति चतुर्थपञ्चमौ ४ । ५ । इह चाद्यातिचारद्वयमव्युत्पन्नबुद्धितया सहसाकारादिना

वा, अन्त्यत्रयं तु मायावितया अतिचारतां याति । अत्र दिग्व्रतसंक्षेपकरणवद् व्रतान्तराणामपि संक्षेपकरणं देशावकाशिकव्रतमिति वृद्धाः । अतिचाराश्च दिग्व्रतकरणस्यैव श्रूयन्ते न व्रतान्तरसंक्षेपकरणस्य, तत्कथं व्रतान्तरसंक्षेपकरणं देशावकाशिकव्रतम् ? अत्रोच्यते—प्राणातिपातादिविरमणव्रतान्तरसंक्षेपकरणेषु वधबन्धादय एवातिचाराः. दिग्व्रतसंक्षेपकरणे तु संक्षिप्तत्वात् क्षेत्रस्य, प्रेष्यप्रयोगादयोऽतिचाराः । भिन्नातिचारसम्भवाच्च दिग्व्रतसंक्षेपकरणस्यैव देशावकाशिकत्वं साक्षादुक्तमिति ॥ ११७ ॥

अथ पोषधव्रतस्यातिचारानाह—

**उत्सर्गादानसंस्तारानवेक्ष्याप्रमृज्य च । अनादरः स्मृत्यनुपस्थापनं चेति पोषधे ॥११८॥**

उत्सर्जनमुत्सर्गस्त्याग उच्चारप्रस्रवणखेलसिंघाणकादीनामवेक्ष्य प्रमृज्य च स्थण्डिलादौ उत्सर्गः कार्यः । अवेक्षणं चक्षुषा निरीक्षणम् । प्रमार्जनं वस्त्रप्रान्तादिना स्थण्डिलादेरेव विशुद्धीकरणम् । अथानवेक्ष्याप्रमृज्य चोत्सर्गं करोति तदा पोषधव्रतमतिचरतीति प्रथमोऽतिचारः १ । आदानं ग्रहणं यष्टिपीठफलकादीनाम्, तदप्यवेक्ष्य प्रमृज्य च कार्यम्, अनवेक्षितस्याप्रमार्जितस्य चादानमतिचारः । आदानग्रहणेन निक्षेपोऽप्युपलक्ष्यते यष्ट्यादीनाम्, तेन सोऽप्यवेक्ष्य प्रमार्ज्य च कार्य्यः; अनवेक्ष्याप्रमृज्य च निक्षेपोऽतिचार इति द्वितीयः २ । तथा संस्तीर्यते यः प्रतिपन्नपोषधव्रतेन दर्भकुशकम्बलिवस्त्रादिः स संस्तारः, स चावेक्ष्य प्रमार्ज्य च कर्तव्यः, अनवेक्ष्याप्रमार्ज्य च करणेऽतिचारः । इह चानवेक्षणेन दुरवेक्षणम्, अप्रमार्जनेन दुष्प्रमार्जनं सगृह्यते, नञः कुत्सार्थस्याऽपि दर्शनात्, यथा कुत्सितो ब्राह्मणोऽब्राह्मणः ।

यत् सूत्रम्—अप्पडिलेहिअदुप्पडिलेहिअसिज्जासथारए, अप्पमज्जिअदुप्पमज्जिअसिज्जासथारए, अप्पडिलेहिअदुप्पडिलेहिअउच्चारपासवणभूमीए,* अप्पमज्जिअदुप्पमज्जिअउच्चारपासवणभूमि(मीए) ॥

इति तृतीय ३। तथा अनादर पोषधव्रतअतिपत्तिकर्तव्यतायामिति चतुर्थः ४। तथा स्मृत्यनुपस्थापन तद्विषयमेवेति पञ्चमः, पोषधे सर्वतः पोषधे, देशत पोषधे तु नाय विधिः ५ ॥ ११८ ॥

अथातिथिसविभागव्रतस्यातिचारानाह—

सचित्ते क्षेपण तेन पिधान काललङ्घनम्। मत्सरोऽन्यापदेशश्च तुर्यशिक्षाव्रते स्मृता ॥११९॥

सचित्ते सजीवे पृथ्वीजलकुम्भोपचुल्लीधान्यादौ, क्षेपण निक्षेपो देयस्य वस्तुनः, तच्च अदानबुद्ध्या निक्षिपति, एतज्जानात्यसौ तुच्छबुद्धिः यत् सचित्ते निक्षिप्त न गृह्णते साधव इत्यतो देय चोपस्थाप्यते न चाददते साधव इति लाभोऽय ममेति प्रथमोऽतिचारः१। तथा तेन सचित्तेन सूरणकन्दपत्रपुष्पफलादिना तथाविधयैव बुद्ध्या पिधत्ते, इति द्वितीय २। तथा कालस्य साधूनामुचितभिक्षासमयस्य लङ्घनमतिक्रम, अयमर्थ—उचितो यो भिक्षाकालः साधूनां लङ्घयित्वा, अनागत वा भुङ्क्ते पोषधव्रती। इति तृतीय ३। तथा मत्सरः कोप यथा मार्गित सन् कुप्यति, सदपि मार्गित न ददाति। अथवाऽनेन तावद् द्रमकेण मार्गितेन दत्तम्, किमह ततोऽपि हीन इति मात्सर्या-

---

(१) अप्रतिलेखितदुष्प्रतिलेखितशय्यासस्तारके, अप्रमार्जितदुष्प्रमार्जितशय्यासस्तारके, अप्रतिलेखितदुष्प्रतिलेखितोच्चारप्रस्रवणभूमौ, अप्रमार्जितदुष्प्रमार्जितोच्चारप्रस्रवणभूमौ। * 'भूमीओ इत्यपि पाठ'

द्ददाति; अत्र परोन्नतिवैमनस्यं मात्सर्यम्, यदुक्तमस्माभिरेवाऽनेकार्थसंग्रहे—मत्सरः परसम्पत्त्यक्षमायां तद्वति क्रुधि । इति चतुर्थः ४ । तथा अन्यस्य परस्य सम्बन्धीदं गुडखण्डादीति व्यपदेशो व्याजोऽन्यापदेशः, यदनेकार्थसंग्रहे—अपदेशस्तु कारणे व्याजे लक्ष्येऽपि । इति पञ्चमः ५ । एते पञ्चातिचारास्तुर्यशिक्षाव्रते अतिथिसंविभागनाम्नि स्मृताः । अतिचारभावना पुनरियम्—यदा अनाभोगादिना अतिचरन्ति तदा अतिचाराः, अन्यथा तु भङ्गाः; इत्यवसितानि सम्यक्त्वमूलानि द्वादश व्रतानि, तदतिचाराश्चाभिहिताः ॥ ११९ ॥

इदानीमुक्तशेषं निर्दिशन् श्रावकस्य महाश्रावकत्वमाह—

**एवं व्रतस्थितो भक्त्या सप्तक्षेत्र्यां धनं वपन् । दयया चातिदीनेषु महाश्रावक उच्यते ॥१२०॥**

एवं पूर्वोक्तप्रकारेण सम्यक्त्वमूलेष्वतिचारविशुद्धेषु द्वादशसु व्रतेषु स्थितो निश्चलचित्तत्वेन निलीनः, सप्तानां क्षेत्राणां समाहारः सप्तक्षेत्री जैनबिम्बभवनागमसाधुसाध्वीश्रावकश्राविकालक्षणा तस्यां, न्यायोपात्तं धनं वपन् निक्षिपन्; क्षेत्रे हि बीजस्य वपनमुचितमित्युक्तं वपन्निति, वपनमपि क्षेत्रे उचितं नाक्षेत्रे इति सप्तक्षेत्र्यामित्युक्तम् । क्षेत्रत्वं च सप्तानां रूढमेव । वपनं च सप्तक्षेत्र्यां यथोचितस्य द्रव्यस्य भक्त्या श्रद्धया, तथाहि—जिनबिम्बस्य तावद्विशिष्टलक्षणलाञ्छितस्य प्रसादनीयस्य वज्रेन्द्रनीलाऽञ्जनचन्द्रकान्तसूर्यकान्तरिष्टाङ्ककर्केतनविद्रुमसुवर्णरूप्यचन्दनोपलमृदादिभिः सारद्रव्यैर्विधापनम् । यदाह—

सन्मृत्तिकामलशिलातलरूप्यदारु—सौवर्णरत्नमणिचन्दनचारुबिम्बम् ।
कुर्वन्ति जैनमिह ये स्वधनानुरूपं, ते प्राप्नुवन्ति नृसुरेषु महासुखानि ॥ १ ॥

तथाहि—

पासाइआ पडिमा लक्खणजुत्ता समत्तलङ्करणा । जह पल्हाएइ मणं तह निज्जरमो विआणाहि ॥ १ ॥

तथा निर्मितस्य जिनबिम्बस्य शास्त्रोक्तविधिना प्रतिष्ठापनम्, अष्टाभिश्च प्रकारैरभ्यर्चनं, यात्राविधानं, विशिष्टाभरणभूषणं, विचित्रवस्त्रैः परिधापनमिति जिनबिम्बे धनवपनम् । यदाह—

गन्धैर्माल्यैर्विनिर्यद्बहलपरिमलैरक्षतैर्धूपदीपैः, सान्नाय्यैः प्राज्यभेदैश्चरुभिरुपहृतैः पाकपूतैः फलैश्च । अम्भःसम्पूर्णपात्रैरिति हि जिनपतेरर्चनामष्टभेदां, कुर्वाणा वेश्ममाजः परमपदसुखस्तोममाराल्लभन्ते ॥ १ ॥

ननु जिनबिम्बानां पूजादिकरणे न कश्चिदुपयोगः, न हि पूजादिभिस्तानि तुष्यन्ति तुष्यन्ति वा, न चातुष्टतुष्टाभ्यो देवताभ्यः फलमाप्यते । नैवम्, चिन्तामण्यादिभ्य इवातृप्ततुष्टेभ्योऽपि फलप्राप्त्यविरोधात् । यदुक्तं वीतरागस्तोत्रेऽस्माभिः—

अप्रसन्नात् कथं प्राप्यं फलमेतदसङ्गतम् । चिन्तामण्यादयः किं न फलन्त्यपि विचेतनाः ॥ १ ॥

तथा—

उवगाराभावम्मि वि पुज्जाण पूयगस्स उवगारो । मन्ताइसरणजलणाइसेवणे जह तहेह पि ॥ १ ॥

एष तावत् स्वकारितानां बिम्बानां पूजादिविधिरुक्तः, अन्यकारितानामपि । अकारितानां च शाश्वतप्रतिमानां

( १ ) प्रासादिता प्रतिमा लक्षणयुक्ता समस्तालङ्करणा । यथा प्रह्लादयति मनस्तथा निर्जरामो विजानीहि ॥

( १ ) उपकाराभावेऽपि पूज्यानां पूजकस्योपकारः । मन्त्रादिस्मरणज्वलनादिसेवने यथा तथेहापि ॥ १ ॥

यथार्हं पूजनवर्धनादिविधिरनुष्ठेयः । त्रिविधा हि जिनप्रतिमाः—भक्तिकारिताः स्वयं परेण वा चैत्येषु कारिताः, या इदानीमपि मनुष्यादिभिर्विधाप्यन्ते; मङ्गल्यकारिता या गृहेषु द्वारपत्रेषु मङ्गलाय कार्यन्ते, शाश्वत्यस्तु अकारिता एव अधस्तिर्यगूर्ध्वलोकावस्थितेषु जिनभवनेषु वर्तन्त इति । न हि लोकत्रयेऽपि तत्स्थानमस्ति यन्न पारमेश्वरीभिः प्रतिमाभिः पवित्रितमिति । जिनप्रतिमानां च वीतरागस्वरूपाध्यारोपेण पूजादिविधिरुचित इति । जिनभवनक्षेत्रे स्वधनवपनं यथा—शल्यादिरहितभूमौ स्वयंसिद्धस्योपलकाष्ठादिदलस्य ग्रहणेन सूत्रकारादिभृतकानातिसन्धानेन भृत्यानामधिकमूल्यवितरणेन षड्जीवनिकायरक्षायतनापूर्वकं जिनभवनस्य विधापनम् । सति विभवे भरतादिवद् रत्नशिलाभिर्बद्धचामीकरकुट्टिमस्य मणिमयस्तम्भसोपानस्य रत्नमयतोरणशतालङ्कृतस्य विशालशालाबलानकस्य शालभञ्जिकाभङ्गिभूषितस्तम्भादिप्रदेशस्य दह्यमानकर्पूरकस्तूरिकागुरुप्रभृतिधूपसमुच्छलद्धूमपटलजातजलदशङ्कानृत्यत्कलकण्ठकुलकोलाहलस्य चतुर्विधाऽऽतोद्यनान्दीनिनादनादितरोदसीकस्य देवाङ्गप्रभृतिविचित्रवस्त्रोल्लोचखचितमुक्तावचूलालङ्कृतस्य उत्पतन्निपतद्गायन्नृत्यद्वल्गत्सिंहादिनादितवत्सुरसमूहमहिमानुमोदनप्रमोदमानजनस्य विचित्रचित्रचित्रीयितसकललोकस्य चामरध्वजच्छत्राद्यलङ्कारविभूषितस्य मूर्धारोपितविजयवैजयन्तीनिबद्धकिङ्किणीरणत्कारमुखरितदिगन्तस्य कौतुकाक्षिप्तसुरासुरकिन्नरी(र)निवहाहमहमिकाप्रारब्धसङ्गीतस्य गन्धर्वगीतध्वनितिरस्कृततुम्बुरुमहिम्नो निरन्तरतालारसरासकहल्लीसकप्रमुखप्रबन्धनानाभिनयनव्यग्रकुलाङ्गनाचमत्कारितभव्यलोकस्याऽभिनीयमाननाटककोटिरसाक्षिप्तरसिकजनस्य जिनभवनस्योत्तुङ्गगिरिशृङ्गेषु जिनानां जन्मदीक्षाज्ञाननिर्वाणस्थानेषु सम्प्रतिराजवच्च प्रतिपुरं प्रतिग्रामं पदे पदे विधापनम्; असति तु विभवे तृणकुट्यादिरूपस्याऽपि । यदाह—

यस्तृणमयीमपि कुटीं कुर्याद्दद्याचथैकपुष्पमपि । भक्त्या परमगुरुभ्य: पुण्योन्मानं कुतस्तस्य ? ॥ १ ॥

किं पुनरुपचितदृढघनशिलासमुद्घातघटितजिनभवनम् । ये कारयन्ति शुभमतिविमानिनस्ते महाधन्याः ॥२॥

राजादेस्तु विधापयितुः प्रचुरतरभाण्डागारग्रामनगरमण्डलगोकुलादिप्रदानं जिनभवनक्षेत्रे वपनम्, तथा जीर्णशीर्णानां चैत्यानां समारचनम्, नष्टभ्रष्टानां समुद्धरणं चेति । ननु निरवद्यजिनधर्मसमाचरणचतुराणां जिनभवनबिम्बपूजादिकरणमनुचितमिव प्रतिभासते षड्जीवनिकायविराधनाहेतुत्वात्तस्य, भूमीखननदलपाटकानयनगर्तापूरणेष्टकाचयनजलप्लावनवनस्पतित्रसकायविराधनामन्तरेण न हि तद्भवति । उच्यते—य आरम्भपरिग्रहप्रसक्तः कुटुम्बपरिपालननिमित्तं धनोपार्जनं करोति, तस्य धनोपार्जनं विफलं मा भूदिति जिनभवनादौ धनव्ययः श्रेयानेव । न च धर्मार्थं धनोपार्जनं युक्तम् यतः—

धर्मार्थं यस्य वित्तेहा तस्यानीहा गरीयसी । प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम् ॥ १ ॥

इत्युक्तमेव । न च वापीकूपतडागादिखननवदशुभोदर्कं जिनभवनादिकरणम्, अपि तु सङ्घसमागमधर्मदेशनाकरणव्रतप्रतिपत्त्यादिकरणेन शुभोदर्कमेव । षड्जीवनिकायविराधना च यतनाकारिणामगारिणां कृपापरवशत्वेन सूक्ष्मानपि जन्तून् रक्षयतामविराधनैव । यदाहुः—

जा जयमाणस्स भवे विराहणा सुत्तविहिसमग्गस्स । सा होइ निज्जरफला अज्झत्थविसोहिजुत्तस्स ॥ १ ॥

(१) या यतमानस्य भवेद् विराधना सूत्रविधिसमग्रस्य । सा भवति निर्जरफलाध्यात्मविशोधियुक्तस्य ॥ १ ॥

परमरहस्समिसीणं समत्तगणिपिडगभरिअसाराणं। परिणामिअं पमाणं निच्छयमवलम्बमाणाणं ॥ २ ॥

यस्तु निजकुटुम्बार्थमपि नारम्भं करोति प्रतिमाप्रतिपन्नादिः, तस्य मा भूज्जिनबिम्बादिविधापनमपि। यदाहुः—

देहाइनिमित्तं पि हु जे कायवहम्मि इह पयट्टन्ति। जिणपूआकायवहम्मि तेसिमपवत्तणं मोहो ॥ १ ॥

इत्यलं प्रसङ्गेन। जिनागमक्षेत्रे च स्वधनवपनं यथा—जिनागमो हि कुशास्त्रजनितसंस्कारविषसमुच्छेदनमहामन्त्रायमाणो धर्माधर्मकृत्याकृत्यभक्ष्याभक्ष्यपेयापेयगम्यागम्यसारासारादिविवेचनहेतुः संतमसे दीप इव, समुद्रे द्वीपमिव, मरौ कल्पतरुरिव, संसारे दुरापः। जिनादयोऽप्येतत्प्रामाण्यादेव निश्चीयन्ते। यदवोचाम स्तुतिषु—

यदीयसम्यक्त्वबलात् प्रतीमो भवादृशानां परमाप्तभावम्। कुवासनापाशविनाशनाय नमोऽस्तु तस्मै तव शासनाय ॥१॥

जिनागमबहुमानिनां च देवगुरुधर्मादयोऽपि बहुमता भवन्ति। किं च केवलज्ञानादपि जिनागम एव प्रामाण्येनाऽतिरिच्यते। यदाहुः—

ओहे सुओवउत्तो सुयनाणी जइ हु गिण्हइ असुद्धं। तं केवली वि भुञ्जइ अपमाणं सुअं भवे इहरा ॥ १ ॥

एकमपि जिनागमवचनं भविनां भवनाशहेतुः। यदाहुः—

एकमपि च जिनवचनाद्यस्मान्निर्वाहकं पदं भवति। श्रूयन्ते चानन्ताः सामायिकमात्रपदसिद्धाः ॥ १ ॥ इति ॥

(१) परमरहस्यमृषीणां समस्तगणिपिटकभृतसाराणाम्। परिणामितं प्रमाणं निश्चयमवलम्बमानानाम् ॥ २ ॥

(२) देहादिनिमित्तमपि खलु ये कायवधे इह प्रवर्तन्ते। जिनपूजाकायवधे तेषामप्रवर्तनं मोहः ॥ ३ ॥

(३) ओघे श्रुतोपयुक्तः श्रुतज्ञानी यदि खलु गृह्णात्यशुद्धम्। तत् केवल्यपि भुङ्क्तेऽप्रमाणं श्रुतं भवेदितरथा ॥ १ ॥

यद्यपि च मिथ्यादृष्टिभ्य आतुरेभ्य इव पथ्यान्न न रोचते जिनवचनम्, तथापि नान्यत् स्वर्गापवर्गमार्गप्रकाशनसमर्थम्, इति सम्यग्दृष्टिभिस्तदादरेण श्रद्धातव्यम्, यत कल्याणभाजिन एव जिनवचन भावतो भावयन्ति । इतरेषा तु कर्णशूलकारित्वेनामृतमपि विषायते । यदि चेद जिनवचन नाभविष्यत्, तदा धर्माधर्मव्यवस्थाशून्य भवान्धकूपे भुवनमपतिष्यत् । यथा च हरीतकीं भक्षयेद् विरेककाम' इति वचनाद्धरीतकीभक्षणप्रभवविरेकलक्षणेन प्रत्ययेन सकलस्याप्यायुर्वेदस्य प्रामाण्यमवसीयते, तथा अष्टाङ्गनिमित्तकेवलिकाचन्द्रार्कग्रहचारधातुवादरसरसायनादिभिरप्यागमोपदिष्टैर्दृष्टार्थवाक्याना प्रामाण्यनिश्चयेनादृष्टार्थानामपि वाक्याना प्रामाण्य मन्दधीभिर्निश्चेतव्यम् । जिनवचन च दु'षमाकालवशादुच्छिन्नप्रायमिति मत्वा भगवद्भिर्नागार्जुनस्कन्दिलाचार्यप्रभृतिभि॰ पुस्तकेषु न्यस्तम् । ततो जिनवचनबहुमानिना तत् पुस्तकेषु लेखनीय वस्त्रादिभिरभ्यर्चनीयम् । यदाह—

न ते नरा दुर्गतिमाप्नुवन्ति, न मूकता नैव जडस्वभावम् ।
न चान्धता बुद्धिविहीनतां च, ये लेखयन्तीह जिनस्य वाक्यम् ॥ १ ॥

लेखयन्ति नरा धन्या ये जिनागमपुस्तकम् । ते सर्वं वाङ्मय ज्ञात्वा सिद्धिं यान्ति न सशयः ॥ २ ।

जिनागमपाठकाना वस्त्रादिभिरभ्यर्चन भक्तिपूर्व समानन च । यदाह—

पठति पाठयते पठतामसौ, वसनभोजनपुस्तकवस्तुभि । प्रतिदिन कुरुते य उपग्रह, स इह सर्वविदेव भवेन्नर ॥१॥

लिखितानां च पुस्तकानां सविग्नगीतार्थेभ्यो बहुमानपूर्वक व्याख्यानार्थं दानम्, व्याख्यायमानानां च प्रतिदिन पूजापूर्वक श्रवण चेति। साधूना च जिनवचनानुसारेण सम्यक् चारित्रमनुपालयतां दुर्लभ मनुष्यजन्म सफलीकुर्वता

स्वयं तीर्णानां परं तारयितुमुद्यतानामा तीर्थङ्करगणधरेभ्य आ चैतद्दिनदीक्षितेभ्यः सामायिकसंयतेभ्यो यथोचितप्रतिपत्त्या स्वधनवपनम्, यथा—उपकारिणां प्रासुकैषणीयानां कल्पनीयानां चाशनादीनां, रोगापहारिणां च भेषजादीनां, शीतादिवारणार्थानां च वस्त्रादीनां, प्रतिलेखनाहेतो रजोहरणादीनां, भोजनाद्यर्थं पात्राणां, औपग्राहिकाणां च दण्डकादीनां, निवासार्थमाश्रयाणां दानम्। न हि तदस्ति यद्द्रव्यक्षेत्रकालभावापेक्षयाऽनुपकारकं नाम, तत्सर्वस्वस्यापि दानम्, साधुधर्मोद्यतस्य स्वपुत्रपुत्र्यादेरपि समर्पणं च। किं बहुना? यथा यथा मुनयो निराबाधवृत्त्या स्वयमनुष्ठानमनुतिष्ठन्ति, तथा तथा महता प्रयत्नेन सम्पादनम्, जिनवचनप्रत्यनीकानां च साधुधर्मनिन्दापराणां यथाशक्ति निवारणम्। यदाह—

तम्हा सइ सामत्थे आणाभट्ठम्मि नो खलु उवेहा। अणुकूलगेयरे हि अ अणुसट्ठी होइ दायव्वा ॥ १ ॥

तथा रत्नत्रयधारिणीषु साध्वीषु साधुष्विव यथोचिताहारादिदानं स्वधनवपनम्। ननु स्त्रीणां निःसत्त्वतया दुःशीलत्वादिना च मोक्षेऽनधिकारः, तत्कथमेताभ्यो दानं साधुदानतुल्यम्?। उच्यते—निःसत्त्वमसिद्धम्, ब्राह्मीप्रभृतीनां साध्वीनां गृहवासपरित्यागेन यतिधर्ममनुतिष्ठन्तीनां महासत्त्वानां नासत्त्वसम्भवः। यदाह—

ब्राह्मी सुन्दर्यार्या राजीमती चन्दना गणधराऽन्या। अपि देवमनुजमहिता विख्याताः शीलसत्त्वाभ्याम् ॥१॥
गार्हस्थ्येऽपि सुसत्त्वा विख्याताः शीलवतीतमा जगति। सीतादयः कथं तास्तपसि विशीला विसत्त्वाश्च? ॥२॥
संत्यज्य राज्यलक्ष्मीं पतिपुत्रभ्रातृबन्धुसम्बन्धम्। पारिव्राज्यवहायाः किमसत्त्वं सत्यभामादेः? ॥ ३ ॥

---

(१) तस्मात् सति सामर्थ्ये आज्ञाभ्रष्टे नो खलूपेक्षा। अनुकूलकेतरे हि चानुशिष्टिर्भवति दातव्या ॥ १ ॥

ननु महापापेन मिथ्यात्वसहायेन स्त्रीत्वमर्ज्यते, न हि सम्यग्दृष्टिः स्त्रीत्वं कदाचिद् बध्नाति इति कथं स्त्रीशरीरवर्तिन आत्मनो मुक्तिः स्यात् ? । मैवं वोचः, सम्यक्त्वप्रतिपत्तिकाल एवाऽन्तःकोटिकोटिस्थितिकानां सर्वकर्मणां भावेन मिथ्यात्वमोहनीयादीनां चयादिसम्भवान्मिथ्यात्वसहितपापकर्मसम्भवत्वमकारणम्, मोक्षकारणवैकल्यं तु तासु वक्तुमुचितम् । तच्च नास्ति । यत —

जानीते जिनवचनं श्रद्धत्ते चरति चाऽऽर्यिका शबलम् । नास्यास्त्यसम्भवोऽस्यां नादृष्टविरोधगतिरस्ति ॥१॥ इति

तत्सिद्धमेतन्मुक्तिसाधनधनासु साध्वीषु साधुवद् धनवपनमुचितमिति । एतच्चाधिकं यत् साध्वीनां दुःशीलेभ्यो नास्तिकेभ्यो गोपनम्, स्वगृहप्रत्यासत्तौ च समन्ततो गुप्ताया गुप्तद्वाराया वसतेर्दानम्, स्वस्त्रीभिश्च तासां परिचर्याविधापनम्, स्वपुत्रीकाणां च तत्सन्निधौ धारणम्, व्रताेद्यतानां स्वपुत्र्यादीनां प्रत्यर्पणं च, तथा विस्मृतकरणीयानां तत्स्मारणम्, अन्यायप्रवृत्तिसम्भवे तन्निवारणम्, सकृदन्यायप्रवृत्तौ शिक्षणम्, पुनः पुनः प्रवृत्तौ निष्ठुरभाषणादिना ताडनम्, उचितेन वस्तुनोपचारणं चेति । श्रावकेषु स्वधनवपनं यथा—साधर्मिकाः खलु श्रावकस्य श्रावकाः, समानधार्मिकाणां च सङ्गमोऽपि महते पुण्याय, किं पुनस्तदनुरूपा प्रतिपत्तिः ? । सा च स्वपुत्रादिजन्मोत्सवे विवाहेऽन्यस्मिन्नपि तथाविधे प्रकरणे साधर्मिकाणां निमन्त्रणम्, विशिष्टभोजनताम्बूलवस्त्राभरणादिदानम्, आपन्निमग्नानां च स्वधनव्ययेनाप्यभ्युद्धरणम्, अन्तरायदोषाच्च विभवक्षये पुनः पूर्वभूमिकाप्रापणम्, धर्मे च विषीदतां तेन तेन प्रकारेण धर्मे स्थैर्यारोपणम्, प्रमाद्यतां च स्मारणवारणचोदनाप्रतिचोदनादिकरणम्, वाचनाप्रच्छनापरावर्तनाऽनुप्रेक्षाधर्मकथादिषु यथायोग्यं विनियोजनं, विशिष्टधर्मानुष्ठानकरणार्थं च साधारणपोषधशालादे

करणमिति। श्राविकासु धनवपनं श्रावकवदन्यूनातिरिक्तमुन्नेतव्यम्। तत्र ज्ञानदर्शनचारित्रवत्यः शीलसन्तोषप्रधानाः सधवा विधवा वा जिनशासनानुरक्तमनसः साधर्मिकत्वेन माननीयाः। ननु स्त्रीणां कुतः शीलशालित्वम् ?, कुतो वा रत्नत्रययुक्तत्वम् ?, स्त्रियो हि नाम लोके लोकोत्तरे चानुभवाच्च दोषभाजनत्वेन प्रसिद्धाः। एताः खल्व-भूमिजा विषकन्दल्यः, अनभ्रसम्भवा वज्राशनयः, असंज्ञका व्याधयः, अकारणो मृत्युः, अकन्दरा व्याघ्र्यः, प्रत्यक्षा राक्षस्यः; असत्यवचनस्य, साहसस्य, बन्धुस्नेहविघातस्य, सन्तापहेतुत्वस्य, निर्विवेकत्वस्य च परमं कारणमिति दूरतः परिहार्याः, तत्कथं दानसंमानवात्सल्यविधानं तासु युक्तियुक्तम् ?। उच्यते—अनेकान्त एषः, यत् स्त्रीणां दोषबहुलत्वमुच्यते, पुरुषेष्वपि हि समानमेतत्। तेऽपि क्रूराशया दोषबहुला नास्तिकाः कृतघ्नाः स्वामिद्रोहिणो देवगुरुवञ्चकाश्च दृश्यन्ते। तद्दर्शनेन च महापुरुषाणामवज्ञा कर्तुं न युज्यते, एवं स्त्रीणामपि। यद्यपि कासाञ्चिद्दोषबहुलत्वमुपलभ्यते, तथापि कासांचिद् गुणबहुलत्वमप्यस्ति। तीर्थंकरादिजनन्यो हि स्त्रीत्वेऽपि तत्तद्गुणगरिमयोगितया सुरेन्द्रैरपि पूज्यन्ते, मुनिभिरपि स्तूयन्ते। लौकिका अप्याहुः—

निरतिशयं गरिमाणं तेन युवत्या वदन्ति विद्वांसः। तं कमपि वहति गर्भं जगतामपि यो गुरुर्भवति ॥१॥ इति ॥

काश्चन स्वशीलप्रभावादग्निं जलमिव, विषधरं रज्जुमिव, सरितं स्थलमिव, विषममृतमिव कुर्वन्ति। चतुर्वर्णे च सङ्घे चतुर्थमङ्गं गृहमेधिस्त्रियोऽपि। सुलसाप्रभृतयो हि श्राविकास्तीर्थकरैरपि प्रशस्यगुणाः, सुरेन्द्रैरपि स्वर्ग-भूमिषु पुनः पुनर्बहुमतचारित्राः प्रबलमिथ्यात्वैरप्यक्षोभ्यसम्यक्त्वसम्पदः, काश्चिच्चरमदेहाः, काश्चिद्द्वित्रि(त्र)भवा-न्तरितमोक्षगमनाः शास्त्रेषु श्रूयन्ते। तदासां जननीनामिव भगिनीनामिव स्वपुत्रीणामिव वात्सल्यं युक्तियुक्तमेवो-

त्पश्याम । दुष्प्रसह्यविलीनागिलास्यव्रतिव्रतिनीश्रावकवदपश्रिमा सत्यश्री' । तत्कथ श्राविका पापवद्ध-नितानिदर्शनेन दूष्यन्ते ? । तस्माद्दूरेण न परिहरणीयाः, वात्सल्य चासां करणीयमित्यल प्रसङ्गेन । न केवल सप्तक्षेत्र्या धन वपन् महाश्रावक उच्यते, किन्त्वतिदीनेष्वपि नि.स्वान्धबधिरपङ्गुरोगार्तप्रभृतिषु कृपया केवलया धन वपन्, न तु भक्त्या । भक्तिपूर्वक हि सप्तक्षेत्र्यां यथोचित दानम् । अतिदीनेषु त्वविचारितपात्रापात्रमवि-मृष्टकल्पनीयाकल्पनीयप्रकार केवलयैव करुणया स्वधनस्य वपन न्याय्यम् । भगवन्तोऽपि हि निष्क्रमणकालेऽ-नपेक्षितपात्रापात्रविभाग करुणया सांवत्सरिकदान दत्तवन्त इति । तदेव भक्त्या सप्तक्षेत्र्यां दीनेषु चातिदयया धन वपन् महाश्रावक उच्यते । ननु श्रावक इत्युच्यताम्, महाश्रावक इति तु महत्त्वविशेषण किमर्थं ? उच्यते-श्रावकत्वमविरतानामेकाद्यणुव्रतधारिणा च शृणोतीति व्युत्पत्त्योच्यते, यदाह-

संपत्तदंसणाई पइदियह जइजणा सुणेई य । सामायारिं परम जो खलु त सावय बिन्ति ॥ १ ॥

श्रद्धालुता श्राति पदार्थचिन्तनाद्, धनानि पात्रेषु वपत्यनारतम् ।

किरत्यपुण्यानि सुसाधुसेवना—दथापि त श्रावकमाहुरञ्जसा ॥ २ ॥

इति निरुक्ताच्च श्रावकत्व सामान्यस्यापि प्रसिद्धम्, विवक्षितस्तु निरतिचारसकलव्रतधारी सप्तक्षेत्रीलक्षणे क्षेत्रे धनवपनाद्दर्शनप्रभावकता परमां दधानो दीनेषु चात्यन्तकृपापरो महाश्रावकशब्देनोच्यत इत्यदोष ॥ १२० ॥

सप्तक्षेत्र्यां धनवपन व्यतिरेकद्वारेण समर्थयते—

---

( १ ) संप्राप्तदर्शनादि प्रतिदिवस यतिजनात् शृणोति च । सामाचारीं परमा य खलु त श्रावक ब्रुवते ॥ १ ॥

य: सद्बाह्यमनित्यं च क्षेत्रेषु न धनं वपेत् । कथं वराकश्चारित्रं दुश्चरं स समाचरेत् ? ।१२१।

सदिति विद्यमानमसतो हि धनस्य कथं दानं भवेत् ? सदपि बाह्यं शरीराद्बहिर्भूतं आन्तरस्य तु कस्य-चिद्दानं न शक्यं कर्तुं, बाह्यमपि यदि नित्यमाकालस्थायि भवेत् तदा न दीयेतापि, इदं त्वनित्यं चौरजलज्वलनदायादपार्थिवादिहरणीयं प्रयत्नगोपितमपि पुण्यक्षयेऽवश्यं विनश्यति ; यदस्मद्गुरवः—

अत्थं चोरा विलुंपंति उद्दालंति य दाइया । राया वा संवरावेइ बला मोडीइ कत्थइ ॥ १ ॥
जलणो वा विणासेइ पाणियं वा पलावए । अवद्दारेण निग्गच्छे वसणोपहयस्स वा ॥ २ ॥
भूमीसंगोवियं चेव हरन्ति वन्तरा सुरा । उज्झित्ता जाइ सव्वं पि मरन्तो वा परं भवं ॥ ३ ॥

अनित्यमपि स्वधनं किञ्चित्क्षेप्तुं शक्यते, न हि बहुतैलमस्तीति पर्वता अभ्यज्यन्त इत्युक्तम् क्षेत्रेष्विति, क्षेत्राणि येषूप्तं धनं शतसहस्रलक्षकोटिगुणं भवति । एवं विधायामपि सामग्र्यां य: स्वधनं न वपेत् स वराक: नि:सत्त्वश्चारित्रं महासत्त्वसेवनीयमत एव दुश्चरं कथं समाचरेत् ? ; धनमात्रलुब्धो नि:सत्त्व: कथं सर्वसङ्गत्याग-रूपं चारित्रं विदधीत ?, अनाराधितचारित्रश्च कथं सद्गतिं प्राप्नुयात् ?, सर्वविरतिप्रतिपत्तिकलशारोपणफलो हि

(१) अर्थं चौरा विलुम्पन्ति, उद्दालयन्ति च दायादाः । राजा वा संवारयति बलात् मृद्यते कुत्रापि ॥ १ ॥
ज्वलनो वा विनाशयति पानीयं वा प्लावयति । अपद्वारेण निर्गच्छेत् व्यसनोपहतस्य वा ॥ २ ॥
भूमीसंगोपितमेव हरन्ति व्यन्तराः सुराः । उज्झित्वा याति सर्वमपि म्रियमाणो वा परं भवम् ॥ ३ ॥

श्रावकधर्मप्रासाद इति ॥ १२१ ॥

इदानीं महाश्रावकस्य दिनचर्य्यामाह—

**ब्राह्मे मुहूर्त्ते उत्तिष्ठेत् परमेष्ठिस्तुतिं पठन्। किंधर्मा किंकुलश्चास्मि किंव्रतोऽस्मीति च स्मरन् ॥१२२॥**

पञ्चदशमुहूर्ता रजनी, तस्यां चतुर्दशो मुहूर्तो ब्राह्मस्तस्मिन्नुत्तिष्ठेत् निद्रां जह्यात्, परमे तिष्ठन्तीति परमेष्ठिनः पञ्चार्हदादयस्तेषां स्तुतिं नमो अरिहन्ताणमित्यादिरूपामात्यन्तिकतद्बहुमानकार्य्यभूतां परममङ्गलार्थं वा पठन्नव्यक्तवर्णामिति शेषः । यदाह—

परमेट्ठिचिन्तणं माणसम्मि सेजागएण कायव्वं । सुत्ता विणयपवित्ती निवारिया होइ एवं तु ॥ १ ॥

अन्ये त्वविशेषेणैव नमस्कारपाठमाहुर्न सा काचिदवस्था यस्यां पञ्चनमस्कारस्यानधिकार इति मन्वाना । न केवलं पठन्, को धर्मो यस्याऽसौ किंधर्मा, किं कुलं यस्याऽसौ किंकुलः, किं व्रतं यस्याऽसौ किंव्रतोऽस्मीत्यहमिति च स्मरन्निदं भावतः स्मरणम् । उपलक्षणत्वात्के गुरवो ममेति द्रव्यतः, कुत्र ग्रामे नगरादौ वा वसामीति क्षेत्रतः, कः कालः प्रभातादिरिति कालतश्चेत्यादि स्मरन्, धर्मस्य जैनादेः, कुलस्येक्ष्वाक्वादेः, व्रतानामणुव्रतादीनां स्मरणं तद्विरुद्धपरिहारस्योपलक्षणत्वात् ॥ १२२ ॥ ततः—

**शुचिः पुष्पामिषस्तोत्रैर्देवमभ्यर्च्य वेश्मनि । प्रत्याख्यानं यथाशक्ति कृत्वा देवगृहं व्रजेत् ॥१२३॥**

---

( १ ) परमेष्ठिचिन्तनं मानसे शय्यागतेन कर्तव्यम् । सुप्त्वा विनयप्रवृत्तिर्निवारिता भवति एवं तु ॥ १ ॥

शुचिरिति मलोत्सर्गदन्तधावनजिह्वालेखनमुखप्रक्षालनगण्डूषकरणस्नानादिना शुचिः सन्नित्यनुवादपरं लोकसिद्धो ह्ययमर्थ इति नोपदेशपरम्, अप्राप्ते हि शास्त्रमर्थवत् । न हि मलिनः स्नायात्, बुभुक्षितोऽश्नीयादित्यत्र शास्त्रमुपयुज्यते । अप्राप्ते त्वामुष्मिके मार्गे नैसर्गिकमोहान्धतमसविलुप्तालोकस्य लोकस्य शास्त्रमेव परमं चक्षुरित्येवमुत्तरत्राप्यप्राप्ते विषये उपदेशः सफल इति चिन्तनीयम् । न च सावद्यारम्भेषु शास्तॄणां वाचनिक्यप्यनुमोदना युक्ता । यदाहुः—

सावज्जणवज्जाणं वयणाणं जो न जाणइ विसेसं । वुत्तं पि तस्स न खमं किमङ्ग ! पुण देसणं काउं ॥ १ ॥

इति शुचित्वमनूद्य पुष्पामिषस्तोत्रैरित्याद्युपदिशति-वेश्मनि गृहे देवं मङ्गलचैत्यरूपं भगवन्तमर्हन्तमभ्यर्च्य पूजयित्वा, पूजाप्रकारानाह-पुष्पामिषस्तोत्रैरिति, पुष्पाणि कुसुमानि पुष्पग्रहणं सर्वेषां सुगन्धिद्रव्याणां विलेपनधूपगन्धवासवस्त्राभरणादीनामुपलक्षणम् । आमिषं भक्ष्यं पेयं च, तच्च पक्वान्नफलाक्षतदीपजलघृतपूर्णपात्रादिरूपं, स्तोत्रं शक्रस्तवादिसद्भूतगुणोत्कीर्तनरूपं, ततः प्रत्याख्यानं नमस्कारसहिताद्यद्धारूपं सङ्केतरूपं च ग्रन्थिसहितादि कृत्वा यथाशक्तीति शक्त्यनतिक्रमेण, शक्तितस्त्यागतपसी इति सुप्रसिद्धमेव, देवगृहं भक्तिचैत्यरूपं व्रजेद्गच्छेत् । अत्र च स्नानविलेपनवर्णकविशिष्टवस्त्राभरणालङ्कारशस्त्रपरिग्रहविशिष्टवाहनाधिरोहणप्रभृतीनां स्वतःसिद्धानां नोपदेशः । अप्राप्ते शास्त्रमर्थवदित्युक्तमेव । देवगृहव्रजनविधिः पुनरयम्—यदि राजा भवति तदा

---

( १ ) सावद्यानवद्यानां वचनानां यो न जानाति विशेषम् । उक्तमपि तस्य न क्षमं किमङ्ग ! पुनर्देशनां कर्तुम् ॥

'सव्वाए इड्ढीए सव्वाए दित्तीए सव्वाए जुईए सव्वबलेण सव्वपोरिसेण' इत्यादिवचनात्प्रभावनानिमित्त महर्द्ध्या याति।

अथ सामान्यविभवस्तदा औद्धत्यपरिहारेण लोकोपहास परिहरन् व्रजति ॥ १२३ ॥ तत'—

**प्रविश्य विधिना तत्र त्रि प्रदक्षिणयेजिनम्। पुष्पादिभिस्तमभ्यर्च्य स्तवनैरुत्तमैः स्तुयात्॥१२४॥**

तत्र देवगृहे विधिना विधिपूर्वक प्रविश्य त्रिस्त्रीन् वारान् प्रदक्षिणयेत् प्रदक्षिणीकुर्यात्, जिनमर्हद्भट्टारकम्, प्रवेशविधिश्चायम्-पुष्पताम्बूलादिसचित्तद्रव्याणां छुरिकापादुकाद्यचित्तद्रव्याणां च परिहारेण कृतोत्तरासङ्गो जिन-बिम्बदर्शनेऽञ्जलिबन्ध शिरस्यारोपयन् मनसश्च तत्परतां कुर्वन्निति पञ्चविधाभिगमेन नैषेधिकीपूर्व प्रविशति।

यदाह—'सचित्ताण दव्वाण वि उसरणयाए, अचित्ताण दव्वाण वि उसरणयाए, एगल्लसाडिएण उत्तरा-सङ्गकरणेण चक्खुफासे अञ्जलिपग्गहेण मणसो एगत्तीभावकरणेण' ति। यस्तु राजादिः चैत्यभवन प्रविशति स तत्काल राजचिह्नानि परिहरति। यदाह—

'अवहट्टु रायकउआइ पञ्च वररायकउआरूवाइ। खग्ग छत्तोवाणह मउड तह चामराओ य ॥ १ ॥

---

(१) सर्वया ऋद्ध्या, सर्वया दीप्त्या, सर्वया द्युत्या, सर्वबलेन, सर्वपौरुषेण।

(२) सचित्ताना द्रव्याणामपि अवसरणतया, अचित्ताना द्रव्याणामपि अवसरणतया, एकशाटकेनोत्तरासङ्गकरणेन, चक्षुः—स्पर्शे अञ्जलिप्रग्रहेण मनस एकत्वीभावकरणेनेति।

( ३ ) अपहृत्य राजककुदानि पञ्च वरराजककुदरूपाणि। खड्ग छत्रमुपानद मुकुट तथा चामराणि च ॥

पुष्पादिभिरिति पुष्पग्रहणं मध्यग्रहणे आद्यन्तयोरपि ग्रहणमिति न्यायप्रदर्शनार्थम्, तथाहि—नित्यं विशेषतश्च पर्वणि स्नात्रपूर्वकं पूजाकरणमिति स्नात्रकाले प्रथमं सुगन्धिश्रीखण्डेन जिनबिम्बस्य तिलककरणम्। ततः—

मीनकुरङ्गमदागुरुसारं, सारसुगन्धिनिशाकरतारम्। तारमिलन्मलयोत्थविकारं, लोकगुरोर्दह धूपमुदारम् ॥१॥

इति वचनाध्धूपोत्क्षेपणम्, ततः सर्वौषध्यादिद्रव्याणां जलपूर्णकलशे क्षेपणं, पश्चात् कुसुमाञ्जलिक्षेपपूर्वकं सर्वौषधिकर्पूरकुङ्कुमश्रीखण्डागुरुप्रभृतिभिर्जलमिश्रैर्घृतदुग्धप्रभृतिभिश्च स्नात्रकरणम्, ततः सुरभिणा मलयजरसादिना विलेपनविधानम्, ततः सुगन्धिजाति-चम्पक-शतपत्र-विचकिल-कमलादिमालाभिर्भगवतोऽभ्यर्चनम्, रत्नसुवर्ण-मुक्ताभरणादिभिरलङ्करणम्, वस्त्रादिभिः परिधापनम्, पुरतश्च सिद्धार्थकशालितण्डुलादिभिरष्टमाङ्गलिकालेखनम्, तत्पुरतश्च बलिमङ्गलदीपदधिघृतादीनां ढौकनम्, भगवतश्च भालस्थले गोरोचनया तिलककरणम्, तत आरात्रिकाद्युत्तारणम्। यदाह—

गन्धवरधूवसव्वोसहीहि उअगाइएहिं चित्तेहिं। सुरहिविलेवणवरकुसुमदामबलिदीवएहिं च ॥ १ ॥
सिद्धत्थयदहिअक्खयगोरोअणमाइएहिं जहलाभं। कञ्चणमोत्तिअरयणाइदामएहिं च विविहेहिं ॥ २ ॥
पवरेहिं साहणेहिं पायं भावो वि जायए पवरो। न य अन्नो उवओगो एएसिं सिया ण लट्ठयरो ॥३॥ त्ति।

---

(१) गन्धवरधूपसर्वौषधीभिरुदकादिकैश्चित्रैः। सुरभिविलेपनवरकुसुमदामबलिदीपकैश्च ॥ १ ॥
सिद्धार्थक-दध्यक्षत-गोरोचनादिकैर्यथालाभम्। काञ्चनमौक्तिकरत्नादिदामभिश्च विविधैः ॥ २ ॥
प्रवरैः साधनैः प्रायो भावोऽपि जायते प्रवरः। न चान्य उपयोग एतेषां स्याद् मनोहरतरः ॥ ३ ॥ इति।

एव भगवन्तमभ्यर्च्य पूजयित्वा ऐर्यापथिकीप्रतिक्रमणपूर्वक शक्रस्तवादिभिर्दण्डकैश्चैत्यवन्दन कृत्वा स्तवनै स्तोत्रैरुत्तमैरुत्तमकविरचितै स्तुयाद् गुणोत्कीर्तन कुर्यात्। स्तोत्राणा चोत्तमत्वमिदमुक्तम्—यथा—

पिण्डक्रियागुणगतैर्गम्भीरैर्विविधवर्णसयुक्तैः। आशयविशुद्धिजनकैः सवेगपरायणैः पुण्यैः ॥ १ ॥

पापनिवेदनगर्भै॰ प्रणिधानपुरस्सरैर्विचित्रार्थै। अस्खलितादिगुणयुतैः स्तोत्रैश्च महामतिग्रथितैः ॥२॥ इति। न पुनरेवविधै'—

एक ध्याननिमीलनान्मुकुलित चक्षुर्द्वितीय पुनः, पार्वत्या विपुले नितम्बफलके शृङ्गारभारालसम्।
अन्यद्दूरविकृष्टचापमदनक्रोधानलोद्दीपित, शम्भोर्भिन्नरस समाधिसमये नेत्रत्रय पातु वः ॥ १ ॥

तथा—

धन्या केय स्थिता ते शिरसि शशिकला किं नु नामैतदस्या, नामैवास्यास्तदेतत्परिचितमपि ते विस्मृत कस्य हेतो। नारीं पृच्छामि नेन्दु कथयतु विजया न प्रमाण यदीन्दु—र्देव्या निह्नोतुमिच्छोरिति सुरसरित शाठ्यमव्याद्विभोर्वः ॥ १ ॥

तथा—

पेनमत पनयप्पकुपितगोलीचलणग्गलग्गपडिबिंब। दससु नखतप्पनेसु एकातसतनुथल लुद ॥ १ ॥

तथा—

---

( १ ) प्रणमत प्रणयप्रकुपितगौरीचरणाग्रलग्नप्रतिबिम्बम्। दशसु नखदर्पणेषु एकादशतनुधर रुद्रम् ॥ १ ॥

एतत्किं शिरसि स्थितं मम पितुः खण्डं सुधादीधिते–र्ललाटं किमिदं विलोचनमिदं हस्तेऽस्य किं पन्नगः ।
इत्थं क्रौञ्चरिपोः क्रमादुपगते दिग्वाससः शूलिनः, प्रश्ने वामकरोपरोधसुभगं देव्याः स्मितं पातु वः ॥ १ ॥

तथा—

उत्तिष्ठन्त्या रतान्ते भरमुरगपतौ पाणिनैकेन कृत्वा, धृत्वा चान्येन वासो विगलितकबरीभारमंसं वहन्त्याः ।
भूयस्तत्कालकान्तिद्विगुणितसुरतप्रीतिना शौरिणा वः, शय्यामालिङ्ग्य नीतं वपुरलसलसद्बाहु लक्ष्म्याः पुनातु ॥१॥

अनेन च सम्पूर्णो वन्दनाविधिरुपलक्षितः । यथा—

[1]तिन्नि निसीहिय तिन्नि य पयाहिणा तिन्नि चेव य पणामा । तिविहा पूआ य तहा अवत्थतियभावणं चेव ॥१॥
तिदिसिनिरक्खणविरई भूमीई पमज्जणं च तिक्खुत्तो । वण्णाइतियं मुद्दातियं च तिविहं च पणिहाणं ॥ २ ॥
पुप्फामिसथुइभेआ तिविहा पूआ अवत्थातियगं तु । छउमत्थ-केवलित्तं सिद्धत्तं भुवणनाहस्स ॥ ३ ॥
वण्णाइतियं तु पुणो वण्णत्थालम्बणस्सरूवं तु । मणवयणकायजणिअं तिविहं पणिहाणमवि होइ ॥ ४ ॥

तथा—

(१) तिस्रो नैषेधिक्यस्तिस्रश्च प्रदक्षिणास्त्रयः एव च प्रणामाः । त्रिविधा पूजा च तथाऽवस्थात्रिकभावनं चैव ॥ १ ॥
त्रिदिग्निरीक्षणविरतिर्भूमौ प्रमार्जनं च त्रिकृत्वः (त्रिः) । वर्णादित्रिकं मुद्रात्रिकं च त्रिविधं च प्रणिधानम् ॥ २ ॥
पुष्पामिषस्तुतिभेदास्त्रिविधा पूजाऽवस्थात्रिककं तु । छद्मस्थ-केवलित्वं सिद्धत्वं भुवननाथस्य ॥ ३ ॥
वर्णादित्रिकं तु पुनर्वर्णार्थालम्बनस्वरूपं तु । मनो–वचन–कायजनितं त्रिविधं प्रणिधानमपि भवति ॥ ४ ॥

'पञ्चगो पणिवाओ थयपाढो होइ जोगमुद्दाए । वन्दन जिणमुद्दाए पणिहाण मुत्तसुत्तीए ॥ १ ॥
दो जाणू दोन्नि करा पचमय होइ उत्तिमग तु । सम्म सपणिवाओ नेओ पचगपणिवाओ ॥ २ ॥
अण्णोण्णतरिअगुलिकोसागारेहिं दोहिं हत्थेहिं । पिट्टोवरिकोप्परसठिएहिं तह जोगमुद्दत्ति ॥ ३ ॥
चत्तारि अगुलाइ पुरओ ऊणाइ जत्थ पच्छिमओ । पायाण उस्सग्गो एसा पुण होइ जिणमुद्दा ॥ ४ ॥
मुत्तासुत्तीमुद्दा जत्थ समा दोवि गब्भिया हत्था । ते पुण निडालदेसे लग्गा अन्ने अलग्गत्ति ॥५॥ इत्यादि ।
ऐर्यापथिकीप्रतिक्रमणपूर्वक चैत्यवन्दनमित्युक्तम् । तत ऐर्यापथिकीसूत्र व्याख्यायते–तच्च इच्छामि पडिक मिउमित्यादि तस्स मिच्छामि दुक्कडमित्यन्तम्, इच्छामि पडिक्कमिउ इरियावहियाए विराहणाए, इच्छामि अभिलषामि प्रतिक्रमितु प्रतीप क्रमितुम्, ईरणमीर्या गमनमित्यर्थः, तत्प्रधान पन्था ईर्यापथ., तत्र भवा ऐर्यापथिकी; काऽसौ ? विराधना जन्तुबाधा, तस्या ऐर्यापथिक्या विराधनायाः सकाशात् प्रतिक्रमितुमिच्छामीति सम्बन्ध । अस्मिंश्च व्याख्याने ईर्यापथनिमित्ताया एव विराधनायाः प्रतिक्रमण स्याद्, न तु शयनादेरुत्थितस्य

---

(१) पञ्चाङ्ग प्रणिपात स्तवपाठो भवति योगमुद्रया । वन्दन जिनमुद्रया प्रणिधान मुक्ताशुक्त्या ॥ १ ॥
द्वे जानुनी द्वौ करौ पञ्चमक भवत्युत्तमाङ्ग तु । सम्यक् सप्रणिपातो ज्ञेय पञ्चाङ्गप्रणिपात ॥ २ ॥
अन्योन्यान्तरिताङ्गुलिकोशागा(का)राभ्या द्वाभ्या हस्ताभ्याम् । उदरोपरिकूर्परसस्थिताभ्या तथा योगमुद्रेति ॥ ३ ॥
चत्वार्यङ्गुलानि पुरत ऊनानि यत्र पश्चिमत । पादयोरुत्सर्ग एषा पुनर्भवति जिनमुद्रा ॥ ४ ॥
मुक्ताशुक्तिमुद्रा यत्र समौ द्वावपि गर्भितौ हस्तौ । तौ पुनर्ललाटदेशे लग्नावन्यावलग्नाविति ॥ ५ ॥

कृतलोचादेर्वा; तस्मादन्यथा व्याख्यायते–ईर्यापथः साध्वाचारः, यदाह–ईर्यापथो मौनध्यानादिकं भिक्षुव्रतं तत्र भवा ऐर्यापथिकी; काऽसौ ? विराधना साध्वाचारातिक्रमरूपा तस्या इच्छामि प्रतिक्रमितुमिति सम्बन्धः। साध्वाचाराऽतिक्रमश्च प्राणातिपातादिरूपः। तत्र च प्राणातिपातस्यैव गरीयस्त्वम्, शेषाणां तु पापस्थानानामत्रैवान्तर्भावः, अत एव प्राणातिपातविराधनाया एवोत्तरः प्रपञ्चः। क्व सति विराधना ? गमणागमणे गमनं चागमनं च समाहारद्वन्द्वस्तस्मिन्, गमनं प्रयोजने सति बहिर्यानम् आगमनं प्रयोजनसमाप्तौ स्वस्थान एव गमनम्। गमनागमनेऽपि कथं विराधना ? इत्याह–पाणक्कमणे प्राण्याक्रमणे प्राणिनो द्वीन्द्रियादयस्तेषामाक्रमणं पादेन पीडनं प्राण्याक्रमणं तत्र; तथा बीअक्कमणे बीजाक्रमणे, अनेन बीजानां जीवत्वमाह; तथा, हरिअक्कमणे हरिताक्रमणे; अनेन सकलवनस्पतेः, तथा ओसाउत्तिंगपणगदगमट्टीमक्कडासंताणासंकमणे, अवश्यायो जलविशेषः, इह चावश्यायग्रहणमतिशयतः शेषजलसम्भोगपरिहरणार्थम्, उत्तिंगा गर्दभाकृतयो जीवाः, ते हि भूमौ विवराणि कुर्वन्ति, कीटिकानगराणि वा उत्तिंगाः; पनकः पञ्चवर्णोल्लिः; दकमृत्तिका अनुपहतभूमौ चिक्खिल्लः; अथवा, दकशब्देनाप्कायो गृह्यते मृत्तिकाशब्देन तु पृथ्वीकाय इति; मर्कटः कोलिकस्तस्य सन्तानो जालकम्, ततश्चावश्यायश्चोत्तिङ्गश्चेत्यादिद्वन्द्वः तेषां संक्रमणमाक्रमणं तस्मिन्। कियन्तो वा भेदेनाख्यातुं शक्यन्ते ? इत्याह—जे मे जीवा विराहिया ये केचन सर्वथा मया जीवा विराधिता दुःखे स्थापिताः; ते च एगिंदिया एकं स्पर्शनमात्रमिन्द्रियं येषां ते एकेन्द्रियाः पृथिव्यप्तेजोवायुवनस्पतिलक्षणाः; बेइंदिया द्वे स्पर्शनरसने इन्द्रिये येषां ते द्वीन्द्रियाः कृम्यादयः; तेइंदिया त्रीणि स्पर्शनरसनघ्राणानि इन्द्रियाणि येषां ते त्रीन्द्रियाः पिपीलिकादयः; चउरिंदिया

चत्वारि स्पर्शनरसनघ्राणचक्षुर्लक्षणानीन्द्रियाणि येषां ते चतुरिन्द्रिया भ्रमरादयः; पंचिंदिया पञ्च श्रोत्रान्तानि इन्द्रियाणि येषां ते पञ्चेन्द्रिया मूषकादयः। विराधनाप्रकारमाह—अभिहया अभिमुखा हताश्चरणेन घट्टिता', उत्क्षिप्य क्षिप्ता वा; वत्तिआ वर्तिताः पुञ्जीकृताः धूलिक्विक्षवादिना स्थगिता; लेसिआ श्लेषिता. पिष्टा भूम्यादिषु वा लगिता, संघाइया संघातिताः अन्योन्यगात्रैरेकत्र लगिताः, संघट्टिया संघट्टिता मनाक् स्पृष्टा; परिआविआ परितापिताः समन्ततः पीडिताः, किलामिआ क्लमिता ग्लानिमापादिता मारणान्तिक समुद्घात नीता इत्यर्थः, उद्दविआ अवद्राविता उत्त्रासिताः, ठाणाओ ठाण संकामिया स्वस्थानात् परस्थान नीताः, जीविआओ ववरोविया जीविताद् व्यपरोपिता मारिता इत्यर्थः,—तस्स तस्य अभिहया इत्यारभ्योक्तविराधनाप्रकारस्य सर्वस्य मिच्छा मि दुक्कड मिथ्या मे दुष्कृतम् एतद् दुष्कृत मिथ्या मे भवतु निष्फल भवत्वित्यर्थः। मिच्छा मि दुक्कडमित्यस्य पूर्वाचार्या निरुक्तविधिमुपदर्शयन्ति—तद्यथा—

मिच्छि मिउमद्दवत्थे छत्ति य दोसाण छायणे होइ। मिच्चि अमेराए ठिओ दुत्ति दुगछामि अप्पाण ॥ १ ॥

कत्ति कड मे पाव डत्ति य डेवेमि त उवसमेण। एसो मिच्छादुक्कडपयक्खरत्थो समासेण ॥ २ ॥

एवमालोचनाप्रतिक्रमणरूप द्विविध प्रायश्चित्त प्रतिपद्य कायोत्सर्गलक्षण प्रायश्चित्त प्रतिपित्सुरिद सूत्र पठति—तस्स उत्तरीकरणेण पायच्छित्तकरणेण विसोहीकरणेण विसल्लीकरणेण पावाण कम्माण निग्घायणट्ठाए ठामि

---

( १ ) मीति मृदु—मार्दवार्थे छेति च दोषाणा छादने भवति। मीत्यमर्यादाया स्थितो दु—इति जुगुप्स आत्मानम् ॥१॥
केति कृत मे पाप डेति च लङ्घयामि तदुपशमेन। एष मिच्छादुक्कड ( मिथ्यादुष्कृत ) पदाक्षरार्थ समासेन ॥ २ ॥

काउस्सग्गं । तस्यालोचितप्रतिक्रान्तस्य विराधनाप्रकारस्य उत्तरीकरणादिना हेतुभूतेन ठामि काउस्सग्गमिति योगः । तत्रोत्तरकरणं पुनः संस्कारद्वारेण परिष्करणमनुत्तरस्योत्तरस्य करणमुत्तरीकरणम्; अयं भावः—विराधनस्य हि पूर्वमालोचनादिकं कृतं तस्यैव कायोत्सर्गकरणमुत्तरकरणम्, तेन पापकर्मनिर्घातना भवति । उत्तरीकरणं च प्रायश्चित्तकरणद्वारेण भवति इत्याह—पायच्छित्तकरणेणं प्रायो बाहुल्येन चित्तं जीवं मनो वा शोधयति प्रायश्चित्तम्; यद्वा पापं छिनत्तीति पापच्छित् आर्षत्वात्पायच्छित्तं तस्य करणेन हेतुभूतेन । प्रायश्चित्तकरणं च विशुद्धिद्वारेण भवतीत्याह—विसोहीकरणेणं विशोधनं विशुद्धिः अपराधमलिनस्यात्मनो निर्मलीकरणं विशुद्धेः करणं विशुद्धिकरणं तेन हेतुभूतेन । विशुद्धिकरणं च विशल्यकरणद्वारेण भवति अत आह—विसल्लीकरणेणं विगतानि शल्यानि मायादीनि यस्याऽसौ विशल्यः, अविशल्यस्य विशल्यस्य करणं तेन हेतुभूतेन । किमित्याह—पावाणं कम्माणं निग्घायणट्ठाए पापानां संसारनिबन्धनभूतानां कर्मणां ज्ञानावरणीयादीनां निर्घातनार्थाय निर्घातनमुच्छेदः स एवार्थः प्रयोजनं तस्मै, ठामि काउस्सग्गं अनेकार्थत्वाद्धातूनां ठामि करोमि कायस्स उत्सर्गो व्यापारवतः परित्यागस्तम् । किं सर्वथा ? नेत्याह—अन्नत्थ ऊससिएणं अन्यत्रोच्छ्वसितात्, तृतीया पञ्चम्यर्थे, ऊर्ध्वं प्रलम्बं वा श्वसितमुच्छ्वसितं तन्मुक्त्वा योऽन्यो व्यापारस्तेन व्यापारवतः कायस्य उत्सर्ग इत्यर्थः, उच्छ्वसितं हि निरोद्धुमशक्यम्, तन्निरोधे सद्यः प्राणविघाताद्यापत्तेः । यदाह—

ऊसासं न निरुंभइ अभिग्गहिओवि किमुअ चिट्ठाए । सज्ज मरणं निरोहे सुहुमुस्सासं तु जयणाउ ॥ १ ॥

(१) उच्छ्वासं न निरुणद्धि आभिग्रहिकोऽपि किमुत चेष्टया । सद्यो मरणं निरोधे सूक्ष्मोच्छ्वासं तु यतनया ॥ १ ॥

एव नि श्वमितादापि नीसासिएण अथ श्वसित निःश्वसित तस्मात्; खासिएणं काशितात्, छिएण क्षुतात्, जम्भाइएण विवृतवदनस्य प्रबलपवननिर्गमो जृम्भित तस्मात्, उड्डुएण उद्गारितात्; वायनिसग्गेण अपानेन पवन-निर्गमो वातनिसर्गस्तस्मात्, भमलिए शरीरभ्रमेराकस्मिक्याः, पित्तमुच्छाए पित्तप्राबल्यान्मनाग्मोहो मूर्छा तस्या, सुहुमेहिं अगसचालेहिं सूक्ष्मेभ्यो लक्ष्यालक्ष्येभ्योऽङ्गसञ्चारेभ्यो गात्रविचलनप्रकारेभ्यो रोमोद्गमादिभ्य, सुहुमेहिं खेलसचालेहिं सूक्ष्मेभ्यः खेलस्य श्लेष्मण' सञ्चारेभ्य', आत्मनो हि वीर्ययुक्तद्रव्यतया अन्तःसूक्ष्मश्लेष्मसञ्चार' सम्भवतीत्यतोऽन्यत्रोच्यते। सुहुमेहिं दिट्ठिसचालेहिं सूक्ष्मेभ्यो दृष्टिसञ्चारेभ्यो निमेषादिभ्य., सूक्ष्मा हि दृष्टिसञ्चारास्तदा सर्वथा निरोद्धु शक्यन्ते यदा एकस्मिन् द्रव्ये दृष्टिनिवेशः स्थिरीकर्तु शक्यते, न च शक्यते कर्तुमिति। उच्छ्व-सितादिभ्योऽन्यत्र कायोत्सर्गं करोमीत्येतावता किमुक्त भवति? एवमाइएहिं आगारेहिं अभग्गो अविराहिओ हुज्ज मे काउस्सग्गो एवमादिभिरुच्छ्वसितनिःश्वसितादिभिः पूर्वोक्तैराकारैरपवादरूपैरभग्नोऽविराधितो मे कायोत्सर्गो भूयादिति सम्बन्ध, आदिशब्दादन्यैरपि यदा अग्नेर्विद्युतो वा ज्योतिः स्पृशति तदा प्रावरणायोपधिग्रहण कुर्वतो न कायोत्सर्गभङ्गः। ननु नमस्कारमेवाभिधाय किमिति तद्ग्रहण न करोति येन तद्भङ्गो न भवति?। उच्यते—नाऽत्र नमस्कारेण पारणमेवावशिष्टकायोत्सर्गमान क्रियते, किन्तु यो यत्परिमाणः कायोत्सर्ग उक्तस्तावन्त काल• प्रतीक्ष्य तत ऊर्ध्व नमस्कारमपठित्वा पारयतो भङ्गोऽपरिसमाप्तेऽपि च पठतो भङ्ग एव, तस्माद्यो यत्परिमाणः कायोत्सर्गस्तस्मिन् पूर्ण एव नमो अरिहताणमिति वक्तव्यम्। तथा मार्जारमूषिकादे पुरतो गमनेऽग्रतः सरतोऽपि न भङ्गः। तथा चौरसम्भ्रमे राजसम्भ्रमे वा अस्थानेऽपि नमस्कारमुच्चारयतो न भङ्गः। तथा सर्पदष्टे आत्मनि परे

वा साध्वादौ सहसा उच्चारयतो न भङ्गः । यदाहुः—

अगणि-उच्छिन्दिज्ज-बोहिअखोभाइ-दीहडको वा । आगारेहिं न भग्गो उस्सग्गो एवमाईहिं ॥ १ ॥

आक्रियन्ते आगृह्यन्ते इत्याकाराः कायोत्सर्गापवादप्रकारा इत्यर्थः, तैराकारैर्विद्यमानैरपि भग्नः सर्वथा विनाशितः, न भग्नोऽभग्नः, विराधितो देशभग्नः, न विराधितोऽविराधितो भवेन्मम कायोत्सर्गः । कियन्तं कालं यावदित्याह—जाव अरिहंताणं भगवंताणं नमोकारेणं न पारेमि यावदिति कालावधारणे, यावदर्हतां भगवतां सम्बन्धिना नमस्कारेण नमो अरिहंताणमित्यनेन न पारयामि न पारं गच्छामि तावत्किमित्याह—ताव कायं ठाणेणं मोणेणं झाणेणं अप्पाणं वोसिरामि तावत्तावन्तं कालं कायं देहं स्थानेनोर्ध्वस्थानेन हेतुभूतेन ऊर्ध्वस्थानमभिगृह्य कायप्रसरनिषेधेनेत्यर्थः, मौनेन वाग्निरोधलक्षणेन, ध्यानेन शुभेन सद्विषये चिन्तामाभिगृह्येत्यर्थः; अप्पाणं आर्षत्वादात्मीयं कायं वोसिरामि व्युत्सृजामि कुव्यापारनिराकरणेन परित्यजामि । अन्ये तु अप्पाणमिति न पठन्ति । अयमर्थः—पञ्चविंशत्युच्छ्वासमानं कालं यावदूर्ध्वस्थानस्थितः प्रलम्बभुजो निरुद्धवाक्प्रसरः प्रशस्तध्यानाऽनुगतस्तिष्ठामि स्थानमौनध्यानक्रियाव्यतिरेकेण क्रियान्तराध्यासद्वारेण व्युत्सृजामि । पञ्चविंशत्युच्छ्वासाश्च चतुर्विंशतिस्तवेन चन्देसु निम्मलयरा इत्यन्तेन चिन्तितेन पूर्यन्ते, पायसमा ऊसासा इति वचनात् । संपूर्णकायोत्सर्गश्च नमो अरिहंताणमिति नमस्कारपूर्वकं पारयित्वा चतुर्विंशतिस्तवं संपूर्णं पठति । एवं सन्निहिते गुरौ

---

( १ ) अग्न्यु-च्छेद्य-बोधिकक्षोभादि दीर्घदष्टो वा । आकारैर्न भग्न उत्सर्ग एवमादिभिः ॥ १ ॥

तत्समक्षं, गुर्वविरहे तु गुरुस्थापनां मनसि कृत्वा ईर्यापथप्रतिक्रमणं निर्वर्त्य चैत्यवन्दनमुत्कृष्टमारभ्यते, जघन्य-मध्यमे तु चैत्यवन्दने ऐर्यापथिकीप्रतिक्रमणमन्तरेणाऽपि भवतः। अत्र नमस्कारेण नमो अरिहंताणमित्यनेन—

वपुरेव तवाचष्टे भगवन्! वीतरागताम्। न हि कोटरसंस्थेऽग्नौ तरुर्भवति शाड्वलः ॥ १ ॥

इत्यादिना कविकृतेन च जघन्या चैत्यवन्दना भवति। अन्ये तु प्रणाममात्ररूपां जघन्यां चैत्यवन्दनां वदन्ति। प्रणामस्तु पञ्चधा—

एकाङ्गः शिरसो नामे स द्व्यङ्गः करयोर्द्वयोः। त्रयाणां नमने त्र्यङ्गः करयोः शिरसस्तथा ॥ १ ॥

चतुर्णां करयोर्जान्वोर्नमने चतुरङ्गकः। शिरसः करयोर्जान्वोः पञ्चाङ्गः पञ्चके नते ॥ २ ॥

मध्यमा तु स्थापनार्हतः स्तवदण्डकेन स्तुत्या चैकया भवति। यदाह—

नवकारेण जहन्ना दंडगथुइजुयल मज्झिमा णेया। संपुण्णा उक्कोसा विहिणा खलु वंदणा तिविहा ॥ १ ॥

इत्युत्कृष्टया चैत्यवन्दनया वन्दितुकामो विरतः साधुः श्रावकश्च अविरतसम्यग्दृष्टिरपुनर्बन्धको वा यथा-भद्रको यथोचितं प्रतिलेखितप्रमार्जितस्थण्डिलो भुवनगुरौ विनिवेशितनयनमानसः संवेगवैराग्यवशादुत्पन्नरोमाञ्च-कञ्चुको मुदश्रुपूर्णलोचनः अतिदुर्लभं भगवत्पादवन्दनमिति बहु मन्यमानो योगमुद्रया अस्खलितादिगुणोपेतं तदर्थानुस्मरणगर्भं प्रणिपातदण्डकसूत्रं पठति। तत्र च त्रयस्त्रिंशदालापका आलापकाद्विकादिप्रमाणाश्च विश्राम-भूमिरूपा नवसम्पदो भवन्ति। यदाह—

(१) नमस्कारेण जघन्या दण्डकस्तुतियुगलाद् मध्यमा ज्ञेया। सम्पूर्णोत्कृष्टा विधिना खलु वन्दना त्रिविधा ॥ १ ॥

दो तिअ चउर ति पंचा दोन्नि अ चउरो य हुन्ति तिन्ने य । सक्कथए नव संपय तित्तीसं होन्ति आलावा ॥ १ ॥

एताश्च यथास्थानं नामतः प्रमाणतश्च कथयिष्यन्ते । व्याख्या नमो त्थु णं अरहंताणं भगवंताणं तत्र नम इति नैपातिकं पदं पूजार्थं, पूजा च द्रव्यभावसङ्कोचः । तत्र कराशिरःपादादिद्रव्यसन्न्यासो द्रव्यसङ्कोचः, भावसङ्कोचस्तु विशुद्धस्य मनसो नियोगः, अस्त्विति भवतु । प्रार्थनैषा धर्मबीजमाशयविशुद्धिजनकत्वात् । णमिति वाक्यालङ्कारे । अतिशयपूजामर्हन्तीति अर्हन्तः । यदाह—

अरहंति वंदणनमंसणाइं अरहंति पुयसक्कारं । सिद्धिगमणं च अरिहा अरहंता तेण वुच्चंति ॥ १ ॥

सुगद्विषार्हः सत्रिशत्रुस्तुत्ये ॥ ५ । २ । २६ ॥ इति वर्त्तमानकालेऽतृश् । कथं वर्तमानकालत्वमिति चेत्, पूजारम्भस्याऽनुपरमात् । एष एव हि न्याय्यो वर्तमानकालो यत्रारब्धस्यापवर्गो नास्ति । तथा अरिहननादर्हन्तः, अरयश्च मोहादयः साम्परायिककर्मबन्धहेतवः, तेषामरीणामनेकभवगहनव्यसनप्रापणकारणानां हननादर्हन्तः । तथा रजोहननादर्हन्तः, रजश्च घातिकर्मचतुष्टयं येनावृतस्यात्मनः सत्यपि ज्ञानादिगुणस्वभावत्वे घनसमूहस्थगितगभस्तिमण्डलस्य विवस्वत इव तद्गुणानामभिव्यक्तिर्न भवति तस्य हननादर्हन्तः । तथा रहस्याभावादर्हन्तः ; तथाहि—भगवतां निरस्तनिरवशेषज्ञानावरणादिकर्मपारतन्त्र्याणां केवलमप्रतिहतमनन्तमद्भुतं ज्ञानं दर्शनं चास्ति, ताभ्यां जगदनवरतं युगपत्प्रत्यक्षतो जानतां पश्यतां च रहस्यं नास्ति, तस्माद्रहस्याभावादर्हन्तः । एषु त्रिष्वर्थेषु

(१) द्वौ त्रयश्चत्वारस्त्रयः पञ्च द्वौ च चत्वारश्च भवन्ति त्रयश्च । शक्रस्तवे नव सम्पदस्त्रयस्त्रिंशद् भवन्ति आलापाः ॥१॥

(२) अर्हन्ति वन्दन–नमस्यनाद्यर्हन्ति पूजासत्कारम् । सिद्धिगमने च अर्हा अर्हन्तस्तेनोच्यन्ते ॥ १ ॥

पृषोदरादित्वादर्हदिति सिद्ध्यति । अथवा अविद्यमान रह एकान्तरूपो देशोऽन्तश्च मध्य गिरिगुहादीनां सर्ववेदितया प्रच्छन्नस्य कस्याप्यभावेन येषां तेऽरहोऽन्तरस्तेभ्योऽरहोन्तर्भ्यः अथवा अरहद्भ्यः क्षीणरागत्वात् क्वचिदप्यासक्तिमगच्छद्भ्यः । अथवा अरहद्भ्यो रागद्वेषहेतुभूतमनोज्ञेतरविषयसम्पर्केऽपि वीतरागत्वादिक स्व स्वभावमत्यजद्भ्य । अरिहंताणमिति पाठान्तर वा, तत्र कर्मारिहन्तृभ्य । आह च—

अट्ठविहं पि हु कम्मं अरिभूयं होइ सयलजीवाणं । तं कम्ममरिहंता अरिहंता तेण वुच्चंति ॥ १ ॥

अरुहंताणमित्यपि पाठान्तरम् । तत्र अरोहद्भ्योऽनुपजायमानेभ्यः, क्षीणकर्मबीजत्वात् उक्तञ्च—

दग्धे बीजे यथात्यन्त प्रादुर्भवति नाङ्कुरः । कर्मबीजे तथा दग्धे नारोहति भवाङ्कुर ॥ १ ॥

शाब्दिकास्तु अर्हच्छब्दस्यैव प्राकृते रूपत्रयमिच्छन्ति, यद्वयमवोचाम—"उच्चार्हति" ॥ ८ । २ । १११ ॥ चकारादावपि, तेभ्योऽर्हद्भ्यो नमोऽस्त्विति नमःशब्दयोगाच्चतुर्थी, "चतुर्थ्याः षष्ठी" ॥ ८ । ३ । १३१ ॥ इति प्राकृतलक्षणाच्चतुर्थ्याः स्थाने षष्ठी । बहुवचनं चाद्वैतव्यवच्छेदेनाऽर्हद्बहुत्वख्यापनार्थम्, विषयबहुत्वेन नमस्कर्तुः फलातिशयज्ञापनार्थं च । एते चाऽर्हन्तो नामाद्यनेकभेदा इति भावार्हत्सम्परिग्रहार्थमाह भगवद्भ्य —

भगोऽर्कज्ञानमाहात्म्ययशोवैराग्यमुक्तिषु । रूपवीर्यप्रयत्नेच्छाश्रीधर्मैश्वर्ययोनिषु ॥ १ ॥

इतिवचनादर्कयोनिवर्जमिह द्वादशधा भगशब्दस्यार्थः स विद्यते येषां ते भगवन्तः, निन्दावर्जं भूम्या(द्या)दिष्वर्थेषु मतु', ज्ञानं तावद्गर्भनिवासात् प्रभृति आदीक्षातो मतिश्रुतावधिलक्षण दीक्षानन्तर त्वाघातिकर्मचतुष्टय-

(१) अष्टविधमपि खलु कर्माऽरिभूत भवति सकलजीवानाम् । तत्कर्मारिहन्तारोऽन्तस्तेनोच्यन्ते ॥ १ ॥

क्षयाद् मनःपर्यायज्ञानसहितम्, घातिक्षये चानन्तमनन्तविषयं निःशेषभावाभावस्वभावावभासकं केवलज्ञानम् १ । माहात्म्यं प्रभावातिशयः, तच्च सर्वकल्याणकेषु नारकाणामपि सुखोत्पादकत्वेन नित्यसन्तमसेष्वपि नरकेषु प्रकाशजनकत्वेन गर्भनिवासात् प्रभृति कुलस्य धनादिवर्धनेनाऽप्रणतसामन्तानां च प्रणत्येतिमारिवैरोपहातिवार्जितराज्यकरणेनाऽतिवृष्ट्यनावृष्टिप्रभृत्युपद्रवरहितजनपदत्वेन चलितासनसकलसुरासुरप्रणतपादपद्मत्वेन चाऽवसेयम् २ । यशस्तु रागद्वेषपरीषहोपसर्गपराक्रमसमुत्थमाकालप्रतिष्ठं यत्सर्वदा दिवि सुरसुन्दरीभिः पाताले नागकन्याभिर्गीयते सुरासुरैर्नित्यमभिष्टूयते च ३ । वैराग्यं मरुन्नरेन्द्रलक्ष्मीमनुभवतामपि यत्र तत्र रतिर्नाम, यदा तु सर्वविषयत्यागपूर्वकं प्रव्रज्यां प्रतिपद्यन्ते तदाऽलमेभिरिति, यदा तु क्षीणकर्म(र्मा)णो भवन्ति तदा सुखदुःखयोर्भवमोक्षयोरौदासीन्यमिति त्रिविधमप्यतिशायि भवति । यदवोचाम वीतरागस्तोत्रे—

यदा मरुन्नरेन्द्रश्रीस्त्वया नाथोपभुज्यते । यत्र तत्र रतिर्नाम विरक्तत्वं तदापि ते ॥ १ ॥
नित्यं विरक्तः कामेभ्यो यदा योगं प्रपद्यसे । अलमेभिरिति प्राज्यं तदा वैराग्यमस्ति ते ॥ २ ॥
सुखे दुःखे भवे मोक्षे यदौदासीन्यमीशिषे । तदा वैराग्यमेवेति कुत्र नाऽसि विरागवान् ॥ ३ ॥ इति ॥ ४ ॥
मुक्तिश्च सकलक्लेशप्रहाणलक्षणा सन्निहितैवेति ॥ ५ ॥ रूपं तु—
सव्वसुरा जइ रूवं अंगुट्ठपमाणयं विउव्विज्जा । जिणपायंगुट्ठं पइ न सोहए तं जहिंगालो ॥ १ ॥
इति निदर्शनात् सिद्धं सर्वातिशायि ६ । वीर्यं च मेरोर्दण्डरूपतां धरित्र्याश्च छत्ररूपतां कर्तुं सामर्थ्यम्,

(१) सर्वसुरा यदि रूपमङ्गुष्ठप्रमाणकं विकुर्वेयुः । जिनपादाङ्गुष्ठं प्रति न शोभते तद् यथाङ्गारः ॥ १ ॥

श्रूयते हि तत्कालजातेनैव श्रीमहावीरेण शक्रशङ्कापनोदाय वामपादाङ्गुष्ठेन मेरुपर्वतः प्रकम्पितः ७। प्रयत्नः परमवीर्यसमुत्थ एकरात्रिक्यादिमहाप्रतिमाभावहेतुः समुद्घातशैलेश्यवस्थाव्यङ्ग्यः ८। इच्छा तु जन्मान्तरे सुरजन्मनि तीर्थकरजन्मनि च दुःखपङ्कमग्नस्य जगत उद्दिधीर्षातिशयवती ९। श्रीर्घातिकर्मोच्छेदविक्रमावाप्तकेवलालोकसम्पत्तिः, अतिशयसुखसम्पच्चानुपमा १०। धर्मः पुनरनाश्रवो महायोगात्मको निर्जराफलोऽतिश्रेयान् ११। ऐश्वर्यं तु भक्तिभरावनम्रत्रिदशपतिविहितसमवसरणप्रातिहार्यादिरूपम् १२। एवम्भूता एव प्रेक्षावतां स्तोतव्या इत्याभ्यामालापकाभ्यां स्तोतव्यसम्पदुक्ता। साम्प्रतमस्या हेतुसम्पदुच्यते–आइगराणं तित्थयराणं सयंसंबुद्धाणं–आदिकरणशीला आदिकरणहेतवो वा आदिकराः सकलनीतिनिबन्धनस्य श्रुतधर्मस्येति सामर्थ्याद्गम्यते तेभ्यः। यद्यपि सैषा द्वादशाङ्गी न कदाचिन्नासीत्, न कदाचिन्न भवति, न कदाचिन्न भविष्यति, अभूच्च भवति च भविष्यति चेति वचनाद् नित्या द्वादशाङ्गी, तथाप्यर्थापेक्षया नित्यत्वं शब्दापेक्षया तु स्वस्वतीर्थेषु श्रुतधर्मादिकरत्वमविरुद्धम्। एतेऽपि कैवल्यानन्तरापवर्गवादिभिरतीर्थकरा एवेष्यन्ते अकृत्स्नक्षये कैवल्याभावादिति वचनादिति तद्व्यपोहार्थमाह–तीर्थकरेभ्यस्तीर्यते संसारसमुद्रोऽनेनेति तीर्थं तच्च प्रवचनाधारश्चतुर्विधसङ्घः प्रथमगणधरो वा, यदाहुः–तित्थं भन्ते ! तित्थं ? तित्थयरे तित्थं ? गोयमा ! अरिहा ताव नियमा तित्थकरे तित्थं पुण चाउवण्णे समणसंघे पढमगणहरे वा, तत्करणशीलास्तीर्थकराः। न चाकृत्स्नक्षये कैवल्यं न भवति, घातिकर्मक्षये अघातिकर्मभिः कैवल्यस्याबाधनात्। एवं ज्ञानकैवल्ये तीर्थकरत्वमुपपद्यते, मुक्तकैवल्ये तु तीर्थकरत्वमस्माभिरपि

(१) तीर्थं भगवन् ! तीर्थं ? तीर्थकरस्तीर्थं ? गौतम ! अर्हंस्तावन्नियमात् तीर्थकरस्तीर्थं पुनश्चतुर्वर्णः श्रमणसङ्घः प्रथमगणधरो वा

नेष्यते। एतेऽपि सदा शिवानुग्रहात् कैश्चिद्बोधवन्त इष्यन्ते, यदाह–महेशानुग्रहाद् बोधनियमाविति तन्निराकरणार्थमाह–स्वयंसंबुद्धेभ्यः स्वयमात्मना तथाभव्यत्वादिसामग्रीपरिपाकान्न तु परोपदेशात् सम्यगविपर्ययेण बुद्धा अवगततत्त्वाः स्वयंसंबुद्धास्तेभ्यः। यद्यपि भवान्तरेषु तथाविधगुरुसन्निधानायत्तबोधास्तेऽभूवन्, तथापि तीर्थकरजन्मनि परोपदेशनिरपेक्षा एव बुद्धाः, यद्यपि च तीर्थकरजन्मन्यपि लोकान्तिकत्रिदशवचनात् 'भयवं तित्थं पवत्तेह'[1] इत्येवंलक्षणाद् दीक्षां प्रतिपद्यन्ते तथापि वैतालिकवचनानन्तरप्रवृत्तनरेन्द्रयात्रावत् स्वयमेव प्रव्रज्यां प्रतिपद्यन्ते। इदानीं स्तोतव्यसम्पद् एव हेतुविशेषसम्पदुच्यते–पुरिसुत्तमाणं पुरिससीहाणं पुरिसवरपुण्डरीआणं पुरिसवरगन्धहत्थीणं–पुरि शरीरे शयनात् पुरुषा विशिष्टकर्मोदयाद्विशिष्टसंस्थानवत्शरीरवासिनः सत्त्वास्तेषामुत्तमाः सहजतथाभव्यत्वादिभावतः श्रेष्ठाः पुरुषोत्तमाः; तथाहि–आसंसारमेते परार्थव्यसनिन उपसर्जनीकृतस्वार्था उपचितक्रियावन्तोऽदीनभावाः सफलारम्भिणो दृढानुशयाः कृतज्ञतापतयोऽनुपहतचित्ता देवगुरुबहुमानिनो गम्भीराशया इति। न खल्वसमारचितमपि जात्यरत्नं समानमितरेण। न च समारचितोऽपि काचादिर्जात्यरत्नीभवति। एवं च यदाहुः सौगताः–नास्तीह कश्चिदभाजनं सत्त्व इति, सर्वे बुद्धा भविष्यन्ति इति च; तत् प्रत्युक्तम्। एते च बाह्यार्थसंवादसत्यवादिभिः संस्कृताचार्यशिष्यैर्निरुपमानस्तवार्हा एवेष्यन्ते हीनाधिकाभ्यामुपमा मृषेति वचनात्तद्व्यवच्छेदार्थमाह–पुरुषसिंहेभ्यः पुरुषाः सिंहा इव प्रधानाः शौर्यादिगुणभावेन पुरुषसिंहाः, यथा सिंहाः शौर्यादिगुणयोगिनः तथा भगवन्तोऽपि कर्मशत्रून् प्रति शूरतया तदुच्छेदं प्रति क्रूरतया क्रोधादीन् प्रत्यसहन-

(१) भगवंस्तीर्थं प्रवर्तय।

तथा रागादीन् प्रति वीर्ययोगेन तपःकर्म प्रति वीरतया ख्याताः, तथा एषामवज्ञा परीषहेषु, न भयमुपसर्गेभ्यः, न चिन्ताऽपि इन्द्रियवर्गे, न खेदः संयमाध्वनि, न प्रकम्पो ध्याने, न चैवमुपमा मृषा तद्द्वारेण तदसाधारणगुणाभिधानादिति। एते च सुचारुशिष्यैः सजातीयोपमायोगिन एवेष्यन्ते विजातीयेनोपमायां तत्सदृशधर्मापत्त्या शुभत्वाद्यभावप्राप्तेः। यदाहुः—ते विरुद्धोपमायोगे तद्धर्मापत्त्या तदवस्तुत्वमिति तद्व्यपोहायाह—पुरुषवरपुण्डरीकेभ्यः पुरुषा वरपुण्डरीकाणीव संसारजलासङ्गादिना धर्मकलापेन पुरुषवरपुण्डरीकाणि तेभ्यः, यथाहि पुण्डरीकाणि पङ्के जातानि जलेन वर्धितानि तदुभयं विहायोपरि वर्तन्ते प्रकृतिसुन्दराणि च भवन्ति, निवासो भुवनलक्ष्म्या, आयतनं चक्षुरादानन्दस्य, प्रवरगुणयोगतो विशिष्टतिर्यग्नरामरैः सेव्यन्ते, सुखहेतवो भवन्ति, तथा भगवन्तोऽपि कर्मपङ्के जाता दिव्यभोगजलेन वर्धिता उभयं विहाय वर्तन्ते, सुन्दराश्चातिशययोगेन, निवासो गुणसम्पदः, हेतवः परमानन्दस्य, केवलादिगुणभावेन तिर्यग्नरामरैः सेव्यन्ते, निर्वृत्तिसुखहेतवश्च जायन्ते इति भिन्नजातीयोपमायोगेऽप्यर्थतो विरोधाभावेन यथोदितदोषासम्भवः। यदि तु विजातीयोपमायोगेन तद्धर्मापत्तिरापद्यते तर्हि सिंहादिसजातीयोपमायोगे तद्धर्माणां पशुत्वादीनामप्यापत्तिः स्यादिति। एतेऽपि यथोत्तरं गुणक्रमाभिधानवादिभिः सुरगुरोर्विनेयैर्हीनगुणोपमापूर्वकमधिकगुणोपमार्हा इष्यन्ते। अभिधानक्रमाभावे अभिधेयमपि तद्वदक्रमवदसदितिवचनादेतन्निरासायाह—पुरुषवरगन्धहस्तिभ्यः पुरुषा वरगन्धहस्तिन इव वरगजेन्द्रा इव पुरुषवरगन्धहस्तिनः यथा गन्धहस्तिनां गन्धेनैव तद्देशविहारिणः क्षुद्रगजा भज्यन्ते तद्वदिति परचक्रदुर्भिक्षमारिप्रभृतयः सर्वे एवोपद्रवगजा भगवतामचिन्त्यपुण्यानुभावानां विहारपवनगन्धादेव भज्यन्ते। न चैवमभिधानक्रमाभावेऽभिधेयमपि

क्रमवदसादिति वाच्यम्, सर्वगुणानामेकत्राऽन्योऽन्यसंवलितत्वेनावस्थानात्, तेषां यथारुचि स्तोत्राभिधाने न दोषः। एवं पुरुषोत्तमत्वादिना प्रकारेण स्तोतव्यसम्पद एव हेतुविशेषसम्पत्तृतीया ।३। इदानीं स्तोतव्यसम्पद एव सामान्येनोपयोगसम्पदमाह-लोगुत्तमाणं लोगनाहाणं लोगहिआणं लोगपईवाणं लोगपज्जोअगराणं-समुदायेष्वपि प्रवृत्ताः शब्दा अनेकधा अवयवेष्वपि प्रवर्तन्ते इति न्यायाद्यद्यपि लोकशब्देन तत्त्वतः पञ्चास्तिकाया उच्यन्ते, धर्मादीनां वृत्तिर्द्रव्याणां भवति यत्र तत् क्षेत्रं तैर्द्रव्यैः सह लोकस्तद्विपरीतं ह्यलोकाख्यमिति वचनात् । तथापीह लोकशब्देन भव्यसत्त्वलोक एव परिगृह्यते, सजातीयोत्कर्ष एवोत्तमत्वोपपत्तेः। अन्यथा अभव्यापेक्षया सर्वभव्यानामप्युत्तमत्वान्नैषामतिशय उक्तः स्यात् । ततश्च भव्यसत्त्वलोकस्य सकलकल्याणनिबन्धनतया भव्यत्वभावेनोत्तमा लोकोत्तमास्तेभ्यः, लोकनाथेभ्यः, इह लोकशब्देन बीजाधानादिना संविभक्तो रागाद्युपद्रवेभ्यो रक्षणीयो विशिष्टो भव्यलोकः परिगृह्यते अस्मिन्नेव नाथत्वोपपत्तेः, योगक्षेमकृन्नाथ इति वचनात्, तादिह येषामेव बीजाधानोद्भेदपोषणैर्योगः, क्षेमं च तत्तदुपद्रवरक्षणेन त एव भव्या लोकशब्देन गृह्यन्ते, न चैते योगक्षेमे सकलभव्यसत्त्वविषये कस्यचित्सम्भवतः सर्वेषामेव मुक्तिप्रसङ्गात्तस्मादुक्तस्यैव लोकस्य नाथा इति । तथा लोकहितेभ्यः, इह लोकशब्देन सकल एव सांव्यवहारिकादिभेदभिन्नः प्राणिवर्गो गृह्यते, तस्मै सम्यग्दर्शनप्ररूपणरक्षणयोगेन हिता लोकहिताः, तथा लोकप्रदीपेभ्यः, अत्र लोकशब्देन विशिष्ट एव देशनांशुभिर्मिथ्यात्वतमोऽपनयनेन यथार्हं प्रकाशितज्ञेयभावः संज्ञिलोकः परिगृह्यते तं प्रत्येव भगवतां प्रदीपत्वोपपत्तेः। न ह्यन्धं प्रति प्रदीपः प्रदीपो नाम, तदेवंविधं लोकं प्रति प्रदीपा लोकप्रदीपाः । तथा लोकप्रद्योतकरेभ्यः, इह लोकशब्देन विशिष्टचतुर्दशपूर्वविल्लोकः परिगृह्यते, तत्रैव तत्त्वतः प्रद्योतकरत्वोपपत्तेः, प्रद्योतं च सप्तप्रकारं जीवा-

त्तिस्तुतत्त्व तत्प्रद्योतकरणाश्च विशिष्टानामेव पूर्वविदां भवति, तेऽपि षट्स्थानपतिता एव श्रूयन्ते, न च तेषां सर्वेषामपि प्रद्योतः सम्भवति, प्रद्योतो हि विशिष्टतत्त्वसंवेदनयोग्यता, सा च विशिष्टानामेव भवति। तेन विशिष्टचतुर्दशपूर्वविल्लोकापेक्षया प्रद्योतकराः। एवं लोकोत्तमत्वादिभिः पञ्चभिः प्रकारैः परार्थकरणात् स्तोतव्यसम्पदः सामान्येनोपयोगसम्पच्चतुर्थी ४। इदानीमुपयोगसम्पद एव हेतुसपदुच्यते—अभयदयाणं चक्खुदयाणं मग्गदयाणं सरणदयाणं बोहिदयाणं—इह अभयं सप्तधा इह परलोका-ऽऽदाना- ऽकस्मादा-ऽऽजीव-मरण-श्लाघा भेदेनैतत्प्रतिपक्षतोऽभयं विशिष्टमात्मनः स्वास्थ्यं निःश्रेयसे धर्मभूमिकानिबन्धनभूता धृतिरित्यन्येषां तदित्थंभूतमभयं गुणप्रकर्षयोगादचिन्त्यशक्तियुक्तत्वात् सर्वथा परार्थकारित्वाद् भगवन्त एव ददतीत्यभयदास्तेभ्यः, तथा चक्षुर्देभ्यः, इह चक्षुर्विशिष्टमात्मधर्मरूपं तत्त्वावबोधनिबन्धनं गृह्यते। तच्च श्रद्धेत्यन्येषां तद्विहीनस्याचक्षुष्मत इव वस्तुतत्त्वदर्शनायोगाद्, न च मार्गाऽनुसारिणी श्रद्धा सुखेनावाप्यते सत्यां चास्यां कल्याणचक्षुषो भवति वस्तुतत्त्वदर्शनम्, तदियं धर्मकल्पद्रुमस्यावन्ध्यबीजभूता भगवद्भ्य एव भवतीति चक्षुर्ददतीति चक्षुर्दाः, तथा मार्गदेभ्यः, इह मार्गो भुजङ्गमनलिकायामतुल्यो विशिष्टगुणस्थानावाप्तिप्रवणः स्वरसवाही क्षयोपशमविशेषोऽयमनुमन्ये सुखेत्या च्यवते यस्मिन्नसति न यथोचितगुणस्थानावाप्तिर्मार्गविषमतया चेतःस्खलनेन प्रतिबन्धोपपत्तेः, मार्गश्च भगवद्भ्य एवेति मार्गं ददतीति मार्गदाः; तथा शरणदेभ्यः, इह शरणं भयार्तत्राणं तच्च संसारकान्तारगतानामतिप्रबलरागादिपीडितानां समाश्वासनस्थानकल्पं तत्त्वचिन्तारूपमध्यवसानं विविदिषेत्यन्येषामस्मिंश्च सति तत्त्वगोचराः शुश्रूषा-श्रवण-ग्रहण-धारण-विज्ञानो हापोह तत्त्वाभिनिवेशाः प्रज्ञागुणा भवन्ति। तत्त्वचिन्तामन्तरेण तेषामभावात्

सम्भवन्ति तु तामन्तरेणापि तदाभासा न पुनः स्वार्थसाधकत्वेन भावसाराः, तत्त्वचिन्तारूपं शरणं भगवद्भ्य एव भवतीति शरणं ददतीति शरणदाः, तथा बोधिदेभ्यः, इह बोधिर्जिनप्रणीतधर्मावाप्तिः, इयं पुनर्यथाप्रवृत्त--अपूर्व--अनिवृत्तिकरणत्रयव्यापाराभिव्यङ्ग्यमभिन्नपूर्वग्रन्थिभेदतः प्रशमसंवेगनिर्वेदानुकम्पास्तिक्याभिव्यक्तिलक्षणं तत्त्वार्थश्रद्धानं सम्यग्दर्शनमुच्यते विज्ञप्तिरित्यन्येषां पञ्चकमप्येतदपुनर्बन्धकस्य, पुनर्बन्धके यथोचितस्यास्याभावादेते च यथोत्तरं पूर्वपूर्वफलभूताः, तथा हि-अभयफलं चक्षुः, चक्षुःफलं मार्गः, मार्गफलं शरणम्, शरणफलं बोधिः, सा च भगवद्भ्य एव भवतीति बोधिं ददतीति बोधिदाः। एवमभयदानचक्षुर्दानमार्गदानशरणदानबोधिदानेभ्यो यथोदितोपयोगसिद्धेरुपयोगसम्पद एव हेतुसम्पदुक्ता । साम्प्रतं स्तोतव्यसम्पद एव विशेषोपयोगसम्पदुच्यते—धम्मदयाणं धम्मदेसयाणं धम्मनायगाणं धम्मसारहीणं धम्मवरचाउरन्तचक्कवट्टीणं—धर्मदेभ्यः, इह धर्मश्चारित्रधर्मो गृह्यते स च यति-श्रावकसम्बन्धिभेदेन द्वेधा। यतिधर्मः सर्वसावद्ययोगविरतिलक्षणः; श्रावकधर्मस्तु देशविरतिरूपः, स चायमुभयरूपोऽपि भगवद्भ्य एव हेत्वन्तराणां सद्भावेऽपि भगवतामेव प्रधानहेतुत्वादिति धर्मं ददतीति धर्मदाः, धर्मदत्वं च धर्मदेशनाद्वारेणैव भवति नान्यथेत्याह—धर्मदेशकेभ्यः, धर्मं प्रस्तुतं यथाभव्यमवन्ध्यतया देशयन्तीति धर्मदेशकाः, तथा धर्मनायकेभ्यः धर्मोऽधिकृत एव तस्य नायकाः स्वामिनस्तद्वशीकरणभवात् तदुत्कर्षावाप्तेस्तत्प्रकृष्टफलभोगात् तद्व्याघातानुपपत्तेश्च धर्मनायकाः, तथा धर्मसारथिभ्यः प्रस्तुतस्य धर्मस्य स्वपरापेक्षया सम्यक्प्रवर्तनपालनदमनयोगतः सारथयो धर्मसारथयः, तथा धर्मवरचतुरन्तचक्रवर्तिभ्यः, धर्मः प्रस्तुतः स एव त्रिकोटिपरिशुद्धितया सुगतादिप्रणीतधर्मचक्रापेक्षया उभयलोकहितत्वेन चक्रवर्त्यादिचक्रापेक्षया च वरं प्रधानं

चतसृणां गतीनां नारकतिर्यग्नरामरलक्षणानामन्तो यस्मात् तच्चतुरन्त चक्रमिव चक्र रौद्रमिथ्यात्वादिभावशत्रु-लवनात्तेन वर्तन्ते इत्येवशीला धर्मवरचतुरन्तचक्रवर्तिनः चाउरन्तेति समृद्ध्यादित्वादात्वमेव धर्मदत्वादिभि पञ्चभि स्तोतव्यसम्पदेव विशेषोपयोगसम्पदुक्ता। ६। इदानीं

सर्वं पश्यतु वा मा वा तत्त्वमिष्ट तु पश्यतु। कीटसख्यापरिज्ञान तस्य नः कोपयुज्यते ?॥ १॥ इति

सर्वदर्शनप्रतिक्षेपेणेष्टतत्त्वदर्शनवादिनः सौगतान् प्रतिक्षिपति—अप्पडिहयवरनाणदसणधराण विअट्टछउ-माण—अप्रतिहते सर्वत्राप्रतिस्खलिते वरे क्षायिकत्वात् प्रधाने ज्ञानदर्शने विशेषसामान्यावबोधरूपे धारयतीति अप्रतिहतवरज्ञानदर्शनधरास्तेभ्यः, अप्रतिहतवरज्ञानदर्शनधरत्व च निरावरणत्वेन सर्वज्ञानदर्शनस्वभावतया च, ज्ञानग्रहण चादौ सर्वा लब्धयः साकारोपयोगोपयुक्तस्येति ज्ञापनार्थमिति। एते च कैश्चित्तत्त्वत. खल्वव्या-वृत्तच्छद्मान एवेष्यन्ते यदाह—

ज्ञानिनो धर्मतीर्थस्य कर्त्तार' परम पदम्। गत्वाऽऽगच्छन्ति भूयोऽपि भव तीर्थनिकारतः॥ १॥

तथा—

दग्धेन्धन पुनरुपैति भव प्रमथ्य, निर्वाणमप्यनवधारितभीरुनिष्ठम्।

मुक्तः स्वय कृतभवश्च परार्थशूरस्त्वच्छासनप्रतिहतेष्विह मोहराज्यम्॥ १॥ इति।

तन्निवृत्त्यर्थमाह—व्यावृत्तच्छद्मभ्य, छादयतीति छद्म ज्ञानावरणादिघातिकर्म तद्बन्धयोग्यतालक्षणो भवाधि-कारश्च, व्यावृत्त निवृत्त छद्म येभ्यस्ते तथाविधा, नाऽक्षीणे ससारे अपवर्गः क्षीणे च जन्मपरिग्रह इत्यसत्,

हेत्वभावात् । न च तीर्थनिकारजन्मपराभवो हेतुस्तेषां मोहाभावाद् मोहे वा अपवर्ग इति प्रलापमात्रमेवमप्रतिहतवरज्ञानदर्शनधरत्वेन व्यावृत्तच्छद्मतया च स्तोतव्यसम्पद एव सकारणा स्वरूपसम्पत् । एते च कल्पिता विद्यावादिभिः परमार्थतो जिनादय एवेष्यन्ते भ्रान्तिमात्रमसद्विद्येति वचनात् एतद्व्यपोहाय आह—जिणाणं जावयाणं, रागादिजेतृत्वाज्जिनाः, न च रागादीनामसत्त्वं प्रतिप्राण्यनुभवसिद्धत्वात् । न चाऽनुभवोऽपि भ्रान्तः सुखदुःखाद्यनुभवेष्वपि भ्रान्तिप्रसङ्गात्, एवं च जेयसम्भवाज्जिनत्वमविरुद्धम् । एवं रागादीनेव सदुपदेशादिना जापयन्तीति जापकाः तेभ्यः, एतेऽपि कालकारणवादिभिरनन्तशिष्यैर्भावतोऽतीर्णादय एवेष्यन्ते काल एव कृत्स्नं जगदावर्तयति इति वचनात्, एतन्निरासायाह—तिन्नाणं तारयाणं—सम्यग्ज्ञानदर्शनचारित्रपोतेन भवार्णवं तीर्णवन्तः तीर्णाः, न चैषां तीर्णानां पारगतानामावर्तः सम्भवति तद्भावे मुक्त्यसिद्धेः, एवं च न मुक्तः पुनर्भवे भवतीति तीर्णत्वसिद्धिः, एवं तारयन्ति अन्यानपीति तारकास्तेभ्यः, एतेऽपि परोक्षज्ञानवादिभिर्मीमांसकभेदैरबुद्धादय एवेष्यन्ते अप्रत्यक्षा हि नो बुद्धिः प्रत्यक्षोऽर्थः इति वचनात् एतद्व्यवच्छेदार्थमाह—बुद्धाणं बोहयाणं—अज्ञाननिद्राप्रसुप्ते जगत्यपरोपदेशेन जीवाजीवादिरूपं तत्त्वं स्वसंविदितेन ज्ञानेन बुद्धवन्तो बुद्धाः, न चास्वसंविदितेन ज्ञानेनार्थज्ञानं सम्भवति । न ह्यदृष्टप्रदीपो बाह्यमर्थं प्रत्यक्षीकरोति, न चेन्द्रियवदस्वसंविदितस्यापि ज्ञानस्यार्थप्रत्यक्षीकरणमिन्द्रियस्य भावेन्द्रियत्वात् तस्य च स्वसंविदितरूपत्वात् यदाह—“ अप्रत्यक्षोपलम्भस्य नार्थदृष्टिः प्रसिद्ध्यति ” एवं च सिद्धं बुद्धत्वमेवमपरानपि बोधयन्तीति बोधकास्तेभ्यः, एतेऽपि जगत्कर्तृलीनमुक्तवादिभिः सन्तपनविनेयैस्तत्त्वतोऽमुक्तादय एवेष्यन्ते, ब्रह्मवद् ब्रह्मसङ्गतानां स्थितिरिति वचनात् एतन्निराचिकीर्षयाऽऽह—

हृणाव मोक्षणाव-चतुर्गतिविपाकचित्रकर्मबन्धमुक्तत्वात् मुक्ताः कृतकृत्या निष्ठितार्था इत्यर्थः, न च जगत्कर्तरि लये निष्ठितार्थत्वं सम्भवति, जगत्करणेन कृतकृत्यत्वायोगात् हीनादिकरणे च रागद्वेषाऽनुषङ्गः, न चान्यत्राऽन्यस्य लय सम्भवति एकताभावप्रसङ्गात्, एवं च जगत्कर्तरि लयाभावाद् मुक्तत्वसिद्धिः, एवं मोचयन्त्यन्यानपीति मोचकास्तेभ्यः, एवं च जिनत्वजापकत्वतीर्णत्वतारकत्वबुद्धत्वबोधकत्वमुक्तत्वमोचकत्वैः स्वपरहितसिद्धेरात्मतुल्यफलकर्तृत्व सम्पदष्टमी ॥ ८ ॥ एतेऽपि बुद्धियोगज्ञानवादिभिः कापिलैरसर्वज्ञा असर्वदर्शिन एवेष्यन्ते बुद्ध्याध्यवसितमर्थं पुरुषश्चेतयते इति वचनात् एतन्निराकरणायाह—सव्वन्नूणं सव्वदरिसीणं—सर्वं जानन्तीति सर्वज्ञाः सर्वं पश्यन्तीत्येवंशीलाः सर्वदर्शिनः तत्स्वभावत्वे निरावरणत्वात्। उक्तं च—

स्थितः शीतांशुवज्जीवः प्रकृत्या भावशुद्धया। चन्द्रिकावच्च विज्ञानं तदावरणमभ्रवत् ॥ १ ॥

न करणाभावे कर्ता तत्फलसाधक इत्यप्यनैकान्तिकम्, परिनिष्ठितप्लवकस्य तरण्डकाभावेऽपि प्लवनदर्शनात् इति बुद्धिलक्षणं करणमन्तरेणापि आत्मनः सर्वज्ञत्वसर्वदर्शित्वसिद्धिः। अन्यस्त्वाह-ज्ञानस्य विशेषविषयत्वात् दर्शनस्य च सामान्यविषयत्वात्, तयोः सर्वार्थविषयत्वमयुक्तं तदुभयस्य सर्वार्थविषयत्वादित्युच्यते-न हि सामान्यविशेषयोर्भेद एव, किन्तु ते एव पदार्थाः समविषमतया सम्प्रत्ययमानाः सामान्यविशेषशब्दाभिधेयतां प्रतिपद्यन्ते, ततश्च ते एव ज्ञायन्ते ते एव दृश्यन्ते इति युक्तं ज्ञानदर्शनयोः सर्वार्थविषयत्वमिति। ननु ज्ञानेन विषमताधर्मविशिष्टा एव गम्यन्ते न समताधर्मविशिष्टा अपि, दर्शनेन च समताधर्मविशिष्टा एव गम्यन्ते न विषमताधर्मविशिष्टा अपि। ततश्च ज्ञानदर्शनाभ्यां समताविषमतालक्षणधर्मद्वयाग्रहणादयुक्तमेव तयोः सर्वार्थविषयत्व-

मिति, न धर्मधर्मिणोः सर्वथाभेदानभ्युपगमात्। ततश्चाभ्यन्तरीकृतसमताख्यधर्माण एव विषमताधर्मविशिष्टा ज्ञानेन गम्यन्ते अभ्यन्तरीकृतविषमताख्यधर्माण एव समताधर्मविशिष्टा दर्शनेन गम्यन्ते इति ज्ञानदर्शनयोर्नाऽसर्वार्थविषयत्वमिति सर्वज्ञाः सर्वदर्शिनश्च तेभ्यः। एते च सर्वगतात्मवादिभिर्मुक्तत्वे सति न नियतस्थानस्था एवेष्यन्ते। यदाहुस्ते—"मुक्ताः सर्वत्र तिष्ठन्ति व्योमवत्तापवर्जिताः" इति। तन्निराकरणार्थमाह—सिवमयलमरुअमणंतमक्खयमव्वाबाहमपुणरावित्ति सिद्धिगइनामधेयं ठाणं संपत्ताणं—शिवं सर्वोपद्रवरहितत्वात्, अचलं स्वाभाविकप्रायोगिकचलनक्रियारहितत्वात्, अरुजं व्याधिवेदनारहितं तन्निबन्धनयोः शरीरमनसोरभावात्, अनन्तमनन्तज्ञानविषयत्वयुक्तत्वात्, अक्षयं विनाशकारणाभावात्, अव्याबाधमकर्मत्वात्, अपुनरावृत्ति न पुनरावृत्तिः संसारेऽवतारो यस्मात्, सिद्धिगतिनामधेयं सिद्ध्यन्ति निष्ठितार्था भवन्त्यस्यां जन्तव इति सिद्धिर्लोकान्तक्षेत्रलक्षणा सैव गम्यमानत्वाद्गतिः, सिद्धिगतिरेव नामधेयं यस्य तत्तथा, स्थानं तिष्ठन्त्यस्मिन्निति स्थानं व्यवहारतः सिद्धिक्षेत्रम्। यदाहुः—"इह बुन्दि चइत्ता णं तत्थ गंतूण सिज्झइ" इति। निश्चयतस्तु स्वस्वरूपमेव सर्वे भावा आत्मभावे तिष्ठन्तीति वचनात्, विशेषणानि च निरुपचरितत्वेन यद्यपि मुक्तात्मन्येव भूयसा सम्भवन्ति तथापि स्थानस्थानिनोरभेदोपचारादेवं व्यपदेशः, तदेवंविधं स्थानं सम्प्राप्ताः सम्यगशेषकर्मविच्युत्या स्वरूपगमनेन परिणामान्तरापत्त्या प्राप्तास्तेभ्यः, न हि विभूनामेवंविधप्राप्तिसम्भवः, सर्वगतत्वे सति सदैकस्वभावत्वात्, नित्यानां चैकरूपतया अवस्थानं तद्भावाव्ययस्य नित्यत्वात्। अतः क्षेत्रतोऽसर्वगतपरिणामिनामेवैवं प्राप्तिः सम्भवति,

(१) इह शरीरं त्यक्त्वा तत्र गत्वा सिध्यति।

अत एव कायप्रमाणमात्मेति सुस्थितं वचनं, तेभ्यो नम इति क्रियायोगः, एवभूता एव प्रेक्षावतां नमस्कारार्हा, आद्यन्त-सङ्गतश्च नमस्कारो मध्यव्यापीति। जितभया अप्येते एव नान्ये इति प्रतिपादयितुमुपसंहरन्नाह–नमो जिणाण जिअभयाण–नमो जिनेभ्यो जितभयेभ्य इति। तदेव सव्वन्नूणं सव्वदरिसीणमित्यत आरभ्य नमो जिणाण जिअभयाणमित्येवमन्तैस्त्रिभिरालापकैः प्रधानगुणापरिक्षयप्रधानफलावाप्तिरूपा सम्पन्नवमी ।९। अत्र स्तुतिप्रस्तावान्न पौनरुक्त्यशङ्का करणीया। यदाह—

सज्झाय ज्झाण-तव-ओसहेसु उवएस-थुइ पयाणेसु। सन्तगुणकित्तणेसु य न होन्ति पुणरुत्तदोसा ओ (उ) ॥१॥

एताभिर्नवभिः सम्पद्भिः प्रणिपातदण्डक उच्यते, तत्पाठानन्तरं प्रणिपातकरणाज्जिनजन्मादिषु स्वर्विमानेषु तीर्थप्रवृत्तेः पूर्वमपि शक्रोऽनेन भगवतः स्तौतीति शक्रस्तवोऽप्युच्यते, अयञ्च प्रायेण भावार्हद्विषयो भावार्हद्-ध्यारोपाच्च स्थापनार्हतामपि पुर' पठ्यमानो न दोषाय, प्रणिपातदण्डकानन्तरं चाऽतीतानागतवर्तमानजिनवन्दनार्थं केचिदेतां गाथां पठन्ति—

जे अ अईआ सिद्धा जे अ भविस्सति णागए काले। सपइ अ वट्टमाणा सव्वे तिविहेण वदामि ॥ १ ॥

सुगमा चेयम्। ततश्चोत्थाय स्थापनार्हद्वन्दनार्थं जिनमुद्रया अरिहंतचेइयाणमित्यादिसूत्रं पठति। अर्हतां पूर्वोक्तस्वरूपाणां चैत्यानि प्रतिमालक्षणानि अर्हच्चैत्यानि–चित्तमन्तःकरणं तस्य भावः कर्म वा वर्णदृढादित्वात्

( १ ) स्वाध्याय–ध्यान–तप–औषधेषूपदेश–स्तुति–प्रदानेषु। सद्गुणकीर्तनेषु च न भवन्ति पुनरुक्तदोषास्तु ॥ १ ॥

( २ ) ये चातीता सिद्धा ये च भविष्यन्त्यनागते काले। सम्प्रति च वर्तमाना सर्वान् त्रिविधेन वन्दे ॥ २ ॥

त्यरिण चैत्यं बहुविषयत्वे चैत्यानि। तत्राऽर्हतां प्रतिमा हि प्रशस्तसमाधिचित्तोत्पादकत्वादर्हच्चैत्यानि भण्यन्ते तेषां। किं ? वन्दनादिप्रत्ययं कायोत्सर्गं करोमीति सम्बन्धः—कायस्य शरीरस्य उत्सर्गः कृताकारस्य स्थानमौन-ध्यानक्रियाव्यतिरेकेण क्रियान्तराध्यासमधिकृत्य परित्यागस्तं करोमि। वंदणवत्तिआए—वन्दनप्रत्ययं, वन्दनमभिवादनं प्रशस्तकायवाङ्मनःप्रवृत्तिरित्यर्थः, तत्प्रत्ययं तन्निमित्तं। कथं नाम कायोत्सर्गादेव मम वन्दनं स्यादिति वत्तिआए इत्यार्षत्वात्सिद्धमेवं सर्वत्र द्रष्टव्यम्। तथा पूअणवत्तिआए पूजनप्रत्ययं पूजननिमित्तं पूजनं गन्धमाल्यादिभिरभ्यर्चनम्। तथा सक्कारवत्तिआए—सत्कारप्रत्ययं सत्कारनिमित्तं, सत्कारः प्रवरवस्त्राभरणादिभिरभ्यर्चनम्, ननु च यतेः पूजनसत्कारावनुचितौ द्रव्यस्तवत्वात्; श्रावकस्य तु साक्षात्पूजासत्कारकर्तुः कायोत्सर्गद्वारेण तत्प्रार्थना निष्फला, उच्यते—साधोर्द्रव्यस्तवप्रतिषेधः करणमधिकृत्य, न पुनः कारणानुमती, यत उपदेशदानतः कारणसद्भावो भगवतां च पूजासत्कारदर्शनात् प्रमोदेनानुमतिरपि। यदाह—

सुव्वइअवइररिसिणा कारवणं पि अ अणुट्ठियमिमस्स। वायगगन्थेसु तहा आगया देसणा चेव ॥ १ ॥

श्रावकस्तु सम्पादयन्नपि एतौ भावातिशयादधिकसम्पादनार्थं पूजासत्कारौ प्रार्थयमानो न निष्फलारम्भः, तथा सम्माणवत्तिआए—सन्मानप्रत्ययं सन्माननिमित्तं सन्मानः स्तुत्यादिभिर्गुणोन्नतिकरणं मानसप्रीतिविशेष इत्यन्ये। अथ वन्दनादयः किंनिमित्तमित्याह—बोहिलाभवत्तिआए—बोधिलाभोऽर्हत्प्रणीतधर्मावाप्तिस्तत्प्रत्ययं तन्निमित्तं। बोधिलाभोऽपि किंनिमित्तमित्याह—निरुवसग्गवत्तिआए—जन्माद्युपसर्गाभावेन निरुपसर्गो मोक्षस्तत्प्रत्ययं

(१) सुव्रतिकवज्रर्षिणा कारणमपि चानुष्ठितमस्य। वाचकग्रन्थेषु तथा आगता देशना चैव ॥ २ ॥

तन्निमित्त । ननु साधुश्रावकयोर्बोधिलाभोऽस्त्येव तर्त्कि सतस्तस्य प्रार्थनया बोधिलाभमूलो मोक्षोऽप्यनभिलषणीय एव, उच्यते-क्लिष्टकर्मोदयवशेन बोधिलाभस्य प्रतिपातसम्भवाद् जन्मान्तरे च तस्यार्थ्यमानत्वान्निरुपसर्गोऽपि तद्द्वारेण प्रार्थ्यत एवेति युक्तोऽनयोरुपन्यास । अथ च कायोत्सर्ग क्रियमाणोऽपि श्रद्धादिविकलस्य नाभिलषितार्थप्रसाधनायालमित्याह-सद्धाए मेहाए धिईए धारणाए अणुप्पेहाए वड्ढमाणीए ठामि काउस्सग्ग-श्रद्धा मिथ्यात्वमोहनीयकर्मक्षयोपशमादिजन्योदकप्रसादकमणिवच्चेतसः प्रसादजननी, तया श्रद्धया, न तु बलाभियोगादिना, एवं मेधया न जडत्वेन, मेधा च सच्छास्त्रग्रहणपटु पापश्रुतावज्ञाकारी ज्ञानावरणीयक्षयोपशमजश्चित्तधर्मः, अथवा मेधया मर्यादावर्त्तितया, नासमञ्जसत्वेन । एवं धृत्या मनःसमाधिलक्षणया, न रागद्वेषाद्याकुलतया । एवं धारणया अर्हद्गुणाविस्मरणरूपया, न तु तच्छून्यतया । एवमनुप्रेक्षयाऽर्हद्गुणानामेव मुहुर्मुहुरनुस्मरणेन, न तद्वैकल्येन वर्धमानतयेति श्रद्धादिभिः प्रत्येकमभिसम्बध्यते । श्रद्धादीनां क्रमोपन्यासो लाभापेक्षया श्रद्धायां हि सत्यां मेधा तद्भावे धृतिस्ततो धारणा तदन्वनुप्रेक्षा वृद्धिरप्यासामेव । तिष्ठामि करोमि कायोत्सर्गं । ननु प्राक्करोमि कायोत्सर्गमित्युक्तं साम्प्रतं तिष्ठामीति किमर्थमुच्यते ?, सत्यं, सत्सामीप्ये सद्वत्प्रत्ययो भवतीति करोमि करिष्यामि इति क्रियाऽभिमुख्य पूर्वमुक्तमिदानीं त्वासन्नतरत्वात् क्रियाकालनिष्ठाकालयोः कथञ्चिदभेदात् तिष्ठाम्येवाहमिति । किं सर्वथा तिष्ठामि कायोत्सर्गं ? नेत्याह-अन्नत्थ ऊससिएणमित्यादि व्याख्यातं पूर्वं । कायोत्सर्गश्चाष्टोच्छ्वासमात्रो न त्वत्र ध्येयनियमोऽस्ति । कायोत्सर्गान्ते च यद्येक एव ततो नमो अरिहंताणमिति नमस्कारेण पारयित्वा यत्र चैत्यवन्दनां कुर्वन्नस्ति तत्र यस्य भगवतः सन्निहितं स्थापनारूपं तस्य स्तुतिं पठति । अथ बहवस्तत एक एव

स्तुतिं पठति, अन्ये तु कायोत्सर्गस्थिता एव शृण्वन्ति यावत् स्तुतिसमाप्तिः, ततः सर्वेऽपि नमस्कारेण पारयन्तीति तदनन्तरं तस्यामेवावसर्पिण्यां ये भारते वर्षे तीर्थकृतो अभूवन् तेषामेवैकक्षेत्रनिवासिनामासन्नोपकारित्वेन कीर्तनाय चतुर्विंशतिस्तवं पठति, पठन्ति वा। तथा—

लोगस्स उज्जोअगरे धम्मतित्थयरे जिणे। अरिहंते कित्तइस्सं चउवीसंपि केवली ॥ १ ॥

अरिहंत इति विशेष्यपदम् अर्हत उक्तनिर्वचनात् (न्), कीर्तयिष्ये नामोच्चारणपूर्वकं स्तोष्ये, ते च राज्याद्यवस्थासु द्रव्यार्हन्तो भवन्तीति भावार्हत्त्वप्रतिपादनायाह—केवलिन उत्पन्नकेवलज्ञानाद्भावार्हत इत्यर्थः, अनेन ज्ञानातिशय उक्तः; तत्संख्यामाह—चतुर्विंशतिमपि, अपिशब्दादन्यानपि, किंविशिष्टान्? लोकस्योद्द्योतकरान् लोक्यते प्रमाणेन दृश्यत इति लोकः पञ्चास्तिकायात्मकस्तस्योद्द्योतकरणशीलान्, केवलालोकदीपेन सर्वलोकप्रकाशकरणशीलान् इत्यर्थः। ननु केवलिन इत्यनेनैव गतार्थमेतल्लोकोद्द्योतकरणशीला एव हि केवलिनः। सत्यम्, विज्ञानाद्वैतनिरासेनोद्द्योतकराः, उद्द्योत्यस्य भेददर्शनार्थम्, लोकोद्द्योतकरत्वं च तत्स्तावकानामुपकाराय, न चाऽनुपकारिणः कोऽपि स्तौति इत्युपकारकत्वप्रदर्शनायाह—धर्मतीर्थकरान् धर्म उक्तस्वरूपः तीर्य्यतेऽनेन तीर्थं धर्मप्रधानं तीर्थं धर्मतीर्थं धर्मग्रहणाद् द्रव्यतीर्थस्य नद्यादेः शाक्यादिसम्बन्धिनश्च अधर्मप्रधानस्य परिहारः, तत्करणशीला धर्मतीर्थकराः तान् सदेवमनुजासुरायां पर्षदि सर्वभाषापरिणामिन्या वाचा धर्मतीर्थप्रवर्तकानित्यर्थः, अनेन पूजातिशयो वागतिशयश्चोक्तः। अपायापगमातिशयमाह—जिनान् रागद्वेषादिजेतॄनित्यर्थः।

यदुक्तं कीर्तयिष्यामीति तत्कीर्तनं कुर्वन्नाह—

उसममजिअ च वंदे संभवमभिनंदणं च सुमइं च। पउमप्पहं सुपासं जिणं च चंदप्पहं वंदे ॥ २ ॥
सुविहिं च पुप्फदंतं सीअल सिज्जंस वासुपुज्जं च। विमलमणंतं च जिणं धम्मं संतिं च वंदामि ॥ ३ ॥
कुंथुं अरं च मल्लिं वन्दे मुणिसुव्वयं नमिजिणं च। वंदामि रिट्ठनेमिं पासं तह वद्धमाणं च ॥ ४ ॥

समुदायार्थः सुगमः। पदार्थस्तु विभज्यते, स च सामान्यतो विशेषतश्च। तत्र सामान्यतः ऋषति गच्छति परमपदमिति ऋषभः, "उदृत्वादौ" ॥ ८। १। १३१ ॥ इत्युत्वे उसहो। वृषभ इत्यपि, वर्षति सिञ्चति देशनाजलेन दुःखाग्निना दग्धं जगत्, इत्यस्यान्वर्थः, "वृषभे वा वा" ॥ ८। १। १३३ ॥ इति वकारेण ऋत उत्वेऽस्यापि उसहो। विशेषतस्तु ऊर्वोर्वृषभो लाञ्छनमभूद्भगवतः, जनन्या च चतुर्दशानां स्वप्नानामादावृषभो दृष्टस्तेन ऋषभो वृषभो वा। १। परीषहादिभिर्न जित इति अजितः, तथा गर्भस्थे भगवति जननी द्यूते राज्ञा न जिता इत्यजितः। २। सम्भवन्ति प्रकर्षेण भवन्ति चतुस्त्रिंशदतिशयगुणा अस्मिन्निति सम्भवः, शं सुखं भवत्यस्मिन् स्तुते इति शम्भवो वा, तत्र "शषोः सः" ॥ ८। १। २६० ॥ इति सत्वे सम्भवः, तथा गर्भगतेऽप्यस्मिन् अभ्यधिकसस्यसम्भवात्सम्भवः। ३। अभिनन्द्यते देवेन्द्रादिभिरित्यभिनन्दनः, तथा गर्भात्प्रभृति एवाऽभीक्ष्णं शक्राद्यभिनन्दनात् अभिनन्दनः। ४। सु शोभना मतिरस्येति सुमतिः, तथा गर्भस्थे जनन्याः सुनिश्चिता मतिरभूदिति सुमतिः।५। निष्पङ्कतामङ्गीकृत्य पद्मस्येव प्रभा यस्याऽसौ पद्मप्रभः, तथा पद्मशयनदोहदो मातुर्देवतया पूरित इति, पद्मवर्णश्च भगवानिति पद्मप्रभः। ६। शोभनाः पार्श्वा अस्येति सुपार्श्वः, तथा गर्भस्थे भगवति जनन्यपि सुपार्श्वा जातेति सुपार्श्वः। ७। चन्द्रस्येव प्रभा ज्योत्स्ना सौम्यलेश्याविशेषोऽस्येति चन्द्रप्रभः,

तथा देव्याश्चन्द्रपानदोहदोऽभूत्, चन्द्रसमवर्णश्च भगवानिति चन्द्रप्रभः ।८। शोभनो विधिः सर्वत्र कौशलमस्येति सुविधिः, तथा गर्भस्थे भगवति जनन्यप्येवमिति सुविधिः, पुष्पकलिकामनोहरदन्तत्वात् पुष्पदन्त इति द्वितीयं नाम ।९। सकलसत्त्वसन्तापहरणाच्छीतलः, तथा गर्भस्थे भगवति पितुः पूर्वोत्पन्नाचिकित्स्यपित्तदाहो जननीकरस्पर्शादुपशान्त इति शीतलः ।१०। सकलभुवनस्याऽपि प्रशस्यतमत्वेन श्रेयान्, श्रेयांसावंसावस्येति पृषोदरादित्वात् श्रेयांसो वा, तथा गर्भस्थेऽस्मिन् केनाप्यनाक्रान्तपूर्वा देवताधिष्ठितशय्या जनन्या आक्रान्तेति श्रेयो जातमिति श्रेयांसः ।११। वसवो देवविशेषाः, तेषां पूज्यो वसुपूज्यः, प्रज्ञादित्वादणि वासुपूज्यः, तथा गर्भस्थेऽस्मिन् वसु हिरण्यं तेन वासवो राजकुलं पूजितवानिति वासुपूज्यः, वसुपूज्यस्य राज्ञोऽयमिति वा "तस्येदम्" ॥६।३।६०॥ इत्यणि वासुपूज्यः ।१२। विगतमलो विमलः, विमलानि वा ज्ञानादीन्यस्येति विमलः, तथा गर्भस्थे मातुर्मतिस्तनुश्च विमला जातेति विमलः ।१३। अनन्तकर्मांशान् जयति, अनन्तैर्वा ज्ञानादिभिर्जयति अनन्तजित्, तथा गर्भस्थे जनन्या अनन्तरत्नदाम दृष्टम्, जयति च त्रिभुवनेऽपीति अनन्तजित्, भीमो भीमसेन इति न्यायादनन्त इति ।१४। दुर्गतौ प्रपतन्तं सत्त्वसङ्घातं धारयतीति धर्मः, तथा गर्भस्थे जननी दानादिधर्मपरा जातेति धर्मः ।१५। शान्तियोगात्, तदात्मकत्वात्, तत्कर्तृत्वाद्वा शान्तिरिति, तथा गर्भस्थे पूर्वोत्पन्नाशिवशान्तिरभूदिति शान्तिः ।१६। कुः पृथ्वी, तस्यां स्थितवानिति निरुक्तात् कुन्थुः, तथा गर्भस्थे जननी रत्नानां कुन्थुं राशिं दृष्टवतीति कुन्थुः ।१७।

सर्वो नाम महासत्त्वः कुले य उपजायते । तस्याऽभिवृद्धये वृद्धैरसावर उदाहृतः ॥१॥

इति वचनादरः । तथा गर्भस्थे जनन्या स्वप्ने सर्वरत्नमयोऽरो दृष्ट इत्यर । १८ । परीषहादिमल्लजयान्नि-रुक्तान्मल्लिः, तथा गर्भस्थे मातुः एकऋतौ सर्वर्तुसुरभिकुसुममाल्यशयनीयदोहदो देवतया पूरित इति मल्लिः । १९ । मन्यते जगतस्त्रिकालावस्थामिति मुनि " मनेरुदेतौ चास्य वा " ( उणा-६१२ ) इति इप्रत्यये उपान्त्यस्योत्वम्, शोभनानि व्रतान्यस्येति सुव्रत, मुनिश्चासौ सुव्रतश्च मुनिसुव्रतः, तथा गर्भस्थे जननी मुनिवत्सु-व्रता जातेति मुनिसुव्रत । २० । परीषहोपसर्गादिनामनाद् " नमेस्तु वा " ( उणा-६१३ ) इति विकल्पेनोपान्त्यस्येकाराभावपक्षे नमिः, तथा गर्भस्थे भगवति परचक्रनृपैरपि प्रणतिः कृतेति नमि । २१ । धर्मचक्रस्य नेमिवन्नेमि', तथा गर्भस्थे भगवति जनन्या रिष्टरत्नमयो महानेमिर्दृष्ट इति रिष्टनेमिः, अपश्चिमादि-शब्दवत् नञ्पूर्वत्वेऽरिष्टनेमिः । २२ । पश्यति सर्वभावानिति निरुक्तात् पार्श्व , तथा गर्भस्थे जनन्या निशि शयनीयस्थयाऽन्धकारे सर्पो दृष्ट इति गर्भानुभावोऽयमिति मत्वा पश्यतीति पार्श्व , पार्श्वोऽस्य वैयावृत्त्यकरस्तस्य नाथः पार्श्वनाथः, भीमो भीमसेन इतिवत् पार्श्व । २३ । उत्पत्तेरारभ्य ज्ञानादिभिर्वर्धत इति वर्धमान , तथा भगवति गर्भस्थे ज्ञातकुल धनधान्यादिभिर्वर्धत इति वर्धमानः । २४ ।

विशेषाऽभिधानार्थसग्राहिकाश्चेमाः श्रीभद्रबाहुस्वामिप्रणीता गाथा —

ऊरूसु उसहलञ्छणमुसभ सुमिणम्मि तेण उसहजिणो । अक्खेसु जेण अजिआ जणणी अजिओ जिणो तम्हा ॥१॥

---

(१) ऊर्वोर्ऋषभलाञ्छनमृषभ स्वप्ने तेनर्षभजिन । अक्षेषु येनाजिता जननी अजितो जिनस्तस्मात् ॥ १ ॥

[1]अभिसम्भूआ सासत्ति सम्भवो तेण वुच्चइ भयवं । अभिनन्दइ अभिक्खं सक्को अभिनन्दणो तेण ॥ २ ॥
जणणी सव्वत्थ विणिच्छएसु सुमइत्ति तेण सुमइजिणो । पउमसयणम्मि जणणीइ डोहलो तेण पउमाभो ॥ ३ ॥
गब्भगए जं जणणी जाय सुपासा तओ सुपासजिणो । जणणीइ चंदपिअणम्मि डोहलो तेण चंदाभो ॥ ४ ॥
सव्वविहीसु अ कुसला गब्भगए जेण होइ सुविहिजिणो । पिउणो दाहोवसमो गब्भगए सीअलो तेणं ॥ ५ ॥
महरिहसिज्जारुहणम्मि डोहलो होइ तेण सिज्जंसो । पूएइ वासवो जं अभिक्खणं तेण वसुपुज्जो ॥ ६ ॥
विमलतणुबुद्धिजणणी गब्भगए तेण होइ विमलजिणो । रयणविचित्तमणंतं दामं सुमिणे तओऽणंतो ॥ ७ ॥
गब्भगए जं जणणी जाय सुधम्मत्ति तेण धम्मजिणो । जाओ असिवोवसमो गब्भगए तेण संतिजिणो ॥ ८ ॥

---

(१) अभिसंभूतानि सस्यानीति संभवस्तेनोच्यते भगवान् । अभिनन्दत्यभीक्ष्णं शक्रोऽभिनन्दनस्तेन ॥ २ ॥
जननी सर्वत्र विनिश्चयेषु सुमतिरिति तेन सुमतिजिनः । पद्मशयने जनन्या दोहदस्तेन पद्माभः ॥ ३ ॥
गर्भगते यज्जननी जाता सुपार्श्वा ततः सुपार्श्वजिनः । जनन्याश्चन्द्रपाने दोहदस्तेन चन्द्राभः ॥ ४ ॥
सर्वविधिषु च कुशला गर्भगते येन भवति सुविधिजिनः । पितुर्दाहोपशमो गर्भगते शीतलस्तेन ॥ ५ ॥
महार्हशय्यारोहणे दोहदो भवति तेन श्रेयांसः । पूजयति वासवो यमभिक्षणं तेन वासुपूज्यः ॥ ६ ॥
विमलतनुबुद्धिजननी गर्भगते तेन भवति विमलजिनः । रत्नविचित्रमनन्तं दाम स्वप्ने ततोऽनन्तः ॥ ७ ॥
गर्भगते यज्जननी जाता सुधर्मेति तेन धर्मजिनः । जातोऽशिवोपशमो गर्भगते तेन शान्तिजिनः ॥ ८ ॥

'थूह रयणविचित्त कुथु सुमिणम्मि तेण कुंथुजिणो । सुमिणे अर महरिह पासइ जणणी अरो तम्हा ॥ ९ ॥
वरसुरहिमल्लसयणम्मि डोहलो तेण होइ मल्लिजिणो । जाया जणणी ज सुव्वयत्ति मुणिसुव्वओ तम्हा ॥ १० ॥
पणया पच्चतनिवा दसियमित्ते जिणम्मि तेण णमी । रिट्ठरयण च नेमिं उप्पयमाण तओ नेमी ॥ ११ ॥
सप्प सयणे जणणी ज पासइ तमसि तेण पासजिणो । वड्ढइ य नायकुल ति अ तेण जिणो वद्धमाणु त्ति ॥ १२ ॥

इति कीर्तन कृत्वा चेतःशुद्ध्यर्थं प्रणिधानमाह—

एव मए अभिथुआ विहूअरयमला पहीणजरमरणा । चउवीस पि जिणवरा तित्थयरा मे पसीअन्तु ॥ ५ ॥

एवमनन्तरोदितेन विधिना मयेत्यात्मनिर्देशः, अभिष्टुता आभिमुख्येन स्तुता स्वनामभिः कीर्तिता इत्यर्थः। किंविशिष्टास्ते, विधूतरजोमला —रजश्च मल च रजोमले, विधूते प्रकम्पिते अनेकार्थत्वादपनीते वा रजोमले यैस्ते विधूतरजोमलाः, बध्यमान च कर्म रज', पूर्वबद्ध तु मलम्, अथवा बद्ध रजो, निकाचित मलम्, अथवा ऐर्यापथ रज , साम्परायिक मलमिति । यतश्चैवभूता अत एव प्रक्षीणजरामरणाः कारणाभावात् । चतुर्विंशतिरपि, अपिशब्दादन्येऽपि जिनवराः श्रुतादिजिनेभ्यः प्रकृष्टा , ते च तीर्थकरा इति पूर्ववत् , मे मम, किं ? प्रसीदन्तु प्रसा-

---

( १ ) स्तूप रत्नविचित्र कुन्थु स्वप्ने तेन कुन्थुजिन । स्वप्नेऽर महार्ह पश्यति जननी, अरस्तस्मात् ॥ ९ ॥
वरसुरभिमाल्यशयने दोहदस्तेन भवति मल्लिजिन । जाता जननी यत् सुव्रतेति मुनिसुव्रतस्तस्मात् ॥ १० ॥
प्रणता प्रत्यन्तनृपा दर्शितमात्रे जिने तेन नमि । रिष्टरत्न च नेमिमुत्पतन्त ततो नेमि ॥ ११ ॥
सर्प शयने जननी यत् पश्यति तमसि तेन पार्श्वजिन । वर्धते च ज्ञातकुलमिति च तेन जिनो वर्धमान इति ॥ १२ ॥

द्परा भवन्तु। ते च वीतरागत्वाद्यद्यपि स्तुताः तोषम्, निन्दिताश्च द्वेषं न यान्ति, तथाऽपि स्तोता स्तुतिफलम्, निन्दकश्च निन्दाफलमाप्नोत्येव यथा चिन्तामणिमन्त्राद्याराधकः; यदवोचाम वीतरागस्तवे—

अप्रसन्नात् कथं प्राप्यं फलमेतदसङ्गतम्। चिन्तामण्यादयः किं न फलन्त्यपि विचेतनाः ? ॥ १ ॥

इत्युक्तमेव। अथ यदि न प्रसीदन्ति, तत्किं प्रसीदन्त्विति वृथा प्रलापेन ? । नैवम्। भक्त्यतिशयत एवमभिधानेऽपि न दोषः। यदाह—क्षीणक्लेशा एते न हि प्रसीदन्ति, न तत्स्तवोऽपि वृथा, तत्स्तवभावविशुद्धेः, प्रयोजनं कर्मविगम इति ॥ ५ ॥ तथा—

कित्तिअ वंदिअ महिआ जे ए लोगस्स उत्तमा सिद्धा। आरुग्गबोहिलाभं समाहिवरमुत्तमं दिंतु ॥ ६ ॥

कीर्त्तिताः स्वनामभिः प्रोक्ताः वन्दितास्त्रिविधयोगेन सम्यक् स्तुताः, महिताः पुष्पादिभिः पूजिताः। मइआ इति पाठान्तरम्, तत्र मयका मया। के एते ?, इत्याह-ये एते लोकस्य प्राणिवर्गस्य कर्ममलकलङ्काभावेनोत्तमाः, प्रकृष्टाः, सिद्ध्यन्ति स्म सिद्धाः कृतकृत्या इत्यर्थः, अरोगस्य भाव आरोग्यं सिद्धत्वं तदर्थम्, बोधिलाभः अर्हत्प्रणीतधर्मप्राप्तिरारोग्यबोधिलाभः, स ह्यनिदानो मोक्षायैव भवति तम्, तदर्थं च समाधिवरं वरसमाधिं परमस्वास्थ्यरूपं भावसमाधिमित्यर्थः, असावपि तारतम्यभेदादनेकधैव, अत आह-उत्तमं सर्वोत्कृष्टं ददतु प्रयच्छन्तु, एतच्च भक्त्योच्यते। यत उक्तम्—

भासा असच्चमोसा नवरं भत्तीइ भासिआ एसा। न हु खीणपिज्जदोसा दिंति समाहिं च बोहिं च ॥१॥ इति

(१) भाषा असत्यमृषा नवरं भक्त्या भाषितैषा। न खलु क्षीणप्रेमदोषा ददति समाधिं च बोधिं च ॥ १ ॥

तथा—

चंदेसु निम्मलयरा आइच्चेसु अहियं पयासयरा । सागरवरगम्भीरा सिद्धा सिद्धिं मम दिसन्तु ॥ ७ ॥

" पञ्चम्यास्तृतीया च " ॥ ८ । ३ । १३६ ॥ इति पञ्चम्यर्थे सप्तमी, अतश्चन्द्रेभ्योऽपि निर्मलतराः सकलकर्ममलापगमात्, पाठान्तरं वा चन्देहिं निम्मलयरा, एवमादित्येभ्योऽप्याधिकं प्रकाशकराः, केवलोद्द्योतेन लोकालोकप्रकाशकत्वात् । उक्तं च—

चंदाइच्चगहाण पहा पयासेइ परिमिअं खित्तं । केवलिअनाणलम्भो लोआलोअं पयासेइ ॥ १ ॥

सागरवरं स्वयम्भूरमणाख्यः समुद्रः, परीषहोपसर्गाद्यक्षोभ्यत्वात् तस्मादपि गम्भीरा, सिद्धाः कर्मविगमात् कृतकृत्याः, सिद्धिं परमपदप्राप्तिम्, मम दिशन्तु प्रयच्छन्तु । एवं चतुर्विंशतिस्तवमुक्त्वा सर्वलोके एवार्हच्चैत्यानां वन्दनाद्यर्थं कायोत्सर्गकरणायेदं पठति, पठन्ति वा । सव्वलोए अरिहंतचेइआणं करेमि काउस्सग्गमित्यादि वोसिरामीति यावत् । व्याख्या पूर्ववत् । नवरम्, सर्वश्चासौ लोकश्च अधस्तिर्यगूर्ध्वभेदस्तस्मिंस्त्रैलोक्ये इत्यर्थः, अधोलोके हि चमरादिभवनेषु, तिर्यग्लोके द्वीपाचलज्योतिष्कविमानादिषु, ऊर्ध्वलोके सौधर्मादिषु सन्त्येवार्हच्चैत्यानि, ततश्च मौलचैत्यं समाधिकारणमिति मूलप्रतिमायाः प्राक् स्तुतिरुक्ता । इदानीं सर्वेऽर्हन्तस्तद्गुणा इति सर्वलोकसंग्रहः, तदनुसारेण सर्वतीर्थकरसाधारणी स्तुतिः । अन्यथा अन्यकायोत्सर्गे अन्या स्तुतिरिति न सम्यगतिप्रसङ्गादिति सर्वतीर्थकराणां स्तुतिरुक्ता । इदानीं येन ते भगवन्तस्तदभिहिताश्च भावाः स्फुटमुपलभ्यन्ते

---

१ चन्द्रादित्यगृहाणां प्रभा प्रकाशयति परिमितं क्षेत्रम् । केवलिकज्ञानलाभो लोकालोकं प्रकाशयति ॥ १ ॥

तत्प्रदीपस्थानीयं सम्यक् श्रुतमर्हति कीर्तनम्, तत्राऽपि तत्प्रणेतॄन् भगवतः प्रथमं स्तौति—

पुक्खरवरदीवड्ढे धायइखंडे अ जम्बुद्दीवे अ। भरहेरवयविदेहे धम्माइगरे नमंसामि ॥ १ ॥

भरतं भरतक्षेत्रम्, ऐरवतमैरवतक्षेत्रम्, विदेहमिति भीमो भीमसेन इति न्यायाद् महाविदेहक्षेत्रम्, एवं समाहारद्वन्द्वः, तेषु भरतैरवतविदेहेषु धर्मस्य श्रुतधर्मस्यादिकरान् सूत्रतः प्रथमकरणशालिन्, नमस्यामि स्तुवे। क्व यानि भरतैरवतमहाविदेहक्षेत्राणि ?, इत्याह– पुष्कराणि पद्मानि, तैर्वरः पुष्करवरः स चासौ द्वीपश्च पुष्करवरद्वीपः तृतीयो द्वीपः, तस्यार्धे मानुषोत्तराचलादर्वाग्भागवर्ति, तत्र द्वे भरते, द्वे ऐरवते, द्वे महाविदेहे, तथा धातकीनां खण्डानि वनानि यस्मिन् स धातकीखण्डो द्वीपः तस्मिन्, द्वे भरते, द्वे ऐरवते, द्वे महाविदेहे। जम्ब्वा उपलक्षितः तत्प्रधानो वा द्वीपो जम्बूद्वीपः, अत्रैकं भरतमेकमैरवतमेकं च महाविदेहमित्येताः पञ्चदशकर्मभूमयः। शेषास्त्वकर्मभूमयः यदाह—"भरतैरवतविदेहाः कर्मभूमयोऽन्यत्र देवकुरूत्तरकुरुभ्यः" (तत्त्वा–३।१६) महत्तरक्षेत्रप्राधान्याङ्गीकरणात्पश्चानुपूर्व्या निर्देशः। धर्मादिकरत्वं यथा भगवतां भवति तथा अपौरुषेयवादनिराकरणावसरे प्राग्निर्णीतम्। नन्वेवमपि कथं धर्मादिकरत्वं भगवताम्, 'तप्पुव्विआ अरहया' इति वचनाद् वचनस्यानादित्वात्? नैवम्, बीजाङ्कुरवत्तदुपपत्तेः–बीजाद्धि अङ्कुरो भवति अङ्कुराच्च बीजमिति। एवं भगवतां पूर्वजन्मनि श्रुतधर्माभ्यासात्तीर्थकरत्वम्, तीर्थकृतां च श्रुतधर्मादिकरत्वमदुष्टमेव। न चाऽयं नियमः श्रुतधर्मपूर्वकमेवार्हत्त्वमिति मरुदेव्यादीनां श्रुतधर्मपूर्वकत्वाभावेऽपि केवलज्ञानश्रवणादित्यलं प्रसङ्गेन। एवं श्रुतधर्मादिकराणां स्तुतिरुक्ता। इदानीं श्रुतधर्मस्याह—

तमतिमिरपडलविद्धसणस्स सुरगणनरिंदमहिअस्स । सीमाधरस्स वंदे पप्फोडिअमोहजालस्स ॥ २ ॥

तमोऽज्ञानम् तदेव तिमिरम्, अथवा बद्धस्पृष्टनिधत्त ज्ञानावरणीय कर्म तम., निकाचित तिमिर, ततस्तमस्तिमिरस्य, तमस्तिमिरयोर्वा पटल वृन्दम् , तद्विध्वसयति विनाशयतीति नन्द्यादित्वादने तमस्तिमिरपटलविध्वसनस्तस्य, अज्ञाननिरासेनैवास्य प्रवृत्तेः । सुरगणैश्चतुर्विधाऽमरनिकायैर्नरेन्द्रैश्चक्रवर्त्यादिभिर्महितः पूजितस्तस्य । आगममहिमां हि कुर्वन्त्येव सुरासुरादय । सीमां मर्य्यादाम्, सीमायां वा धारयतीति सीमाधरस्तस्य, श्रुतधर्म इति विशेष्यम्, ततः कर्मणि द्वितीया, तस्याश्च " क्वचिद् द्वितीयादेः " ॥ ८ । ३ । १३४ ॥ इति प्राकृतसूत्रात् षष्ठी, अतस्त वन्दे, तस्य वा यन्माहात्म्य तद्वन्दे इति सम्बन्धे षष्ठी, अथवा तस्य वन्दे वन्दन करोमीति । प्रकर्षेण स्फोटित विदारित मोहजाल मिथ्यात्वादिरूप येन स तथा तस्य । श्रुतधर्मे हि सति विवेकिनो मोहजाल मिथ्यात्वादिरूप विलयमुपयात्येव ॥ इत्थ श्रुतमभिनन्द्य तस्यैव गुणोपदर्शनद्वारेणाप्रमादगोचरतां प्रतिपादयन्नाह—

जाईजरामरणसोगपणासणस्स, कल्लाणपुक्खलविसालसुहावहस्स ।

को देवदाणवनरिंदगणच्चिअस्स, धम्मस्स सारमुवलब्भ करे पमायम् ? ॥ ३ ॥

कः सचेतनः, धर्मस्य श्रुतधर्मस्य, सार सामर्थ्यम्, उपलभ्य विज्ञाय, श्रुतधर्मोदितेऽनुष्ठाने, प्रमादमनादर कुर्यात् ? , न कश्चित् कुर्यादित्यर्थ । किंविशिष्टस्य श्रुतधर्मस्य ? जातिर्जन्म, जरा विश्रसा, मरण प्राणनाशः, शोको मानसो दुःखविशेषः, तान् प्रणाशयति अपनयति, जातिजरामरणशोकप्रणाशन तस्य, श्रुतधर्मोक्तानुष्ठानाद्धि जात्यादयः प्रणश्यन्त्येव, अनेनास्यानर्थप्रतिघातित्वमुक्तम् । कल्यमारोग्यमणति शब्दयति इति कल्याणम्,

पुष्कलं सम्पूर्णम्, न च तदल्पं किन्तु विशालं विस्तीर्णमेवम्भूतं सुखमावहति प्रापयतीति कल्याणपुष्कलविशालसुखावहः तस्य, तथा च श्रुतधर्मोक्तानुष्ठानादुक्तलक्षणमपवर्गसुखमवाप्यत एव, अनेन चाऽस्य विशिष्टार्थप्रापकत्वमाह । देवानां दानवानां नरेन्द्राणां च गणैरर्चितस्य पूजितस्य, सुरगणनरेन्द्रमहितस्य इति, अस्यैव निगमनं देवदानवेत्यादि । यतश्चैवमतः—

सिद्धे भो ! पयओ नमो जिणमए नंदी सया संयमे, देवंनागसुवण्णकिन्नरगणस्सब्भूअभावच्चिए ।
लोगो जत्थ पइट्ठिओ जगमिणं तेलुक्कमचासुरं, धम्मो वड्ढउ सासयं विजयओ धम्मुत्तरं वड्ढउ ॥ ४ ॥

सिद्धः फलाव्यभिचारेण प्रतिष्ठितः, अथवा सिद्धः सकलनयव्यापकत्वेन त्रिकोटिपरिशुद्धत्वेन च प्रख्यातस्तस्मिन्, भो इत्यतिशयिनामामन्त्रणम् पश्यन्तु भवन्तः, प्रयतोऽहं यथाशक्त्येतावन्तं कालं प्रकर्षेण यतः, इत्थं परसाक्षिकं प्रयतो भूत्वा पुनर्नमस्करोति, नमो जिणमए नमो जिनमताय, प्राकृतत्वाच्चतुर्थ्याः सप्तमी । अस्मिंश्च सति नन्दिः समृद्धिः, सदा सर्वकालम्, संयमे चारित्रे भूयात् । उक्तं च–(१) 'पढमं नाणं तओ दया'। किंविशिष्टे संयमे ?, देवनागसुपर्णकिन्नरगणैः सद्भूतभावेनार्चिते–देवा विमानिनः, नागा धरणादयः, सुपर्णा गरुडाः, किन्नरा व्यन्तरविशेषाः, उपलक्षणं शेषाणां, देवमित्यनुस्वारः छन्दःपूरणे, तथा च संयमवन्तोऽर्च्यन्त एव देवादिभिः । यत्र जिनमते, किं यत्र ? लोकनं लोको ज्ञानम्, प्रतिष्ठितः तद्वशीभूतः, तथा जगदिदं ज्ञेयतया प्रतिष्ठितमिति योगः; केचिन्मनुष्यलोकमेव जगन्मन्यन्ते, अत आह–त्रैलोक्यमर्त्यासुरमाधाराधेयरूपम् । अयमि-

(१) प्रथमं ज्ञानं ततो दया ।

त्वम्भूतो धर्मः श्रुतधर्मो वर्धतां वृद्धिमुपयातु, शाश्वतमिति क्रियाविशेषणं शाश्वतमप्रच्युत्या वर्धतामिति, विजयतः परवादिविजयेन, धर्मोत्तरं चारित्रधर्मोत्तरं वर्धताम्, पुनर्वृद्ध्यभिधानं मोक्षार्थिना प्रत्यहं ज्ञानवृद्धिः कार्या इति प्रदर्शनार्थम्। तथा च तीर्थकरनामकर्महेतून् प्रतिपादयतोक्तम्–' अपुव्वनाणगहणे ' इति। प्रणिधानमेतन्मोक्षबीजकल्पं परमार्थतोऽनाशंसारूपमेवेति प्रणिधानं कृत्वा श्रुतस्यैव वन्दनाद्यर्थं कायोत्सर्गार्थं पठति पठन्ति वा।
सुअस्स भगवओ करेमि काउस्सग्गमित्यादि वोसिरामीति यावदर्थः पूर्ववत्। नवरम्–श्रुतस्येति प्रवचनस्य सामायिकादेर्बिन्दुसारपर्यन्तस्य, भगवतो यशोमाहात्म्यादियुक्तस्य, ततः कायोत्सर्गकरणं पूर्ववत्पारयित्वा श्रुतस्य स्तुतिं पठति। ततश्च अनुष्ठानपरम्पराफलभूतेभ्यः सिद्धेभ्यो नमस्कारकरणायेदं पठति पठन्ति वा–

सिद्धाणं बुद्धाणं पारगयाणं परम्परगयाणं। लोअग्गमुवगयाणं नमो सया सव्वसिद्धाणं ॥ १ ॥

सिद्ध्यन्ति स्म सिद्धाः ये येन गुणेन निष्पन्नाः परिनिष्ठिताः सिद्धौदनवद् न पुनः साधनीया इत्यर्थः तेभ्यो नम इति योगः। ते च सामान्यतः कर्मादिसिद्धा अपि भवन्ति, यथोक्तम्—

कम्मे सिप्पे य विज्जाअ मंते जोगे य आगमे। अत्थ जत्ता अभिप्पाए तवे कम्मक्खए इअ ॥ १ ॥

तत्र कर्म आचार्योपदेशरहितं भारवहनकृषिवाणिज्यादि, तत्र सिद्धः, परिनिष्ठितः सह्यगिरिसिद्धवत्। शिल्पं त्वाचार्योपदेशजं तत्र सिद्धः, कोकासवर्धकिवत्। विद्या जपहोमादिना फलदा, मन्त्रो जपादिरहितः पाठमात्रसिद्धः, स्त्रीदेवताऽधिष्ठाना विद्या पुरुषदेवताधिष्ठानस्तु मन्त्रः। तत्र विद्यासिद्ध आर्यखपुटवत्, मन्त्रसिद्धः

१ कर्मणि शिल्पे च विद्यायां मन्त्रे योगे चागमे। अर्थे यात्रायामभिप्राये तपसि कर्मक्षय इति ॥ १ ॥

स्तम्भाकर्षकवत् । योग औषधिसंयोगः, तत्र सिद्धो योगसिद्धः आर्यसमितवत्, आगमो द्वादशाङ्गं प्रवचनं तत्रासाधारणार्थावगमात्सिद्धः आगमसिद्धो गौतमवत्, अर्थो धनम्, स इतरासाधारणो यस्य सोऽर्थसिद्धो मम्मणवणिग्वत् । जले स्थले वा यस्याविघ्ना यात्रा स यात्रासिद्धस्तुण्डिकवत् । यमर्थमभिप्रैति तमर्थं तथैव यः साधयति सोऽभिप्रायसिद्धोऽभयकुमारवत् । यस्य सर्वोत्कृष्टं तपः स तपःसिद्धो दृढप्रहारिवत् । यः कर्मक्षयेण ज्ञानावरणीयाद्यष्टकर्मनिर्मूलनेन सिद्धः स कर्मक्षयसिद्धो मरुदेवीवत् । अतः कर्मादिसिद्धव्यपोहेन कर्मक्षयसिद्धपरिग्रहार्थमाह—बुद्धेभ्यः अज्ञाननिद्राप्रसुप्ते जगति अपरोपदेशेन जीवादिरूपं तत्त्वं बुद्धवन्तो बुद्धाः, बुद्धत्वानन्तरं कर्मक्षयं कृत्वा सिद्धा इत्यर्थः, तेभ्यः । एते च संसारनिर्वाणोभयपरित्यागस्थितिमन्तः कैश्चिदिष्यन्ते—

न संसारे न निर्वाणे स्थितो भुवनभूतये । अचिन्त्यः सर्वलोकानां चिन्तारत्नाधिको महान् ॥ १ ॥

इति वचनात् । एतन्निरासार्थमाह—पारगतेभ्यः पारं पर्यन्तं संसारस्य प्रयोजनव्रातस्य वा, गताः पारगताः तेभ्यः; एते च यदृच्छावादिभिः कैश्चिद्दरिद्रराज्यासिवदक्रमसिद्धत्वेनाभिधीयन्ते, तद्व्युदासार्थमाह—परम्परगयाणं —परम्परया चतुर्दशगुणस्थानक्रमारोहरूपया, अथवा कथञ्चित् कर्मक्षयोपशमादिसामग्र्या सम्यग्दर्शनं तस्मात् सम्यग्ज्ञानं तस्मात् सम्यक्चारित्रमित्येवम्भूतया गता मुक्तिस्थानं प्राप्ताः परम्परागताः तेभ्यः । एते च कैश्चिदनियतदेशा अभ्युपगम्यन्ते,

यत्र क्लेशक्षयस्तत्र विज्ञानमवतिष्ठते । बाधा च सर्वथाऽस्येह तदभावान्न जातुचित् ॥ १ ॥

इति वचनात्, एतन्निरासायाह—लोकाग्रमुपगतेभ्यः लोकाग्रमीषत्प्राग्भाराख्यायाः पृथिव्या उपरिक्षेत्रं तदुप

सामीप्येन तदपराभिन्नदेशतया निःशेषकर्मक्षयपूर्वकं गताः प्राप्ताः । उक्तं च—

जत्थ य एगो सिद्धो तत्थ य अणंता भवक्खयविमुक्का । अन्नोन्नमणाबाहं चिट्ठंति सुही सुहं पत्ता ॥ १ ॥

तेभ्यः । ननु क्षीणकर्मणो जीवस्य कथं लोकाग्रं यावद्गतिः ? उच्यते—पूर्वप्रयोगादियोगात् । यदाह—

पूर्वप्रयोगसिद्धेर्बन्धच्छेदादसङ्गभावाच्च । गतिपरिणामाच्च तथा सिद्धस्योर्ध्वं गतिः सिद्धा ॥ ? ॥

ननु सिद्धिचेत्रात्परतोऽधस्तिर्यग्वा कस्मान्न गच्छन्ति ?, अत्राऽप्युक्तम्—

नाऽधो गौरवविगमादसङ्गभावाच्च गच्छति विमुक्तः । लोकान्तादपि न परं प्लवक इवोपग्रहाभावात् ॥ १ ॥

योगप्रयोगयोश्चाभावात्तिर्यग् न तस्य गतिरस्ति । तस्मात्सिद्धस्योर्ध्वं ह्यालोकान्ताद्गतिर्भवति ॥ २ ॥ इति ॥

नमः सदा सर्वसिद्धेभ्यः—नमो नमोऽस्तु, सदा सर्वकालं, सर्वसिद्धेभ्यः—सर्वं साध्यं सिद्धं येषां ते सर्वसिद्धाः तेभ्यः, अथवा सर्वसिद्धेभ्यः तीर्थसिद्धादिभेदेभ्यः, यथोक्तम्—[2]तित्थसिद्धा १ अतित्थसिद्धा २ तित्थयरसिद्धा ३ अतित्थयरसिद्धा ४ सयंबुद्धसिद्धा ५ पत्तेयबुद्धसिद्धा ६ बुद्धबोहियसिद्धा ७ थीलिङ्गसिद्धा ८ पुरिसलिङ्गसिद्धा ९ नपुंसकलिङ्गसिद्धा १० सलिङ्गसिद्धा ११ अन्नलिङ्गसिद्धा १२ गिहिलिङ्गसिद्धा १३ एगसिद्धा १४

---

१ यत्र चैकः सिद्धस्तत्र चानन्ता भवक्षयविमुक्ताः । अन्योन्यमनाबाधं तिष्ठन्ति सुखिनः सुखं प्राप्ताः ॥ १ ॥

२ तीर्थसिद्धाः, अतीर्थसिद्धाः, तीर्थकरसिद्धाः, अतीर्थकरसिद्धाः, स्वयंबुद्धसिद्धाः, प्रत्येकबुद्धसिद्धाः, बुद्धबोधितसिद्धाः, स्त्रीलिङ्गसिद्धाः, पुरुषलिङ्गसिद्धाः, नपुंसकलिङ्गसिद्धाः, स्वलिङ्गसिद्धाः, अन्यलिङ्गसिद्धाः, गृहिलिङ्गसिद्धाः, एकसिद्धाः, अनेकसिद्धाः,

अयोगसिद्धा १५ । तत्र तीर्थे चतुर्विधश्रमणसङ्घे उत्पन्ने सति ये सिद्धाः ते तीर्थसिद्धाः । १ । अतीर्थे जिनान्तरे साधुव्यवच्छेदे सति जातिस्मरणादिनाऽवाप्तापवर्गमार्गाः सिद्धाः अतीर्थसिद्धाः, मरुदेवीप्रभृतयो वा, तदा तीर्थस्याऽनुत्पन्नत्वात् । २ । तीर्थकरसिद्धाः तीर्थकरत्वमनुभूय सिद्धाः । ३ । अतीर्थकरसिद्धाः सामान्यकेवलित्वे सति सिद्धाः । ४ । स्वयं बुद्धाः सन्तो ये सिद्धाः ते स्वयंबुद्धसिद्धाः । ५ । प्रत्येकबुद्धाः सन्तो ये सिद्धाः तं प्रत्येकबुद्धसिद्धाः । ६ । स्वयम्बुद्धप्रत्येकबुद्धयोश्च बोध्युपधिश्रुतलिङ्गकृतो विशेषः—स्वयंबुद्धा हि बाह्यप्रत्ययमन्तरेण बुध्यन्ते, प्रत्येकबुद्धास्तु बाह्यप्रत्ययेन वृषभादिना करकण्ड्वादिवत्, उपधिस्तु स्वयंबुद्धानां पात्रादिर्द्वादशधा, प्रत्येकबुद्धानां प्रावरणवर्जो नवविधः; स्वयंबुद्धानां पूर्वाधीतश्रुतेऽनियमः, प्रत्येकबुद्धानां तु नियमतो भवत्येव; लिङ्गप्रतिपत्तिस्तु स्वयंबुद्धानां गुरुसन्निधावपि भवति, प्रत्येकबुद्धानां तु देवता लिङ्गं प्रयच्छति; बुद्धा आचार्या अवगततत्त्वाः तैर्बोधिताः सन्तो ये सिद्धाः ते बुद्धबोधितसिद्धाः । ७ । एते च सर्वेऽपि केचित् स्त्रीलिङ्गसिद्धाः, केचित् पुंलिङ्गसिद्धाः, केचित् नपुंसकलिङ्गसिद्धाः । ननु तीर्थकरा अपि किं स्त्रीलिङ्गसिद्धा भवन्ति ?, उच्यते, भवन्त्येव—यदुक्तं सिद्धप्राभृते—सव्वत्थोवा तित्थयरिसिद्धा, तित्थयरतित्थे नोतित्थयरसिद्धा असंखेज्जगुणा, तित्थयरितित्थे नोतित्थयरिसिद्धाओ असंखिज्जगुणाओ, तित्थयरितित्थे नोतित्थयरसिद्धा असंखेज्जगुणा इति । नपुंसकलिङ्गसिद्धास्तु तीर्थकरसिद्धा न भवन्त्येव, प्रत्येकबुद्धसिद्धास्तु पुंलिङ्गसिद्धा एव । ८ । ९ । १० । स्वलि-

(१) सर्वस्तोकास्तीर्थकरीसिद्धास्तीर्थकरतीर्थे नोतीर्थकरसिद्धा असंख्येयगुणाः, तीर्थकरीतीर्थे नोतीर्थकरीसिद्धा असंख्येयगुणाः, तीर्थकरीतीर्थे नोतीर्थकरसिद्धा असंख्येयगुणाः ।

ङ्गेन रजोहरणादिना द्रव्यलिङ्गेन सिद्धा स्वलिङ्गसिद्धाः । ११ । अन्येषां परिव्राजकादीनां लिङ्गेन सिद्धा अन्यलिङ्गसिद्धा । १२ । गृहिलिङ्गसिद्धा मरुदेव्यादय ।१३। एकैकस्मिन् समये एकाकिन' सिद्धाः एकसिद्धा ।१४। एकस्मिन् समये अष्टोत्तर शत यावत् सिद्धा अनेकसिद्धा' । १५ । यत उक्तम्—

बत्तीसा अडयाला सट्ठी बावत्तरी य बोद्धव्वा । चुलसीई छण्णउई दुरहियमट्ठोत्तरसय च ॥ १ ॥

नन्वेते सिद्धभेदा आद्ययोस्तीर्थसिद्धाऽतीर्थसिद्धयोरेवाऽन्तर्भवन्ति, तीर्थकरसिद्धादयो हि तीर्थसिद्धा वा स्युरतीर्थसिद्धा वेति । सत्यम्, सत्यप्यन्तर्भावे पूर्वभेदद्वयादेवोत्तरभेदाप्रतिपत्तेरज्ञातज्ञापनार्थं भेदाभिधानमदुष्टमिति । इत्थ सामान्येन सर्वसिद्धनमस्कार कृत्वा आसन्नोपकारित्वाद्वर्तमानतीर्थाधिपते श्रीमन्महावीरवर्धमानस्वामिनः स्तुतिं करोति—

जो देवाण वि देवो ज देवा पजली नमसति । त देवदेवमहिअ सिरसा वन्दे महावीर ॥ २ ॥

यो भगवान् महावीरो देवानामपि भवनवास्यादीना पूज्यत्वाद् देवः, अत एवाह—य देवा प्राञ्जलयो विनयरचितकरसम्पुटाः सन्तो नमस्यन्ति प्रणमन्ति, त भगवन्त देवदेवै शक्रादिभिर्महित पूजितम्, वन्दे शिरसा उत्तमाङ्गेन आदरप्रदर्शनार्थं चैतत् । त क ? महावीरम्, विशेषेण ईरयति कर्म गमयति याति वा शिवमिति वीरः, महाश्चासौ वीरश्च महावीरस्तम् । इत्थ स्तुतिं कृत्वा पुनः परोपकाराय आत्मभाववृद्धये च फलप्रदर्शनपरमिद पठति—

---

(१) द्वात्रिंशदष्टचत्वारिंशत् षष्टिर्द्वासप्ततिश्च बोद्धव्या । चतुरशीति षण्णवतिर्द्व्यधिकमष्टोत्तरशत च ॥ १ ॥

इक्को वि नमुक्कारो जिणवरवसहस्स वद्धमाणस्स । संसारसागराओ तारेइ नरं व नारिं वा ॥ ३ ॥

एकोऽप्यासतां बहवः, नमस्कारो द्रव्यभावसंकोचलक्षणः, जिनवरवृषभाय—जिनाः श्रुतावधिजिनादयः तेषां वराः केवलिनस्तेषां वृषभः तीर्थकरनामकर्मोदयादुत्तमो जिनवरवृषभस्तस्मै । स च ऋषभादिरपि भवतीत्याह—वर्धमानाय, यत्नात्कृतः सन्निति शेषः । किम्? संसरणं संसारस्तिर्यङ्नरनारकामरभवानुभावलक्षणः स एव भवस्थितिकायस्थितिभ्यामनेकधावस्थानेनालब्धपारत्वात्सागर इव संसारसागरः, तस्मात् तारयति पारं नयतीत्यर्थः । कमित्याह?—नरं वा नारीं वा—नरग्रहणं पुरुषोत्तमधर्मप्रतिपादनार्थम्, नारीग्रहणं तासामपि तद्भव एव संसारक्षयो भवतीति ज्ञापनार्थम् । यथोक्तं यापनीयतन्त्रे—

नो खलु इत्थी अजीवो, न यावि अभव्वा, न यावि दंसणविरोहिणी, नो अमाणुसा, नो अणायरियउप्पन्ना, नो असंखेज्जाउआ, नो अइकूरमई, नो अणुवसन्तमोहा, नो असुद्धाचारा, नो असुद्धबोंदी, नो ववसायवज्जिआ, नो अपुव्वकरणविरोहिणी, नो नवगुणट्ठाणरहिआ, नो अजोग्गा लद्धीए, नो अकल्लाणभायणं ति कहं न उत्तमधम्मस्स साहगा? इति ।

अयमत्र भावः—सति सम्यग्दर्शने परया भावनया क्रियमाण एकोऽपि नमस्कारस्तथाभूतस्याध्यवसायस्य

(१) नो खलु स्त्री अजीवः, न चाप्यभव्या, न चापि दर्शनविरोधिनी, नो अमानुष्या, नो अनार्योत्पन्ना, नो असंख्येयायुष्का, नो अतिक्रूरमतिः, नो अनुपशान्तमोहा, नो अशुद्धाचारा, नो अशुद्धशरीरा, नो व्यवसायवर्जिता, नो अपूर्वकरणविरोधिनी, नो नवगुणस्थानरहिता, नो अयोग्या लब्ध्याः, नो अकल्याणभाजनमिति कथं नोत्तमधर्मस्य साधिका? इति ।

हेतुर्भवति यथापूनात् भेणिमवाप्य निस्तरति भवोदधिमिति। अत' कार्ये कारणोपचारादेवमुच्यते। न च चारित्रस्य वैफल्यम्, तथाभूताध्ययनमात्रस्यैव चारित्ररूपत्वादिति। एतास्तिस्र स्तुतयो गणधरकृतत्वाद् नियमेनोच्यन्ते केचित्तु अन्ये अपि स्तुती पठन्ति—

यथा—

उज्जितसेलसिहरे दिक्खा नाणं निसीहिया जस्स। तं धम्मचक्कवट्टिं अरिहनेमिं नमसामि॥ ४॥

चत्तारि अट्ठ दस दो अ वंदिआ जिणवरा चउवीसं। परमट्ठनिट्ठिअट्ठा सिद्धा सिद्धिं मम दिसंतु॥ ५॥

सुगम। एवमेतत्पठित्वोपचितपुण्यसम्भार उचितेष्वौचित्येन प्रवृत्तिरिति ज्ञापनार्थं पठति पठन्ति वा—वेयावच्चगराणं सन्तिगराणं सम्मदिट्ठिसमाहिगराणं करेमि काउस्सग्गं—वैयावृत्यकराणां प्रवचनार्थं व्यापृतभावानां गोमुखयक्षाप्रतिचक्राप्रभृतीनां, शान्तिकराणां सर्वलोकस्य, सम्यग्दृष्टिविषये समाधिकराणाम्, एषां सम्बन्धिना षष्ठ्या' सप्तम्यर्थत्वादेतद्विषयमेतान् वाश्रित्य करोमि कायोत्सर्गम्। अत्र वन्दनादिप्रत्ययमित्यादि न पठ्यते, अपि तु अन्यत्रोच्छ्वसितेनेत्यादि, तेषामविरतत्वात् इत्थमेव वृद्धवृद्धैरुपकारदर्शनात्। एतद्व्याख्या च पूर्ववत्। नवरं स्तुतिं वैयावृत्यकराणां पुनस्तेनैव विधिना उपविश्य पूर्ववत् प्रणिपातदण्डकं पठित्वा मुक्ताशुक्तिमुद्रया प्रणिधानं कुर्वन्ति। यथा—

जय वीयराय! जगगुरु! होउ मम तुह पभावओ भयवं!। भवनिव्वेओ मग्गाणुसारिआ इट्ठफलसिद्धी॥१॥

लोगविरुद्धच्चाओ गुरुजणपूआ परत्थकरणं च। सुहगुरुजोगो तव्वयणसेवणा आभवमखण्डा॥ २॥

जय वीतराग ! जगद्गुरो ! इति भगवतस्त्रिलोकनाथस्य बुद्ध्या सन्निधानार्थमामन्त्रणम्, भवतु जायतां ममेत्यात्मनिर्देशः, तव प्रभावतः तव सामर्थ्येन, भगवन्निति पुनः सम्बोधनं भक्त्यतिशयख्यापनार्थम्। किं तदित्याह— भवनिर्वेदः संसारनिर्वेदः। न हि भवादनिर्विण्णो मोक्षाय यतते, अनिर्विण्णस्य तत्प्रतिबन्धान्मोक्षे यत्नोऽयत्न एव, निर्जीवक्रियातुल्यत्वात्। तथा मार्गानुसारिता असद्ग्रहविजयेन तत्त्वानुसारिता, तथा इष्टफलसिद्धिरभिमतार्थनिष्पत्तिः ऐहलौकिकी, ययोपगृहीतस्य चित्तस्वास्थ्यं भवति तस्माच्चोपादेयप्रवृत्तिः। तथा लोकविरुद्धत्यागः सर्वजननिन्दादिलोकविरुद्धानुष्ठानवर्जनम्। यदाह—

सव्वस्स चेव निंदा विसेसओ तह य गुणसमिद्धाणं। उजुधम्मकरणहसणं रीढा जणपूयणिज्जाणं ॥ १ ॥
बहुजणविरुद्धसंगो देसाचारस्स लंघणं चेवं । उव्वणभोओ अ तहा दाणाइवियडमन्नेओ ॥ २ ॥
साहुवसणम्मि तो सो सइ सामत्थम्मि अपडियारो अ। एमाइयाइं इत्थं लोगविरुद्धाइं णेआइं ॥ ३ ॥

गुरुजनस्य पूजा उचितप्रतिपत्तिर्गुरुपूजा, गुरवश्च यद्यपि धर्माचार्य्या एवोच्यन्ते तथापीह मातापित्रादयोऽपि गृह्यन्ते। यदुक्तम्—

माता पिता कलाचार्य्य एतेषां ज्ञातयस्तथा। वृद्धा धर्मोपदेष्टारो गुरुवर्गः सतां मतः ॥ १ ॥

---

(१) सर्वस्य चैव निन्दा विशेषतस्तथा च गुणसमृद्धानाम्। ऋजुधर्मकरणहसनं रीढा जनपूजनीयानाम् ॥ १ ॥
बहुजनविरुद्धसङ्गो देशाचारस्य लङ्घनं चैव। उल्वणभोगश्च तथा दानादिविकटमन्यस्मात् ॥ २ ॥
साधुव्यसने तोषः सति सामर्थ्येऽप्रतिकारश्च। एवमादिकानि इत्थं (अत्र) लोकविरुद्धानि ज्ञेयानि ॥ ३ ॥

परार्थकरण सत्त्वार्थकरण जीवलोकसार पौरुपचिह्नमेतत् । सत्येतावति लौकिके सौन्दर्ये लोकोत्तरधर्माधि-
कारी भवतीत्याह- शुभगुरुयोगो विशिष्टचारित्रयुक्ताचार्यसम्बन्धः, तथा तद्वचनसेवा सद्गुरुवचनसेवना, न जातु-
चिदयमहितमुपदिशति, आभवमाससारमखण्डा सम्पूर्णा । इद च प्रणिधान न निदानरूपम्, प्रायेण निस्सङ्गा-
भिलापरूपत्वात् । एतच्चाप्रमत्तसयतादर्वाग् कर्तव्यम्, अप्रमत्तादीनां मोक्षेऽप्यनभिलाषात् । तदेवविधशुभफलप्र-
णिधानपर्यन्त चैत्यवन्दनम् ॥ १२४ ॥ इदानीमनन्तरकरणीयमाह—

ततो गुरूणामभ्यर्णे प्रतिपत्तिपुर सरम् । विदधीत विशुद्धात्मा प्रत्याख्यानप्रकाशनम् ॥१२५॥

ततोऽनन्तर गुरूणा धर्माचार्याणा देववन्दनार्थमागताना स्नात्रादिदर्शनधर्मकथाद्यर्थं तत्रैव स्थितानाभ्यर्णे
उचिते समीपे, उचितत्व चार्धचतुर्थहस्तप्रमाणात् क्षेत्राद् बहिरवस्थानम्, प्रतिपत्तिर्व्याख्यास्यमाना वन्दनकादि
रूपा वा, तत्पुर सर तत्पूर्वक, विदधीत कुर्यात्, विशुद्धात्मा निर्मलचित्तो न तु दम्भादियुक्त, प्रत्याख्यानस्य
देवसमीपे कृतस्य प्रकाशन गुरो. पुरत' प्रकटनम्, त्रिविध हि प्रत्याख्यानविधानमात्मसाक्षिक देवसाक्षिक गुरु-
साक्षिक च ॥ १२५ ॥ प्रतिपत्तिपुरःसरमित्युक्तामिति गुरुप्रतिपत्तिं श्लोकद्वयेन दर्शयति—

अभ्युत्थान तदालोकेऽभियान च तदागमे। शिरस्यञ्जलिसश्लेष स्वयमासनढौकनम् ॥१२६॥
आसनाऽभिग्रहो भक्त्या वन्दना पर्युपासनम् । तद्यानेऽनुगमश्चेति प्रतिपत्तिरिय गुरो. ॥१२७॥

अभ्युत्थान ससम्भ्रममासनत्यागः, तदालोके गुरूणामालोकने सति, अभियानमभिमुख गमन तदागमे

गुर्वागमे, शिरसि मस्तके गुरुदर्शनसमकालमञ्जलिसंश्लेषः करकोरककरणं नमो खमासमणाणं ति वचनोच्चारपूर्वकं स्वयमित्यात्मना न तु परप्रेषणेन आसनढौकनमासनसान्निधापनम् ॥ १२६ ॥ आसनाऽभिग्रहः आसन उपविष्टेषु गुरुषु स्वयमासितव्यमित्यभिग्रहः आसनाभिग्रहः, भक्त्या भक्तिपूर्वकं वन्दना पञ्चविंशत्यावश्यकविशुद्धं वन्दनं स्थानस्थितानां च गमनादिव्याकुलत्वाभावे पर्युपासनं सेवा, तेषां गुरूणां याने गमनेऽनुगमनं पृष्ठतः कतिपयपदानुसरणमियं प्रतिपत्तिरुपचारविनयरूपा गुरोर्धर्माचार्यस्य ॥ १२७ ॥

ततो गुरुपार्श्वे धर्मदेशनां श्रुत्वा—

**ततः प्रतिनिवृत्तः सन् स्थानं गत्वा यथोचितम्। सुधीर्धर्माऽविरोधेन विदधीतार्थचिन्तनम् ॥१२८**

ततो देवगृहात् प्रतिनिवृत्तो व्यावृत्तः सन् यथोचितं स्थानं गत्वा यथोचितमिति यदा राजादिस्तदा धवलगृहं यद्यमात्यादिस्तदा करणम्; अथ वणिगादिस्तदा आपणमिति सुधीर्बुद्धिमान् विदधीत अर्थचिन्तनमर्थोपायचिन्तां धर्माविरोधेनेति धर्मस्य जिनधर्मस्य अविरोधेन अबाधया। अत्र चार्थचिन्तनमित्यनुवाद्यं तस्य स्वतःसिद्धत्वात्, धर्माविरोधेनेति विधेयमप्राप्तत्वात्। धर्माविरोधश्च राज्ञां दरिद्रेश्वरयोर्मान्यामान्ययोरुत्तमनीचयोर्माध्यस्थ्येन न्यायदर्शनात्, नियोगिनां च राजार्थप्रजार्थसाधनेन, वणिजां च कूटतुलाकूटमानादिपरिहारेण पञ्चदशकर्मादानपरिहारेण च बोद्धव्यः ॥ १३८ ॥

**ततो माध्याह्निकीं पूजां कुर्यात् कृत्वा च भोजनम्। तद्विद्भिः सह शास्त्रार्थरहस्यानि विचारयेत् १२९**

ततस्तदनन्तरं माध्याह्निकीं मध्याह्नकालभाविनीं पूजां जिनमपर्य्यां कुर्यात्, कृत्वा विधाय च भोजनमित्यनुवादः। माध्याह्निकीपूजाभोजनयोश्च न कालनियमः। तीव्रबुभुक्षोर्हि बुभुक्षाकालो भोजनकाल इति रूढेर्मध्याह्नादर्वागपि गृहीतप्रत्याख्यानं तीरयित्वा देवपूजापूर्वकं भोजनं कुर्वन्न दुष्यति। अत्र चास्य विधिः —

जिनपूओचिअदाणं परियणसम्भालणा उचियकिच्च। ठाणुवएसो य तहा पच्चक्खाणस्स सम्भरणं ॥ १ ॥

तथा भोजनाऽनन्तरं सम्भरतो ग्रन्थिसहितादेः प्रत्याख्यानस्य करणं प्रमादपरिजिहीर्षोर्हि प्रत्याख्यानं विना न युक्तं क्षणमप्यासितुम्। शास्त्रार्थानां रहस्यान्यैदम्पर्य्याणि विचारयेदिदमित्थं भवति नेति वा सम्प्रधारयेत्, कथं? सह सार्धं। कैः? तद्विद्भिः तच्छास्त्रार्थरहस्यं विदन्ति ये तैः, गुरुमुखात् श्रुतान्यपि शास्त्रार्थरहस्यानि परिशीलनाविकलानि न चेतसि सुदृढप्रतिष्ठानि भवन्तीति कृत्वा ॥ १२९ ॥

ततश्च सन्ध्यासमये कृत्वा देवार्चनं पुनः। कृतावश्यककर्मा च कुर्यात् स्वाध्यायमुत्तमम् ॥१३०॥

ततस्तदनन्तरं यो द्विर्भुङ्क्ते स विकालसमये अन्तर्मुहूर्तादर्वाग् भोजनं कृत्वा सन्ध्यासमये पुनस्तृतीयवारं देवार्चनं कृत्वा साधुसमीपं गत्वा भूमिकौचित्येन षड्विधावश्यकं सामायिक–चतुर्विंशतिस्तव–वन्दनक–प्रतिक्रमण–कायोत्सर्ग–प्रत्याख्यानलक्षणं कुर्यात्, तत्र सामायिकमार्तरौद्रध्यानपरिहारेण धर्मध्यानपरिकरणेन शत्रुमित्रतृणकाञ्चनादिषु समता, तच्च पूर्वमेवोक्तम्। चतुर्विंशतेस्तीर्थकराणां नामोत्कीर्तनपूर्वकः स्तवो गुणकीर्तनं तस्य च कायो-

१ जिनपूजोचितदानं परिजनसम्भालनमुचितकृत्यम्। स्थानोपदेशश्च तथा प्रत्याख्यानस्य सम्मरणम् ॥ १ ॥

त्सर्गे मनसाऽनुध्यानं शेषकालं व्यक्तवर्णपाठः । अयमपि पूर्वमुक्तः । वन्दनं वन्दनायोग्यानां धर्माचार्याणां पञ्चविंशत्यावश्यकविशुद्धं द्वात्रिंशद्दोषरहितं नमस्करणम् तत्र पञ्चविंशतिरावश्यकानि यथा—

दुओणयं अहाजायं किय(इ)कम्मं बारसावयं(त्तं) । चउसिरं तिगुत्तं च दुपवेसं एगनिक्खमणं ॥ १ ॥ इति ॥

द्वे अवनमने " इच्छामि खमासमणो वंदिउं जावणिज्जाए निसीहिआए " इत्यभिधाय गुरोश्छन्दानुज्ञापनाय प्रथममवनमनम् । १ । यदा पुनः कृतावर्तो निष्क्रान्त इच्छामीत्यादिसूत्रमभिधाय पुनश्छन्दोऽनुज्ञापनायैव तदा द्वितीयम् । २ । तथा यथाजातं जातं जन्म तच्च द्वेधा प्रभवः प्रव्रज्याग्रहणं च । तत्र प्रसवकाले रचितकरसंपुटो जायते प्रव्रज्याकाले च गृहीतरजोहरणमुखवस्त्रिक इति यथा जातमस्य स यथाजातस्तथाभूत एव वन्दते इति वन्दनमपि यथाजातम् । ३ । तथा द्वादशावर्ताः कायचेष्टाविशेषा गुरुचरणन्यस्तहस्तशिरःस्थापनरूपा यस्मिंस्तद् द्वादशावर्तमिह च प्रथमप्रविष्टस्य अहो कायं इत्यादिसूत्रोच्चारणगर्भाः षडावर्ताः निष्क्रम्य पुनः प्रविष्टस्याऽपि त एव षडिति द्वादश । १५ । चत्वारि शिरांसि यस्मिन् तच्चतुःशिरः प्रथमप्रवेशे क्षामणाकाले शिष्याचार्ययोरवनमच्छिरोद्वयम्, निष्क्रम्य पुनः प्रवेशे तथैव च शिरोद्वयम् । १९ । त्रिगुप्तं मनोवाक्कायकर्मभिर्गुप्तम् । २२ । तथा प्रथमोऽनुज्ञाप्य प्रवेशो द्वितीयः पुनर्निर्गत्य प्रवेश इति द्वौ प्रवेशौ यत्र तद् द्विप्रवेशमेकं निष्क्रमणमावश्यक्या निर्गच्छतो यत्र तदेकनिष्क्रमणम् । २५ । द्वात्रिंशद्दोषा यथा—

---

( १ ) द्व्यवनतं यथाजातं कृतिकर्म द्वादशावर्तम् । चतुःशिरः त्रिगुप्तं च द्विप्रवेशमेकनिष्क्रमणम् ॥ १ ॥

अणाढिय च थद्ध च पविद्ध परिपिंडिय । टोलगइ अंकुस चेव तहा कच्छभरिंगिअ ॥ १ ॥
मच्छोव्वत्त मणसा य पउट्ठ तह य वेइयाबद्ध । भयसा चेव भयत मेत्ती गारवकारणा ॥ २ ॥
तेणिअ पडणीअ चेव रुट्ठ तज्जियमेव य । सढ च हीलिअं चेव तहा विपलिउचिअ ॥ ३ ॥
दिट्ठमदिट्ठ च तहा सिंग च करमोअण । आलिद्धमनालिद्ध ऊण उत्तरचूलिअ ॥ ४ ॥
मूअ च ढड्ढर चेव चुडलिं च अपच्छिम । बत्तीसदोसपरिसुद्ध किइकम्म पउजए ॥ ५ ॥

अनादृत सम्भ्रमरहित वन्दनम् । १ । स्तब्ध मदाष्टकवशीकृतस्य वन्दनम् । २ । प्रविद्ध वन्दन ददत एव पलायनम् । ३ । परिपिण्डित प्रभूतानां युगपद्वन्दनम्, यद्वा कुक्षेरुपरि हस्तौ व्यवस्थाप्य परिपिण्डितकरचरणस्याऽव्यक्तसूत्रोच्चारणपुर मर वन्दनम् । ४ । टोलगति तिड्डवदुत्प्लुत्योत्प्लुत्य विसस्थुल वन्दनम् । ५ । अङ्कुशमुपकरणे चोलपट्टकल्पादौ हस्ते वा अवज्ञया समाकृष्य अङ्कुशेन गजस्येवाचार्यस्योर्ध्वस्थितस्य शयितस्य प्रयोजनान्तरव्यग्रस्य वा वन्दनकार्थमासन उपवेशनम् । न हि पूज्या कदाचिदप्याकर्षणमर्हन्ति, अविनयत्वादस्य, यद्वा

(१) अनादृत च स्तब्ध च प्रविद्ध परिपिण्डितम् । टोलगति अङ्कुश च तथा कच्छपरिङ्गितम् ॥ १ ॥
मत्स्योद्वृत्त मनसा च प्रदुष्ट तथा च वेदिकाबद्धम् । भयाद् चैव भजमान मैत्री गौरवकारणम् ॥ २ ॥
स्तैनिक प्रत्यनीक चैव रुष्ट तर्जितमेव च । शठ च हीलित चेव तथा विपरिकुञ्चितम् ॥ ३ ॥
दृष्टमदृष्ट च तथा शृङ्ग च करमोचनम् । आश्लिष्टमनाश्लिष्टमूनमुत्तरचूलित(क)म् ॥ ४ ॥
मूक च ढड्ढर चैव चुडलिश्चापश्चिमम् । द्वात्रिंशद्दोषपरिशुद्ध कृतिकर्म प्रयुञ्जीत ॥ ५ ॥

रजोहरणमङ्कुशवत्करद्वयेन गृहीत्वा वन्दनम्. यदि वाऽङ्कुशाक्रान्तस्य हस्तिन इव शिरोनमनोन्नमने कुर्वाणस्य वन्दनम् । ६ । कच्छपरिङ्गितमूर्ध्वस्थितस्य तित्तिसणायरा इत्यादिसूत्रमुच्चारयत उपविष्टस्य वा अहो कायं काय इत्यादिसूत्रमुच्चारयतोऽग्रतोऽभिमुखं पश्चादभिमुखं च रिङ्गतश्चलतो वन्दनम् । ७ । मत्स्योद्वृत्तमुत्तिष्ठन्निविशमानो वा जलमध्ये मत्स्य इवोद्वर्तते उद्वेल्लते यत्र तत् । यद्वा एकं वन्दित्वा द्वितीयस्य साधोर्द्रुतं द्वितीयपार्श्वेन रेचकावर्तेन मत्स्यवत् परावृत्य वन्दनम् । ८ । मनसा प्रदुष्टं शिष्यस्तत्सम्बन्धी वा गुरुणा किञ्चित्परुषमभिहितो यदा भवति तदा मनसो दूषितत्वाद् मनसा प्रदुष्टं, यद्वा वन्द्यो हीनः केनचिद्गुणेन ततोऽहमेवंविधेनाऽपि वन्दनं दापयितुमारब्ध इति चिन्तयतो वन्दनम् । ९ । वेदिकाबद्धं जानुनोरुपरि हस्तौ निवेश्य अधो वा पार्श्वयोर्वा उत्सङ्गे वा जानु करद्वयान्तः कृत्वा वा इति पञ्चभिर्वेदिकाभिर्बद्धं युक्तं वन्दनम् । १० । बिभ्यत् सङ्घात् कुलात् गच्छात् क्षेत्राद्वा निष्कासयिष्येऽहमिति भयाद् वन्दनम् । ११ । भजमानं भजते मां सेवायां पतितो मम अग्रे वा मम भजनं करिष्यति ततोऽहमपि वन्दनसत्कं निहोरकं निवेशयामीति बुद्ध्या वन्दनम् । १२ । मैत्रीतो मम मित्रमाचार्य इति, आचार्येणेदानीं मैत्री भवत्विति वा वन्दनम् । १३ । गौरवाद्वन्दनकसामाचारीकुशलोऽहमिति गर्वादन्येऽप्यवगच्छन्तु मामिति यथावदावर्तादीनाराधयतो वन्दनम् । १४ । कारणाद् ज्ञानादिव्यतिरिक्ताद्वस्त्रादिलाभहेतोर्वन्दनम्, यद्वा ज्ञानादिनिमित्तमपि लोकपूज्योऽन्येभ्यो वाऽधिकतरो भवामीत्यभिप्रायतो वन्दनम्, यद्वा वन्दनकमूल्यवशीकृतो मम प्रार्थनाभङ्गं न करिष्यतीति बुद्ध्या वन्दनम् । १५ । स्तैनिकं मम लाघवं भविष्यतीति परेभ्य आत्मानं निगूहयतो वन्दनम्, अयमर्थः—एवं नाम शीघ्रं वन्दते यथा स्तेनवत् केनाचिद् दृष्टः केनचिन्नेति ।

१६ । प्रत्यनीकमाहारादिकाले वन्दनम् । १७ । यदाह—

वक्खित्तपराहुत्ते पमत्ते मा कयावि वंदिज्जा ॥ आहारं च करिंते नीहार वा जइ करेइ ॥ १ ॥

रुष्ट क्रोधाध्मातस्य गुरोर्वन्दनमात्मना वा क्रुद्धेन वन्दनम् । १८ । तर्जितमवन्द्यमानो न कुप्यसि वन्द्यमानश्चाविशेषज्ञतया न प्रसीदसि इति निर्भर्त्सयतो यद्वा बहुजनमध्ये मा वन्दनं दापयस्तिष्ठसि ज्ञास्यते मया तवैकाकिन इति धिया तर्जन्या शिरसा वा तर्जयतो वन्दनम् । १९ । शठ शाठ्येन विश्रम्भार्थं वन्दनं ग्लानादिव्यपदेशं वा कृत्वा न सम्यग्वन्दनम् ।२०। हीलित हे गणिन् वाचक ! किं भवता वन्दितेनेत्यादिना अवजानतो वन्दनम् । २१ । विपरिकुञ्चितम् अर्धवन्दित एव देशादिकथाकरणम् । २२ । दृष्टादृष्ट तमसि स्थितः केनचिदन्तरित एवमेवास्ते दृष्टस्तु वन्दत इति । २३ । शृङ्ग अहो काय काय इत्याद्यावर्तानुच्चारयतो ललाटमध्यदेशमस्पृशतः शिरसो वामदक्षिणे शृङ्गे स्पृशतो वन्दनकरणम् । २४ । कर कर इव राजदेयभाग इव अर्हत्प्रणीतो वन्दनककरोऽवश्यदातव्य इति धिया वन्दनम् । २५ । मोचन लौकिककराद्वयं मुक्ता न मुच्यामहे वन्दनकरादिति बुद्ध्या वन्दनम् । २६ । आश्लिष्टानाश्लिष्टमत्र चतुर्भङ्गी, सा च अहो कायं काय इत्याद्यावर्तकाले भवति रजोहरणस्य शिरसश्च कराभ्यामाश्लेषणं, रजोहरणस्य न शिरसः, शिरसो न रजोहरणस्य, न रजोहरणस्य नाऽपि शिरसः । अत्र प्रथमः शुद्धः शेषास्तु दुष्टाः । २७ । न्यून व्यञ्जनाभिलापावश्यकैरसम्पूर्णम् । २८ । उत्तरचूलं वन्दनं दत्त्वा महता शब्देन मस्तकेन वन्दे इत्यभिधानम् । २९ । मूक आलापाननुच्चारयतो वन्दनम् । ३० । ढड्ढर महता

( १ ) व्याक्षिप्तपराभृतान् प्रमत्तान् मा कदापि वन्दिष्ठा । आहारं च कुर्वतो नीहारं वा यदि करोति ॥ १ ॥

शब्देनोच्चारयतो वन्दनम् । ३१ । चुडली उन्मुकं यथोन्मुकं गृह्यते तथा रजोहरणं गृहीत्वा वन्दनं, यद्वा यत्र दीर्घहस्तं प्रसार्य्य वन्दे इति भणतो वन्दनम्, अथवा हस्तं भ्रमयित्वा सर्वान् वन्दे इति वदतो वन्दनम् । ३२ ।

वन्दनके च शिष्यस्य षडभिलापा भवन्ति, तद्यथा इच्छा अनुज्ञापना अव्याबाधं यात्रा यापना अपराध-क्षामणा च, यदाह—

इच्छा य अणुन्नवणा अव्वाबाहं च जत्त जवणा य । अवराहखामणा चिय छठाणा हुंति वन्दणए ॥ १ ॥

गुरुवचनान्यपि षडेव यथा छन्देन अनुजानामि तथेति तुभ्यमपि वर्तते एवमहमपि क्षमयामीति । यदाह—

छंदेनं अणुजाणामि तह त्ति तुब्भं पि वट्टइ एवं । अहमवि खामेमि तुमे आलावा वंदणरिहस्स ॥ १ ॥

एते च द्वये अपि यथास्थानं सूत्रव्याख्यायां दर्शयिष्यन्ते । सूत्रं च--

इच्छामि खमासमणो वंदिउं जावणिज्जाए निसीहियाए अनुजाणह मे मिउग्गहं निसीहि अहो कायं कायसं-फासं खमणिज्जो भे किलामो अप्पकिलंताणं बहुसुभेण भे दिवसो वइक्कंतो जत्ता भे जवणिज्जं च भे खामेमि खमासमणो देवसिअं वइक्कमं आवसिआए पडिक्कमामि खमासमणाणं देवसिआए असायणाए तित्तीसन्नयराए जं किंचि मिच्छाए मणदुकडाए वयदुकडाए कायदुकडाए कोहाए माणाए मायाए लोहाए सव्वकालियाए सव्वमिच्छोवयाराए सव्वधम्माइक्कमणाए आसायणाए जो मे अइआरो कओ तस्स खमासमणो ! पडिक्कमामि

( १ ) इच्छा चानुज्ञापना अव्याबाधं च यात्रा यापना च । अपराधक्षामणा चैव षट् स्थानानि भवन्ति वन्दनके ॥ १ ॥

( २ ) छन्देनानुजानामि तथेति तवाऽपि वर्तते एवम् । अहमपि क्षमयामि तवालापाद् वन्दनार्हस्य ॥ १ ॥

निंदामि गरिहामि अप्पाणं वोसिरामि ।

व्याख्या—अत्र हि शिष्यो गुरुवन्दनेन वन्दितुकाम पूर्वं लघुवन्दनपुरःसरं सदशकां प्रमृज्योपविष्ट एव मुखवस्त्रिकां पञ्चविंशतिकृत्व प्रत्युपेक्षते, तया च शरीर पञ्चविंशतिकृत्व एव प्रमृज्य परेण विनयेन मनोवाक्कायसंशुद्धो गुरो मकाशादात्मप्रमाणात् क्षेत्राद् बहिःस्थितोऽधिज्यचापवदवनतकाय' करद्वयगृहीतरजोहरणादिर्वन्दनायोद्यत एवमाह—इच्छामि अभिलषामि, अनेन बलाभियोग परिहृत, क्षमाश्रमण ! ' क्षमूषि सहने ' इत्यस्य षित्वादङि क्षमा सहनमित्यर्थः, श्राम्यति ससारविषये खिन्नो भवति तपस्यतीति वा, नन्द्यादित्वात् कर्तरि अने श्रमण , क्षमाप्रधान' श्रमण क्षमाश्रमण' तस्य सम्बोधने प्राकृते खमासमणो ! " डो दीर्घो वा " ॥ ( सिद्धहेम०८।३।३८ ) ॥ इति आमन्त्र्ये सेर्डोकार', क्षमाग्रहणेन मार्दवार्जवादयो गुणा सूचिताः । ततश्च क्षमादिगुणोपलक्षितयतिप्रधान ! अनेन वन्दनार्हत्व तस्यैव सूचितम्, किं कर्तुं वन्दितु नमस्कर्तुं भवन्तमिति गम्यते, कया ? यापनीयया नैषेधिक्या, अत्र नैषेधिक्येति विशेष्य, यापनीययेति विशेषणम्, ' षिधू गत्याम् ' इत्यस्य निपूर्वस्य घञि निषेध प्राणातिपातादिनिवृत्ति स प्रयोजनमस्या नैषेधिकी तनु तया। कीदृश्या? यापनीयया ' याक् प्रापणे ' अस्य णिगन्तस्य प्वागमे यापयतीति यापनीया प्रवचनीयादित्वात् कर्तर्यनीय तया, शक्तिसमन्वितया इत्यर्थ. । अथ समुदायार्थ.–हे श्रमणगुणयुक्त ? अह शक्तिसमन्वितशरीर प्रतिषिद्धपापक्रियश्च त्वा वन्दितुमिच्छामि ! अत्र विश्राम । अत्र चान्तरे गुरुर्यदि व्याक्षेपबाधायुक्तस्तदा भणति प्रतीक्षस्वेति । तच्च बाधादिकारण यदि कथनयोग्य भवति तदा कथयति अन्यथा तु नेति चूर्णिकारमतम्, वृत्तिकारस्य तु मत

त्रिविधेनेति भणति मनसा वचसा कायेन प्रतिषिद्धोऽपीत्यर्थः। ततः शिष्यः संक्षेपवन्दनं करोति। व्याक्षेपादि-रहितश्चेद्गुरुः तदा वन्दनमनुज्ञातुकामः छन्देनेति वदति छन्देनाऽभिप्रायेण ममाऽपि एतदभिप्रेतमित्यर्थः। ततो विनेयोऽवग्रहाद् बहिःस्थित एवैवमाह अनुजानीत अनुमन्यध्वं मे इति आत्मनिर्देशे, किं? मितश्चासाववग्रहश्च मितावग्रहः इहाचार्यस्य चतसृषु दिक्षु आत्मप्रमाणं क्षेत्रमवग्रहः, तस्मिन्नाचार्य्याऽनुज्ञां विना प्रवेष्टुं न कल्पते, यदाह—

आयप्पमाणमेत्तो चउदिसं होइ अवग्गहो गुरुणो। अणणुण्णायस्स सया न कप्पए तत्थ पविसेउं ॥ १ ॥

ततो गुरुर्भणति—अनुजानामि। ततः शिष्यो भुवं प्रमृज्य नैषेधिकीं कुर्वन् गुर्ववग्रहे प्रविशति। निसीहीति निषिद्धाऽशुभव्यापारः सन् प्रविशाम्यहमित्यर्थः। ततः संदंशप्रमार्जनपूर्वकमुपविशति। गुरुपादान्तिके च भूमौ निधाय रजोहरणं तन्मध्ये च गुरुचरणयुगलं संस्थाप्य मुखवस्त्रिकया वामकर्णादारभ्य वामहस्तेन दक्षिणकर्णं यावल्ललाटमविच्छिन्नं च वामं जानु त्रिः प्रमृज्य मुखवस्त्रिकां वामजानूपरि स्थापयति। ततोऽकारोच्चारणसमकालं रजोहरणं कराभ्यां संस्पृश्य होकारोच्चारणसमकालं ललाटं स्पृशति। ततः काकारोच्चारणसमकालं रजोहरणं स्पृष्ट्वा यंकारोच्चारणसमकालं ललाटं स्पृशति। पुनश्च काकारोच्चारणसमकालं रजोहरणं स्पृष्ट्वा यकारोच्चारणसमकालं ललाटं स्पृशति। ततः संफासमिति वदन् शिरसा पाणिभ्यां च रजोहरणं स्पृशति। ततः शिरसि बद्धाञ्जलिः 'खमणिज्जो भे किलामो' इत्यारभ्य 'दिवसो वइक्कंतो' यावद् गुरुमुखे निविष्टदृष्टिः पठति। अधस्तात्

( १ ) आत्मप्रमाणमात्रश्चतुर्दिशं भवत्यवग्रहो गुरोः। अननुज्ञातस्य सदा न कल्पते तत्र प्रवेष्टुम् ॥ १ ॥
( २ ) त्रिः प्रदक्षिणीकृत्य प्रमृज्य इति प्रत्यन्तरम्।

कायोऽध काय पादलक्षणस्त प्रति कायन निजदेहेन हस्तललाटलक्षणेन सस्पर्श आमर्शस्त 'करोमि' इति गम्यते। एतदपि ममानुजानीथेत्यनेन योग । आचार्यमननुज्ञाप्य हि सस्पर्शो न कार्य. । ततो वक्ति—खमणिज्जो खमणीय सोढव्य, भे भवद्भि, क्लिामो क्रम. सस्पर्शे सति देहग्लानिरूप'। तथा 'अप्पकिलताण अल्प स्तोक क्रान्त क्रमा येषा तेऽल्पक्रान्तास्तेषामल्पवेदनानामित्यर्थ', 'बहुसुभेण' बहु च तच्छुभ च बहुशुभ तेन बहुसुखेनेत्यर्थ, 'भे' भवताम् दिवसो वइक्कतो' दिवसो व्यतिक्रान्त । अत्र दिवसग्रहण रात्रिपक्षादीनामुपलक्षण द्रष्टव्यम्। एव याजितकरसपुट गुरो प्रतिवचनमीक्षमाण शिष्य पत्याह गुरु—'तह त्ति' तथेति प्रतिश्रवणे अत्र तथाकार. यथा भवान् ब्रवीति तथेत्यर्थ। एव तावदाचार्यशरीरवार्ता पृष्टा। अथ तपोनियमविषया वार्ता पृच्छन्नाह—जत्ता भे, 'ज' इत्यनुदात्तस्वरेणोच्चारयन् रजोहरण कराभ्या स्पृष्ट्वा रजोहरणललाटयोरन्तराले 'त्ता' इति स्वरितेन स्वरेणोच्चार्य, उदात्तस्वरेण 'भे' इत्युच्चारयन् गुरुमुखनिविष्टदृष्टिर्ललाट स्पृशति, यात्रा सयमतपोनियमादिलक्षणा क्षायिकक्षायोपशमिकौपशमिकभावलक्षणा वा 'भे' भवताम् 'उत्सर्पति' इति गम्यते। अत्रान्तरे गुरो प्रतिवचनम् 'तुब्भ पि वट्टइ' मम तावदुत्सर्पति, भवतोऽप्युत्सर्पति।

अधुना नियन्त्रणीयपदार्थविषया वार्ता पृच्छन् पुनरप्याह विनेय — जवणिज्ज च भे, 'ज' इत्यनुदात्तस्वरेण रजोहरण स्पृष्ट्वा 'व' इति स्वरितस्वरेण रजोहरणललाटयोरन्तराले उच्चार्य णिशब्दमुदात्तस्वरेणोच्चारयन् कराभ्या ललाट स्पृशति, न पुन प्रतिवचन प्रतीक्षते, अर्धसमाप्तत्वात् प्रश्नस्य, ततो 'ज्ज' इत्यनुदात्तस्वरेणोच्चार्य कराभ्या रजोहरण स्पृशन् पुनरेव रजोहरणललाटान्तराले 'च' इति स्वरितस्वरेणोच्चार्य 'भे' इत्युदात्तस्वरेणो-

च्चारयन् कराभ्यां ललाटं स्पृष्ट्वा प्रतिवचनं शुश्रूषमाणस्तथैवास्ते; 'जवणिज्जं च' यापनीयमिन्द्रियनोइन्द्रियोपशमादिना प्रकारेणाबाधितं च 'भे' भवतां 'शरीरम्' इति गम्यम्। एवं परया भक्त्या पृच्छता विनेयेन विनयः कृतो भवति। अत्रान्तरे गुरुराह—एवं आम यापनीयं च मे इत्यर्थः। इदानीमपराधक्षामणां कुर्वन् रजोहरणोपरिन्यस्तहस्तमस्तको विनेय इदमाह—'खामेमि खमासमणो! देवसियं वइक्कमं' क्षमयामि क्षमाश्रमण! दिवसे भवो दैवसिकस्तं व्यतिक्रममवश्यकरणीययोगविराधनारूपमपराधम्। अत्रान्तरे च गुरुर्वदति—'अहमवि खामेमि' अहमपि क्षमयामि दैवसिकं स्वं व्यतिक्रमं प्रमादोद्भवम्। ततो विनेयः प्रणमन् क्षमयित्वा 'आवसिआए' इत्यादि 'जो मे अइआरो कओ' इत्यन्तं स्वकीयातिचारनिवेदनपरमालोचनार्हप्रायश्चित्तसूचकं सूत्रं 'तस्स खमासमणो पडिक्कमामि' इत्यादिकं च प्रतिक्रमणार्हप्रायश्चित्ताभिधायकं पुनरकरणेनाभ्युत्थित आत्मानं शोधयिष्यामीति बुद्ध्याऽवग्रहाद् निःसृत्य पठति—अवश्यं कर्तव्येषु चरणकरणेषु भवा क्रिया आवश्यकी तया आसेवनाद्वारेण हेतुभूतया यदसाध्वनुष्ठितं तस्मात् प्रतिक्रमामि निवर्ते। इत्थं सामान्येनाभिधाय विशेषेणाभिधत्ते—क्षमाश्रमणानां सम्बन्धिन्या दैवसिक्या ज्ञानाद्यायस्य शातना खण्डना आशातना तया, किंविशिष्टया? त्रयस्त्रिंशदन्यतरया त्रयस्त्रिंशत्संख्यानामाशातनानामन्यतरया कयाचित्, उपलक्षणत्वाद् द्वाभ्यां तिसृभिरपि, यतो दिवसमध्ये सर्वा अपि संभवन्ति, ताश्च वक्ष्यन्ते, यत् किञ्चित् कदालम्बनमाश्रित्य मिथ्यया मिथ्यायुक्तेन कृतयेत्यर्थः; मिथ्याभावोऽत्रास्तीत्यभ्रादित्वाद(दा)कारे मिथ्या, एवं क्रोधयेत्यादावपि; मनसा दुष्कृता मनोदुष्कृता तया प्रद्वेषनिमित्तयेत्यर्थः, वाग्दुष्कृतया असभ्यपरुषादिवचननिमित्तया, कायदुष्कृतया आसन-गमन-स्थानादिनिमित्तया, क्रोधया

क्रोधयुक्तया, मानया मानयुक्तया, मायया मायायुक्तया, लोभया लोभयुक्तया, अथ भाव —क्रोधाद्यनुगतेन या काचिद् विनयभ्रशादिलक्षणाऽऽशातना कृता तयेति। एव दैवसिक्याशातनोक्ता। अधुना पक्ष–चातुर्मास–सवत्सर कालकृता इहभवान्यभवगतातीतानागतकालकृता च या आशातना तस्या सग्रहार्थमाह—' सव्वकालियाए ' सर्वकालेषु भवा सार्वकालिकी तया। अनागतकाले कथमाशातनासभव' ? इति चेत् उच्यते— ' श्वोऽस्य गुरो रिदमिद चानिष्ट कर्तास्मि ' इति चिन्तया। इत्थ भवान्तरेऽपि तद्वधादिनिदानकरणेन सभवत्येव। सर्व एव मिथ्योपचारा मातृस्थानगर्भा क्रियाविशेषा यस्या सा सर्वमिथ्योपचारा तया। सर्वे धर्मा अष्टौ प्रवचनमातर सामान्येन करणीयव्यापारा वा तेषामतिक्रमण लघन विराधन यस्या सा सर्वधर्मातिक्रमणा। एवभूतयाऽऽशातनया यो मयातिचारोऽपराध कृतो विहितस्तस्यातिचारस्य हे क्षमाश्रमण ! युष्मत्साक्षिक प्रतिक्रमामि अपुनःकरणेन निवर्ते, तथा दुष्टकर्मकारिण निन्दाम्यात्मान भवोद्विग्नेन प्रशान्तेन चेतसा, तथा गर्हे आत्मान दुष्टकर्मकारिण युष्मत्साक्षिकम्, व्युत्सृजाम्यात्मान दुष्टकर्मकारिण तदनुमतित्यागेन। एव तत्रस्थ एवार्धावनतकाय' पुनरेव भणति—' इच्छामि खमासमणो ' इत्यारभ्य यावद् ' वोसिरामि ' इति, परमय विशेषः—अवग्रहाद् बहि-र्निष्क्रमणरहित आवश्यकीविरहित दण्डकसूत्र पठति। वन्दनकविधिविशेषसवादिकाश्चेमा गाथा'—

आयारस्स उ मूल विणओ सो गुणवओ अ पडिवत्ती। सा अ विहिवदणाओ विही इमो बारसावत्तो ॥ १॥

(१) आचारस्य तु मूल विनय स गुणवतश्च प्रतिपत्ति। सा च विधिवन्दनाद् विधिरय द्वादशावर्त ॥ १ ॥

होउं अहाजाओ बहिं संडासं पमज्ज उक्कुडुअट्ठाणो । पडिलेहियमुहपत्तीपमज्जिओवरिमदेहद्धो ॥ २ ॥
उट्ठेउं परिसंठिअकुप्परट्ठिअपट्टगोनमिअकाओ । जुत्तिपिहिअपच्छद्धो पवयणकुच्छा जह न होइ ॥ ३ ॥
वामंगुलिमुहपोत्तीकरजुअलतलत्थजुत्तरयहरणो । अवणिय जहोत्तदोसं गुरुसंमुहं भणइ पयडमिणं ॥ ४ ॥
इच्छामि खमासमणो इच्चाई जा निसीहिआए त्ति । छंदेणं ति सुणेउं गुरुवयणं उग्गहं जाए ॥ ५ ॥
अणुजाणह मे मिउग्गहमणुजाणामि त्ति भासिए गुरुणा । उग्गहखेत्तं पविसइ पमज्ज संडासए निसीए ॥ ६ ॥
वामदसं रयहरणं पमज्ज भूमीए संठवेऊण । सीसफुसणेण होही कज्जं ति तओ पढममेव ॥ ७ ॥
वामकरगहिअपोत्ती एगदेसेण वामकन्नाओ । आरंभिऊण णिडालं पमज्ज जा दाहिणो कण्णो ॥ ८ ॥

---

(१) भूत्वा यथाजातो बहिः संदंशं प्रमृज्योत्कुटुकस्थानः । प्रतिलिखितमुखवस्त्रिकाप्रमार्जितोपरिमदेहार्धः ॥ २ ॥
उत्थाय प्रतिसंस्थितकूर्परस्थितपट्टकावनतकायः । युक्तिपिहितपश्चार्धः प्रवचनकुत्सा यथा न भवति ॥ ३ ॥
वामाङ्गुलिमुखवस्त्रिकाकरयुगलतलस्थयुक्तरजोहरणः । अपनीय यथोक्तदोषं गुरुसंमुखं भणति प्रकटमिदम् ॥ ४ ॥
इच्छामि क्षमाश्रमण ! इत्यादि यावद् नैषेधिक्येति । छन्देनेति श्रुत्वा गुरुवचनमवग्रहं याति ॥ ५ ॥
अनुजानीध्वं मे मितावग्रहमनुजानामीति भाषिते गुरुणा । अवग्रहक्षेत्रं प्रविशति प्रमृज्य संदंशं निषीदेत् ॥ ६ ॥
वामदशं रजोहरणं प्रमृज्य भूमौ संस्थाप्य । शिरःस्पर्शनेन भविष्यति कार्यमिति ततः प्रथममेव ॥ ७ ॥
वामकरगृहीतमुखवस्त्रिक एकदेशेन वामकर्णात् । आरभ्य ललाटं प्रमृज्य यावद् दक्षिणः कर्णः ॥ ८ ॥

अब्भुच्छिअ वामयजाणु नसिऊण तत्थ मुहपोत्तिं । रयहरणमज्झदेसम्मि ठावए पुज्जपायजुग ॥ ९ ॥
सुपसारिअ बाहुजुओ ऊरुजुअलंतर अफुसमाणो । जमलट्ठिअग्गपाणी अकारमुच्चारय फुसइ ॥ १० ॥
अब्भंतरपरिअट्टिअकरयलमुवणीअ सीसफुसणंत । तो करजुअल निज्जा होकारोच्चारसमकाल ॥ ११ ॥
पुण हेट्ठा मुहकरयल काकारसम ठविज्ज रयहरण । यसद्देण समय पुणो वि सीस तहच्चेअ ॥ १२ ॥
काकारसमुच्चारणसमय रयहरणमालुहेऊण । य त्ति य सद्देण सम पुणो वि सीस तहच्चेअ ॥ १३ ॥
सफास वि भणतो सीसेण पणमिऊण रयहरणे । उन्नामिअमुद्दजलि अव्वाबाह तओ पुच्छे ॥ १४ ॥
खमणिज्जो भे किलामो अप्पकिलताण बहुसुभेण भे । दिण पक्खो वरिसो वा वइकतो इय तओ तुसिणी ॥१५॥

---

(१) अव्युच्छिन्न वामकजानु न्यस्य तत्र मुखवस्त्रिकाम् । रजोहरणमध्यदेशे स्थापयेत् पूज्यपादयुगम् ॥ ९ ॥
सुप्रसारितबाहुयुग ऊरुयुगलान्तरमस्पृशन् । यमलस्थिताग्रपाणिरकारमुच्चारयन् स्पृशति ॥ १० ॥
अभ्यन्तरपरिवर्त्तितकरतलमुपनीय शिर स्पर्शनान्तम् । तत करयुगल नयेद् होकारोच्चारसमकालम् ॥ ११ ॥
पुनरधस्ताद् मुखकरतल काकारसम स्थापयेद् रजोहरणम् । यशब्देन समक पुनरपि शिरस्तथैव ॥ १२ ॥
काकारसमुच्चारणसमक रजोहरणमाश्लिष्य । य इति च शब्देन सम पुनरपि शिरस्तथैव ॥ १३ ॥
सफास इति भणन् शिरसा प्रणम्य रजोहरण । उन्नामितमूर्धाञ्जलिरव्याबाधा तत पृच्छेत् ॥ १४ ॥
क्षमणीयो भवद्भि क्लमोऽल्पक्लान्ताना बहुशुभेन भवताम् । दिन पक्षो वर्षे वा व्यतिक्रान्तमिति ततस्तूष्णीक ॥१५॥

गुरुणा तह त्ति भणिए जत्ता जवणा य पुच्छियव्वा य । परिसंठिएण इणमो सराण जोएण कायव्वं ॥ १६ ॥
तत्थ य परिभासेमो मंदमइविणेअगाहणट्ठाए । नीउच्चमज्झमाओ सरजुत्तीओ ठवेयव्वा ॥ १७ ॥
नीओ तत्थणुदत्तो रयहरणे उच्चओ उदत्तो उ । सीसे निदंसणीओ तदंतरालम्मि सरिओ य ॥ १८ ॥
अणुदत्तो अ जकारो त्ता सरिओ होइ भे उदत्तसरो । पुणरवि जवणिसद्दा अनुदत्ताई मुणेअव्वा ॥ १९ ॥
ज्जं अणुदत्तो अ पुणो च ससरिओ भे उदत्तसरणामो । एवं रयहरणाइसु तिसु ट्ठाणेसु सरा णेया ॥ २० ॥
पढमं आवत्ततिगं वण्णदुगेणं तु रइयमणुकमसो । बीयावत्ताण तिगं तिहि तिहिं वण्णेहि निप्फन्नं ॥ २१ ॥
रयहरणम्मि जकारं त्ताकारं करजुएण मज्झम्मि । भेकारं सीसम्मि अ काउं गुरुणो वयं सुणसु ॥ २२ ॥

---

(१) गुरुणा तथेति भणिते यात्रा यापना च प्रष्टव्या च । परिसंस्थितेनेदं स्वराणां योगेन कर्तव्यम् ॥ १६ ॥
तत्र च परिभाषामहे मन्दमतिविनेयग्राहणार्थम् । नीचोच्चमध्यमाः स्वरयुक्तयः स्थापयितव्याः ॥ १७ ॥
नीचस्तत्रानुदात्तो रजोहरणे उच्चक उदात्तस्तु । शीर्षे निदर्शनीयस्तदन्तराले स्वरितश्च ॥ १८ ॥
अनुदात्तश्च जकारः त्ता स्वरितो भवति भे उदात्तस्वरः । पुनरपि जवणिशब्दा अनुदात्तादयो ज्ञातव्याः ॥ १९ ॥
ज्जं अनुदातश्च पुनश्च स्वरितो भे उदात्तस्वरनामः । एवं रजोहरणादिषु त्रिषु स्थानेषु स्वरा ज्ञेयाः ॥ २० ॥
प्रथममावर्तत्रिकं वर्णद्विकेन तु रचितमनुक्रमशः । द्वितीयावर्तानां त्रिकं त्रिभिस्त्रिभिर्वर्णैर्निष्पन्नम् ॥ २१ ॥
रजोहरणे जकारं त्ताकारं करयुगेण मध्ये । भेकारं शिरसि च कृत्वा गुरोर्वचः शृणु ॥ २२ ॥

तुब्भ पि वट्टइ त्ति य गुरुणा भणिअम्मि सेसआवत्ता । दुण्णि वि काउं तुसिणी जा गुरुणा भणिअमेव ति ॥२३॥
अह सीसो रयहरणे कयजली भणइ सविणय सिरसा । खामेमि खमासमणो । देवसिआइवइक्कमण ॥ २४ ॥
अहमवि खामेमि तुमे गुरुणाऽणुण्णाए खामणे सीसो । निक्खमइ उग्गहाओ आवसियाए भणेऊण ॥ २५ ॥
ओणयदेहो अवराहखामण सव्वमुच्चरेऊण । निंदियगरहिअवोसट्टसव्वदोसो पडिकंतो ॥ २६ ॥
खामित्ता विणएण तिगुत्तो तेण पुणरवि तहेअ । उग्गहजायणपविसणदुओणय दो पवेस च ॥ २७ ॥
पढमे छआवत्ता बीयपवेसम्मि हुंति छच्चेव । ते अ अहो इच्चाई असक्करेण पउत्तव्वा ॥ २८ ॥
पढमपवेसे सिरनामण दुहा बीअए अ तह चेव । तेणेअ वउसिरत भणियमिण एगनिक्खमण ॥ २९ ॥

---

(१) तवापि वर्तत इति च गुरुणा भणिते शेपावर्तौ । द्वावपि कृत्वा तूर्णीं यावद् गुरुणा भणितमेवमिति ॥ २३ ॥
अथ शिष्यो रजोहरणे कृताञ्जलिर्भणति सविनय शिरसा । क्षमयामि क्षमाश्रमण । दैवसिकादिव्यतिक्रमणम् ॥ २४ ॥
अहमपि क्षमयामि त्वा गुरुणाऽनुज्ञाते क्षमणे शिष्यः । निष्क्रामत्यवग्रहादावश्यक्या भणित्वा ॥ २५ ॥
अवनतदेहोऽपराधक्षमण सर्वमुच्चार्य । निन्दितगर्हितव्युत्सृष्टसर्वदोष प्रतिक्रान्त ॥ २६ ॥
क्षमयित्वा विनयेन त्रिगुप्तस्तेन पुनरपि तथैव । अवग्रहयाचनप्रवेशनद्विकावनत द्वयो प्रवेश च ॥ २७ ॥
प्रथमे षडावर्ता द्वितीयप्रवेशे भवन्ति षडेव । ते च अहो इत्यादयोऽसक्रेण प्रयोक्तव्या ॥ २८ ॥
प्रथमप्रवेशे शिरोनामन द्विधा द्वितीयके च तथैव । तेनैव व्युत्सृजाम्यन्त भणितमिदमेकनिष्क्रमणम् ॥ २९ ॥

एवमहाजाएगं तिगुत्तिसहिअं च हुंति चत्तारि । सेसेसुं खित्तेसुं पणवीसावस्सया हुंति ॥ ३० ॥

'तित्तीसन्नयराए' इत्युक्तमिति, त्रयस्त्रिंशदाशातना विविच्यन्ते—गुरोः पुरतो गमनं शिष्यस्य निष्कारणं विनयभङ्गहेतुत्वादाशातना, मार्गदर्शनादिकारणे तु न दोषः, गुरोः पार्श्वाभ्यामपि गमनम्, पृष्ठतोऽप्यासन्नगमनम्, निःश्वासक्षुतश्लेष्मपातादिदोषप्रसङ्गात्; ततश्च यावता भूभागेन गच्छत आशातना न भवति तावता गन्तव्यम् । १ । २ । ३ । एवं पुरतः, पार्श्वतः, पृष्ठतश्च स्थानम् । ४ । ५ । ६ । तथा पुरतः पार्श्वतः पृष्ठतो वा निषदनम् । ७ । ८ । ९ । आचार्येण सहोच्चारभूमिं गतस्याचार्यात् प्रथममेवाचमनम् । १० । गुरोरालापनीयस्य कस्यचिच्छिष्येण प्रथममालपनम् । ११ । शिष्यस्याचार्येण सह बहिर्गतस्य पुनर्निवृत्तस्याचार्यात् प्रथममेव गमनागमनालोचनम् । १२ । भिक्षामानीय शिष्येण गुरोः पूर्वं शैक्षस्य कस्यचित् पुरत आलोच्य पश्चाद् गुरोरालोचनम् । १३ । भिक्षामानीय प्रथमं शैक्षस्य कस्यचिदुपदर्श्य गुरोर्दर्शनम् । १४ । भिक्षामानीय गुरुमनापृच्छ्य शैक्षाणां यथारुचि प्रभूतभैक्ष्यदानम् । १५ । भिक्षामानीय शैक्षं कञ्चन निमन्त्र्य पश्चाद् गुरोरुपनिमन्त्रणम् । १६ । शिष्येण भिक्षामानीयाचार्याय यत् किञ्चिद् दत्त्वा स्निग्धमधुरमनोज्ञाहारशाकादीनां वर्णगन्धरसस्पर्शवतां द्रव्याणां स्वयमुपभोगः । १७ । रात्रौ 'आर्याः ! कः स्वपिति जागर्ति वा ?' इति गुरोः पृच्छतोऽपि जाग्रताऽपि शिष्येणाप्रतिश्रवणम् । १८ । शेषकालेऽपि गुरौ व्याहरति यत्र तत्र स्थितेन शयितेन वा शिष्येण प्रतिवचनदानम् । १९ । आहूतेनासनं शयनं वा त्यक्त्वा संनिहितीभूय 'मस्तकेन वन्दे' इति वदता गुरुवचनं

(१) एवं यथाजातैकं त्रिगुप्तिसहितं च भवन्ति चत्वारि । शेषेषु क्षेत्रेषु पञ्चविंशतिरावश्यका भवन्ति ॥ ३० ॥

श्रोतव्यम्, तदकुर्वत आशातना । २० । गुरुणा आहूतस्य शिष्यस्य किमिति वचनम्, भणितव्य मस्तकेन वन्दे इति । २१ । गुरु प्रति शिष्यस्य त्वकारः । २२ । गुरुणा ग्लानादिवैयावृत्यादिहेतो 'इद कुरु' इत्यादिष्ट 'त्वमेव किं न कुरुषे' इति 'त्वमलस' इत्युक्ते 'त्वमप्यलस' इति च शिष्यस्य तज्जातवचनम् । २३ । गुरो पुरतो बहोः कर्कशस्योच्चैःस्वरस्य च शिष्येण वदनम् । २४ । गुरौ कथा कथयति 'एवमेतत्' इत्यन्तराले शिष्यस्य वचनम् । २५ । गुरौ धर्मकथां कथयति 'न सरसि त्वमेतमर्थम्, नायमर्थः सभवति' इति शिष्यस्य वचनम् । २६ । गुरौ धर्म कथयति सौमनस्यरहितस्य गुरूक्तमननुमोदमानस्य 'साधूक्त भवद्भिः' इत्यप्रशसत शिष्यस्योपहतमनस्त्वम् । २७ । गुरौ धर्म कथयति 'इय भिक्षावेला, सूत्रपौरुषीवेला, भोजनवेला' इत्यादिना शिष्येण पर्षद्भेदनम् । २८ । गुरौ धर्मकथा कथयति 'अह कथयिष्यामि' इति शिष्येण कथाच्छेदनम् । २९ । तथा आचार्येण धर्मकथाया कृतायामनुत्थितायामेव पर्षदि स्वस्य पाटवादिज्ञापनाय शिष्येण सविशेष धर्मकथनम् । ३० । गुरो. पुरत उच्चासने समासने वा शिष्यस्योपवेशनम् । ३१ । गुरो शय्यासस्तारकादिकस्य पादेन घट्टनम्, अननुज्ञाप्य हस्तेन वा स्पर्शनम्, घट्टयित्वा स्पृष्ट्वा वाऽक्षामणम्; यदाह—

संघट्टइत्ता कायेण तहा उवहिणामवि । खमेह अवराह मे वइज न पुण त्ति अ ॥ १ ॥ ३२ ।

गुरोः शय्यासस्तारकादौ स्थान निषीदन शयन चेति । ३३ । एतदर्थसवादिन्यो गाथा—

(१) सघट्ट्य कायेन तथोपधीनामपि । क्षमस्वापराध मे वदेद् न पुनरिति च ॥ १ ॥

पुरओ पक्खासन्ने गमणं ठाणं निसीअणं ति नव। सेहे पुव्वं आइ(य)मइ आलवइ तह य आलोए ॥ १ ॥
असणाइअमालोइअ पडिदंसइ देई उवनिमंतेइ। सेहस्स तहाहारइ लुद्धो निद्धाइ गुरुपुरओ ॥ २ ॥
राओ गुरुस्स वयओ तुसिणी सुणिरो वि सेसकाले वि। तत्थ गओ वा पडिसुणेइ बेइ किंति व तुमं ति गुरुं ॥ ३ ॥
तज्जाएणं पडिहणइ बेइ बहु तह कहंतरे वयइ। एवमिमं ति न सरासि नो सुमणे भिंदई परिसं ॥ ४ ॥
छिंदइ कहं तहाणुट्ठियाइ परिसाइ कहइ सविसेसं। गुरुपुरओ विनिसीयइ ठाइ समुच्चासणे सेहो ॥ ५ ॥
संघट्टइ पाएणं सेज्जासंथारयं गुरुस्स तहा। तत्थेव ठाइ निसियइ सुअइ अवसेहोत्ति तेत्तीसं ॥ ६ ॥

इह यद्यपि यतिरेव वन्दनककर्तोक्तो न श्रावकः, तथापि यतेः कर्तुर्भणनात् श्रावकोऽपि कर्त्ता विज्ञेयः, प्रायेण यतिक्रियानुसारेणैव श्रावकक्रियाप्रवृत्तेः; श्रूयते च कृष्णवासुदेवेनाष्टादशानां यतिसहस्राणां द्वादशावर्तव-

---

(१) पुरतः पक्षासन्ने गमनं स्थानं निषीदनमिति नव। शैक्षे पूर्वमाचमति आलपति तथा चालोचयति ॥ १ ॥
अशनादिकमालोच्य प्रतिदर्शयति ददात्युपनिमन्त्रयति। शैक्षस्य तथाहरति लुब्धः स्निग्धादि गुरुपुरतः ॥ २ ॥
रात्रौ गुरोर्वदतस्तूष्णीं श्रोताऽपि शेषकालेऽपि। तत्र गतो वा प्रतिशृणोति ब्रवीति किमिति वा त्वमपि(मिति) गुरुम् ॥३॥
तज्जातेन प्रतिहन्ति ब्रवीति बहु तथा कथान्तरे वदति। एवमिदमिति न स्मरसि नो सौमनस्यं भिनत्ति पर्षदम् ॥४॥
छिनत्ति कथां तथानुत्थितायां परिष (पर्ष) दि कथयति सविशेषम्। गुरुपुरतो विनिषीदति तिष्ठति समोच्चासने शैक्षः ॥५॥
संघट्टयति पादेन शय्यासंस्तारकं गुरोस्तथा। तत्रैव तिष्ठति निषीदति शेतेऽपशैक्ष इति त्रयस्त्रिंशत् ॥ ६ ॥

न्दनमदायि, इत्याशातना अपि यत्यनुसारेण यथासभव श्रावकस्य वाच्याः । एव वन्दनक दत्त्वाऽवग्रहमध्यस्थित एव विनेयोऽतिचारालोचन कर्तुकामः किञ्चिदवनतकायो गुरु प्रतीदमाह—' इच्छाकारेण सदिसह देवसिय आलोएमि ' इति । इच्छाकारेण निजेच्छया, सदिशत आज्ञां ददत, दैवसिक दिवसभवम् 'अतीचारम्' इति गम्यम्, एव रात्रिकपाक्षिकादिकमपि द्रष्टव्यम्, आलोचयामि मर्यादया सामस्त्येन वा प्रकाशयामि । इह च दैवसिकादीनामय कालनियमः—यथा दैवसिक मध्याह्नादारभ्य निशीथ यावद् भवति, रात्रिक निशीथादारभ्य मध्याह्न यावद् भवति, पाक्षिकचातुर्मासिकसांवत्सरिकाणि पक्षाद्यन्ते भवन्ति । अत्रान्तरे ' आलोअह ' इति गुरुवचनमाकर्ण्य एतदेव शिष्यः समर्थयन्नाह—' इच्छ आलोएमि ' इच्छाम्यभ्युपगच्छामि गुरुवचः आलोचयामि पूर्वमभ्युपगतमर्थं क्रियया प्रकाशयामीति । इत्थ प्रस्तावनामभिधायालोचनामेव साक्षात्कारेणाह—' जो मे देवसिओ अइआरो कओ काइओ वाइओ माणसिओ उस्सुत्तो उम्मग्गो अकप्पो अकरणिज्जो दुज्झाओ दुव्विचिंतिओ अणायारो अणिच्छियव्वो असावगपाउग्गो नाणे दसणे चरित्ताचरित्ते सुए सामाइए तिण्ह गुत्तीण चउण्ह कसायाणां पचण्हमणुव्वयाण तिण्ह गुणव्वयाण चउण्ह सिक्खावयाण वारसविहस्स सावगधम्मस्स ज खडिअ ज विराहिअ तस्स मिच्छा मि दुक्कड ' ।

व्याख्या—यो मया दिवसे भवो दैवसिकोऽतिचारोऽतिक्रमः कृतो निर्वर्तित', स पुनरतिचार उपाधिभेदेनानेकधा भवति, अत एवाह—' काइओ ' काय. प्रयोजन प्रयोजकोऽस्यातिचारस्येति कायिकः, एव वाइओ वाक् प्रयोजनमस्य वाचिकः, एव मनः प्रयोजनमस्येति मानसिक , 'उस्सुत्तो' सूत्रादुत्क्रान्त उत्सूत्र' सूत्रमतिक्रम्य कृत

substi

इत्यर्थः, 'उम्मग्गो' मार्गः क्षायोपशमिको भावस्तमतिक्रान्त उन्मार्गः क्षायोपशमिकभावत्यागेनौदयिकभावसंक्रमः कृत इत्यर्थः, 'अकप्पो' कल्पो न्यायो विधिराचारश्चरणकरणव्यापार इति यावत्, न कल्पोऽकल्पोऽतद्रूप इत्यर्थः, करणीयः सामान्येन कर्त्तव्यः, न करणीयोऽकरणीयः हेतुहेतुमद्भावश्चात्र यत एवोत्सूत्रोऽत एवोन्मार्ग इत्यादि, उक्तस्तावत् कायिको वाचिकश्च। अधुना मानसिकमाह—'दुज्झाओ' दुष्टो ध्यातो दुर्ध्यात एकाग्रचित्ततयाऽऽर्तरौद्रलक्षणः, 'दुव्विचिंतिओ' दुष्टो विचिन्तितो दुर्विचिन्तितः, अशुभ एव चलचित्ततया '[1]जं थिरमज्झवसाणं तं झाणं जं चलं तयं चित्तं' इति वचनात्, यत एवेत्थंभूतस्तत एव 'अणायारो' आचरणीयः श्रावकाणामाचारः, न आचारोऽनाचारः, यत एवानाचरणीयोऽत एव 'अणिच्छियव्वो' अनेष्टव्यः मनागपि मनसापि न एष्टव्य आस्तां तावत् कर्तव्यः, यत एवेत्थंभूतोऽत एव 'असावगपाउग्गो' अश्रावकप्रायोग्यः—अभ्युपेतसम्यक्त्वः प्रतिपन्नाणुव्रतश्च प्रतिदिवसं यतिभ्यः सकाशात् साधूनामगारिणां च सामाचारीं शृणोतीति श्रावकस्तस्य प्रायोग्य उचितः श्रावकप्रायोग्यः, न तथा, श्रावकानुचित इत्यर्थः। अयं चातिचारः क्व विषये भवतीत्याह—'णाणे दंसणे चरित्ताचरित्ते' इति, ज्ञानविषये, दर्शनविषये, स्थूलसावद्ययोगनिवृत्तिभावाच्चारित्रं च सूक्ष्मसावद्ययोगनिवृत्त्यभावादचारित्रं च चारित्राचारित्रं तस्मिन् देशविरतिविषये इत्यर्थः। अधुना भेदेन व्याचष्टे—'सुए' श्रुतविषये, श्रुतग्रहणं मत्यादिज्ञानोपलक्षणम्, तत्र विपरीतप्ररूपणा, अकालस्वाध्यायश्चाति-

---

(१) यत् स्थिरमध्यवसायं तद् ध्यानं यच्चलं तच्चित्तम्।

चारः, 'सामाइए' सामायिकविषये, सामायिकग्रहणात् सम्यक्त्वसामायिकदेशविरतिसामायिकयोर्ग्रहणम्। तत्र सम्यक्त्वसामायिकातिचार शङ्कादिः। देशविरतिसामायिकातिचार तु भेदेनाह—'तिण्ह गुत्तीण' तिसृणां गुप्तीना 'यत् खण्डितम्' इत्यादिना सर्वत्र योगः, मनोवाक्कायगोपनात्मिकास्तिस्रो गुप्तयो व्याख्याताः, तासा चाश्रद्धानविपरीतप्ररूपणाभ्यां खण्डना विराधना च, चतुर्णां क्रोधमानमायालोभलक्षणानां कषायाणा प्रतिषिद्धानां करणेनाश्रद्धानविपरीतप्ररूपणाभ्या च, पञ्चानामणुव्रताना त्रयाणां गुणव्रताना चतुर्णां शिक्षाव्रतानामुक्तस्वरूपाणाम्, अणुव्रतादिमीलनेन द्वादशविधस्य श्रावकधर्मस्य यत् खण्डित देशतो भग्नम्, यद् विराधित सुतरां भग्न, न पुनरेकान्ततोऽभावमापादितम्, 'तस्स मिच्छा मि दुक्कड' तस्य दैवसिकाद्यतिचारस्य ज्ञानादिगोचरस्य, तथा गुप्तीनां, कषायाणा द्वादशविधश्रावकधर्मस्य च यत् खण्डन विराधन चातिचाररूप तस्य मिथ्येति प्रतिक्रमामि दुष्कृतमेतदकर्तव्यमिद ममेत्यर्थ ।

अत्रान्तरे विनेय' पुनरप्यर्धावनतकाय प्रवर्धमानसवेगो मायामदविप्रमुक्त आत्मनः सर्वातिचारविशुद्ध्यर्थ सूत्रमिद पठति—' सव्वस्स वि देवसिय दुच्चिंतिय दुब्भासिय दुच्चिट्ठिय इच्छाकारेण संदिसह।' सर्वाण्यपि लुप्तषष्ठीकानि पदानि। ततोऽयमर्थ —सर्वस्यापि दैवसिकस्याणुव्रतादिविषये प्रतिषिद्धाचरणादिना जातस्यातिचारस्येति गम्यते; पुन' कीदृशस्य ? दुश्चिन्तितस्य दुष्टमार्तरौद्रध्यानतया चिन्तित यत्र स तथा तस्य दुश्चिन्तितोद्भवस्येत्यर्थ , अनेन मानसमतीचारमाह, दुष्ट सावद्यवाग्रूप भाषित यत्र तत् तथा तस्य दुर्भाषितोत्पन्नस्येत्यर्थ', अनेन वाचिक सूचयति, दुष्ट प्रतिषिद्ध धावनवल्गनादिकायक्रियारूप चेष्टित यत्र तत् तथा तस्य

दुश्चेष्टितोद्भवस्येत्यर्थः, अनेन कायिकमाह; अस्यातिचारस्य किमित्याह—'इच्छाकारेण संदिसहेति,' आत्मीयेच्छया मम प्रतिक्रमणाज्ञां प्रयच्छत, इत्युक्त्वा तूष्णीको गुरुमुखं प्रेक्षमाण आस्ते। ततो गुरुराह—' पडिक्कमह ' प्रतिक्रामत (क्राम)। ततः शिष्यः प्राह—'इच्छं' इच्छाम्येतद् भगवद्वचः, 'तस्स' तस्य दैवसिकातिचारस्य 'मिच्छा मि दुक्कडं' आत्मीयं दुष्कृतं मिथ्येति जुगुप्स इत्यर्थः। तथा, द्वितीयच्छन्दनकावग्रहान्तःस्थित एव विनेयोऽर्धावनतकायः स्वापराधक्षामणां चिकीर्षुर्गुरुं प्रतीदमाह—'इच्छाकारेण संदिसह' इति, इच्छाकारेण स्वकीयाभिलापेण न पुनर्बलाभियोगादिना संदिशत आज्ञां प्रयच्छत यूयम्। आज्ञादानस्यैव विषयमुपदर्शयन्निदमाह–'अब्भुट्ठिओ अम्हि अब्भितरदेवसिअं खामेमि' अभ्युत्थितोऽस्मि प्रारब्धोस्मि अहम्, अनेनाभिलापमात्रस्य व्यपोहेन क्षमणाक्रियायाः प्रारम्भमाह–'अब्भितरदेवासिअं' इति दिवसाभ्यन्तरसंभवम् अतीचारम्' इति गम्यते, क्षमयामि मर्षयामि, इत्येका वाचना। अन्ये त्वेवं पठन्ति–'इच्छामि खमासमणो अब्भुट्ठिओ अम्हि अब्भितरदेवसिअं खामेउं' इति, इच्छामि अभिलषामि क्षमयितुम् इति योगः, हे क्षमाश्रमण! न केवलमिच्छामि, किन्तु 'अब्भुट्ठिओ अम्हि' इत्यादि पूर्ववदेव। एवं स्वाभिप्रायं प्रकाश्य तूष्णीमास्ते यावद् गुरुराह—'खामेह' इति क्षमयस्वेत्यर्थः। ततः स गुरुवचनं बहु मन्यमान आह–' इच्छं खामेमि ' इति, इच्छं इच्छामि भगवदाज्ञाम्, खामेमि क्षमयामि च स्वापराधम्। अनेन क्षमणक्रियायाः प्रारम्भमाह। ततो विधिवत् पञ्चभिरङ्गैः स्पृष्टधरणीतलो मुखवस्त्रिकया स्थगितवदनदेश इदमाह–'जं किंचि अपत्तियं परपत्तिअं भत्ते पाणे विणए वेयावच्चे आलावे संलावे उच्चासणे समासणे अंतरभासाए उवरिभासाए जं किंचि मज्झ विणयपरिहीणं सुहुमं वा बायरं वा तुब्भे जाणह अहं न याणामि तस्स

मिच्छा मि दुक्कड ।

व्याख्या—ज किंचि यत् किञ्चित् सामान्यतो निरवशेष वा, 'अपत्तिय' आर्षत्वादप्रीतिकमप्रीतिमात्रम्, 'परपत्तिय' प्रकृष्टमप्रीतिक परप्रत्यय वा परहेतुकम्, उपलक्षणत्वादस्यात्मप्रत्यय चेति द्रष्टव्यम्, युष्मद्विषये मम जात युष्माभिर्वा मम जनितमिति वाक्यशेषः, तस्स मिच्छा मि इत्युत्तरेण सबन्ध. तथा, 'भत्ते' भक्ते भोजनविषये, 'पाणे' पानविषये, 'विणए' विनयेऽभ्युत्थानादिरूपे, 'वेआवच्चे' वैयापृत्ये वैयावृत्त्ये वा औषधपथ्यादिनाऽवष्टम्भरूपे 'आलावे' आलापे सकृज्जल्परूपे, 'सलावे' सलापे मिथःकथारूपे, 'उच्चासणे गुरोरासनादुच्चैरासने, 'समासणे' गुर्वासनेन तुल्ये आसने, 'अतरभासाए' अन्तर्भाषायां गुरोर्भाषमाणस्य विचालभाषणरूपायाम्; 'उवरिभासाए' उपरि भाषाया गुरोर्भाषणानन्तरमेव विशेषभाषणरूपायाम्, एषु भक्तादिषु 'ज किंचि' यत् किञ्चित् समस्त सामान्यतो वा, 'मज्झ' मम, 'विणयपरिहीण' विनयपरिहीन शिक्षावियुक्त 'सजातम्' इति शेष । विनयपरिहीनस्यैव द्वैविध्यमाह—'सुहुम वा बायर वा' सूक्ष्ममल्पप्रायश्चित्तविशोध्यम्, बादर बृहत्प्रायश्चित्तविशोध्यम्, वाशब्दौ द्वयोरपि मिथ्यादुष्कृतविषयत्वतुल्यतोद्भावनार्थौ, 'तुब्भे जाणहेति' यूय जानीथ, सकलभाववेदकत्वात्, अह न 'याणामि' अह पुनर्न जानामि, मूढत्वात्, तथा 'यूय न जानीथ, प्रच्छन्नकृतत्वादिना, अह जानामि, स्वय कृतत्वात्, तथा, यूय न जानीथ, परेण कृतत्वादिना, अह न जानामि, विस्मरणादिना, तथा, यूयमपि जानीथ, अहमपि जानामि, द्वयो प्रत्यक्षत्वात्' एतदपि द्रष्टव्यम्, 'तस्स' तस्य षष्ठीसप्तम्योरभेदात् तस्मिन्नप्रीतिकविषये विनयपरिहीणविषये च 'मिच्छा मि दुक्कड' मिथ्या मे दुष्कृतमिति स्वदुश्चरितानुपाचह्वचक

स्वदोषप्रतिपत्तिसूचकं वा प्रतिक्रमणमिति पारिभाषिकं वाक्यं प्रयच्छामीति शेषः; अथवा, तस्येति विभक्तिपरिणामात् तदप्रीतिकं विनयपरिहीनं च मिथ्या मोक्षसाधनविपर्ययभूतं वर्तते मे मम; तथा दुष्कृतं पापमिति स्वदोषप्रतिपत्तिरूपमपराधक्षमणमिति । वन्दनपूर्वके चालोचनक्षमणे भवत इति कृत्वा वन्दनकानन्तरं ते व्याख्याते, अन्यथा प्रतिक्रमणे तयोरवसरः; वन्दनकस्य च फलं कर्मनिर्जरा, यदाहुः—

'वंदणएणं भंते ! जीवे किं अज्जिणइ ? । गोअमा ! अट्ठ कम्मपयडीओ निविडबंधणबद्धाओ सिढिलबंधणबद्धाओ करेइ, चिरकालठिइआओ अप्पकालठिइआओ करेइ, तिव्वाणुभावाओ मंदाणुभावाओ करेइ, बहुपएसग्गाओ अप्पपएसग्गाओ करेइ, अणाइअं च णं अणवदग्गं संसारकंतारं नो परिअट्टइ । तथा,—

'वंदणएणं भंते ! जीवे किं अज्जिणइ ? । गोअमा ! वंदणएणं नीयागोत्तकम्मं खवेइ उच्चागोत्तं निबंधइ, सोहग्गं च णं अप्पडिहयं आणाफलं निव्वत्तेइ । तथा,—

---

(१) वन्दनकेन भगवन् ! जीवः किमर्जयति ? । गौतम ! अष्ट कर्मप्रकृतीर्निविडबन्धनबद्धाः शिथिलबन्धनबद्धाः करोति, चिरकालस्थितिका अल्पकालस्थितिकाः करोति, तीव्रानुभावा मन्दानुभावाः करोति, बहुप्रदेशिका अल्पप्रदेशिकाः करोति, अनादिकं चानन्तं संसारकान्तारं नो पर्यटति ।

(२) वन्दनकेन भगवन् ! जीवः किमर्जयति ? । गौतम ! वन्दनकेन नीचगोत्रकर्म क्षपयति, उच्चगोत्रं निबध्नाति, सौभाग्यं चाप्रतिहतमाज्ञाफलं निर्वर्तयति ।

[1]विणओवयारमाणस्स भंजणा पूअणा गुरुजणस्स । तित्थयराण य आणा सुअधम्माराहणाकिरिआ ॥ १ ॥

अथ प्रतिक्रमण—प्रतीत्युपसर्गं प्रतीपे प्रातिकूल्ये वा, क्रमु पादविक्षेपे, अस्य प्रतिपूर्वस्य भावानडन्तस्य प्रतीप क्रमणं प्रतिक्रमणम्, अयमर्थः—शुभयोगेभ्योऽशुभयोगान्तरं क्रान्तस्य शुभेष्वेव क्रमणात् प्रतीप क्रमणम्, यदाह,—

स्वस्थानाद् यत् परस्थानं प्रमादस्य वशाद् गतः । तत्रैव क्रमणं भूयः प्रतिक्रमणमुच्यते ॥ १ ॥

प्रतिकूलं वा गमनं प्रतिक्रमणम्; यदाह,—

क्षायोपशमिकाद् भावादौदयिकवशं गतः । तत्रापि च स एवार्थः प्रतिकूलगमात् स्मृतः ॥ १ ॥

प्रति प्रतिक्रमणं वा प्रतिक्रमणम्, उक्तं च,—

प्रति प्रतिप्रवर्तनं वा शुभेषु योगेषु मोक्षफलदेषु । निःशल्यस्य यतेर्यत् तद् विज्ञेयं प्रतिक्रमणम् ॥ १ ॥

तच्चातीतानागतवर्तमानकालत्रयविषयम् । ननु अतीतविषयमेव प्रतिक्रमणम्, यत उक्तम्,—"[2]अईयं पडिक्कमामि, पडुप्पन्नं संवरेमि, अणागयं पच्चक्खामि" इति, तत् कथं त्रिकालविषयता ? । उच्यते—अत्र प्रतिक्रमणशब्दोऽशुभयोगनिवृत्तिमात्रार्थः —

[3]मिच्छत्तपडिक्कमणं तहेव अस्संजमे पडिक्कमणं । कसायाणं पडिक्कमणं जोगाण य अप्पसत्थाणं ॥ १ ॥

---

(१) विनयोपचारमानस्य भंजना पूजना गुरुजनस्य । तीर्थकराणां चाज्ञा श्रुतधर्माराधनाक्रिया ॥ १ ॥

(२) अतीतं प्रतिक्रमामि प्रत्युत्पन्नं संवृणोमि, अनागतं प्रत्याख्यामि ।

(३) मिथ्यात्वप्रतिक्रमणं तथैवासंयमे प्रतिक्रमणम् । कषायाणां प्रतिक्रमणं योगानां चाप्रशस्तानाम् ॥ १ ॥

ततश्च निन्दाद्वारेणाशुभयोगनिवृत्तिरूपमतीतविषयं प्रतिक्रमणम्, प्रत्युत्पन्नविषयमपि संवरद्वारेण अनागतमपि प्रत्याख्यानद्वारेणेति न कश्चिद् दोषः। तच्च दैवसिकादिभेदात् पञ्चधा—दिवसस्यान्ते दैवसिकम्, रात्रेरन्ते रात्रिकम्, पक्षस्यान्ते पाक्षिकम्, चतुर्णां मासानामन्ते चातुर्मासिकम्, संवत्सरस्यान्ते सांवत्सरिकम्। पुनर्द्वेधा—ध्रुवम्, अध्रुवं च। ध्रुवं भरतैरावतेषु प्रथमचरमतीर्थकरतीर्थेषु, अपराधो भवतु वा मा वा, उभयकालं प्रतिक्रमणम्। अध्रुवं मध्यमतीर्थकरतीर्थेषु विदेहेषु च कारणजाते प्रतिक्रमणम्; यदाह,—

सपडिक्कमणो धम्मो पुरिमस्स य पच्छिमस्स य जिणस्स। मज्झिमयाण जिणाणं कारणजाए पडिक्कमणं॥१॥

प्रतिक्रमणविधिश्चैताभ्यो गाथाभ्योऽवसेयः,—

पंचविहायारविसुद्धिहेउमिह साहू सावगो वावि। पडिक्कमणं सह गुरुणा गुरुविरहे कुणइ इक्को वि॥ १॥
वंदित्तु चेइआइं दाउं चउराइए खमासमणे। भूनिहिअसिरो सयलाइयारमिच्छोकडं देइ॥ २॥
सामाइअपुव्वमिच्छा मि ठाइउं काउस्सग्गमिच्चाइं। सुत्तं भणिअ पलंबिअभुयकुप्परधरियपहिरणओ॥ ३॥

---

(१) सप्रतिक्रमणो धर्मः प्रथमस्य च पश्चिमस्य च जिनस्य। मध्यमकानां जिनानां कारणे जाते प्रतिक्रमणम्॥ १॥
(२) पञ्चविधाचारविशुद्धिहेतोरिह साधुः श्रावको वापि। प्रतिक्रमणं सह गुरुणा गुरुविरहे करोत्येकोऽपि॥ १॥
वन्दित्वा चैत्यानि दत्त्वा चतुरादिकान् क्षमाश्रमणान्। भूनिहितशिराः सकलातिचारमिथ्यादुष्कृतं दद्यात्॥ २॥
सामायिकपूर्वमिच्छा मे स्थापयितुं कायोत्सर्गमित्यादि। सूत्रं भणित्वा प्रलम्बितभुजकूर्परधृतपरिधानः॥ ३॥

'घोडगमाईदोसेहिं विरहिअ तो करेइ उस्सग्गं । नाहिअहो जाणुड्ढं चउरंगुलठविअकडिपट्टो ॥ ४ ॥
तत्थ य धरेइ हिअए जहकम दिणकए अईआरे । पारेत्तु नमुक्कारेण पढइ चउवीसथयदंडं ॥ ५ ॥
संडासगे पमज्जिय उवविसिय अलग्गविअयबाहुजुओ । मुहणंतगं च कायं च पेहए पंचवीसइहा ॥ ६ ॥
उट्ठियट्ठिओ सविणयं विहिणा गुरुणो करेइ किइकम्मं । बत्तीसदोसरहिअं पणवीसावस्सगविसुद्धं ॥ ७ ॥
अह सम्ममवणअंगो करजुअविहिधरिअपुत्तिरयहरणो । परिचिंतिअ अइआरे जहकम गुरुपुरो वियडे ॥ ८ ॥
अह उवविसित्तु सुत्तं सामाइयमाइयं पढिय पयओ । अब्भुट्ठियम्हि इचाइ पढइ दुह उट्ठिओ विहिणा ॥ ९ ॥
दाऊण वंदणं तो पणगाइसु जइसु खामए तिन्नि । किइकम्मं करे आयरिअमाइगाहातिगं पढइ ॥ १० ॥

---

(१) घोटकादिदोषैर्विरहित ततः करोति उत्सर्गम् । नाभ्यधो जानूर्ध्वं चतुरङ्गुलस्थापितकटीपट्टः ॥ ४ ॥
तत्र च धारयति हृदये यथाक्रम दिनकृतानतिचारान् । पारयित्वा नमस्कारेण पठति चतुर्विंशतिस्तवदण्डम् ॥ ५ ॥
संदंशं प्रमृज्योपविश्यालग्नविततबाहुयुगः । मुखानन्तकं च कायं च प्रेक्षते पञ्चविंशतिधा ॥ ६ ॥
उत्थितस्थितः सविनयं विधिना गुरोः करोति कृतिकर्म । द्वात्रिंशद्दोषरहितं पञ्चविंशत्यावश्यकविशुद्धम् ॥ ७ ॥
अथ सम्यगवनताङ्गः करयुगविधिधृतवरित्रकारजोहरणः । परिचिन्तयत्यति (न्तितानति) चारान् यथाक्रमं गुरुपुरो विस्तृतान् (विस्तृणुयात्) ॥ ८ ॥
अथोपविश्य सूत्रं सामायिकादिकं पठित्वा प्रयतः । अभ्युत्थितोऽस्मीत्यादि पठति द्विधोत्थितो विधिना ॥ ९ ॥
दत्त्वा वन्दनं ततः पञ्चकादिषु यतिषु क्षमयेत् त्रीन् । कृतिकर्म कुर्यादाचार्यादिगाथात्रिकं पठति ॥ १० ॥

इय सामाइयउस्सग्गसुत्तमुच्चरिय काउस्सग्गठिओ । चिंतइ उज्जोयदुगं चरित्तअइयारसुद्धिकए ॥ ११ ॥
विहिणा पारिय सम्मत्तसुद्धिहेउं च पढइ उज्जोअं । तह सव्वलोअअरहंतचेइयाराहणोसग्गं ॥ १२ ॥
काउं उज्जोअगरं चिंतिय पारेइ सुद्धसम्मत्तो । पुक्खरवरदीवड्ढं कड्ढइ सुअसोहणनिमित्तं ॥ १३ ॥
पुण पणवीसोस्सासं उस्सग्गं कुणइ पारए विहिणा। तो सयलकुसलकिरियाफलाण सिद्धाण पढइ थयं ॥१४॥
अह सुअसमिद्धिहेउं सुअदेवीए करेइ उस्सग्गं । चिंतेइ नमोकारं सुणइ वदेइ व्व तीइ थुइं ॥ १५ ॥
एवं खेत्तसुरीए उस्सग्गं कुणइ सुणइ देइ थुइं । पढिऊण पंचमंगलमुवविसइ पमज्ज संडासे ॥ १६ ॥
पुव्वविहिणेव पेहिय पुत्तिं दाऊण वंदणं गुरुणो । इच्छामो अणुसट्ठिं ति भणिय जाणूहिंतो ठाइ ॥ १७ ॥

---

( १ ) इति सामायिकोत्सर्गसूत्रमुच्चार्य कायोत्सर्गस्थितः । चिन्तयत्युद्द्योतद्विकं चारित्रातिचारशुद्धिकृते ॥ ११ ॥
विधिना पारयित्वा सम्यक्त्वशुद्धिहेतोश्च पठेदुद्द्योतम् । तथा सर्वलोकार्हच्चैत्याराधनोत्सर्गम् ॥ १२ ॥
कृत्वोद्द्योतकरं चिन्तयित्वा पारयति शुद्धसम्यक्त्वः । पुष्करवरद्वीपार्धं पठति श्रुतशोधननिमित्तम् । १३ ॥
पुनः पञ्चविंशत्युच्छ्वासमुत्सर्गं करोति पारयति विधिना। ततः सकलकुशलक्रियाफलानां (लेभ्यः) सिद्धानां पठेत् स्तवम् ॥१४॥
अथ श्रुतसमृद्धिहेतोः श्रुतदेव्याः कुर्यादुत्सर्गम् । चिन्तयेद् नमस्कारं शृणुयाद् वदेद् वा तस्याः स्तुतिम् ॥ १५ ॥
एवं क्षेत्रसुर्या उत्सर्गं कुर्यात् शृणुयाद् दद्यात् स्तुतिम् । पठित्वा पञ्चमङ्गलमुपविशेत् प्रमृज्य संदंशम ॥ १६ ॥
पूर्वविधिनैव प्रेक्ष्य वस्त्रिकां दत्त्वा वन्दनं गुरोः । इच्छामोऽनुशास्तिमिति भणितश्च जानुभ्यां तिष्ठेत् ॥ १७ ॥

'गुरुथुइग्गहणे थुइ तिण्णि वद्धमाणक्खरस्सरो पढइ । सक्कत्थव थव पढिअ कुणइ पच्छित्तउस्सग्ग ॥ १८ ॥
एव ता देवसिअ राइयमवि एवमेव नवरि तहिं । पढम दाउ मिच्छा मि दुक्कड पढइ सक्कत्थय ॥ १९ ॥
उट्ठिय करेइ विहिणा उस्सग्ग चितए अ उज्जोअ । बीय दसणसुद्धीए चितए तत्थ इममेव ॥ २० ॥
तइए निसाअइआर जहकम चिंतिऊण पारेइ । सिद्धत्थय पढित्ता पमज्ज सडासमुवविसइ ॥ २१ ॥
पुव्व व पुत्तिपेहणवदणमालोयसुत्तपढण च । वदणखामणवदणगाहातिगपढणमुस्सग्गो ॥ २२ ॥
तत्थ य चितइ सजमजोगाण न होइ जेण मे हाणी । त पडिवज्जामि तव छम्मास ता न काउमल ॥ २३ ॥
एगाइगुणतीसूणय पि न सहो न पचमासमवि । एव चउ ति दुमास न समत्थो एगमास पि ॥ २४ ॥

---

(१) गुरुस्तुतिग्रहणे स्तुतीस्तिस्रो वर्धमानाक्षरस्वर पठेत् । शक्रस्तव स्तव पठित्वा कुर्यात् प्रायश्चित्तोत्सर्गम ॥१८॥
एव तावद् दैवसिक रात्रिकमप्येवमेव नवर तत्र । प्रथम दत्त्वा मिथ्या मे दुष्कृत पठेत् शक्रस्तवम् ॥ १९ ॥
उत्थाय कुर्याद् विधिनोत्सर्ग चिन्तयेच्चोद्द्योतम । द्वितीय दर्शनशुद्धौ चिन्तयेत् तत्रेदमेव ॥ २० ॥
तृतीये निशातीचार यथाक्रम चिन्तयित्वा पारयेत् । सिद्धस्तव पठित्वा प्रमृज्य सदशमुपविशेत् ॥ २१ ॥
पूर्वमिव वस्त्रिकाप्रेक्षण वन्दनमालोचसूत्रपठन च । वन्दनक्षमणावन्दनगाथात्रिकपठनमुत्सर्ग ॥ २२ ॥
तत्र च चिन्तयेत् सयमयोगाना न भवति येन मे हानि । तत् प्रतिपद्ये तप षड् मासास्तावद् न कर्तुमलम् ॥ २३ ॥
एकाद्येकोनत्रिंशदूनकमपि न सहो न पञ्च मासानपि । एव चतुरस्त्रीन् द्वौ मासौ न समर्थ एकमासमपि ॥ २४ ॥

जा तं पि तेरसूणं चउतीसइमाइअं दुहाणीए । जाव चउत्थं तो आयंबिलाइ जा पोरिसि नमो वा ॥ २५ ॥
जं सक्कं तं हियए धरेत्तु पारेत्तु पेहए पोत्तिं । दाउं वंदणमसढो तं चिय पच्चक्खए विहिणा ॥ २६ ॥
इच्छामो अणुसट्ठिं ति भणिय उवविसिअ पढइ तिण्णि थुई । मिउसद्देणं सक्कत्थयाइ तो चेइए वंदे ॥ २७ ॥
अह पक्खियं चउद्दसिदिणम्मि पुव्वं व तत्थ देवसिअं । सुत्तंतं पडिक्कमिउं तो सम्ममिमं कमं कुणइ ॥ २८ ॥
मुहपोत्ति वंदणयं संबुद्धाखामणं तहालोए । वंदण पत्तेयक्खामणं च वंदणयमह सुत्तं ॥ २९ ॥
सुत्तं अब्भुट्ठाणं उस्सग्गो पुत्ति वंदणं तह य । पज्जंतियखामणं तह चउरो थोभवंदणया ॥ ३० ॥
पुव्वविहिणेव सव्वं देवसियं वंदणाइ तो कुणइ । सेज्जसुरीउस्सग्गे भेओ संतिथयपढणे अ ॥ ३१ ॥

---

( १ ) यादत्तदपि त्रयोदशोनं चतुस्त्रिंशदादिकं द्विहान्या । यावच्चतुर्थं तत आचाम्लादि यावत् पौरुषीं नमो वा ॥२५॥
यत् शक्यं तद् हृदये धारयित्वा पारयेत् प्रेक्षेत वस्त्रिकाम् । दत्त्वा वन्दनमशठस्तदेव प्रत्याख्यायाद् विधिना ॥ २६ ॥
इच्छामोऽनुशास्तिमिति भणित्वोपविश्य पठेत् तिस्रः स्तुतीः । मृदुशब्देन शक्रस्तवादि ततश्चैत्यानि वन्देत ॥ २७ ॥
अथ पाक्षिकं चतुर्दशीदिने पूर्वमिव तत्र दैवसिकम् । सूत्रान्तं प्रतिक्रम्य ततः सम्यगिमं क्रमं कुर्यात् ॥ २८ ॥
मुखवस्त्रिका वन्दनकं संबुद्धक्षमणा तथालोचः । वन्दनं प्रत्येकं क्षमणा च वन्दनकमथ सूत्रम् ॥ २९ ॥
सूत्रमभ्युत्थानमुत्सर्गो वस्त्रिका वन्दनं तथा च । पार्यन्तिकक्षमणा तथा चत्वारि स्तोभवन्दनकानि ॥ ३० ॥
पूर्वविधिनैव सर्वं दैवसिकं वन्दनादि ततः कुर्यात् । शय्यासुर्युत्सर्गे भेदः शान्तिस्तवपठने च ॥ ३१ ॥

'एव चिय चउमासे वरिसे अ जहकम विही ग्रेओ । पक्खचउमास वरिसेसु नवरि नामम्मि नाणत्त ॥३२॥
तह उस्सग्गोज्जोश्रा बारस वीसा समगलिग चत्ता । सबुद्धखामण ति पण सच साहूण जहसख ॥ ३३ ॥
प्रतिक्रमणसूत्रविवरण तु ग्रन्थविस्तरभयाद् नोक्तम् ॥

अथ कायोत्सर्ग' । कायस्य शरीरस्य स्थानमौनध्यानक्रियाव्यतिरेकेणान्यत्रोच्छ्वसितादिभ्य' क्रियान्तराध्यासमधिकृत्य य उत्सर्गस्त्यागो ' नमो अरहताण ' इति वचनात् प्राक् स कायोत्सर्ग । स च द्विविध, चेष्टायामभिभवे च । चेष्टायां गमनागमनादावीर्यापथिकादिप्रतिक्रमणभावी, अभिभवे उपसर्गजयार्थम्, यदाहु —
सो उस्सग्गो दुविहो चेट्ठाए अभिभवे अ नायव्वो । भिक्खायरिया पढमो उसग्गभिउजणे बीओ ॥ १ ॥
तत्र चेष्टाकायोत्सर्गोऽष्ट–पञ्चविंशति–सप्तविंशति–त्रिशती–पञ्चशती–अष्टोत्तरसहस्रोच्छ्वासान् यावद् भवति, अभिभवकायोत्सर्गस्तु मुहूर्तादारभ्य सवत्सर यावद् बाहुबलेरिव भवति । स च कायोत्सर्ग उच्छ्रित–निषण्ण–शयितभेदेन त्रेधा । एकैकश्चतुर्धा—उच्छ्रितोच्छ्रितो द्रव्यत उच्छ्रित ऊर्ध्वस्थान भावत उच्छ्रितो धर्मध्यानशुक्लध्याने इति प्रथम' । तथा द्रव्यत उच्छ्रित ऊर्ध्वस्थान भावतोऽनुच्छ्रितः कृष्णादिलेश्यापरिणाम इति द्वितीय । द्रव्यतो नोच्छ्रितो नोर्ध्वस्थान भावत उच्छ्रितो धर्मध्यान–शुक्लध्याने इति तृतीय । न द्रव्यतो नापि भावत उच्छ्रित

( १ ) एवमेव चतुर्मास वर्षे च यथाक्रम विधिर्ज्ञेय । पक्षचतुर्मासवर्षेषु, नवर नाम्नि नानात्वम् ॥ ३२ ॥
तथोत्सर्ग उद्द्योता द्वादश विंशति समङ्गलिकाश्चत्वारिंशत्। सबुद्धक्षमणास्तिस्र पञ्च सप्त साधूना यथासख्यम्।३३।
( २ ) स उत्सर्गो द्विविधश्चेष्टायामभिभवे च ज्ञातव्य । भिक्षेर्याया प्रथम उत्सर्गाभियोजने द्वितीय ॥ १ ॥

इति चतुर्थः। एवं निषण्ण-शयितयोरपि चतुर्भङ्गी वाच्या।

दोषरहितश्च कायोत्सर्गः कार्यः। दोषाश्चैकविंशतिः—आकुञ्चितैकपादस्य घोटकस्येव स्थानं घोटकदोषः ।१। खरवातप्रकम्पिताया लताया इव कम्पनं लतादोषः ।२। स्तम्भमवष्टभ्य स्थानं स्तम्भदोषः ।३। कुड्यमवष्टभ्य स्थानं कुड्यदोषः ।४। माले शिरोऽवष्टभ्य स्थानं मालदोषः ।५। हस्तौ गुह्यदेशे स्थापयित्वा शबर्या इव स्थानं शबरीदोषः ।६। शिरोऽवनम्य कुलवध्वा इव स्थानं वधूदोषः ।७। निगडितस्येव विवृतपादस्य मिलितपादस्य वा स्थानं निगडदोषः ।८। नाभेरुपर्याजानु चोलपट्टकं निबध्य स्थानं लम्बोत्तरदोषः ।९। दंशादिवारणार्थमज्ञानाद् वा स्तने चोलपट्टकं निबध्य स्थानं स्तनदोषः; 'धात्रीवद् बालार्थे स्तनावुन्नमय्य स्थानं वा' इत्येके ।१०। पार्ष्णी मीलयित्वाऽग्रचरणौ विस्तार्य, अङ्गुष्ठौ वा मीलयित्वा पार्ष्णी विस्तार्य स्थानं शकटोर्द्धिकादोषः ।११। व्रतिनीवत् पटेन शरीरमाच्छाद्य स्थानं संयतीदोषः ।१२। खलीनमिव रजोहरणं पुरस्कृत्य स्थानं खलीनदोषः; अन्ये खलीनार्तहयवदूर्ध्वाधःशिरःकम्पनं खलीनदोषमाहुः ।१३। वायसस्येवेतस्ततो नयनगोलकभ्रमणं दिग्वेक्षणं वा वायसदोषः ।१४। षट्पदिकाभयेन कपित्थवच्चोलपट्टं संवृत्य मुष्टौ गृहीत्वा स्थानं कपित्थदोषः; 'एवमेव मुष्टिं बद्ध्वा स्थानम्' इत्यन्ये ।१५। भूताविष्टस्येव शीर्षं कम्पयतः स्थानं शीर्षोत्कम्पितदोषः ।१६। मूकस्येवाव्यक्तशब्दं कुर्वतः स्थानं मूकदोषः ।१७। आलापकगणनार्थमङ्गुलीश्चालयतः स्थानमङ्गुलिदोषः ।१८। व्यापारान्तरनिरूपणार्थं भ्रूनृत्तं कुर्वतः स्थानं भ्रूदोषः ।१९। निष्पद्यमानवारुण्या इव बुडबुडारावेण स्थानं वारुणीदोषः; 'वारुणीमत्तस्येव घूर्णमानस्य स्थानं वारुणीदोषः' इत्यन्ये ।२०। अनुप्रेक्षमाणस्येवौष्ठपुटे चलयतः स्थानमनुप्रेक्षादोषः ।२१। यदाहुः—

घोडग लया य खभे कुड्डे माले य सवरि वहु णियले। लबोत्तर थण उद्धी सजइ खलिणे य वायस कविट्ठे ॥१॥
सीसोकंपिअ मूइ अंगुली भमुहा य वारुणी पेहा । इति ।
एके त्वन्यानपि कायोत्सर्गदोषानाहु , यथा—
निष्ठीवन वपु'स्पर्श प्रपञ्चबहुला स्थिति' । सूत्रोदितविधेर्न्यून वयोऽपेक्षाविवर्जनम् ॥ १ ॥
कालापेक्षाव्यतिक्रान्तिर्व्याक्षेपासक्तचित्तता । लोभाकुलितचित्तत्व पापकार्योद्यम. पर ॥ २ ॥
कृत्याकृत्यविमूढत्व पट्टिकाद्युपरि स्थिति । इति ।
कायोत्सर्गस्यापि फल निर्जरैव, यदाहु'—
काउस्सग्गे जह सठिअस्स भजति अगुवगाइ । इय भिंदति सुविहिया अट्ठविह कम्मसघाय ॥ १ ॥
कायोत्सर्गसूत्रार्थ प्राग् व्याख्यात एव ॥
अथ प्रत्याख्यानम्—प्रति प्रवृत्तिप्रतिकूलतया आ मर्यादया ख्यान प्रकथन प्रत्याख्यानम् । तच्च द्वेधा— मूलगुणरूपमुत्तरगुणरूप च । मूलगुणा यतीना महाव्रतानि, श्रावकाणामणुव्रतानि, उत्तरगुणास्तु यतीना पिण्डविशुद्ध्यादय', श्रावकाणां तु गुणव्रतशिक्षाव्रतानि ।मूलगुणानां तु प्रत्याख्यानत्व हिंसादिनिवृत्तिरूपत्वात्,

---

(१) घोटको लता च स्तम्भ कुड्य माल च शबरी वधूर्निगड । लम्बोत्तर स्तन उद्धिसंयती खलीन च वायस कपित्थ ॥१॥
शीर्षोत्कम्पित मूकोऽङ्गुलिभ्रूश्च वारुणी प्रेक्षा ।
(२) कायोत्सर्गे यथा सस्थितस्य भज्यन्तेऽङ्गोपाङ्गानि । एव भिन्दन्ति सुविहिता अष्टविध कर्मसघातम् ॥ १ ॥

उत्तरगुणानां तु पिण्डविशुद्ध्यादीनां दिग्व्रतादीनां च प्रतिपत्तिनिवृत्तिरूपत्वात्। तत्र स्वयं कृतप्रत्याख्यानः काले विनयपूर्वकं सम्यगुपयुक्तो गुरुवचनमनुच्चरन् स्वयं जानन् ज्ञस्यैव गुरोः पार्श्वे प्रत्याख्यानं करोति। ज्ञत्वे चतुर्भङ्गी द्वयोर्ज्ञत्वे प्रथमो भङ्गः शुद्धः। १। गुरोर्ज्ञत्वे शिष्यस्याज्ञत्वे द्वितीयः। तत्र तत्कालं शिष्यं संक्षेपतः प्रबोध्य यदा गुरुः प्रत्याख्यानं कारयति तदाऽयमपि शुद्धः, अन्यथा त्वशुद्धः।२। गुरोरज्ञत्वे शिष्यस्य ज्ञत्वे तृतीयः। अयमपि तथाविधगुरोरप्राप्तौ गुरुबहुमानाद् गुरोः पितृ-पितृव्य-मातुल-ज्येष्ठभ्रात्रादिकं साक्षिणं कुर्वतस्तृतीयः शुद्धः, अन्यथा त्वशुद्धः। ३। द्वयोरज्ञत्वे चतुर्थः, असावशुद्ध एव। ४।

उत्तरगुणप्रत्याख्यानं प्रतिदिनोपयोगि द्विविधम्-संकेतप्रत्याख्यानमद्धाप्रत्याख्यानं च। तत्र संकेतप्रत्याख्यानं श्रावकः पौरुष्यादिप्रत्याख्यानं कृत्वा क्षेत्रादौ गतो गृहे वा तिष्ठन् 'भोजनप्राप्तेः प्राक् प्रत्याख्यानरहितो मा भूवम्' इत्यङ्गुष्ठादिकं संकेतं करोति-'यावदङ्गुष्ठं मुष्टिं ग्रन्थिं वा न मुञ्चामि, गृहं वा न प्रविशामि, स्वेदबिन्दवो वा यावद् न शुष्यन्ति, एतावन्तो वोच्छ्वासा यावद् न भवन्ति, जलार्द्रमञ्चिकायां यावदेते बिन्दवो न शुष्यन्ति, दीपो वा यावद् न निर्वाति तावद् न भुञ्जे' इति; यदाहुः—

अंगुट्ठमुट्ठिगंठीघरसेऊसासथिवुगजोइक्खे। एअं संकेय भणियं धीरेहिं अणंतनाणीहिं ॥ १ ॥

अद्धा कालस्तद्विषयं प्रत्याख्यानमद्धाप्रत्याख्यानम्। तच्च नमस्कारसहितं, पौरुषी, दिनपूर्वार्धः, एकाशनम्, एकस्थानकम्, आचामाम्लम्, उपवासः, चरमम्, अभिग्रहः, विकृतिनिषेधश्चेति दशविधम्; यदाहुः—

(१) अङ्गुष्ठमुष्टिग्रन्थिगृहस्वेदोच्छ्वासस्तिबुकज्योतिष्कान्। एतत् सङ्केतं भणितं धीरैरनन्तज्ञानिभिः ॥ १ ॥

नवकार पोरिसीए पुरिमड्ढेकासणेगठाणे य । आयबिल भत्तट्ठे चरमे अ अभिग्गहे विगई ॥ १ ॥

नन्वेकाशनादिप्रत्याख्यान कथमद्धाप्रत्याख्यानम्; न हि तत्र कालनियमोऽस्ति ? सत्यम्, अद्धाप्रत्याख्यानपूर्वाण्येकाशनादीनि प्रायेण क्रियन्त इत्यद्धाप्रत्याख्यानत्वेनोच्यन्ते । प्रत्याख्यान चापवादरूपाकारसहित कर्तव्यम्, अन्यथा तु भङ्गः स्यात्, स च दोषाय, यदाहुः—

वयभगे गुरुदोसो थेवस्स वि पालणा गुणकरी ओ । गुरुलाघव च खेय धम्मम्मि अओ अ आगारा ॥ १ ॥

ते च नमस्कारसहितादिषु यावन्तो भवन्ति तावन्त उपदर्श्यन्ते । तत्र नमस्कारसहिते मुहूर्तमात्रकाले नमस्कारोच्चारणावसाने प्रत्याख्याने द्वावाकारौ भवत । आक्रियते विधीयते प्रत्याख्यानभङ्गपरिहारार्थमित्याकार प्रत्याख्यानापवाद । ननु कालस्यानुक्तत्वात् सकेतप्रत्याख्यानमेवेदम् । नैवम्, सहितशब्देन मुहूर्तस्य विशेषणात् । अथ मुहूर्तशब्दो न श्रूयते, तत् कथ तस्य विशेष्यत्वम् ? । उच्यते—अद्धाप्रत्याख्यानमध्येऽस्य पाठात्, पौरुषीप्रत्याख्यानस्य वक्ष्यमाणत्वादवश्य तदर्वाग् मुहूर्त एवावशिष्यते । अथ मुहूर्त्तद्वयादिकमपि कुतो न लभ्यते ? । उच्यते—अल्पाकारत्वादस्य । पौरुष्यां हि षडाकाराः, तदस्मिन् प्रत्याख्याने आकारद्वयवति स्वल्प एव कालोऽवशिष्यते । स च नमस्कारेण सहितः, पूर्णेऽपि काले नमस्कारपाठमन्तरेण प्रत्याख्यानस्यापूर्यमाणत्वात्, सत्यपि नमस्कारपाठे मुहूर्त्ताभ्यन्तरे प्रत्याख्यानभङ्गात् । तत् सिद्धमेतत्—मुहूर्त्तमानकाल नमस्कारसहित प्रत्याख्यानमिति ।

---

(१) नमस्कार पौरुषी पूर्वार्ध एकाशनमेकस्थान च । आचामाम्लमभक्तार्थश्चरमोऽभिग्रहो विकृति ॥ १ ॥

(२) व्रतभङ्गे गुरुदोष स्तोकस्यापि पालना गुणकरी तु । गुरु लाघव च ज्ञेय धर्मेऽतश्चाकारा ॥ १ ॥

अथ प्रथम एव मुहूर्त्त इति कुतो लभ्यते ?। सूत्रप्रामाण्यात्, पौरुषीवत्। सूत्रं चेदम्—

उग्गए सूरे नमोक्कारसहिअं पच्चक्खाइ चउव्विहं पि आहारं असणं पाणं खाइमं साइमं अन्नत्थणाभोगेणं सहसागारेणं वोसिरइ।

व्याख्या—उद्गते सूरे सूर्योद्गमादारभ्येत्यर्थः, नमस्कारेण परमेष्ठिस्तवेन सहितं युक्तं नमस्कारसहितं प्रत्याख्याति, "सर्वे धातवः करोत्यर्थेन व्याप्ताः" इतिन्यायाद् नमस्कारेण सहितं प्रत्याख्यानं करोति। इदं गुरोरनुवादभङ्ग्या वचनम्। शिष्यस्तु 'प्रत्याख्यामि' इत्येतदाह। एवं 'व्युत्सृजति' इत्यत्रापि वाच्यम्। कथम् ? चतुर्विधमिति, न पुनरेकविधादिकम्, आहारमभ्यवहार्यं 'व्युत्सृजति' इत्युत्तरेण योगः। इदं चतुर्विधाहारस्यैव भवतीति संप्रदायः, रात्रिभोजनव्रततीरणप्रायत्वादस्य। अशनमित्याद्याहारचातुर्विध्यकीर्तनम्। अशनादय आहाराः पूर्वं व्याख्याताः। अत्र नियमभङ्गभयादाकारावाह—अन्नत्थणाभोगेणं सहसागारेणं, अत्र पञ्चम्यर्थे तृतीया, अन्यत्रानाभोगात्, सहसाकाराच्च; एतौ वर्जयित्वेत्यर्थः। तत्रानाभोगोऽत्यन्तविस्मृतिः। सहसाकारोऽतिप्रवृत्तयोगानिवर्तनम्। व्युत्सृजति परिहरति॥

अथ पौरुषीप्रत्याख्यानम्—

पोरिसिं पच्चक्खाइ उग्गए सूरे चउव्विहं पि आहारं असणं पाणं खाइमं साइमं अन्नत्थणाभोगेणं सहसागारेणं पच्छन्नेणं कालेणं दिसामोहेणं साहुवयणेणं सव्वसमाहिवत्तिआगारेणं वोसिरइ॥

पुरुषः प्रमाणमस्याः पौरुषी छाया तद्युक्तः कालोऽपि पौरुषी प्रहर इत्यर्थः, तां प्रत्याख्याति पौरुषीप्रत्याख्यानं

करोतीत्यर्थः। कथम्? चतुर्विधमशन–पान–खाद्य–स्वाद्यलक्षण 'व्युत्सृजति' इत्युत्तरेण योग । अत्र षडाकारा'। प्रथमौ द्वौ पूर्ववत्। अन्यत्र प्रच्छन्नकालात्, दिग्मोहात्, साधुवचनात्, सर्वसमाधिप्रत्ययाकाराच्च। प्रच्छन्नता च कालस्य, यदा मेघेन रजसा गिरिणा वान्तरितत्वात् सूरो न दृश्यते, तत्र पौरुषीं पूर्णां ज्ञात्वा भुञ्जानस्या-पूर्णायामपि तस्या न भङ्गः; ज्ञात्वा त्वर्धभुक्तेनापि तथैव स्थातव्य यावत् पौरुषी पूर्णा भवति, पूर्णाया तत पर भोक्तव्यम्, न पूर्णेति ज्ञाते तु भुञ्जानस्य भङ्ग एव। दिग्मोहस्तु यदा पूर्वामपि पश्चिमेति जानाति तदाऽपूर्णा यामपि पौरुष्यां मोहाद् भुञ्जानस्य न भङ्ग., मोहविगमे तु पूर्ववदर्धभुक्तेनापि स्थातव्यम्, निरपेक्षतया भुञ्जानस्य भङ्ग एवेति। साधुवचन 'उद्घाटा पौरुषी' इत्यादिक विभ्रमकारणम्, तत् श्रुत्वा भुञ्जानस्य न भङ्गः, भुञ्जानेन तु ज्ञाते अन्येन वा कथिते पूर्ववत् तथैव स्थातव्यम्। तथा कृतपौरुषीप्रत्याख्यानस्य समुत्पन्नतीव्रशूलादिदुःखतया सजातयोरार्त–रौद्रध्यानयोः सर्वथा निरासः सर्वसमाधिस्तस्य प्रत्ययः कारण स एवाकार प्रत्याख्यानापवादः सर्वसमाधिप्रत्ययाकारः–समाधिनिमित्तमौषधपथ्यादिप्रवृत्तावपूर्णायामपि पौरुष्यां भुङ्क्ते तदा न भङ्ग इत्यर्थः। वैद्यादिर्वा कृतपौरुषीप्रत्याख्यानोऽन्यस्यातुरस्य समाधिनिमित्त यदाऽपूर्णायामपि पौरुष्या भुङ्क्ते तदा न भङ्गः, अर्धभुक्ते त्वातुरस्य समाधौ मरणे वोत्पन्ने ज्ञाते सति तथैव भोजनस्य त्यागः॥

सार्धपौरुषीप्रत्याख्यान पौरुषीप्रत्याख्यान एवान्तर्भूतम्॥

अथ पूर्वार्धप्रत्याख्यानम्—

सूरे उग्गए पुरिमड्ढ पच्चक्खाइ चउव्विह पि आहार असण पाण खाइम साइम अन्नत्थणाभोगेण

सहसागारेणं पच्छन्नकालेणं दिसामोहेणं साहुवयणेणं महत्तरागारेणं सव्वसमाहिवत्तियागारेणं वोसिरइ ॥

पूर्वं च तदर्धं च पूर्वार्धं दिनस्याद्यं प्रहरद्वयं पूर्वार्धं प्रत्याख्याति पूर्वार्धप्रत्याख्यानं करोति । षडाकाराः पूर्ववत् । 'महत्तरागारेणं' इति, महत्तरं प्रत्याख्यानानुपालनलभ्यनिर्जरापेक्षया बृहत्तरनिर्जरालाभहेतुभूतं पुरुषान्तरासाध्यं ग्लानचैत्यसंघादिप्रयोजनं तदेवाकारः प्रत्याख्यानापवादो महत्तराकारस्तस्मात् 'अन्यत्र' इति योगः । यच्चात्रैव महत्तराकारस्याभिधानं न नमस्कारसहितादौ, तत्र कालस्याल्पत्वं महत्त्वं च कारणमाचक्षते ।



अथैकाशनप्रत्याख्यानम् । तत्राष्टावाकाराः, यत् सूत्रम्—

एकासणगं पच्चक्खाइ चउव्विहं पि आहारं असणं पाणं खाइमं साइमं अन्नत्थणाभोगेणं सहसागारेणं सागारिआगारेणं आउंटणपसारणेणं गुरुअब्भुट्ठाणेणं पारिट्ठावणियागारेणं महत्तरागारेणं सव्वसमाहिवत्तिआगारेणं वोसिरइ ॥

एकं सकृदशनं भोजनम्, एकं वासनं पुताचलनतो यत्र तदेकाशनमेकासनं च; प्राकृते द्वयोरपि 'एगासणं' इति रूपम्, तत् प्रत्याख्याति—एकाशनप्रत्याख्यानं करोतीत्यर्थः । अत्राद्यावन्त्यौ च द्वावाकारौ पूर्ववत् । सागारिआगारेणं सह अगारेण वर्तते इति सागारः स एव सागारिको गृहस्थः स एवाकारः प्रत्याख्यानापवादः सागारिकाकारस्तस्मादन्यत्र । गृहस्थसमक्षं हि साधूनां भोक्तुं न कल्पते, प्रवचनोपघातसंभवात्, अत एवोक्तम्;—

छक्कायदयावतो वि सजओ दुल्लह कुणइ वोहिं । आहारे नीहारे दुगुछियपिंडगहणे अ ॥ १ ॥

ततश्च भुञ्जानस्य यदा सागारिक समायाति, स यदि चलस्तदा क्षण प्रतीक्षते, अथ स्थिरस्तदा स्वाध्याया-दिव्याघातो मा भूदिति तत स्थानादन्यत्रोपविश्य भुञ्जानस्यापि न भङ्गः । गृहस्थस्य तु येन दृष्ट भोजन न जीर्यति स सागारिकः । आउटणपसारणेण—आउटण आकुञ्चन जङ्घादेः संकोचन प्रसारण च तस्यैवाकुञ्चि-तस्य ऋजूकरणम्, आकुञ्चने प्रसारणे चासहिष्णुतया क्रियमाणे किञ्चिदासन चलति ततोऽन्यत्र प्रत्याख्यानम् । गुरुअब्भुट्ठाणेण—गुरोरभ्युत्थानार्हस्याचार्यस्य प्राघुर्णकस्य वाऽभ्युत्थान प्रतीत्यासनत्यजन गुर्वभ्युत्थान ततोऽ-न्यत्र। अभ्युत्थान चावश्यकर्त्तव्यत्वाद् भुञ्जानेनापि कर्तव्यमिति न तत्र प्रत्याख्यानभङ्ग । पारिट्ठावणिआगारेण—परिष्ठापन सर्वथा त्यजन प्रयोजनमस्य पारिष्ठापनिकमन्न तदेवाकारः पारिष्ठापनिकाकारः, ततोऽन्यत्र । तत्र हि त्यज्यमाने बहुदोपसभवात्, आश्रीयमाणे चागमिकन्यायेन गुणसभवाच्च गुर्वाज्ञया पुनर्भुञ्जानस्य न भङ्गः । वोसिरइ इति, अनेकासनमशनाद्याहार च परिहरति ॥

अथैकस्थानकम् । तत्र सप्ताकारा । अत्र सूत्रम्—एकट्ठाण पच्चक्खाइ इत्याद्येकाशनवत् । आकुञ्चनप्रसारणा-कारवर्जमेकमद्वितीय स्थानमङ्गविन्यासरूप यत्र तदेकस्थान प्रत्याख्यानम् । यद् यथा भोजनकालेऽङ्गोपाङ्ग स्था-पितम्, तस्मिंस्तथास्थित एव भोक्तव्यम् । मुखस्य पाणेश्चाशक्यपरिहारत्वाच्चलन न प्रतिषिद्धम् । आकुञ्चनप्रसा-रणाकारवर्जन चैकाशनतो भेदज्ञापनार्थम्, अन्यथैकाशनमेव स्यात् ॥

---

(१) षट्कायदयावानपि सयतो दुर्लभ करोति वोधिम् । आहारे नीहारे जुगुप्सितपिण्डग्रहणे च ॥ १ ॥

अथाचामाम्लम्। तत्राष्टावाकाराः। अत्र सूत्रम्—

आयंबिलं पच्चक्खाइ अन्नत्थणाभोगेणं सहसागारेणं लेवालेवेणं उक्खित्तविवेगेणं गिहत्थसंसट्ठेणं पारिट्ठावणिआगारेणं महत्तरागारेणं सव्वसमाहिवत्तिआगारेणं वोसिरइ।

आचामोऽवस्रावणम्, अम्लं चतुर्थो रसः, एते च प्रायेण व्यञ्जने यत्र भोजने ओदन-कुल्माष-सक्तुप्रभृतिके तदाचामाम्लं समयभाषयोच्यते, तत् प्रत्याख्याति—आचामाम्लप्रत्याख्यानं करोतीत्यर्थः। आद्यावन्त्याश्च त्रय आकाराः पूर्ववत्। लेवालेवेणं लेपो भोजनभाजनस्य विकृत्या तीमनादिना वाऽऽचामाम्लप्रत्याख्यातुरकल्पनीयेन लिप्तता, अलेपो विकृत्यादिना लिप्तपूर्वस्य भोजनभाजनस्यैव हस्तादिना संलेखनतोऽलिप्तता, लेपश्चालेपश्च लेपालेपं तस्मादन्यत्र—भाजने विकृत्याद्यवयवसद्भावेऽपि न भङ्ग इत्यर्थः। उक्खित्तविवेगेणं शुष्कौदनादिभक्ते पतितपूर्वस्याचामाम्लप्रत्याख्यानवतामयोग्यस्याद्रवविकृत्यादिद्रव्यस्योत्क्षिप्तस्योद्धृतस्य विवेको निःशेषतया त्याग उत्क्षिप्तविवेक उत्क्षिप्तत्याग इत्यर्थः, तस्मादन्यत्र—भोक्तव्यद्रव्यस्याभोक्तव्यद्रव्यस्पर्शेनापि न भङ्ग इति भावः। यत्तूत्क्षेप्तुं न शक्यं तस्य भोजने भङ्गः। गिहत्थसंसट्ठेणं गृहस्थस्य भक्तदायकस्य संबन्धि करोटिकादिभाजनं विकृत्यादिद्रव्येणोपलिप्तं गृहस्थसंसृष्टं ततोऽन्यत्र। विकृत्यादिसंसृष्टभाजनेन हि दीयमानभक्तमकल्प्यद्रव्यावयवमिश्रं भवति, न च तद् भुञ्जानस्यापि भङ्गः, यद्यकल्प्यद्रव्यरसो बहु न ज्ञायते। वोसिरइ इति—अनाचामाम्लं चतुर्विधाहारं च व्युत्सृजति॥

अथाभक्तार्थप्रत्याख्यानम्। तत्र पञ्चाकाराः, यत् सूत्रम्—

सूरे उग्गए अब्भत्तट्ठं पच्चक्खाइ चउव्विहं पि आहारं असणं पाणं खाइमं साइमं अन्नत्थणाभोगेणं सहसागारेणं पारिट्ठावणियागारेणं महत्तरागारेणं सव्वसमाहिवत्तियागारेणं वोसिरइ ।

सूर उद्गते सूर्योद्गमादारभ्य, अनेन च भोजनानन्तरं प्रत्याख्यानस्य निषेध इत्याह भक्तेन भोजनेनार्थः प्रयोजनं भक्तार्थः, न भक्तार्थोऽभक्तार्थः, अथवा न विद्यते भक्तार्थोऽस्मिन् प्रत्याख्यानविशेषे सोऽभक्तार्थ उपवास इत्यर्थः । आकाराः पूर्ववत् । नवरं पारिष्ठापनिकाकारे विशेषः । यदि त्रिविधाहारस्य प्रत्याख्याति तदा पारिष्ठापनिकं कल्पते, यदि तु चतुर्विधाहारस्य प्रत्याख्याति पानकं च नास्ति तदा न कल्पते, पानके तूद्धरिते कल्पते । वोसिरइ इति भक्तार्थमशनादि च व्युत्सृजति ॥

अथ पानकम् । तत्र पौरुषीपूर्वार्धैकाशनैकस्थानाचामाम्लाभक्तार्थप्रत्याख्यानेषु उत्सर्गतश्चतुर्विधाहारस्य प्रत्याख्यानं न्याय्यम् । यदि तु त्रिविधाहारस्य प्रत्याख्यानं करोति तदा पानकमाश्रित्य षडाकारा भवन्ति, यत् सूत्रम्—

पाणस्स लेवाडेण वा अलेवाडेण वा अच्छेण वा बहुलेण वा ससित्थेण वा असित्थेण वा वोसिरइ ।

इह 'अन्नत्थ' इत्यस्यानुवृत्तेस्तृतीयायाः पञ्चम्यर्थत्वात् लेवाडेण वेति कृतलेपाद् वा पिच्छलत्वेन भाजनादीनामुपलेपकारकात् खर्जूरादिपानकादन्यत्र तद् वर्जयित्वेत्यर्थः । त्रिविधाहारं 'व्युत्सृजति' इति योगः । वाशब्दोऽलेपकृतपानकापेक्षयाऽन्नेनीयत्वाविशेषद्योतनार्थः, अलेपकारिणेव लेपकारिणाप्युपवासादेर्न भङ्ग इति भावः । एवमलेपकृतात् वाऽपिच्छलात्, अच्छाद् वा निर्मलादुष्णोदकादेः, बहुलाद् वा गडुलात् तिलतन्दुलधावनादेः, ससिक्थाद् वा भक्तपुलाकोपेतादवस्रावणादेः, असिक्थाद् वा सिक्थवर्जितात् पानकाहारात् ॥

अथ चरमम्। चरमोऽन्तिमो भागः। स च दिवसस्य भवस्य चेति द्विधा। तद्विषयं प्रत्याख्यानमपि चरमम्। इह च भवचरमं यावज्जीवम्। तत्र द्विविधेऽपि चत्वार आकारा भवन्ति; यत्सूत्रम्—

दिवसचरिमं भवचरिमं वा पच्चक्खाइ चउव्विहं पि आहारं असणं पाणं खाइमं साइमं अन्नत्थणाभोगेणं सहसागारेणं महत्तरागारेणं सव्वसमाहिवत्तिआगारेणं वोसिरइ।

ननु दिवसचरिमप्रत्याख्यानं निष्फलम्, एकाशनादिप्रत्याख्यानेनैव गतार्थत्वात्। नैवम्, एकाशनादिकं ह्यष्टाद्याकारमेतच्च चतुराकारम्, अत आकाराणां संक्षेपकरणात् सफलमेव। अत एवैकाशनादिकं दैवसिकमेव भवति, रात्रिभोजनस्य त्रिविधं त्रिविधेन यावज्जीवं प्रत्याख्यातत्वात्। गृहस्थापेक्षया पुनरिदमादित्योद्गमान्तम्, दिवसस्याहोरात्रपर्य्यायतयापि दर्शनात्। तत्र येषां रात्रिभोजननियमोऽस्ति, तेषामपीदं सार्थकम्, अनुवादकत्वेन स्मारकत्वात्। भवचरमं तु द्व्याकारमपि भवति। यदा जानाति महत्तरसर्वसमाधिप्रत्ययरूपाभ्यामाकाराभ्यां न प्रयोजनम्, तदाऽनाभोगसहसाकाराकारौ भवतः, अङ्गुल्यादेरनाभोगेन सहसाकारेण वा मुखे प्रक्षेपसंभवात्। अत एवेदमनाकारमप्युच्यते, आकारद्वयस्यापरिहार्यत्वात्॥

अथाभिग्रहप्रत्याख्यानम्। तच्च दण्डप्रमार्जनादिनियमरूपम्। तत्र चत्वार आकारा भवन्ति, यथा, अन्नत्थणाभोगेणं सहसागारेणं महत्तरागारेणं सव्वसमाहिवत्तिआगारेणं वोसिरइ। यदा त्वप्रावरणाभिग्रहं गृह्णाति तदा 'चोलपट्टगागारेणं' इति पञ्चम आकारो भवति, चोलपट्टकाकारादन्यत्रेत्यर्थः॥

अथ विकृतिप्रत्याख्यानम्। तत्र नव, अष्टौ वाऽऽकाराः; यत् सूत्रम्—

विगईओ पच्चक्खाइ अन्नत्थणाभोगेणं सहसागारेणं लेवालेवेणं गिहत्थसंसट्ठेणं उक्खित्तविवेगेणं पडुच्चमक्खिएणं पारिट्ठावणिआगारेणं महत्तरागारेणं सव्वसमाहिवत्तिआगारेणं वोसिरइ ।

मनसो विकृतिहेतुत्वाद् विकृतय, ताश्च दश, यदाहुः,—

खीरं दहि नवणीअं घयं तहा तेल्लमेव गुड मज्जं । महु मंसं चेव तहा ओगाहिमगं च विगईओ ॥ १ ॥

तत्र पञ्च क्षीराणि, गोमहिष्यजोष्ट्र्येलकासम्बन्धभेदात् । दधि नवनीत-घृतानि तु चतुर्भेदानि, उष्ट्रीणां तदभावात् । तैलानि चत्वारि, तिलातसीलट्टासर्षपसम्बन्धभेदात्। शेषतैलानि तु न विकृतयः, लेपकृतानि तु भवन्ति। गुड इक्षुरसक्वाथः । स द्विधा, पिण्डो द्रवश्च । मद्यं द्वेधा काष्ठपिष्टोद्भवत्वात् । मधु त्रेधा—माक्षिकम् कौत्तिकं भ्रामरं च । मांसं त्रिविधम्, जल स्थल-खेचरजन्तूद्भवत्वात्, अथवा मांसं त्रिविधम्, चर्म-रुधिर-मांसभेदात् । अवगाहेन स्नेहबोलनेन निर्वृत्तमवगाहिमं पक्वान्नम् " भावादिमः " ( सिद्धहेम-६-४ २१। ) इतीमः, यत् तापिकायां घृतादिपूर्णायां चलाचलं खाद्यकादि पच्यते, तस्यामेव तापिकायां तेनैव घृतेन द्वितीयं तृतीयं च खाद्यकादि विकृति', ततः परं पक्वान्नानि योगवाहिनां निर्विकृतिप्रत्याख्यानेऽपि कल्पन्ते । अथैकेनैव पूपकेन तापिका पूर्यते तदा द्वितीयं पक्वान्नं निर्विकृतिप्रत्याख्यानेऽपि कल्पते, लेपकृतं तु भवति । इत्येषा वृद्धसामाचारी । एतासु च दशसु विकृतिषु मद्यमांसमधुनवनीतलक्षणाश्चतस्रो विकृतयोऽभक्ष्या । शेषास्तु षड् भक्ष्याः । तत्र भक्ष्यासु विकृतिष्वेकादिविकृतिप्रत्याख्यानं षड्विकृतिप्रत्याख्यानं च निर्विकृतिकसंज्ञं विकृतिप्रत्याख्यानेन संगृहीतम्। आकाराः

(१) क्षीरं दधि नवनीतं घृतं तथा तैलमेव गुडो मद्यम् । मधु मांसं चैव तथाऽवगाहिमकं च विकृतय ॥१॥

पूर्ववत् । नवरम्, गिहत्थसंसट्ठेणं इति गृहस्थेन स्वप्रयोजनाय दुग्धसंसृष्ट ओदनो दुग्धं च तमतिक्रम्योत्कर्षतश्च- त्वार्यङ्गुलानि यावदुपरि वर्तते तदा तद् दुग्धमविकृतिः, पञ्चमाङ्गुलारम्भे विकृतिरेव । अनेन न्यायेनान्यासामपि विकृतीनां गृहस्थासंसृष्टत्वमागमादवसेयम् । उक्खित्तविवेगेणं इति, उत्क्षिप्तविवेक आचामाम्लवदुद्धर्तुं शक्यासु विकृतिषु द्रष्टव्यः, द्रवविकृतिषु नास्ति । पडुच्च मक्खिएणं इति,—प्रतीत्य सर्वथा रूक्षमण्डकादिकमपेक्ष्य म्रक्षितं स्नेहितमीषत्सौकुमार्योत्पादनाय म्रक्षणाकृतविशिष्टस्वादुतायाश्चाभावाद् म्रक्षितमिव यद् वर्तते तत् प्रतीत्य म्रक्षितं म्रक्षिताभासमित्यर्थः । इह चायं विधिः—यद्यङ्गुल्या तैलादि गृहीत्वा मण्डकादि म्रक्षितं तदा कल्पते निर्विकृति- कस्य, धारया तु न कल्पते । व्युत्सृजति विकृतिं त्यजतीत्यर्थः । इह च यासु विकृतिषूत्क्षिप्तविवेकः संभवति ता- सु नवाकाराः, अन्यासु तु द्रवरूपास्वष्टौ ।

एतदर्थसंवादिन्यो गाथाः—

दो चेव नमुक्कारे आगारा छच्च पोरिसीए उ । सत्तेव य पुरिमड्ढे एक्कासणगम्मि अट्ठेव ॥ १ ॥
सत्तेगट्ठाणस्स उ अट्ठेव य अंबिलम्मि आगारा । पंचेव अब्भत्तट्ठे छप्पाणे चरिम चत्तारि ॥ २ ॥
पंच चउरो अभिग्गहे निव्विए अट्ठ नव य आगारा । अप्पाउरणे पंच उ हवंति सेसेसु चत्तारि ॥ ३ ॥

(१) द्वावेव नमस्कारे आकारौ षट् च पौरुष्यां तु । सप्तैव च पूर्वार्धे एकाशनेऽष्टैव ॥ १ ॥
सप्तैकस्थानस्य त्वष्टैव चाचामाम्ले आकाराः । पञ्चैवाभक्तार्थे षट् पानके चरमे चत्वारः ॥ २ ॥
पञ्च चतुरोऽभिग्रहे निर्विकृतिकेऽष्ट नव चाकाराः । अप्रावरणे पञ्च तु भवन्ति शेषेषु चत्वारः ॥ ३ ॥

ननु निर्विकृतिक एवाकाराभिधानाद् विकृतिपरिमाणप्रत्याख्याने कुत आकारा अवगम्यन्ते ? । उच्यते—निर्विकृतिकग्रहणे विकृतिपरिमाणस्यापि संग्रहो भवति, त एव चाकारा भवन्ति, यथा—एकासनस्य पौरुष्याः पूर्वार्धस्यैव च सूत्रेऽभिधानेऽपि द्व्यासनकस्य सार्धपौरुष्या अपार्धस्य च प्रत्याख्यानमदुष्टम्, अप्रमादवृद्धेः संभवात् । आकारा अप्येकासनादिसंबन्धिन एवान्येष्वपि न्याय्या, आसनादिशब्दसाम्यात् चतुर्विधाहारपाठेऽपि द्विविधत्रिविधाहारप्रत्याख्यानवत् । ननु द्व्यासनादीनि अभिग्रहप्रत्याख्यानानि ततस्तेषु चत्वार एवाकाराः प्राप्नुवन्ति । न, एकासनादिभिस्तुल्ययोगक्षेमत्वात् । अन्ये तु मन्यन्ते,—एवं हि प्रत्याख्याने संख्या विशीर्येत । तत एकासनादीन्येव प्रत्याख्यानानि, तदशक्तस्तु यावत्साहिष्णुस्तावत् पौरुष्यादिकं प्रत्याख्याति, तदुपरि ग्रन्थिसहितादिकमिति । प्रत्याख्यानं च स्पर्शनादिगुणोपेतं सुप्रत्याख्यानं भवति,

यदाहु[1]—

फासिअं पालियं चेव सोहिअं तीरिअं तहा । किट्टियमाराहियं चेव एरिसयम्मि पयइअव्वं ॥ १ ॥

तत्र स्पृष्टं प्रत्याख्यानकाले विधिना प्राप्तम् ।१। पालितं पुनःपुनरुपयोगप्रतिजागरणेन रक्षितम् ।२। शोभितं गुर्वादिप्रदत्तशेषभोजनासेवनेन ।३। तीरितं पूर्णेऽपि कालावधौ किञ्चित्कालावस्थानेन ।४। कीर्तितं भोजनवेलायाममुकं मया प्रत्याख्यातमधुना पूर्णं भोक्ष्य इत्युच्चारणेन ।५। आराधितमेभिः प्रकारैः संपूर्णनिष्ठां नीतमिति ।६।

प्रत्याख्यानस्य चानन्तर्येण पारम्पर्येण च फलमिदम्,—

---

(१) स्पृष्टं पालितं चापि शोभितं तीरितं तथा । कीर्तितमाराधितं चैवेदृशे प्रयतितव्यम् ॥ १ ॥

[1]पच्चक्खाणम्मि कए आसवदाराइं हुंति पिहिआइं । आसवदारापिहाणे तण्हावुच्छेअणं होइ ॥ १ ॥
तण्हावुच्छेएण य अउलोवसमो भवे मणुस्साणं । अउलोवसमेण पुणो पच्चक्खाणं हवइ सुद्धं ॥ २ ॥
तत्तो चरित्तधम्मो कम्मविवेगो अपुव्वकरणं च । तत्तो केवलणाणं सासयसोक्खो तओ मोक्खो ॥ ३ ॥

न चावश्यकर्तव्यमावश्यकं चैत्यवन्दनाद्येव श्रावकस्य, न षड्विधामिति वक्तुं युक्तम्, [2]समणेण सावएण य अवस्सकायव्वयं हवइ जम्हा । अंतो अहोनिसिस्स य तम्हा आवस्सयं नाम ॥ १ ॥ इत्यागमे श्रावकं प्रत्यावश्यकस्योक्तत्वात् । न चात्र चैत्यवन्दनाद्येवावश्यकं वक्तुमुचितम्, 'अंतो अहो निसिस्स य' इति कालद्वयाभिधानात्, चैत्यवन्दनस्य च त्रैकालिकत्वेनोक्तत्वात् । अनुयोगद्वारेष्वपि [3]जण्णं समणो वा समणी वा सावए वा साविया वा तच्चित्ते तम्मणे तल्लेसे तदज्झोवउत्ते तदप्पियकरणे तब्भावणाभाविए उभओकालं आवस्सयं करेइ, से तं लोउत्तरिअं भावावस्सयं इति वचनात् श्रावकस्याप्यावश्यकमुक्तमेव । ततः कृतषड्विधाव-

---

(१) प्रत्याख्याने कृते आस्रवद्वाराणि भवन्ति पिहितानि । आस्रवद्वारपिधाने तृष्णाव्युच्छेदनं भवति ॥ १ ॥
तृष्णाव्युच्छेदेन चातुलोपशमो भवेद् मनुष्याणां । अतुलोपशमेन पुनः प्रत्याख्यानं भवति शुद्धम् ॥ २ ॥
ततश्चारित्रधर्मः कर्मविपाकोऽपूर्वकरणं च । ततः केवलज्ञानं शाश्वतसौख्यस्ततो मोक्षः ॥ ३ ॥

(२) श्रमणेन श्रावकेण चावश्यकर्तव्यकं भवति यस्मात् । अन्तेऽह्नो निशश्च तस्मादावश्यकं नाम ॥ १ ॥

(३) यत् श्रमणो वा श्रमणी वा श्रावको वा श्राविका वा तच्चित्तस्तन्मनास्तल्लेश्यस्तदर्थोपयुक्तस्तदर्पितकरणस्तद्भावनाभावित उभयकालमावश्यकं कुर्यात्, तल्लोकोत्तरं भावावश्यकम् ।

श्यककर्मा स्वाध्यायम् अणुव्रतविध्यादे पञ्चनमस्कारस्य वा परिवर्तनं कुर्यात्, अथवा, स्वाध्यायं पञ्चविधं वा चना-प्रश्न-परिवर्तना-ऽनुप्रेक्षा-धर्मकथारूपं कुर्यात्। यस्तु साधूपाश्रयमागन्तुमशक्तो राजादिर्वा महर्द्धिको वा वह्वपायः स स्वगृह एवावश्यकं स्वाध्यायं च करोति। उत्तममित्युत्तमनिर्जराहेतुम्, यदाह—

बारसविहम्मि वि तवे सब्भिंतरबाहिरे कुसलदिट्ठे। नवि अत्थि नवि अ होही सज्झायसमं तवोकम्मं ॥१॥
तथा—

सज्झाएण पसत्थं झाणं जाणइ अ सव्वपरमत्थं। सज्झाए वट्टंतो खणे खणे जाइ वेरग्गं ॥ १ ॥
इत्यादि ॥ १३० ॥

**न्याय्ये काले ततो देवगुरुस्मृतिपवित्रितः। निद्रामल्पामुपासीत प्रायेणाब्रह्मवर्जकः ॥१३१॥**

न्याय्यो न्यायादनपेतः कालः, स च रात्रेः प्रथमयामोऽर्धरात्रं वा शरीरसात्म्येन, तत इति स्वाध्यायकरणानन्तरं, निद्रामल्पामुपासीतेति क्रिया। कथम्भूतः सन्? देवगुरुस्मृतिपवित्रितः—देवा अर्हद्भट्टारकाः, गुरवो धर्माचार्याः, तेषां स्मृतिर्मनस्यारोपणं तया पवित्रितो निर्मलीभूतात्मा। उपलक्षणं चैतच्चतुःशरणगमनदुष्कृतगर्हासुकृतानुमोदना-पञ्चनमस्कारस्मरणप्रभृतीनाम्। न ह्येतत्स्मरणमन्तरेण पवित्रता भवति। तत्र देवस्मृतिः—"नमो

(१) द्वादशविधेऽपि तपसि साभ्यन्तरबाह्ये कुशलदिष्टे। नाप्यस्ति नापि च भविष्यति स्वाध्यायसमं तपःकर्म ॥ १ ॥
(२) स्वाध्यायेन प्रशस्तं ध्यानं जानाति च सर्वपरमार्थम्। स्वाध्याये वर्तमानः क्षणे क्षणे याति वैराग्यम् ॥ १ ॥
(३) नमो वीतरागेभ्यः सर्वज्ञेभ्यस्त्रैलोक्यपूजितेभ्यो यथास्थितवस्तुवादिभ्यः।

वीयरायाणं सव्वण्णूणं तिलोकपूइआणं जहट्ठिअवत्थुवाईणं" इत्यादि। गुरुस्तुतिश्च—" धन्यास्ते ग्राम—नगर—जनपदादयो येषु मदीया धर्माचार्या विहरन्ति "। निद्रामल्पामिति। निद्रामितिविशेष्यम्, अल्पामिति विशेषणम्। विशेषणस्य चात्र विधिः, " सविशेषणे हि विधि—निषेधौ विशेषणमुपसंक्रामतः " इति न्यायात्। निद्रामिति च विशेष्यामिति न तत्र विधिः, दर्शनावरणीयकर्मोदयेन निद्रायाः स्वतः सिद्धत्वात्, 'अप्राप्ते हि शास्त्रमर्थवत्' इत्युक्तन्यायम्। अब्रह्म मैथुनं तद् वर्जयति अब्रह्मवर्जकः, प्रायेणेति बाहुल्येन, गृहस्थत्वादस्य ॥ १३१ ॥ पुनश्च—

**निद्राच्छेदे योषिदङ्गसतत्त्वं परिचिन्तयेत्। स्थूलभद्रादिसाधूनां तन्निवृत्तिं परामृशन् ॥१३२॥**

परिणतायां रात्रौ निद्रायाश्छेदे सति योषिदङ्गानां स्त्रीशरीराणां सतत्त्वं स्वरूपं परितश्चिन्तयेत्। किं कुर्वन् ? स्थूलभद्रादीनां साधूनां तन्निवृत्तिं योषिदङ्गनिवृत्तिं परामृशन् अनुस्मरन्। स्थूलभद्रचरितं संप्रादायगम्यम्। स चायम्;—

अस्ति सौधप्रभाजालधूपधूमैर्निरन्तरैः। जितगङ्गार्कजासङ्गं पाटलीपुत्रपत्तनम् ॥ १ ॥ तत्र त्रिखण्डपृथिवीपतिः पतिरिव श्रियः। समुत्खातद्विषत्कन्दो नन्दो नामाभवद् नृपः ॥२॥ विसंकटः श्रियां वासोऽसंकटः शकटो धियाम्। शकटाल इति तस्य बभूवामात्यपुङ्गवः ॥ ३ ॥ तस्याभूज्ज्येष्ठतनयो विनयादिगुणास्पदम्। अस्थूलधीः स्थूलभद्रो भद्राकारनिशाकरः ॥ ४ ॥ भक्तिनिष्ठः कनिष्ठोऽस्य श्रीयकोऽजनि नन्दनः। नन्दराड्हृदयामन्दानन्दगोशीर्षचन्दनः ॥ ५ ॥ बभूव तत्र कोशेति वेश्या रूपाश्रियोर्वशी। वशीकृतजगच्चेताश्चेतोभूजीवनौषधिः ॥ ६ ॥ भुञ्जानो विविधान् भोगान् स्थूलभद्रो दिवानिशम्। उवासावसथे तस्या द्वादशाब्दानि तन्मनाः ॥ ७ ॥

श्रीयकस्त्वक्षरघोऽभूद् भूरिविश्रम्भभाजनम् । द्वितीयमिव हृदय नन्दस्य पृथिवीपते ॥ ८ ॥
तत्र चासीद् वररुचिर्नाम द्विजवराग्रणी । कवीना वादिनां वैयाकरणाना शिरोमणि ॥ ९ ॥
स्वयकृतैर्नवनवैरष्टोत्तरशतेन सः । वृत्तै प्रवृत्तोऽनुदिन नृपावलगने सुधी ॥ १० ॥ मिथ्यादृगिति त मन्त्री
प्रशशस न जातुचित् । तुष्टोऽप्यस्मै तुष्टिदान न ददौ नृपतिस्तत ॥ ११ ॥ ज्ञात्वा वररुचिस्तत्र दानाप्रापणका
रणम् । आराधयितुमारेभे गृहिणीं तस्य मन्त्रिणः ॥ १२ ॥ सतुष्टया तयाऽन्येद्यु कार्यं पृष्टोऽब्रवीदिदम् । राज्ञः
पुरस्ताद् मत्काव्य तव भर्ता प्रशसतु ॥ १३ ॥ तया तदुपरोधेन तद्विज्ञप्तोऽवदत् पतिः । मिथ्यादृष्टेरमुष्याह
प्रशसामि कथ वच ? ॥ १४ ॥ तयोक्तः साग्रह मन्त्री तत् तथा प्रत्यपद्यत । अन्धस्त्रीबालमूर्खाणामाग्रहो बलवान्
खलु ॥ १५ ॥ राज्ञ पुरस्तात् पठत काव्य वररुचेस्ततः । अहो ! सुभाषितमिति वर्णयामास मन्त्रिराट् ॥ १६ ॥
दीनारशतमष्टाग्र ततोऽस्मै नृपतिर्ददौ । राजमान्यस्य वाचापि जीव्यते ह्यनुकूलया ॥ १७ ॥ दीनाराष्टोत्तरशते
दीयमाने दिने दिने । किमेतद् दीयत इति भूप मन्त्री व्यजिज्ञपत् ॥ १८ ॥ अथोचे नृपतिर्मन्त्रिन् दद्मोऽस्मै
त्वत्प्रशसया । वय यदि स्वय दद्मो दद्मः किं न पुरा तत ? ॥ १९ ॥ मन्त्र्यप्यूचे मया दत्त ! प्रशसा नास्य
निर्ममे । काव्यानि परकीयानि प्रशशस तदा त्वहम् ॥ २० ॥ पुरो नः परकाव्यानि स्वकीकृत्य पठत्ययम् ।
किमेतत् सत्यभावेनेत्यभाषत नृपस्ततः ॥ २१ ॥ एतत्पाठितकाव्यानि पठन्ति बालिका अपि । दर्शयिष्यामि व
प्रातरित्यूचे सचिवोऽपि च ॥ २२ ॥ यक्षा यक्षदत्ता भूता भूतदत्ता तथैणिका । वेणा रेणेति समासन् प्राज्ञाः
पुत्र्योऽस्य मन्त्रिणः ॥ २३ ॥ जग्राह ज्यायसी तासां सकृदुक्त तथेतराः । द्वित्र्यादिवारक्रमतो गृह्णन्ति स्म यथा-

क्रमम् ॥ २४ ॥ राज्ञः समीपं सचिवो द्वितीयेऽह्नि निनाय ताः । तिरस्करिण्यन्तरिताः समुपावेशयच्च सः ॥ २५ ॥ अष्टोत्तरशतं श्लोकान् स्वयं निर्माय नैत्यिकान् । ऊचे वररुचिस्ता अप्यनुज्येष्ठमनूचिरे ॥ २६ ॥ ततो वररुचे रुष्टो राजा दानं न्यवारयत् । उपायाः सचिवानां हि निग्रहानुग्रहक्षमाः ॥ २७ ॥

ततो वररुचिर्गत्वा यन्त्रं गङ्गाजले न्यधात् । तन्मध्ये वस्त्रबद्धं च दीनारशतमष्टयुक् ॥ २८ ॥ प्रातर्गङ्गामसौ स्तुत्वा यन्त्रमाक्रमदंह्रिणा । दीनारास्ते च तत्पाणावुत्पत्य न्यपतंस्ततः ॥ २९ ॥ स एवं विदधे नित्यं जनस्तेन विसिष्मिये । तच्च श्रुत्वा जनश्रुत्या राजाऽशंसच्च मन्त्रिणे ॥ ३० ॥ इदं यद्यस्ति सत्यं तत् प्रातर्वीक्षामहे स्वयम् । इत्युक्तो मन्त्रिणा राजा तत्तथा प्रत्यपद्यत ॥ ३१ ॥ दत्त्वा शिक्षां चरः सायं प्रेपितस्तत्र मन्त्रिणा । शरस्तम्बनिलीनोऽस्थात् पक्षीवानुपलक्षितः ॥ ३२ ॥ तदा वररुचिर्गत्वा छन्नं मन्दाकिनीजले । दीनाराष्टोत्तरशतग्रन्थिं न्यस्य ययौ गृहे ॥ ३३ ॥ तज्जीवितमिवादाय दीनारग्रन्थिमेप तु । चरः समर्पयामास प्रच्छन्नं वरमन्त्रिणे ॥ ३४ ॥ अथ गुप्तात्तदीनारग्रन्थिर्मन्त्री निशात्यये । ययौ राज्ञा समं गङ्गामागाद् वररुचिस्तदा ॥ ३५ ॥ द्रष्टुकामं नृपं दृष्ट्वोत्कृष्टमानी सविस्तरम् । स्तोतुं प्रववृते गङ्गां मूढो वररुचिस्ततः ॥ ३६ ॥ स्तुत्यन्तेऽचालयद् यन्त्रं यदा वररुचिः पदा । दीनारग्रन्थिरुत्पत्य नापतत् पाणिकोटरे ॥ ३७ ॥ द्रव्यं सोऽन्वेपयामास पाणिना तज्जले ततः । तस्थावपश्यंस्तूष्णीको धूर्तो धृष्टो हि मौनभाक् ॥ ३८ ॥ इत्यूचे च महामात्यः किं ते दत्ते न जाह्नवी । न्यासीकृतमपि द्रव्यमन्वेपयसि यद् मुहुः ? ॥ ३९ ॥ उपलक्ष्य गृहाणेदं निजद्रव्यमिति ब्रुवन् । सोऽर्पयामास दीनारग्रन्थिं वररुचेः करे ॥४०॥ दीनारग्रन्थिना तेनोत्सर्पिहृद्ग्रन्थिनेव सः । दशामासादयामास मरणादपि दुस्सहाम् ॥ ४१ ॥

विप्रतारयितुं लोकं सायमत्र क्षिपत्यसौ । द्रव्यं प्रातः पुनर्गृह्णातीत्यूचे सचिवो नृपम् ॥ ४२ ॥ साधु ज्ञातमिदं ज्ञात्वेत्यालपन् मन्त्रिपुङ्गवम् । विस्मयस्मेरनयनः स्ववेश्मागाद् महीपतिः ॥ ४३ ॥

अमर्षणो वररुचिः प्रतीकारं विचिन्तयन् । गृहस्वरूपं सचिवस्यापृच्छच्चेटिकादिकम् ॥ ४४ ॥ तस्याथ कथयामास काचित् सचिवचेट्यदः । भूपतिः श्रीयकोद्वाहे भोक्ष्यते मन्त्रिवेश्मनि ॥ ४५ ॥ सज्यते चात्र शस्त्रादि दातुं नन्दाय मन्त्रिणा । शस्त्रप्रियाणां राज्ञां हि शस्त्रमाद्यमुपायनम् ॥ ४६ ॥ समासाद्य च्छलं स्वच्छलं वररुचिस्ततः । चणकादि प्रदायेति डिम्भरूपाण्यपाठयत् ॥ ४७ ॥ न वेत्ति राजा यदसौ शकटालः करिष्यति । व्यापाद्य नन्दं तद्राज्ये श्रीयकं स्थापयिष्यति ॥ ४८ ॥ स्थाने स्थाने च पठतो डिम्भानेव दिने दिने । जनश्रुत्या तदश्रौषीदिति चाचिन्तयद् नृपः ॥४९॥ बालका यच्च भाषन्ते भाषन्ते यच्च योषितः । औत्पातिकी च या भाषा सा भवत्यन्यथा न हि ॥५०॥ तत्प्रत्ययार्थं राज्ञाथ प्रेषितो मन्त्रिवेश्मनि । पुरुषः सर्वमागत्य यथादृष्टं व्यजिज्ञपत् ॥५१॥ ततश्च सेवावसरे मन्त्रिणः समुपेयुषः । प्रणामं कुर्वतो राजा कोपात् तस्थौ पराङ्मुखः ॥ ५२ ॥ तज्ज्ञात्वा ज्ञोऽथ वेश्मैत्यामात्यः श्रीयकमब्रवीत् । राज्ञोऽस्मि ज्ञापितः केनाप्यभक्तो विद्विषन्निव ॥ ५३ ॥ असातकस्मादस्माकं कुलक्षय उपस्थितः । रक्ष्यते वत्स ! कुरुषे यथादेशमिमं मम ॥५४॥ नमयामि यदा राज्ञे शिरश्छिन्ध्यास्तदासिना । अभक्तः स्वामिनो वध्यः पितापीति वदेस्ततः ॥ ५५ ॥ जरसापि यियासौ मय्येव याते परासुताम् । त्वं मत्कुलगृहस्तम्भो नन्दिष्यासि चिरं ततः ॥५६॥ श्रीयकोऽपि रुदन्नेवमवदद् गद्गदस्वरम् । तात ! घोरमिदं कर्म श्वपचोऽपि करोति किम् ? ॥ ५७ ॥ अमात्योऽप्यब्रवीदेवमेव कुर्वन् विचारणाम् । मनोरथान् पूरयसे वैरिणामेव केवलम् ॥५८॥

राजा यम इवोद्दण्डः सकुटुम्बं न हन्ति माम् । यावत् तावन्ममैकस्य वधाद् रक्ष कुटुम्बकम् ॥ ५९ ॥ मुखे निपं तालपुटं न्यस्य नंस्यामि भूपतिम् । शिरः परासोर्मे छिन्द्याः पितृहत्या न ते ततः ॥ ६० ॥ पित्रैवं बोधितस्तत् स प्रतिपेदे चकार च । शुभोदर्काय धीमन्तः कुर्वन्त्यापातदारुणम् ॥ ६१ ॥ भवता किमिदं वत्स ? विदधे कर्म दुष्करम् । ससंभ्रममिति प्रोक्तो नृपेण श्रीयकोऽवदत् ॥ ६२ ॥ यदैव स्वामिना ज्ञातो द्रोह्ययं निहतस्तदा । भर्तृचित्तानुसारेण भृत्यानां हि प्रवर्तनम् ॥ ६३ ॥ भृत्यानां युज्यते दोषे स्वयं ज्ञाते विचारणा । स्वामिज्ञाते प्रतीकारो युज्यते न विचारणा ॥ ६४ ॥

कृतौर्ध्वदेहिकं नन्दस्ततः श्रीयकमब्रवीत् । सर्वव्यापारसहिता मुद्रेयं गृह्यतामिति ॥ ६५ ॥ अथ विज्ञपयामास प्रणम्य श्रीयको नृपम् । स्थूलभद्राभिधानोऽस्ति पितृतुल्यो ममाग्रजः ॥ ६६ ॥ पितृप्रसादाद् निर्बाधं कोशायास्तु निकेतने । भोगानुपभुञ्जानस्य तस्याब्दा द्वादशागमन् ॥ ६७ ॥ आहूयाथ स्थूलभद्रस्तमर्थं भूभुजोदितः । पर्यालोच्यामुमादेशं करिष्यामीत्यभाषत ॥ ६८ ॥ अद्यैवालोचयेत्युक्तः स्थूलभद्रो महीभुजा । अशोकवनिकां गत्वा विममर्शेति चेतसा ॥६९॥ शयनं भोजनं स्नानं यच्चान्यत् सुखसाधनम् । कालेऽपि नानुभूयन्ते रोरैरिव नियोगिभिः ॥७०॥ नियोगिनां स्वान्यराष्ट्रचिन्ताव्यग्रे च चेतसि । प्रेयसीनां नावकाशः पूर्णकुम्भेऽम्भसामिव ॥७१॥ त्यक्त्वा सर्वमपि स्वार्थं राज्ञोऽर्थं कुर्वतामपि । उपद्रवन्ति पिशुना उद्बद्धानामिव द्विकाः ॥७२॥ यथा स्वदेहद्रविणव्ययेनापि प्रयत्यते । राजार्थे तद्वदात्मार्थे यत्यते किं न धीमता ? ॥ ७३ ॥ विमृश्यैवं व्यधात् केशोत्पाटनं पञ्चमुष्टि सः । रत्नकम्बलदशाभी रजोहरणमप्यथ ॥ ७४ ॥ ततश्च स महासत्त्वो गत्वा सदसि पार्थिवम् । आलोचितमिदं

धर्मलाभः स्तादित्यवोचत ॥ ७५ ॥ तत स राजसदनाद् गुहाया इव केसरी । नि ससार महासार ससारकरिरोषण ॥ ७६ ॥ किमेष कपट कृत्वा यायाद् वेश्यागृह पुनः । इत्यप्रत्ययतः क्ष्मापो गवाक्षेण निरैक्षत ॥ ७७ ॥ प्रदेशे शवदुर्गन्धेऽप्यविकूणितनासिकम् । यान्त दृष्ट्वा स्थूलभद्र नरेन्द्रोऽधूनयच्छिर ॥ ७८ ॥ भगवान् वीतरागोऽसावस्मिन् धिग् मे कुचिन्तितम् । इत्यात्मान निनिन्दोच्चैर्नन्दस्तमभिनन्दयन् ॥ ७६ ॥ स्थूलभद्रोऽपि गत्वा श्रीसभूतिविजयान्तिके । दीक्षा सामायिकोच्चारपूर्विका प्रत्यपद्यत ॥ ८० ॥

गृहीत्वा श्रीयक दोष्णि ततो नन्द सगौरवम् । मुद्राधिकारे नि शेषव्यापारसहिते न्यधात् ॥ ८१ ॥ चकार श्रीयको राज्यचिन्तामरहित सदा । माक्षादिव शकटालः प्रकृष्टनयपाटवात् ॥ ८२ ॥ स नित्यमपि कोशाया विनीत सदने ययौ । स्नेहाद् भ्रातुस्तत्प्रियापि कुलीनैर्नेह्यु मन्यते ॥ ८३ ॥ स्थूलभद्रवियोगार्ता श्रीयक प्रेक्ष्य साऽरुदत् । इष्टे दृष्टे हि दु खार्ता न दु ख धर्तुमीशते ॥ ८४ ॥ ततस्तां श्रीयकोऽवोचदार्ये ! किं कुर्महे वयम् । असौ वररुचि पापोऽघातयज्जनक हि नः ॥ ८५ ॥ अकाण्डोत्थितवज्राग्निप्रदीपनसहोदरम् । स्थूलभद्रवियोग च भवत्या अकरोदयम् । ८६ ॥ त्वज्जाम्यामुपकोशाया यावद् रक्तोऽस्त्यसौ खल । तावत् प्रतिक्रिया काश्चिद् विचिन्तय मनस्विनि ! ॥८७॥ तदादिशोपकोशा यत् प्रतार्य कथमप्यसौ । विधीयता वररुचिर्मद्यपानरुचिस्त्वया ॥ ८८ ॥ प्रेयोवियोजनाद् वैराद् दाक्षिण्याद् देवरस्य च । तत् प्रतिज्ञाय सा सद्योऽप्युपकोशां समादिशत् ॥८६॥ कोशायाश्च निदेशेनोपकोशा त तथा व्यधात् । यथा पपौ सुरामेष स्त्रीवशैः क्रियते न किम् ? ॥ ६० ॥ सुरापान वररुचि॰ स्वैर भद्रोऽद्य कारित । उपकोशेति कोशायै शशसाथ निशात्यये ॥६१॥ अथ कोशामुखात् सर्वं शुश्राव

श्रीयकोऽपि तत्। मेने च पितृवैरस्य विहितं प्रतियातनम् ॥९२॥ शकटालमहामात्यात्ययात् प्रभृति सोऽप्यभूत्। भट्टो
वररुचिर्भूपसेवावसरतत्परः ॥९३॥ स प्रत्यहं राजकुले सेवाकाले समापतन्। राज्ञा च राजलोकैश्च सगौरवमदृश्यत ॥९४॥
अन्यदा नन्दराड् मन्त्रिगुणस्मरणविह्वलः। सदसि श्रीयकामात्यं जगादैवं सगद्गदम् ॥९५॥ भक्तिमान् शक्तिमान्
नित्यं शकटालो महामतिः। अभवद् मे महामात्यः शक्रस्येव बृहस्पतिः ॥९६॥ एवमेव विपन्नोऽसौ दैवादद्य करोमि
किम् ?। मन्ये शून्यमिवास्थानमहं तेन विनात्मनः ॥ ९७ ॥ उवाच श्रीयकोऽप्येवं किं देवेह विदध्महे। इदं
वररुचिः सर्वं पापं व्यधित मद्यपः ॥ ९८ ॥ सत्यमेष सुरां भट्टः पिबतीति नृपोदिते। श्वोऽमुं दर्शयितास्मीति
श्रीयकः प्रत्यवोचत ॥ ९९ ॥ श्रीयकस्तु द्वितीयेऽह्नि सर्वेषामीयुषां सदः। स्वपुंसा शिक्षितेनाऽयं पद्ममेकैकमार्प-
यत् ॥ १०० ॥ तत्कालं मदनफलरसभावनयाऽञ्चितम्। दुरात्मनो वररुचेरर्पयामास पङ्कजम् ॥ १ ॥ कुतस्त्यमद्भु-
तामोदमिदमित्यभिवर्णिनः। घ्रातुं राजादयो निन्युर्नासाग्रे स्वं स्वमम्बुजम् ॥ २ ॥ सोऽपि भट्टोऽनयद् घ्रातुं
घ्राणाग्रे पङ्कजं निजम्। चन्द्रहाससुरां सद्यो रात्रिपीतां ततोऽवमत् ॥ ३ ॥ धिगमुं सीधुपं ब्रह्मबन्धुं बन्धवधोचि-
तम्। सर्वैरित्याक्रुश्यमानो निर्ययौ सदसोऽथ सः ॥ ४ ॥ ब्राह्मणा याचितास्तेन प्रायश्चित्तमचीकथन्। तापितत्र-
पुणः पानं सुरापाणाघघातकम् ॥५॥ मूषया तापितमथ पपौ वररुचिस्त्रपु। प्राणैश्च मुमुचे सद्यस्तत्प्रदाहभयादिव ॥६॥
स्थूलभद्रोऽपि संभूतविजयाचार्यसंनिधौ। प्रव्रज्यां पालयामास पारदृश्वा श्रुताम्बुधेः ॥ ७ ॥ वर्षाकालेऽन्य-
दाऽऽयाते संभूतविजयं गुरुम्। प्रणम्य मूर्ध्ना मुनय इत्यगृह्णन्नभिग्रहान् ॥ ८ ॥ अहं सिंहगुहाद्वारे कृतोत्सर्ग उपो-
षितः। अवस्थास्ये चतुर्मासीमेकः प्रत्यशृणोदिदम् ॥ ९ ॥ दृग्विषाहिबिलद्वारे चतुर्मासीमुपोषितः। स्थास्या-

मि कायोत्सर्गेण द्वितीयोऽभ्यग्रहीदिति ॥ १० ॥ उत्सर्गी कूपमण्डूकासने मासचतुष्टयम् । स्थास्याम्युपोषित इति तृतीय प्रत्यपद्यत ॥ ११ ॥ योग्यान् मत्वा गुरुः साधून् यावत् तानन्वमन्यत । स्थूलभद्रः पुरोभूय नत्वैव तावदब्रवीत् ॥ १२ ॥ कोशाभिधाया वेश्याया गृहे या चित्रशालिका । विचित्रकामशास्त्रोक्तकरणालेख्यशालिनी ॥ १३ ॥ तत्राकृततप'कर्मविशेष षड्रसाशनः । स्थास्यामि चतुरो मासानिति मेऽभिग्रहः प्रभो ! ॥ १४ ॥ ज्ञात्वोपयोगाद् योग्य त गुरुस्तत्रान्वमन्यत । साधवश्च ययुः सर्वे स्व स्व स्थान प्रतिश्रुतम् ॥ १५ ॥ स्थूलभद्रोऽपि सम्प्राप कोशावेश्यानिकेतनम् । अभ्युत्तस्थौ तत' कोशाऽप्याहिताञ्जलिरग्रतः ॥ १६ ॥ सुकुमार॰ प्रकृत्यासौ रम्भास्तम्भ इवोरुणा । व्रतभारेण विधुरोऽत्रागादिति विचिन्त्य सा ॥ १७ ॥ उवाच स्वागत स्वामिन् ! समादिश करोमि किम् ? । वपुर्धन परिजन सर्वमेतत् तवैव हि ॥ १८ ॥ युग्मम् ॥ चतुर्मासीं वसत्यै मे चित्रशालेयमर्प्यताम् । इत्यूचे स्थूलभद्रोऽपि सा तूचे गृह्यतामिति ॥ १९ ॥ तया च तस्या प्रगुणीकृताया भगवानपि । कामस्थानेऽविशद् धर्म इव स्वबलवत्तया ॥ २० ॥ अथ सा षड्रसाहारभोजनानन्तर मुनेः । विशेषकृतशृङ्गारा चोभाय समुपाययौ ॥ २१ ॥ सोपविष्टा पुरस्तस्योत्कृष्टा काचिदिवाप्सरा । चतुर रचयामास हावभावादिक मुहुः ॥ २२ ॥ करणानुभवक्रीडोद्दामानि सुरतानि च । तानि तानि प्राक्तनानि स्मारयामास साऽस्मरत् ॥ २३ ॥ यद् यत् चोभाय विदधे तया तत्र महामुनौ । तत् तद् मृषाऽभवद् यद्वद् वज्रे नखविलेखनम् ॥ २४ ॥ प्रतिवासरमप्येन तत्चोभाय चकार सा । जगाम स तु न चोभ मनागपि महामनाः ॥ २५ ॥ तयोपसर्गकारिण्या प्रत्युतास्य महामुने । आदीप्यत ध्यानवह्निर्मेघवह्निरिवाम्भसा ॥ २६ ॥ त्वयि पूर्वमिवाज्ञानाद्

रन्तुकामां धिगीश ! माम् । आत्मानमिति निन्दन्ती साऽपतत् तस्य पादयोः ॥ २७ ॥ मुनेस्तस्येन्द्रियजयप्रकर्षेण चमत्कृता । प्रपेदे श्रावकत्वं साऽग्रहीच्चैवमभिग्रहम् ॥ २८ ॥ तुष्टः कदापि कस्मैचिद् ददाति यदि मां नृपः । विना पुमांसमेकं तमन्यत्र नियमो मम ॥ २९ ॥ गते तु वर्षासमये ते त्रयोऽपि हि साधवः । निर्व्यूढाभिग्रहा एयुर्गुरुपादान्तिकं क्रमात् ॥ ३० । आयान् सिंहगुहासाधुरहो ! दुष्करकारक ! । तव स्वागतमित्यूचे किञ्चिदुत्थाय सूरिणा ॥ ३१ ॥ सूरिणा भाषितौ तद्वदायान्तावितरावपि । समे प्रतिज्ञानिर्वाहे समा हि स्वामिसत्क्रिया ॥ ३२ ॥ अथायान्तं स्थूलभद्रमुत्थाय गुरुरब्रवीत् । दुष्करदुष्करकार ! महात्मन् ! स्वागतं तव ॥३३॥ सासूयाः साधवस्तेऽथाचिन्तयन्नित्यहो! गुरोः । इदमामन्त्रणं मन्त्रिपुत्रताहेतुकं ननु ॥३४॥ यद्यसौ षड्रसाहारः कृतदुष्करदुष्करः । इदं वर्षान्तरे तर्हि प्रतिज्ञास्यामहे वयम् ॥३५॥ एवं मनसि संस्थाप्य सामर्षास्ते महर्षयः । कुर्वाणाः संयमं मासानष्टावगमयन् क्रमात् ॥३६॥ उत्तमर्ण इव प्राप्ते काले हृष्टः पुरो गुरोः । साधुः सिंहगुहावासी चकारेति प्रतिश्रवम् ॥ ३७ ॥ कोशावेश्यागृहे नित्यं षड्रसाहारभोजनः । भगवन् ! समवस्थास्ये चतुर्मासीमिमामहम् ॥ ३८ ॥ स्थूलभद्रेण मात्सर्यादेतदङ्गीकरोत्ययम् । विचार्येत्युपयोगेन ज्ञात्वा च गुरुरादिशत् ॥ ३९ ॥ वत्स ! माभिग्रहं कार्षीरतिदुष्करदुष्करम् । स्थूलभद्रः क्षमः कर्तुमद्रिराज इव स्थिरः ॥ ४० ॥ न हि मे दुष्करोऽप्येष कथं दुष्करदुष्करः ? । तदवश्यं करिष्यामीत्युवाच स मुनिर्गुरुम् ॥ ४१ ॥ गुरुरूचेऽमुना भावी भ्रंशः प्राक्तपसोऽपि ते । आरोपितोऽतिभारो हि गात्रभङ्गाय जायते ॥४२॥ गुरोर्वचोऽवमन्याथ वीरंमन्यो मुनिः स तु । उन्मीनकेतनं प्राप कोशायास्तु निकेतनम् ॥ ४३ ॥ स्थूलभद्रस्पर्धयेहायाति मन्ये तपस्व्यसौ । भवे पतन् रक्षणीय इत्युत्थाय ननाम सा ॥ ४४ ॥ न-

सत्यै याचितां तन मुनिना चित्रशालिकाम् । कोशा समर्पयामास स मुनिस्तत्र चाविशत् ॥ ४५ ॥ त भुक्तषड्र-साहार मध्याह्नेऽथ परीक्षितुम् । कोशापि तत्र लावण्यकोशभूता समाययौ ॥ ४६ ॥ चुक्षोभ स मुनिर्मङ्क्षु पङ्कजाक्षीमुदीक्ष्य ताम् । स्त्री तादृग् भोजन तादृग् विकाराय न किं भवेत् ? ॥ ४७ ॥ सरात्यों याचमान त कोशाप्ये वमवोचत । वय हि भगवन् ! वेश्या वश्या स्मो धनदानतः ॥ ४८ ॥ स मुनिर्व्याजहाराथ प्रसीद मृगलोचने !। अस्मासु भवति द्रव्य किं तैल वालुकास्विव ? ॥ ४९ ॥ नेपालभूपोऽपूर्वस्मै साधवे रत्नकम्बलम् । दत्ते तमानयेत्यूचे सा निर्वेदयितु मुनिम् ॥ ५० ॥ ततश्चचाल नेपाल प्रत्यकालेऽपि बालवत् । पङ्किलायामिलायां स निजव्रत इव स्खलन् ॥ ५१ ॥ तत्र गत्वा महीपालाद् रत्नकम्बलमाप्य च । स मुनिर्वलितो वर्त्मन्यासस्तत्र च दस्यव ॥ ५२ ॥ आयाति लक्षमित्याख्यद् दस्यूना शकुनस्ततः । किमायातीत्यपृच्छच्च दस्युराड् द्रुस्थित नरम् ॥ ५३ ॥ आगच्छन् भिक्षुरेकोऽस्ति न कश्चित् तादृशोऽपर । इत्यशसद् द्रुमारूढश्चौरसेनापते स तु ॥ ५४ ॥ साधुस्तत्राथ सम्प्राप्तस्तैर्वि-धृत्य निरूपित । कमप्यर्थमपश्यद्भिर्मुमुचे च मलिम्लुचैः ॥ ५५ ॥ एतल्लक्ष प्रयातीति व्याहरच्छकुन' पुनः । मुनिं चौरपतिः प्रोचे सत्य ब्रूहि किमस्ति ते ? ॥ ५६ ॥ वेश्याकृतेऽस्य वशसान्त क्षिप्तो रत्नकम्बल । अस्तीत्युक्ते मुनिश्चौरराजेन मुमुचेऽथ स ॥ ५७ ॥ स समागत्य कोशायै प्रददौ रत्नकम्बलम् । चिक्षेप सा गृहस्रोत पङ्के नि-शङ्कमेव तम् ॥ ५८ ॥ अजल्पद् मुनिरप्येव न्यक्षेप्यशुचिकर्दमे । महामूल्यो ह्यसौ रत्नकम्बलः कम्बुकण्ठि ! किम् ? ॥ ५९ ॥ अथ कोशाप्युवाचैव कम्बल मूढ ! शोचसि । गुणरत्नमय श्वभ्रे पतन्त स्व न शोचसि ॥ ६० ॥ तत् श्रुत्वा जातसवेगो मुनिस्तामित्यवोचत । बोधितोऽसि त्वया साधु ससारात् साधु रक्षितः ॥ ६१ ॥ अथान्यतीचार-

भवान्युन्मूलयितुमात्मनः। यास्यामि गुरुपादान्ते धर्मलाभस्तवानघे ! ॥ ६२ ॥ कोशापि तमुवाचैवं मिथ्या मे दुष्कृतं त्वयि। ब्रह्मव्रतस्थयाप्येवं मया यदसि खेदितः ॥ ६३ ॥ आशातनेयं युष्माकं बोधहेतोर्मया कृता। क्षन्तव्या सा गुरुवचः श्रयध्वं यात सत्वरम् ॥ ६४ ॥ इच्छामीति भणित्वा च गुर्वन्तिकमुपेत्य सः। गृहीत्वालोचनां तीव्रमाचचार पुनस्तपः ॥ ६५ ॥ राज्ञा प्रदत्ता कोशापि तुष्टेन रथिनेऽन्यदा। राजायत्तेति शिश्राय विना रागेण सा तु तम् ॥ ६६ ॥ स्थूलभद्रं विना नान्यः पुमान् कोऽपीत्यहर्निशम्। सा तस्य रथिनोऽभ्यर्णे वर्णयामास वर्णिनी ॥ ६७ ॥ रथी गत्वा गृहोद्याने पर्यङ्के च निषद्य सः। तन्मनोरञ्जनायेति स्वविज्ञानमदर्शयत् ॥ ६८ ॥ माकन्दलुम्बीं बाणेन विव्याध तमपीषुणा। पुङ्खेऽन्येन तमप्यन्येनेत्याहस्तं शरान्यभूत् ॥ ६९ ॥ वृन्तं छित्वा क्षुरप्रेण बाणश्रेणिमुखास्थिताम्। लुम्बीं स्वपाणिनाऽऽकृष्यासीनस्तस्यै स आर्पयत् ॥ ७० ॥ इदानीं मम विज्ञानं पश्येत्यालप्य सापि हि। व्यधत्त सार्षपं राशिं तस्योपरि ननर्त च ॥ ७१ ॥ सूचीं क्षिप्त्वा तत्र राशौ पुष्पपत्रैः पिधाय ताम्। सा ननर्त च नो सूच्या विद्धा राशिश्च न क्षतः ॥ ७२ ॥ ततः स ऊचे तुष्टोऽसि दुष्करेणामुना तव। याचस्व यद् ममायत्तं ददामि तदहं ध्रुवम् ॥ ७३ ॥ सोवाच किं मयाऽकारि दुष्करं येन रञ्जितः। इदमप्यधिकं चासात् किमभ्यासेन दुष्करम् ? ॥ ७४ ॥ किञ्चाम्रलुम्बीच्छेदोऽयं नृत्यं चेदं न दुष्करम्। अशिक्षितं स्थूलभद्रो यच्चक्रे तत्तु दुष्करम् ॥ ७५ ॥ द्वादशाब्दानि बुभुजे भोगान् यत्र समं मया। तत्रैव चित्रशालायां तस्थौ सोऽखण्डितव्रतः ॥ ७६ ॥ दुग्धं नकुलसंचारादिव स्त्रीणां प्रचारतः। योगिनां दूष्यते चेतः स्थूलभद्रमुनिं विना ॥ ७७ ॥ दिनमेकमपि स्थातुं कोऽलं स्त्रीसंनिधौ तथा ? । चतुर्मासीं यथा तस्थौ स्थूलभद्रोऽ-

चतव्रत ॥ ७८ ॥ आहार षड्रसश्चित्रशालावासोऽङ्गनान्तिके । अप्येक व्रतलोपायान्यस्य लोहतनोरपि ॥ ७६ ॥ विलीयन्ते धातुमया' पार्श्वे वह्नेरिव स्त्रिया । स तु वज्रमयो मन्ये स्थूलभद्रो महामुनिः ॥ ८० ॥ स्थूलभद्र महासत्त्व कृतदुष्करदुष्करम् । व्यावर्ण्य युक्ता मुद्रैव मुखे वर्णयितु परम् ॥ ८१ ॥ रथिकोऽप्यथ पप्रच्छ य एव वर्ण्यते त्वया । को नाम स्थूलभद्रोऽय महासत्त्वशिरोमणिः ? ॥ ८२ ॥ साऽप्यूचे शकटालस्य नन्दभूपालमन्त्रिण । तनयः स्थूलभद्रोऽय तवाग्रे वर्णयामि यम् ॥ ८३ ॥ तच्छ्रुत्वा सोऽपि सम्भ्रान्त इत्युवाच कृताञ्जलि । एषोऽस्मि किङ्करस्तस्य स्थूलभद्रमहामुने ॥ ८४ ॥ सविग्न साथ त ज्ञात्वा विदधे धर्मदेशनाम् । प्रत्यबुध्यत सद्बुद्धिर्मोहनिद्रामपास्य सः ॥ ८५ ॥ प्रतिबुद्ध च त बुध्वा साऽऽख्यद् निजमभिग्रहम् । तत् श्रुत्वा विस्मयोत्फुल्ललोचन सोऽब्रवीदिदम् ॥ ८६ ॥ बोधितोऽह त्वया भद्रे ! स्थूलभद्रगुणोक्तिभिः । यास्यामि तस्य पन्थान भवत्यैवाद्य दर्शितम् ॥ ८७ ॥ कल्याणमस्तु ते भद्रे ! पालय स्वमभिग्रहम् । उक्त्वैव सद्गुरोः पार्श्वे गत्वा दीक्षा स आददे ॥ ८८ ॥ भगवान् स्थूलभद्रोऽपि तीव्र व्रतमपालयत् । द्वादशाब्दप्रमाणश्च दुष्कालः समभूत्तदा ॥८६॥ तीर नीरनिधेर्गत्वा साधुसघोऽखिलोऽप्यथ । गमयामास दुष्काल कराल कालरात्रिवत् ॥९०॥ अगुण्यमान तु तदा साधूना विस्मृत श्रुतम् । अनभ्यसनतो नश्यत्यधीत धीमतामपि ॥ ६१ ॥ सघोऽथ पाटलीपुत्रे समवाय विनिर्ममे । यदङ्गाध्ययनोद्देशाद्यासीद् यस्य तदाददे ॥ ६२ ॥ ततश्चैकादशाङ्गानि श्रीसघोऽमेलयत्तदा । दृष्टिवाद-निमित्त च तस्थौ किञ्चिद् विचिन्तयन् ॥६३॥ सघोऽस्मरद् भद्रबाहोर्दृष्टिवादभृतस्ततः । तदानयनहेतोश्च प्रजिघाय मुनिद्वयम् ॥ ६४ ॥ गत्वा नत्वा मुनी तौ तमित्यूचाते कृताञ्जली । समादिशति वः सघस्तत्रागमनहेतवे ॥ ६५ ॥

सोऽप्युवाच महाप्राणध्यानमारब्धमस्ति यत् । भविष्यति ततो हेतोर्न तत्रागमनं मम ॥ ९६ ॥ तद्वचस्तौ मुनी गत्वा संघस्याशंसतामथ । संघोऽप्यपरमाहूयादिदेशेति मुनिद्वयम् ॥९७॥ गत्वा वाच्यः स आचार्यो यः श्रीसंघस्य शासनम् । न करोति भवेत् तस्य दण्डः क इति शंस नः ॥ ९८ ॥ संघबाह्यः स कर्त्तव्य इति वक्ति यदा स तु । तर्हि तद्दण्डयोग्योऽसीत्याचार्यो वाच्य उच्चकैः ॥ ९९ ॥ ताभ्यां गत्वा तथैवोक्त आचार्योऽप्येवमूचिवान् । मैवं करोतु भगवान् संघः किन्तु करोत्वदः ॥ २०० ॥ मयि प्रसादं कुर्वाणः श्रीसंघः प्रहिणोत्विह । शिष्यान् मेधाविनस्तेभ्यः सप्त दास्यामि वाचनाः ॥ १ ॥ तत्रैकां वाचनां दास्ये भिक्षाचर्यात आगतः । अन्यां च कालवेलायां बहिर्भूम्यागतोऽपराम् ॥ २ ॥ अन्यां विकालवेलायां तिस्र आवश्यके पुनः । सेत्स्यत्येवं संघकार्यं मत्कार्यस्याविबाधया ॥ ३ ॥ ताभ्यामेत्य तथाख्याते श्रीसंघोऽपि प्रसादभाक् । प्राहिणोत् स्थूलभद्रादिसाधुपञ्चशतीं ततः ॥ ४ ॥ तान् सूरिर्वाचयामास तेऽप्यल्पा वाचना इति । उद्भज्येयुर्निजं स्थानं स्थूलभद्रस्त्ववास्थित ॥ ५ ॥ नोद्भज्यसे किमित्युक्तः सूरिणा सोऽब्रवीदिदम् । नोद्भज्ये भगवन्! किन्तु ममाल्पा एव वाचनाः ॥ ६ ॥ सूरिरूचे मम ध्यानं पूर्णप्रायमिदं ततः । तदन्ते वाचनास्तुभ्यं प्रदास्यामि त्वदिच्छया ॥७॥ पूर्णे ध्याने ततः सूरिरिच्छया तमवाचयत् । द्विवस्तूनानि पूर्वाणि दश यावत् पपाठ सः ॥ ८ ॥ विहारक्रमयोगेन पाटलीपुत्रपत्तनम् । श्रीभद्रबाहुरागत्य बाह्योद्यानमशिश्रियत् ॥ ९ ॥ विहारक्रमयोगेन व्रतिन्योऽत्रान्तरे तु ताः । भगिन्यः स्थूलभद्रस्य वन्दनाय समाययुः ॥ १० ॥ वन्दित्वा गुरुमूचुस्ताः स्थूलभद्रः क नु प्रभो ! । इहापवरकेऽस्तीति तासां सूरिः शशंस च ॥ ११ ॥ ततस्तमभिचेलुस्ताः समायान्तीर्विलोक्य सः । आश्चर्यदर्शनकृते सिंहरूपं विनिर्ममे ॥१२॥ दृष्ट्वा सिंहं तु भीतास्ताः

सूरिमेत्य व्यजिज्ञपन् । ज्येष्ठार्यं जग्रसे सिंहस्तत्र सोऽद्यापि तिष्ठति ॥ १३ ॥ ज्ञात्वोपयोगादाचार्योऽप्यादिदेशेति गच्छत । वन्दध्व तत्र व सोऽस्ति ज्येष्ठार्यो न तु केसरी ॥ १४ ॥ ततोऽभ्युत्था पुनस्तत्र स्वरूपस्थ निरूप्य च । ववन्दिरे स्थूलभद्र ज्येष्ठा चाख्यद् निजां कथाम् ॥१५॥ श्रीयकः सममस्माभिर्दीक्षां जग्राह किन्त्वसौ । क्षुधावान् सर्वदा कर्तुं नैकमक्तमपि क्षमः ॥ १६ ॥ मयोक्तः पर्युषणायां प्रत्याख्याहय पौरुषीम् । स प्रत्याख्यातवानुक्तो मया पूर्णेऽपघौ पुन' ॥ १७ ॥ प्रतीक्षस्व क्षण प्रत्याख्याहि पूर्वार्धमप्ययि ? । अद्य यावत् त्वया चैत्यपरिपाटी विधीयते ॥१८॥ तथैव प्रतिपेदेऽसौ समयेऽभिहितः पुनः । तिष्ठेदानीमस्त्वपार्धमिति चक्रे तथैव स ॥१९॥ प्रत्यासन्ना-ऽधुना रात्रिः सुख सुप्तस्य यास्यति । तत्प्रत्याख्याह्यभक्तार्थमित्युक्त सोऽकरोत् तथा ॥२०॥ ततो निशीथे सम्प्राप्ते स्मरन् देवगुरूनसौ । क्षुत्पीडया प्रसरन्त्या विपद्य त्रिदिव ययौ ॥२१॥ ऋषिघातो मयाऽकारीत्युत्ताम्यन्ती ततस्त्वहम् । पुर श्रमणसघस्य प्रायश्चित्ताय ढौकिता ॥२२॥ सघोऽप्यूचे व्यधायीद भवत्या शुद्धभावया । प्रायश्चित्त ततो नेह कर्तव्य किञ्चिदस्ति ते ॥२३॥ ततोऽहमित्यवोच च साक्षादाख्याति चेज्जिनः । ततो हृदयसवित्तिर्जायते मम नान्यथा ॥२४॥ स्मनार्थं सकल' सघ कायोत्सर्गं ददावथ । एत्य शासनदेव्यूचे ब्रूत कार्यं करोमि किम् ? ॥ २५ ॥ सघोऽप्येव-मभाषिष्ट जिनपार्श्वमिमां नय । सोचे निर्विघ्नगत्यर्थं कायोत्सर्गेण तिष्ठत ॥ २६ ॥ सघे तत्प्रतिपेदाने मा साऽनै-षीज्जिनान्तिके । ततः सीमन्धरस्वामी वन्दितो भगवान् मया ॥ २७ ॥ भरतादागताऽऽर्येय निर्दोषेत्यवदज्जिन । कृपया मन्निमित्त च व्याचक्रे चूलिकाद्वयम् ॥ २८ ॥ ततोऽह छिन्नसदेहा देव्यानीता यथाश्रयम् । श्रीसघस्यार्पि-तवती चूलिकाद्वितय च तत् ॥ २९ ॥ इत्याख्याय स्थूलभद्रानुज्ञाता निजमाश्रयम् । ता ययु स्थूलभद्रोऽपि वाच-

नार्थमगाद् गुरुम् ॥ ३० ॥ न ददौ वाचनां तस्यायोग्योऽसीत्यादिशन् गुरुः । दीक्षादिनात् प्रभृत्येषोऽप्यपराधान् व्यचिन्तयत् ॥ ३१ ॥ चिन्तयित्वा च न ह्यागः स्मरामीति जगाद च । कृत्वा न मन्यसे शान्तं पापमित्यवदद् गुरुः ॥ ३२ ॥ स्थूलभद्रस्ततः स्मृत्वा पपात गुरुपादयोः । न करिष्यामि भूयोऽदः क्षम्यतामिति चाब्रवीत् ॥३३॥ न करिष्यसि भूयस्त्वमकार्षीर्यदिदं पुनः । न दास्ये वाचनां तेनेत्याचार्यास्तमनूचिरे ॥ ३४ ॥ स्थूलभद्रस्ततः सर्वसंघेनामानयद् गुरुम् । महतां कुपितानां हि महान्तोऽलं प्रसादने ॥ ३५ ॥ सूरिः संघं बभाषेऽथ विचक्रेऽसौ यथाधुना । तथाऽन्ये विकरिष्यन्ते मन्दसत्त्वा अतः परम् ॥ ३६ ॥ अवशिष्टानि पूर्वाणि सन्तु मत्पार्श्व एव तत् । अस्यास्तु दोषदण्डोऽयमन्यशिक्षाकृतेऽपि हि ॥ ३७ ॥ स संघेनाग्रहादुक्तो विवेदेत्युपयोगतः । न मत्तः शेषपूर्वाणामुच्छेदो भाव्यतस्तु सः ॥ ३८ ॥ अन्यस्य शेषपूर्वाणि प्रदेयानि त्वया नहि । इत्यभिग्राह्य भगवान् स्थूलभद्रमवाचयत् ॥ ३९ ॥ सर्वपूर्वधरोऽथासीत् स्थूलभद्रो महामुनिः । प्राप्य चाचार्यकं भद्रभविनः प्रत्यबोधयत् ॥ ४० ॥

स्त्रीभ्यो निवृत्तिमधिगम्य समाधिलीनः, श्रीस्थूलभद्रमुनिराप दिवं क्रमेण । एवंविधप्रवरसाधुजनस्य सर्व-संसारसौख्यविरतिं विमृशेद् मनीषी ॥ २४१ ॥ १३२ ॥

॥ इति श्रीस्थूलभद्रकथानकम् ॥

योषिदङ्गसतत्त्वं कलापकेनाह—

---

(१) सतत्त्वं याथार्थ्यम् ।

यकृच्छकृन्मलश्लेष्ममज्जास्थिपरिपूरिता । स्नायुस्यूता बही रम्या स्त्रियश्चर्मप्रसेविका ।१३३।

यकृत् कालखण्डम् शकृद् विष्ठा, मला दन्ताद्युपलेपाः, श्लेष्मा कफः, मज्जा षष्ठो धातुः, अस्थीनि पञ्चमो धातु , एभि परिपूरिताः स्त्रिय स्त्रीशरीराणि, चर्मप्रसेविका भस्त्राः, अत एव बहिरेव रम्याः। भस्त्रा हि मध्ये पूतिद्रव्यपूरिता अपि बाह्ये रम्या भवन्ति, स्त्रियोऽप्येवम्; भस्त्राश्च स्यूता भवन्ति, अत एव स्नायुस्यूताः स्नायुभिः स्नसादिभि स्यूता इव स्यूता. ॥ १३३ । तथा—

बहिरन्तर्विपर्यास स्त्रीशरीरस्य चेद् भवेत् । तस्यैव कामुक॰ कुर्याद् गृध्रगोमायुगोपनम्।१३४।

बहिश्चान्तश्च, तयोर्विपर्यासो विनिमय॰ बहिर्भागोऽन्तर्भवेत्, अन्तर्भागो वा बहि, स्त्रीशरीरस्य स्त्रीदेहस्य चेद् यदि भवेत्, तदा तस्यैव स्त्रीशरीरस्य कामुक' कामी गृध्रगोमायुगोपन गृध्रगोमायुभ्यो रक्षण कुर्यात्। गृध्रगोमायुग्रहण दिवानिश रक्षणीयताप्रतिपादनार्थम्, गृध्रा हि दिवा प्रभविष्णवः, गोमायवश्च रात्रौ। तत्स्त्रीशरीरस्य विपर्यासे नक्तदिन कामुको गृध्रगोमायुरक्षणव्याकुल एव स्यात्, दूरे तत्परिभोगः ॥ १३४ ॥ तथा—

स्त्रीशस्त्रेणापि चेत् कामो जगदेतज्जिगीषति । तुच्छपिच्छमय शस्त्र किं नादत्ते स मूढधी ?।१३५।

स्त्र्येव शस्त्र स्त्रीशस्त्र तेन जगद्विजयार्थमुपात्तेन, अपीत्यनादरे, चेद् यदि, कामो मन्मथ , एतज्जगत् त्रैलोक्यात्मकम्, जिगीषति जेतुमिच्छति, तदा स मूढधीः कामः तुच्छ काकादीनां यत् पिच्छ तन्मय शस्त्र किं नादत्ते कुतो हेतोर्न गृह्णाति ? । अयमर्थ —यदसारेण रसासृग्मांसमेदोऽस्थिमज्जशुक्रपूरितेन बहुप्रयासलभ्येन स्त्रीरूपेण

शस्त्रेण जिगीषत्ययम्, तदा तुच्छं पिच्छमेव सुलभमपूति च किं नादत्ते? इदं हि विस्मृतमस्य मूढधियः, यल्लौकिकाः पठन्ति—

अर्के चेद् मधु विन्देत किमर्थं पर्वतं व्रजेत्?। इष्टस्यार्थस्य संसिद्धौ को विद्वान् यत्नमाचरेत्? ॥१॥१३५॥

तथा इदमपि निद्राच्छेदे चिन्तयेत्—

**सङ्कल्पयोनिनानेन हहा! विश्वं विडम्बितम्। तदुत्खनामि सङ्कल्पं मूलमस्येति चिन्तयेत्॥१३६।**

सङ्कल्पः कल्पनामात्रं योनिः कारणं यस्य न तु वास्तवं किञ्चित् कारणमित्यर्थस्तेन, अनेन सकलजगत्संवेदनसिद्धेन, हहा इति खेदे, विश्वं जगद् ब्रह्म-हरि-हर-संक्रन्दनप्रभृतिकं कीटपर्यवसानं तैस्तैः स्त्रीदर्शनालिङ्गनस्मरणादिभिः प्रकारैर्विडम्बितं विगोपितम्। श्रूयते हि पुराणे—हरगौरीविवाहोत्सवे पुरोहितीभूतः पितामहो, गौरीप्रणयप्रार्थनासु हरः, गोपीचाटुकर्मणा श्रीपतिः, गौतमभार्यायां रममाणः सहस्रलोचनः, बृहस्पतेर्भार्यायां तारायां चन्द्रः, अश्वायामप्यादित्यो विडम्बनां प्रापितः। तदनेनासारेणासारहेतूद्भवेन च यद् विश्वं विडम्ब्यते तदसाम्प्रतम्। तत् तस्मादिदानीमस्यैव जगद्विडम्बनकर्तुः सङ्कल्पलक्षणं मूलमुत्खनामि उन्मूलयामि। इति स्त्रीशरीरस्याशुचित्वमसारत्वं सङ्कल्पयोन्युपकरणत्वं च विचिन्तयेदिति प्रकृतयोजना ॥ १३६ ॥

तथा, इदमपि निद्राच्छेदे चिन्तयेत्—

**यो यः स्याद्बाधको दोषस्तस्य तस्य प्रतिक्रियाम्। चिन्तयेद् दोषमुक्तेषु प्रमोदं यतिषु व्रजन् १३७**

यो यो राग–द्वेष–क्रोध–मान–माया–लोभ–मोह–मन्मथा–ऽसूया–मत्सरादिदोषो बाधकश्चित्तप्रशान्तिवाहिका-यास्तस्य तस्य दोषस्य प्रतिक्रियां प्रतीकार चिन्तयेत्, तथाहि—रागस्य वैराग्यम्, द्वेषस्य मैत्री, क्रोधस्य क्षमा, मानस्य मार्दवम्, मायाया आर्जवम्, लोभस्य सन्तोषः, मोहस्य विवेक', मन्मथस्य स्त्रीशरीराशौचभावना, असूयाया अनसूयत्वम्, मत्सरस्य परसम्पदुत्कर्षेऽपि चित्तानाबाधा च प्रतिक्रिया मता। इद चाशक्यमिति नाश-ङ्कनीयम्, दृश्यन्ते हि मुनयस्तत्तद्दोषपरिहारेण गुणमयमात्मान बिभ्रत । अत एवाह—दोषमुक्तेषु यतिषु प्रमोद व्रजन्। सुकर हि दोषमुक्तमुनिदर्शनेन प्रमोदादात्मन्यपि दोषमोचनम् ॥ १३७ ॥ तथा—

दु स्था भवस्थिति स्थेम्ना सर्वजीवेषु चिन्तयन्। निसर्गसुखसर्ग तेष्वपवर्ग विमार्गयेत् ॥१३८॥

दुस्थां दु खहेतुम्, भवस्थितिं ससारावस्थानम्, चिन्तयन् विमृशन्, सर्वजीवेषु तिर्यग्–नारक–नरा–ऽमरेषु, तथाहि–तिरश्चा वध–बन्ध–ताडन–पारवश्य–क्षुत्–पिपासा–ऽतिमारारोपणा–ऽङ्गच्छेदादिभि, नारकाणां च स्वा भाविक–परस्परोदीरित–परमाधार्मिककृतचेत्रानुभावजवेदनामनुभवता क्रकचदारण–कुम्भीपाक–कूटशाल्मलीसमा-श्लेष–वैतरणीतरणादिभि, नराणा च दारिद्र्यव्याधिपारवश्यवधबन्धादिभिः, सुराणा चेर्ष्या–विषाद–विपत्तसम्पद्-दर्शनमरणदु'खानुचिन्तनादिभिर्दु स्थैव भवस्थिति, ता स्थेम्ना स्थैर्येण चिन्तयस्तेषु सर्वजीवेष्वपवर्गं मोक्षम्', किंविशिष्टम् ? निसर्गसुखसर्ग निसर्गेण सुखससर्गो यत्र तम्, विमार्गयेदाशसेत्—कथ नु नाम सर्वे ससारिण सकलदु खविमोचेण मोक्षेण सयुज्येरन्निति ॥ १३८ ॥

इदमपि निद्राच्छेदे चिन्तयेत्—

संसर्गेऽप्युपसर्गाणां दृढव्रतपरायणाः । धन्यास्ते कामदेवाद्याः श्लाघ्यास्तीर्थकृतामपि ॥१३९॥

संसर्गेऽपि संबन्धेऽपि, उपसर्गाणां सुरादिकृतानाम्, दृढव्रतपरायणाः प्रतिपन्नव्रतपालनपराः, कामदेवाद्याः कामदेवप्रभृतयः, धन्या धर्मधनं लब्धारः, त इति भगवदुपासकत्वेन प्रसिद्धाः। धन्यत्वे विशेषहेतुमाह—श्लाघ्याः प्रशस्यास्तीर्थकृतां श्रीमन्महावीरस्य, पूजायां बहुवचनम् । कामदेवकथानकं च संप्रदायगम्यम् । स चायम्,—

अनुगङ्गं पतद्धंसश्रेणीभिरिव चारुभिः । चैत्यध्वजै राजमाना चम्पेत्यस्ति महापुरी ॥ १ ॥ भोगिभोगायतभुजस्तम्भः कुलगृहं श्रियः । जितशत्रुरिति नाम्ना तस्यामासीद् महीपतिः ॥ २ ॥ अभूद् गृहपतिस्तस्यां कामदेवाभिधः सुधीः । आश्रयोऽनेकलोकानां महातरुरिवाध्वनि ॥ ३ ॥ लक्ष्मीरिव स्थिरीभूता रूपलावण्यशालिनी । अभूद् भद्राकृतिर्भद्रा नाम तस्य सधर्मिणी ॥ ४ ॥ निधौ षट् स्वर्णकोट्यः षड् वृद्धौ षड् व्यवहारगाः । व्रजाः षट् चास्य दशगोसहस्रमितयोऽभवन् ॥ ५ ॥ तदा च विहरन्नुर्वी तत्रोर्वीमुखमण्डने । पुण्यभद्राभिधोद्याने श्रीवीरः समवासरत् ॥६॥ कामदेवोऽथ पादाभ्यां भगवन्तमुपागमत् । शुश्राव च श्रोत्रसुधां स्वामिनो धर्मदेशनाम् ॥७॥ कामदेवस्ततो देवनरासुरगुरोः पुरः । प्रपेदे द्वादशविधं गृहिधर्मं विशुद्धधीः ॥ ८ ॥ प्रत्याख्यात् स विना भद्रां स्त्रीर्व्रजान् षड्व्रजीं विना । निधौ वृद्धौ व्यवहारे षट् षट् कोटीर्विना वसु ॥ ९ ॥ हलपञ्चशतीं मुक्त्वाऽत्याक्षीत् क्षेत्राण्यनांसि तु । दिग्यात्रिकाणि वोढ्णि पञ्च पञ्च शतान्यृते ॥ १० ॥ दिग्यात्रिकाणि चत्वारि चत्वारि प्रवहन्ति च । विहाय वहनान्येष प्रत्याख्यद् वहनान्यपि ॥ ११ ॥ विनैकां गन्धकाषायीं स तत्याजाङ्गमार्जनम् । दन्तधावनमप्यार्द्रामपास्य मधुयष्टिकाम् ॥ १२ ॥ ऋते च क्षीरामलकात् फलान्यन्यानि सोऽमुचत् । अभ्यङ्गं च

विना तैले महस्रशतपाकिमे ॥ १३ ॥ विना सुगन्धिगन्धाढ्यमुद्वर्तनकमत्यजत् । विनाष्टावौष्ट्रिकानम्भस्कुम्भान् मज्जनकर्म च ॥ १४ ॥ ऋते च क्षौमयुगलाद् वस्त्र सर्वमवर्जयत् । चन्दनागुरुघुसृणान्यपास्यान्यद् विलेपनम् ॥ १५ ॥ जातीमन च पद्मं च विना कुसुममत्यजत् । कर्णिकां नाममुद्रां च विहायाभरणान्यपि ॥ १६ ॥ तुरुष्कागुरुधूपेभ्य ऋते धूपविधिं जहौ । घृतपूरात् खण्डखाद्यादन्यद् भक्ष्यमवर्जयत् ॥ १७ ॥ काष्ठपेयां विना पेयामोदनं कलम विना । माषमुद्गकलायेभ्य ऋते सूप च सोऽमुचत् ॥ १८ ॥ तत्यान च घृत सर्वमृते शारदगोघृतात् । शाक स्वस्तिकमण्डूक्या पल्यङ्काच्चापर जहौ ॥ १९ ॥ अन्यत् स्नेहाम्लदान्यम्लात् तीमन वारि चाम्भस' । जहौ सुगन्धिताम्बूलाद् मुखवासमथापरम् ॥ २० ॥ ततः प्रभु स वन्दित्वा ययौ निजनिकेतनम् । तत्रागार्प्येत्य जग्राह स्वाम्यग्रे श्रावकव्रतम् ॥ २१ ॥ कुटुम्बभारमारोप्य ज्येष्ठपुत्रे ततः स्वयम् । तस्थौ पौषधशालायामप्रमादी व्रतेषु स' ॥ २२ ॥ तस्युपस्तस्य तत्राथ निशीथे क्षोभहेतवे । पिशाचरूपभृद् मिथ्यादृष्टिः कोऽप्यापपौ सुर ॥ २३ ॥ शिरोरुहाः शिरस्यस्य कर्कशाः कपिशात्विष । चकासामासुरापक्वाः केदार इव शालय ॥ २४ ॥ भाण्डभित्तनिभ भाल बभ्रुपुच्छोपमे भ्रुवौ । कर्णौ सूर्पाकृती युग्मचुल्लीतुल्या च नासिका ॥ २५ ॥ उष्ट्रौष्ठलम्बिनावोष्ठौ दशना फालसन्निभाः । जिह्वा सर्पोपमा श्मश्रु वाजिवालधिसोदरम् ॥ २६ ॥ तप्तमूषानिभे नेत्रे हनू सिंहहनूपमौ । हलास्यतुल्य चिबुकं ग्रीवोष्ट्रग्रीवया समा ॥ २७ ॥ उर पुरकपाटोरु भुजौ भुजगभीषणौ । पाणी शिलामानतुल्य' शिलापुत्रकसन्निभाः ॥ २८ ॥ पातालतुल्यमुदर नाभिः कूपसहोदरा । शिश्न चाजगरप्राय वृषणौ कुतुपोपमौ ॥ २९ ॥ जङ्घे तालद्रुमाकारे पादौ शैलशिलोपमौ । कोलाहलरवोऽकाण्डाशनिध्वनिभयानकः

॥ २० ॥ स मूर्ध्न्याखुस्रजं बिभ्रत् कण्ठे च सरटस्रजम् । नकुलान् कर्णिकास्थानेऽङ्गदस्थाने च पन्नगान् ॥ २१ ॥ क्रुद्धान्तकसमुत्क्षिप्ततर्जनाङ्गुलिदारुणम् । उदस्यन्नपकोशासिं कामदेवं जगाद सः ॥ २२ ॥ अप्रार्थितप्रार्थक ! रे ! किमारब्धमिदं त्वया । किं स्वर्गमपवर्गं वा वराक ! त्वमपीच्छसि ? ॥ २३ । मुञ्चारब्धमिदं नो चेदनेन निशितासिना । तरोरिव फलं स्कन्धात् पातयिष्यामि ते शिरः ॥ २४ ॥ तर्जयत्यपि तत्रैवं समाधेर्न चचाल सः । शरभः शैरिभारावैः किं क्षुभ्यति कदाचन ? ॥ २५ ॥ कामदेवः शुभध्यानाद् न चचाल यदा तदा । व्याजहार तथैवायं द्विस्त्रिस्त्रिदशपांसनः ॥ २६ ॥ तत्राप्यक्षुभ्यतः सोऽस्य क्षोभायैभं वपुर्व्यधात् । स्वशक्त्यन्तमनालोक्य विरमन्ति खला न हि ॥ २७ ॥ सोऽधत्त विग्रहं तुङ्गं सजलाम्भोदसोदरम् । सर्वतोऽप्येत्य मिथ्यात्वं राशीभूतमिवैकतः ॥ २८ ॥ स दीर्घदारुणाकारं विषाणद्वन्द्वमुन्नतम् । धारयामास कीनाशभुजदण्डविडम्बकम् ॥ २९ ॥ किञ्चिदाकुञ्चितां शुण्डां कालपाशमिवोद्वहन् । कामदेवं जगादैवं देवः कूटैकदैवतम् ॥४०॥ मायाविन् ! मुच्यतां माया सुखं तिष्ठ मदाज्ञया । पाखण्डगुरुणा केन त्वमस्येवं विमोहितः ? ॥ ४१ ॥ न चेद् मुञ्चस्यमुं धर्मं शुण्डादण्डेन तद् द्रुतम् । क्रक्ष्यामि त्वामितः स्थानाद् नेष्यामि च नभोऽङ्गणे ॥ ४२ ॥ व्योम्नः पतन्तं दन्ताभ्यां प्रेषयिष्यामि[1] चान्तरा । अवनम्य ततस्ताभ्यां दारयिष्यामि दारुवत् ॥ ४३ ॥ पादैः कर्दममर्दं च त्वां मर्दिष्यामि निर्दयम् । एकपिण्डीकरिष्यामि तिलपिष्टिमिव क्षणात् ॥ ४४ ॥ उन्मत्तस्येव तस्यैवं घोरं व्याहरतोऽपि हि । नोत्तरं कामदेवोऽदाद् ध्यानसंलीनमानसः ॥ ४५ ॥ असंक्षुभितमीक्षित्वा कामदेवं दृढाशयम् । द्विस्त्रिश्चतुरभाषिष्ट तथैव

१ ' प्रत्येयिष्यामि ' इति प्रत्यन्तरम् ।

स दुराशय. ॥ ४६ ॥ ततोऽप्यभीत त प्रेक्ष्य शुण्डादण्डेन सोऽग्रहीत् । व्योमन्युच्छालयामास प्रतीयेष च पूर्ववत् ॥४७॥ दलयामास दन्ताभ्या पादन्यासैर्ममर्द च । धर्मकर्मविरुद्धानां किमकृत्य दुरात्मनाम् ? ॥ ४८ ॥ अधिसेहे च तत् सर्वं कामदेवो महामना । मनागपि च न स्थैर्य जहौ गिरिरिव स्थिर' ॥ ४९ ॥ तस्मिन्नचलिते ध्यानादीदृशेनापि कर्मणा । सदर्पः सर्परूप स विदधे विबुधाधमः ॥ ५० ॥ देव' पूर्ववदेवोचे स त भापयितु तत । कामदेवस्तु नाभैषीद् ध्यानसज्ञमित' सुधी. ॥ ५१ ॥ भूयो भूयस्तथोक्त्वा त निर्भीक प्रेक्ष्य दु सुर' । आतोद्यमिव वध्रेण स्वभोगेनाभ्यवेष्टयत् ॥ ५२ ॥ निःशूकमेव दशनैर्ददशूको ददश तम् । स तु ध्यानसुधामग्नो न तद्बाधामजीगणत् ॥ ५३ ॥ दिव्यरूप तत. कृत्वा द्युतिद्योतितदिङ्मुखम् । सुर पौषधशालायां विवेशैवमुवाच च ॥ ५४ ॥ धन्योऽसि कामदेव ! त्व देवराजेन ससदि । प्रशसाऽकारि भवतोऽसहिष्णुस्तामिहागमम् ॥ ५५ ॥ प्रभवः प्राभवेणापि वर्णयन्ति ह्यवस्त्वपि । अतः परीक्षितोऽसि त्व नानारूपभृता मया ॥५६॥ त्वां यथाऽवर्णयच्छक्रस्तथैवासि न सशय । क्षम्यतामपराधो मे परीक्षणभवस्त्वया ॥ ५७ ॥ प्रययावभिधायैव स देवो देवसद्मनि । कामदेवोऽपि शुद्धात्मा प्रतिमा तामपारयत् ॥ ५८ ॥ उपसर्गसहिष्णु तमश्लाघिष्ट स्वय प्रभुः । सभाया भगवान् वीरो गुरवो गुणवत्सलाः ॥५९॥ कामदेवो द्वितीयस्मिन्नह्नि पारितपोषधः । त्रिजगत्स्वामिनः पादवन्दनार्थमथागमत् ॥ ६० ॥ जगद्गुरुरभाषिष्ट गौतमप्रभृतीनिति । गृहिधर्मेऽप्यसावेवमुपसर्गान् विसोढवान् ॥ ६१ ॥ सर्वसङ्गपरित्यागाद् यतिधर्मपरायणैः । तद्विशेषेण सोढव्या उपसर्गा भवादृशैः ॥ ६२ ॥ कर्मनिर्मूलनोपायान् श्रावकप्रतिमास्तत. । एकादशापि शिश्राय कामदेव क्रमेण ताः ॥ ६३ ॥ सोऽथ सलेखना कृत्वा प्रपेदेऽनशनव्रतम् । पर समाधिमापन्नः

कालधर्ममुपाययौ ॥ ६४ ॥ सोऽरुणाभे विमानेऽभूद् चतुष्पल्यस्थितिः सुरः। च्युत्वा ततो विदेहेषूत्पद्य सिद्धिं व्रजिष्यति ॥ ६५ ॥ यथोपसर्गेऽपि निसर्गधैर्यात् स कामदेवो व्रततत्परः सन्। श्लाघ्योऽभवत् तीर्थकृतां तथाऽन्येऽप्येवंविधा धन्यतमाः पुमांसः ॥ ६६ ॥ १३९ ॥

॥ इति कामदेवकथानकं संपूर्णम् ॥

इदमपि निद्राच्छेदे चिन्तयेत्—

**जिनो देवः कृपा धर्मो गुरवो यत्र साधवः। श्रावकत्वाय कस्तस्मै न श्लाघेताविमूढधीः? ॥१४०॥**

श्रावका उक्तनिर्वचनास्तेषां भावः श्रावकत्वं तस्मै श्रावकत्वाय को न श्लाघेत? सर्वः श्लाघेतैव, मुक्त्वा मोहमूढान्। अत एवाह—अविमूढधीः; मूढबुद्धीनां ह्यतत्त्वदर्शिनां तैमिरिकाणामिव चन्द्रद्वितय–शङ्खपीतिमदर्शिनां मा भूत् श्रावकत्वाय श्लाघा, अमूढबुद्धयस्तु तत्त्वदर्शित्वात् श्लाघन्त एव। तस्मै इति तत्संबन्धिनं यच्छब्दमाह—यत्र श्रावकत्वे जिनो रागादिदोषजेता देवः पूज्यो न तु रागादिमान्, कृपा दुःखितदुःखप्रहाणेच्छा धर्मोऽनुष्ठेयरूपो न तु हिंसात्मको यागादिः, साधवः पञ्चमहाव्रतरताः गुरवो धर्मोपदेष्टारो न तु परिग्रहारम्भसक्ताः ॥ १४० ॥

तथा निद्राच्छेदे तांस्तान् मनोरथान् सप्तभिः श्लोकैराह—

**जिनधर्मविनिर्मुक्तो मा भूवं चक्रवर्त्यपि। स्यां चेटोऽपि दरिद्रोऽपि जिनधर्माधिवासितः ।१४१।**

जिनधर्मेण ज्ञान–दर्शन–चारित्ररूपेण विनिर्मुक्तो रहितश्चक्रवर्त्यपि सार्वभौमोऽपि मा भूव मा जनिषि, तस्य नरकमूलत्वात्, किन्तु स्यां भवेय चेटोऽपि दासोऽपि दरिद्रोऽपि दु स्थितोऽपि, कथभूतः ? जिनधर्मेणोक्त-स्वरूपेणाधिवासित' ॥ १४१ ॥ तथा—

त्यक्तसङ्गो जीर्णवासा मलक्लिन्नकलेवरः। भजन् माधुकरीं वृत्तिं मुनिचर्यां कदा श्रये ?।१४२।

त्यक्त्वा गृहगृहिणीप्रभृतयः सङ्गा येन स त्यक्तसङ्गः, जीर्णं जरद् वासो यस्य स जीर्णवासा', मलेन क्लिन्न कलेवर यस्य स मलक्लिन्नकलेवरः, मधुकरस्येव माधुकरी माधुकरीव माधुकरी वृत्तिर्भिक्षा तां भजन् सेवमानः, यदाहुः,—

जहा दुमस्स पुप्फेसु भमरो आविअइ रस। न य पुप्फ किलामेइ सो य पीणेइ अप्पय ॥ १ ॥
एमेए समणा मुत्ता जे लोए सति साहुणो। विहगमा व पुप्फेसु दानभत्तेसणे रया ॥ २ ॥
वय च वित्तिं लब्भामो न य कोवुवहम्मइ। अहागडेसु रीयते पुप्फेसु भमरा जहा ॥ ३ ॥

मुनीनां चर्या मूलगुणोत्तरगुणरूपा ता कदा कर्हि श्रये श्रयिष्यामि, कदाकर्योर्नेवा ॥ ५। ३। ८॥ इति

(१) यथा द्रुमस्य पुष्पेषु भ्रमर आपिबति रसम्। न च पुष्प क्लमयति स च प्रीणात्यात्मानम् ॥ १ ॥
एवमेते श्रमणा मुक्ता ये लोके सन्ति साधव। विहङ्गमा इव पुष्पेषु दानभक्तैषणे रता ॥ २ ॥
वय च वृत्तिं लप्स्यामो न च कोऽप्युपहन्यते। यथाकृतषु रीयन्ते पुष्पेषु भ्रमरा यथा ॥ ३ ॥

वर्त्स्यति वर्तमाना ॥ १४२ ॥ तथा—

**त्यजन् दुःशीलसंसर्गं गुरुपादरजः स्पृशन् । कदाहं योगमभ्यस्यन् प्रभवेयं भवच्छिदे ।१४३।**

दुःशीला लौकिका लोकोत्तराश्च । तत्र लौकिका दुःशीला विट–भट–भण्ड–गणिकादयः, लोकोत्तरास्तु पार्श्वस्थावसन्नकुशीलसंसक्तयथाच्छन्दास्तैः संसर्गं संवासादिरूपं, त्यजन् परिहरन् । न च तन्मात्रेण भवतीत्याह—गुरुपादरजः स्पृशन् । अनेन सत्संसर्गमाह । न चैतावताप्यलमित्याह—योगमभ्यस्यन् योगो रत्नत्रयं ध्यानं वा तमभ्यस्यन् पुनः पुनः परिशीलयन् कदाहं प्रभवेयं प्रभविष्यामि । कस्मै ? भवच्छिदे संसारोच्छेदाय ॥ १४३ ॥ तथा—

**महानिशायां प्रकृते कायोत्सर्गे पुराद् बहिः । स्तम्भवत् स्कन्धकषणं वृषाः कुर्युः कदा मयि ।१४४।**

महानिशायां निशीथे, कायोत्सर्गे प्रकृते प्रारब्धे पुराद् बहिर्नगराद् बाह्यप्रदेशे स्तम्भ इव स्तम्भवद् मयि स्कन्धकषणं स्कन्धकण्डूयनं कदा वृषा उत्सृष्टपशवः कुर्युः करिष्यन्ति । इदं च प्रतिमाप्रतिपन्नश्रावकविषयम्, तस्यैव पुराद् बहिष्कृतकायोत्सर्गस्य । शिलास्तम्भभ्रान्त्या वृषभैः स्कन्धकषणसंभवः; प्रेप्सितयत्यवस्थापेक्षं वा, यतीनां जिनकल्पिकादीनां सर्वदा कायोत्सर्गसंभवात् ॥ १४४ ॥ तथा—

**वने पद्मासनासीनं क्रोडस्थितमृगार्भकम् । कदाऽऽघ्रास्यन्ति वक्त्रे मां जरन्तो मृगयूथपाः ।१४५।**

वनेऽरण्ये पद्मासनं वक्ष्यमाणं तेनासीनमुपविष्टम्, अहिंस्रत्वेन क्रोड उत्सङ्गे स्थिता मृगार्भका मृगडिम्भा

यस्य त क्रोडस्थितमृगार्भकम्, एवंविध मामपरिकर्मशरीर कदा वक्त्रे आघ्रास्यन्ति, के ? मृगयूथपा मृगयूथाधिपतयः, किंविशिष्टा ? जरन्तो वृद्धा'। जरन्तो हि यथाकथञ्चित् न विश्वसन्ति, परमसमाधिनिश्चलतासदर्शनात् तेऽपि विश्वस्ता' सन्तो जातिस्वभावाद् वक्त्रे आजिघ्रन्ति ॥ १४५ ॥ तथा—

**शत्रौ मित्रे तृणे स्त्रैणे स्वर्णेऽश्मनि मणौ मृदि। मोक्षे भवे भविष्यामि निर्विशेषमति. कदा ।१४६।**

शत्रौ रिपौ, मित्रे सुहृदि, तृणे शष्पादौ, स्त्रैणे स्त्रीसमूहे, स्वर्णे काञ्चने, अश्मन्युपले, मणौ रत्ने, मृदि मृत्तिकायाम्, मोक्षे कर्मवियोगलक्षणे, भवे कर्मसम्बन्धलक्षणे, निर्विशेषमतिस्तुल्यमतिः कदा भविष्यामि। शत्रुमित्रादिषु निर्विशेषमतित्वमप्यन्यस्यापि भवेत्, असौ तु परमवैराग्योपगतो मोक्ष-भवयोरपि निर्विशेषत्वमर्थयते, यदाह;—" मोक्षे भवे च सर्वत्र निःस्पृहो मुनिसत्तमः "। इति।

एते च मनोरथाः क्रमेणोत्तरोत्तरप्रकर्षवन्तः, तथाहि—प्रथमे श्लोके जिनधर्मानुरागमनोरथः, द्वितीये तु यतिधर्मपरिग्रहमनोरथ, तृतीये तु यतिचर्याकाष्ठाधिरोहणमनोरथ, चतुर्थे तु कायोत्सर्गादिमनोरथ, पञ्चमे तु गिरि-गुहाद्यवस्थितमुनिचर्यामनोरथः, षष्ठे तु परमसामायिकपरिपाकमनोरथ ॥ १४६ ॥

इदानीमुपसहरति—

**अधिरोढु गुणश्रेणिं नि श्रेणीं मुक्तिवेश्मनः। परानन्दलताकन्दान् कुर्यादिति मनोरथान् ।१४७।**

अधिरोढुमारोढु गुणश्रेणिमुत्तरोत्तरगुणस्थानरूपाम्, किंविशिष्टाम् ? निःश्रेणीमिव नि श्रेणीम्, कस्य ?

मुक्तिलक्षणस्य वेश्मनो मन्दिरस्य, कुर्याद् विदध्यात्, इति श्लोकषट्केनोक्तान् मनोरथान्, किंविशिष्टान्? परानन्दलताकन्दान् परश्चासावानन्दश्च स एव लता तस्याः कन्दान् कन्दभूतान्। यथा हि कन्दाल्लता प्रभवति तथैतेभ्योऽपि मनोरथेभ्यः परो य आनन्दः परमसामायिकरूपः स प्रभवति। सप्तभिः कुलकम्॥ १४७॥

अथोपसंहरति—

**इत्याहोरात्रिकीं चर्यामप्रमत्तः समाचरन्। यथावदुक्तवृत्तस्थो गृहस्थोऽपि विशुध्यति॥१४८॥**

इति पूर्वोक्तक्रमेण, अहोरात्रे भवामाहोरात्रिकीं चर्यां समाचाररूपामप्रमत्तः प्रमादरहितः समाचरन् सम्यक् कुर्वन्, उक्तं जिनागमेऽभिहितं यद् वृत्तं प्रतिमादिलक्षणं तत्र तिष्ठतीत्युक्तवृत्तस्थः, कथम्? यथावत् सम्यग्विधिना, गृहस्थोऽपि यतित्वमप्राप्नुवन्नपि विशुध्यति क्षीणपापो भवति।

अथ पुनः काः प्रतिमाः, यासु स्थितो गृहस्थोऽपि विशुध्यति? उच्यते-शङ्कादिदोषरहितं प्रशमादिलिङ्गं स्थैर्यादिभूषणं मोक्षमार्गप्रासादपीठभूतं सम्यग्दर्शनं भय-लोभ-लज्जादिभिरप्यनतिचरन् मासमात्रं सम्यक्त्वमनुपालयति, इत्येषा प्रथमा प्रतिमा। १।

द्वौ मासौ यावदखन्डितान्यविराधितानि च पूर्वप्रतिमानुष्ठानसहितानि द्वादशापि व्रतानि पालयतीति द्वितीया। २।

त्रीन् मासानुभयकालमप्रमत्तः पूर्वोक्तप्रतिमानुष्ठानसहितः सामायिकमनुपालयतीति तृतीया। ३।

चतुरो मासांश्चतुष्पर्व्यां पूर्वप्रतिमानुष्ठानसहितोऽखण्डितं पौषधं पालयतीति चतुर्थी। ४।

पञ्च मासांश्चतुष्पर्व्यां गृहे तद्द्वारे चतुष्पथे वा परीषहोपसर्गादिनिष्कम्पकायोत्सर्गः पूर्वोक्तप्रतिमानुष्ठानं

पालयन् सकलां रात्रिमास्त इति पञ्चमी । ५ ।

एवं वक्ष्यमाणास्वपि प्रतिमासु पूर्वपूर्वप्रतिमानुष्ठाननिष्ठिता अवसेया:, नवरं षण्मासान् ब्रह्मचारी भवतीति षष्ठी ।६।

सप्त मासान् सचित्ताहारान् परिहरतीति सप्तमी । ७ ।

अष्टौ मासान् स्वयमारम्भं न करोतीत्यष्टमी । ८ ।

नव मासान् प्रेष्यैरप्यारम्भं न कारयतीति नवमी । ९ ।

दश मासानात्मार्थनिष्पन्नमाहारं न भुङ्क्त इति दशमी । १० ।

एकादश मासान् त्यक्तसङ्गो रजोहरणादिमुनिवेषधारी कृतकेशोत्पाट: स्वायत्तेषु गोकुलादिषु वसन् 'प्रतिमाप्रतिपन्नाय श्रमणोपासकाय भिक्षां दत्त' इति वदन् धर्मलाभशब्दोच्चारणरहितं सुसाधुवत् समाचरतीत्येकादशी । उक्तं हि,–

दंसणपडिमा नेआ सम्मत्तजुअस्स जा इह बुंदी । कुग्गहकलंकरहिआ मिच्छत्तखओवसमभावा ॥ १ ॥

बीआ पडिमा णेया सुद्धाणुव्वयधारणं । सामाइअपडिमाओ सुद्धं सामाइयं पि अ ॥ २ ॥

अट्ठमीमाइपव्वेसु सम्मं पोसहपालणं । सेसाणुट्ठाणजुत्तस्स चउत्थी पडिमा इमा ॥ ३ ॥

---

( १ ) दर्शनप्रतिमा ज्ञेया सम्यक्त्वयुतस्य येह तनु: । कुग्रहकलङ्करहिता मिथ्यात्वक्षयोपशमभावात् ॥ १ ॥

द्वितीया प्रतिमा ज्ञेया शुद्धाणुव्रतपालन(धारण)म् । सामायिकप्रतिमात: शुद्धं सामायिकमपि च ॥ २ ॥

अष्टम्यादिपर्वसु सम्यक् पौषधपालनम् । शेषानुष्ठानयुक्तस्य चतुर्थी प्रतिमेयम् ॥ ३ ॥

[1]निक्कंपो काउसग्गं तु पुव्वुत्तगुणसंजुओ । करेइ पव्वराईसु पंचमिं पडिवन्नओ ॥ ४ ॥
छट्ठीए बंभयारी सो फासुआहार सत्तमी । वज्जे सावज्जमारंभं अट्ठमिं पडिवन्नओ ॥ ५ ॥
अवरेणावि आरंभं नवमी नो करावए । दसमीए पुणोदिट्ठं फासुअं पि न भुंजए ॥ ६ ॥
एक्कारसीइ निस्संगो धरे लिंगं पडिग्गहं । कयलोओ सुसाहु व्व पुव्वुत्तगुणसायरो ॥ ७ ॥ इति ॥ १४८ ॥

इदानीं पञ्चभिः श्लोकैर्विधिशेषमाह—

**सोऽथावश्यकयोगानां भङ्गे मृत्योरथागमे । कृत्वा संलेखनामादौ प्रतिपद्य च संयमम् ॥१४९॥**
**जन्मदीक्षाज्ञानमोक्षस्थानेषु श्रीमदर्हताम् । तदभावे गृहेऽरण्ये स्थण्डिले जन्तुवर्जिते ॥१५०॥**
**त्यक्त्वा चतुर्विधाहारं नमस्कारपरायणः । आराधनां विधायोच्चैश्चतुःशरणमाश्रितः ॥१५१॥**
**इहलोके परलोके जीविते मरणे तथा । त्यक्त्वाशंसां निदानं च समाधिसुधयोक्षितः ॥१५२॥**

---

(१) निष्कम्पः कायोत्सर्गं तु पूर्वोक्तगुणसंयुतः । करोति पर्वरात्रीषु पञ्चमीं प्रतिपन्नकः ॥ ४ ॥
षष्ठ्यां ब्रह्मचारी स प्रासुकाहारः सप्तम्याम् । वर्जयेद् सावद्यमारम्भमष्टमीं प्रतिपन्नकः ॥ ५ ॥
अपरेणाप्यारम्भं नवम्यां नो कारयेत् । दशम्यां पुनरुद्दिष्टं प्रासुकमपि न भुञ्जीत ॥ ६ ॥
एकादश्यां निस्सङ्गो धरेल्लिङ्गं प्रतिग्रहम् । कृतलोचः सुसाधुरिव पूर्वोक्तगुणसादरः ॥ ७ ॥

परीषहोपसर्गेभ्यो निर्भीको जिनभक्तिभाक् । प्रतिपद्येत मरणमानन्द श्रावको यथा ॥१५३॥

व्याख्या—स श्रावकः, अथानन्तरम्, आवश्यका अवश्य करणीया ये योगा सयमव्यापारास्तेषां भङ्गे कर्तु-मशक्तावित्येक कारणम्, अथ द्वितीय—मृत्योरागमे मृत्युसमये सप्राप्ते, सलिख्यते तनूक्रियते शरीर कषायाश्चानये ति सलेखना, तत्र शरीरसलेखना क्रमेण भोजनत्यागः, कषायसलेखना तु क्रोधादिकषायपरिहार । तत्र प्रथमायाः कारणमिदम्,—

[1]देहम्मि असलिहिए सहसा धाऊहिं खिज्जमाणेहिं । जायइ अट्टज्झाण सरीरिणो चरमकालम्मि ॥१॥

द्वितीयायाः पुनरिदम्,—

[2]न ते एय पसमामि किस साहु सरीरय । कीस ते अगुली भग्गा भाव सलिह मा तुर ! ॥ १ ॥

इत्यादिना प्रबन्धेनोक्तम् । सयम च यथौचित्येन प्रतिपद्यते । तत्रेय सामाचारी,—श्रावक' किल सकलस्य श्रावकधर्मस्योद्यापनार्थमिवान्ते सयम प्रतिपद्यते तस्य साधुधर्मशेषभूतैव संलेखना, यदाह,— [3]सलेहणा उ अते न निओआ जेण पव्वइ कोई । ततो य' सयम प्रतिपद्यते स सयमानन्तर काले सलेखना कृत्वा मरण प्रतिपद्यते,

---

(१) देहेऽसलिखिते सहसा धातुभि क्षियमाणै । जायत आर्तध्यान शरीरिणश्चरमकाले ॥ १ ॥

(२) न ते एतत् प्रशसामि कृश साधो ! शरीरकम् । कस्मात् तेऽङ्गुलिर्भग्ना भाव सलिख मा त्वरस्व ॥ १ ॥

(३) सलेखना त्वन्ते न नियोगाद् येन प्रव्रजति कोऽपि ।

यस्तु न संयमं प्रतिपद्यते तं प्रति सकलो ग्रन्थः 'आनन्दः श्रावको यथा' इतिपर्यन्तः संबध्यते ॥ १४६ ॥ श्रीमदर्हद्भट्टारकाणां जन्म–दीक्षा–ज्ञान–मोक्षस्थानेषु; तत्र जन्मस्थानानि,—



[१]इक्खागुभूमि उज्झा सावत्थि विणीय कोसलपुरं च । कोसंबी वाणारसि चंदाणण तह य कायंदी ॥ १ ॥
भद्दिलपुरं सीहपुरं चंपा कंपिल्ल उज्झ रयणपुरं । तिण्णेव गयपुरम्मी मिहिला तह चेअ रायगिहं ॥२॥
मिहिला सोरिअनयरं वाणारसि तहय चेअ कुंडपुरं । उसभाईण जिणाणं जम्मणभूमी जहासंखं ॥३॥
दीक्षास्थानानि,—
[२]उसभो अ विणीआए बारवईए अरिट्ठवरनेमी । अवसेसा तित्थयरा निक्खंता जम्मभूमीसु ॥१॥
उसभो सिद्धत्थवणम्मि वासुपुज्जो विहारगिहगम्मि । धम्मो अ वप्पगाए नीलगुहाए मुणीनामो ॥२॥
आसमपयम्मि पासो वीरजिणिंदो अ नायसंडम्मि । अवसेसा निक्खंता सहसंबवणम्मि उज्जाणे ॥३॥

---

(१) इक्ष्वाकुभूमिरयोध्या श्रावस्ती विनीता कोशलपुरं च । कौशाम्बी वाणारसी चन्द्रानना तथा च काकन्दी ॥१॥
भद्दिलपुरं सिहपुरं चम्पा कम्पिलाऽयोध्या रत्नपुरम् । त्रयाणामपि गजपुरं मिथिला तथा चैव राजगृहम् ॥२॥
मिथिला शौर्यनगरं वाणारसी तथैव कुण्डपुरम् । ऋषभादीनां जिनानां जन्मभूम्यो यथासंख्यम् ॥३॥
(२) ऋषभो विनीतायां द्वारवत्यामरिष्टवरनेमिः । अवशेषास्तीर्थकरा निष्क्रान्ता जन्मभूमिषु ॥१॥
ऋषभः सिद्धार्थवने वासुपूज्यो विहारगृहके । धर्मश्च वप्रगायां नीलगुहायां मुनिनामा ॥२॥
आश्रमपदे पार्श्वो वीरजिनेन्द्रश्च ज्ञातपण्डे । अवशेषा निष्क्रान्ता सहस्राम्रवण उद्याने ॥३॥

ज्ञानस्थानानि;—

उंसभस पुरिमताले वीरस्सोज्जुवालिआनईतीरे । सेसाण केवलाइं जेसुजाणेसु पव्वइआ ॥ १ ॥

मोक्षस्थानानि,—

अट्ठावयचपोज्जिलपावासमेअसेलसिहरेसु । उसम वसुपुज्ज नेमी वीरो सेसा य सिद्धिगया ॥ १ ॥

तदभावे जन्म-दीक्षा-ज्ञान-मोक्षस्थानप्राप्त्यभावे गृहे यतिवसत्यादौ, अरण्ये शत्रुञ्जयादिषु सिद्धिक्षेत्रेषु, तेष्वपि भुवं निरीक्ष्य प्रमृज्य च जन्तुविवर्जिते स्थण्डिले, इदं च जन्मादिस्थानेष्वपि द्रष्टव्यम् ॥ १५० ॥ त्यक्त्वा परित्यज्य चतुर्विधाहारमशन-पान-खाद्य-स्वाद्यरूपम्, नमस्कारः पञ्चपरमेष्ठिस्तवः, तत्परायणस्तदनुस्मरणपरः, आराधना ज्ञानाद्याराधना तामतिचारपरिहारेण विधाय चतुर्णामर्हत् सिद्ध-साधु धर्माणां शरणं तेषु स्वात्मसमर्पणं चतुःशरणं तदाश्रितः, यदाहुः—' अरहते सरणं पव्वज्जामि, सिद्धे सरणं पव्वज्जामि, साहू सरणं पव्वज्जामि, केवलिपन्नत्तं धम्मं सरणं पव्वज्जामि ' त्ति ॥ १५१ ॥ आहारपरिहारप्रतिपत्तिश्च पञ्चविधातिचारपरिहारेण कार्या, तदेवाह—इहलोके इहलोकविषये धन पूजा-कीर्त्यादिष्वाशंसा, परलोके परलोकविषये स्वर्गादावाशंसा, जीवितं प्राणधारणम्, तत्र पूजादिविशेषदर्शनात्, प्रभूतपरिवारावलोकनात्, सर्वलोकश्लाघाश्रवणाच्चैव मन्यते जीवितमेव

---

(१) ऋषभस्य पुरिमताले वीरस्यर्जुवालिकानदीतीरे । शेषाणां केवलानि येषूद्यानेषु प्रव्रजिताः ॥ २ ॥

(२) अष्टापद-चम्पो-ज्जयन्त-पापा-समेतशैलशिखरेषु । ऋषभ वासुपूज्य नेमयो वीरः शेषाश्च सिद्धिगताः ॥ १ ॥

(३) अर्हतः शरणं प्रपद्ये, सिद्धान् शरणं प्रपद्ये, साधून् शरणं प्रपद्ये, केवलिप्रज्ञप्तं धर्मं शरणं प्रपद्य इति ।

श्रेयः, प्रत्याख्यातचतुर्विधाहारस्यापि यत एवंविधा मदुद्देशेनेयं विभूतिर्वर्तत इत्याशंसा, मरणं प्राणत्यागः, तत्र यदा न कश्चित् तं प्रतिपन्नानशनं प्रति सपर्यया आद्रियते, न च कश्चित् श्लाघते, तदा तस्यैवंविधश्चित्तपरिणामो जायते, यदि शीघ्रं म्रिये इत्याशंसा तां त्यक्त्वा, निदानं च ' अस्मात् तपसो दुरनुचराज्जन्मान्तरे चक्रवर्ती, वासुदेवः, महामण्डलेश्वरः, सुभगः, रूपवान् स्याम् ' इत्यादिप्रार्थनां त्यक्त्वा, पुनः किंविशिष्टः ? समाधिसुधयोक्षितः समाधिः परमस्वास्थ्यं स एव सुधाऽमृतं तयोक्षितः सिक्तः ॥ १५२ ॥ परीषहेभ्यो निर्भयो जितपरीषह इत्यर्थः, तत्र मार्गाच्यवन-निर्जरार्थं परिषह्यन्त इति परीषहाः, ते च द्वाविंशतिः, तद्यथा;—क्षुत्पिपासाशीतोष्णदंशमशकनाग्न्यारतिस्त्रीचर्य्यानिषद्याशय्याऽऽक्रोशवधयाञ्चाऽलाभरोगतृणस्पर्शमलसत्कारप्रज्ञाज्ञानदर्शनलक्षणाः, तेषां जयश्चैवम्;—

क्षुदार्तः शक्तिमान् साधुरेषणां नातिलङ्घयेत् । अदीनो विह्वलो विद्वान् यात्रामात्रोद्यतश्चरेत् ॥ १ ॥ पिपासितः पथिस्थोऽपि तत्त्वविद् दैन्यवर्जितः । न शीतमुदकं वाञ्छेदेषयेत् प्रासुकोदकम् ॥ २ ॥ बाध्यमानोऽपि शीतेन त्वग्-वस्त्र-त्राणवर्जितः । वासोऽकल्प्यं नाददीत ज्वलनं ज्वलयेद् न च ॥ ३ ॥ उष्णेन तप्तो नैवोष्णां निन्देच्छायां च न स्मरेत् । वीजनं मज्जनं गात्राभिषेकादि च वर्जयेत् ॥ ४ ॥ दष्टोऽपि दंशैर्मशकैः सर्वाहारप्रियत्ववित् । त्रासं द्वेषं निरासं न कुर्यात् कुर्यादुपेक्षणम् ॥ ५ ॥ नास्ति वासोऽशुभं चैतद् तन्नेच्छेत् साध्वसाधु वा । नाग्न्येन विप्लुतो जानँल्लाभालाभविचित्रताम् ॥ ६ ॥ न कदाप्यरतिं कुर्याद् धर्मारामरतिर्यतिः । गच्छंस्तिष्ठंस्तथासीनः स्वास्थ्यमेव समाश्रयेत् ॥ ७ ॥ दुर्ध्यानसङ्गपङ्का हि मोक्षद्वारार्गलाः स्त्रियः । चिन्तिता धर्मनाशाय चिन्तयेदिति

नैव ता ॥ ८ ॥ ग्रामाद्यनियतस्थायी स्थानाबन्धविवर्जित । चर्यामेकोऽपि कुर्वीत विविधाभिग्रहैर्युतः ॥ ९ ॥ श्मशानादौ निषद्याथा स्त्र्यादिकण्टकवर्जिते । इष्टानिष्टानुपसर्गान् निरीहो निर्भय' सहेत् ॥ १० ॥ शुभाशुभायां शय्यायां विषहेत सुखासुखे । राग-द्वेषौ न कुर्वीत प्रातस्त्याज्येति चिन्तयेत् ११ ॥ आक्रुष्टोऽपि हि नाक्रोशेत् क्षमाश्रमणतां विदन् । प्रत्युताक्रोष्टरि यतिश्चिन्तयेदुपकारिताम् ॥ १२ ॥ सहेत हन्यमानोऽपि प्रतिहन्याद् मुनिर्न तु । जीवानाशात् क्रुधो दौष्ट्यात् क्षमया च गुणार्जनात् ॥ १३ ॥ नायाचित यतीनां यत् परदत्तोपजीविनाम् । याञ्चा दु ख प्रतीच्छेत् तद् नेच्छेत् पुनरगारिताम् ॥ १४ ॥ परात् परार्थं स्वार्थं वा लभेतान्नादि नापि वा । माद्येद् न लाभाद् नालाभाद् निन्देत् स्वमथवा परम् ॥ १५ ॥ उद्विजेत न रोगेभ्यो न च काङ्क्षेच्चिकित्सितम् । अदीनस्तु सहेद् देहाज्ञानानो भेदमात्मन ॥ १६ ॥ अभूताल्पाणुचेलत्वे सस्तृतेषु तृणादिषु । सहेत दु ख तत्स्पर्शभवमिच्छेद् न तान् मृदून् ॥ १७ ॥ ग्रीष्मातपपरिक्लिन्नात् सर्वाङ्गीणाद् मलाद् मुनिः । नोद्विजेत न सिस्नासेद् नोद्वर्तयेत् सहेत तु ॥ १८ ॥ उत्थाने पूजने दाने न भवेदभिलाषुकः । असत्कारे न दीनः स्यात् सत्कारे स्यान्न हर्षवान् ॥ १९ ॥ प्रज्ञां प्रज्ञावता पश्यन्नात्मन्यप्राज्ञता विदन् । न विषीदेद् न वा माद्येत् प्रज्ञोत्कर्षमुपागतः ॥ २० ॥ ज्ञानचारित्रयुक्तोऽस्मि छद्मस्थोऽह तथापि हि । इत्यज्ञान विषहेत ज्ञानस्य क्रमलाभवित् ॥ २१ ॥ जिनास्तदुक्त जीवो वा धर्माधर्मौ भवान्तरम् । परोक्षत्वाद् मृषा नैव चिन्तयेत् प्राप्तदर्शन' ॥ २२ ॥ शारीरमानसानेव स्वपर-प्रेरितान् मुनि । परीषहान् सहेताभीर्वाक्कायमनसां वशी ॥ २३ ॥ ज्ञानावरणीये वेद्ये मोहनीयान्तराययोः । कर्म ष्वदयमाप्तेषु सभवन्ति परीषहाः ॥ २४ ॥ वेद्यात् स्यात् क्षुत् तृषा शीतमुष्ण दंशादयस्तथा । चर्या शय्या वधो

रोगस्तृणस्पर्शमलावपि ॥२५॥ प्रज्ञाज्ञाने तु विज्ञेयौ ज्ञानावरणसंभवौ । अन्तरायादलाभोऽमी च्छद्मस्थस्य चतुर्दश ॥ २६ ॥ क्षुत् पिपासा शीतमुष्णं दंशाश्चर्या वधो मलः । शय्या रोगस्तृणस्पर्शो जिने वेद्यस्य संभवात् ॥ २७ ॥ तथा उपसर्गेभ्यो निर्भीकः, तत्रोप सामीप्येन उपसर्जनादुपसृज्यत एभिरिति वा, उपसृज्यन्त इति वोपसर्गाः, ते च;—

दिव्यमानुषतैरश्चात्मसंवेदनभेदतः । चतुष्प्रकाराः प्रत्येकमपि ते स्युश्चतुर्विधाः ॥ १ ॥ हास्याद् द्वेषाद् विमर्शाच्च तन्मिश्रत्वाच्च देवताः । हासाद् द्वेषाद् विमर्शाद् दुःशीलसङ्गाच्च मानुषाः ॥ २ ॥ तैरश्चास्तु भयक्रोधाहारापत्यादिरक्षणात् । घट्टनस्तम्भनश्लेषप्रपातादात्मवेदनाः ॥ ३ ॥ यद्वा वात-पित्त-कफ-संनिपातोद्भवा अमी । परीषहोपसर्गाणामेषां सोढा भवेदमीः ॥ ४ ॥ जिनेष्वाराधनाकारिषु भक्तिभाक् बहुमानभाक्, 'जिनैरपि हि संसारपारावारपारीणैः पर्यन्ताराधनानुष्ठिता' इति बहुमानात् । तथा च;—

निव्वाणमंतकिरिआ सा चोद्दसमेण पढमनाहस्स । सेसाण मासिएणं वीरजिणंदस्स छट्ठेण ॥ १ ॥

एवंभूतः सन् मरणं समाधिमरणं प्रतिपद्येत, आनन्दश्रावको यथेति संप्रदायगम्यम् । स चायम्;—

अस्त्यपास्तापरपुरं परमाभिर्विभूतिभिः । नाम्ना वाणिजकग्राम इति ख्यातं महापुरम् ॥ १ ॥ तत्र प्रजानां विधिवत् पितेव परिपालकः । जितशत्रुरिति ख्यातो बभूव पृथिवीपतिः ॥ २ ॥ आसीद् गृहपतिस्तस्मिन् नयनानन्ददर्शनः । आनन्दो नाम मेदिन्यामायात इव चन्द्रमाः ॥ ३ ॥ सधर्मचारिणी तस्य रूपलावण्यहारिणी । बभूव शिवनन्देति शशाङ्कस्येव रोहिणी ॥ ४ ॥ निधौ वृद्धौ व्यवहारे चतस्रोऽस्य पृथक् पृथक् । हिरण्यकोटयोऽ-

(१) निर्वाणमन्तक्रिया सा चतुर्दशेन प्रथमनाथस्य । शेषाणां मासिकेन वीरजिनेन्द्रस्य षष्ठेन ॥ १ ॥



भूवंश्चत्वारश्च व्रजा गवाम् ॥ ५ ॥ तत्पुरादुत्तरप्राच्यां कोल्लाकाख्योपप
भवन् ॥ ६ ॥ तदा च पृथिवीं विहरन् जिनः
जितशत्रुर्महीनाथश्शिजगन्नाथमागतम्

भूवश्चत्वारश्च व्रजा गवाम् ॥ ५ ॥ तत्पुरादुत्तरप्राच्यां कोल्लाकाख्योपपत्तने । आनन्दस्यातिबहवो बन्धुसबन्धिनोऽभवन् ॥ ६ ॥ तदा च पृथिवीं विहरन् जिनः सिद्धार्थनन्दन । तत्पुरोपवने दूतिपलाशे समवासरत् ॥ ७ ॥ जितशत्रुर्महीनाथस्त्रिजगन्नाथमागतम् । श्रुत्वा ससम्भ्रमोऽगच्छद् वन्दितु सपरिच्छदः ॥ ८ ॥ आनन्दोऽपि ययौ पद्भ्यां पादमूले जगत्पते । कर्णपीयूषगण्डूषकल्पां शुश्राव देशनाम् ॥ ९ ॥ अथानन्दः प्रणम्यांह्री त्रिजगत्स्वामिनः पुर. । जग्राह द्वादशविध गृहिधर्मं महामनाः ॥ १० ॥ शिवनन्दामन्तरेण स्त्री स तत्याज हेम तु । चतस्रश्चतस्रः स्वर्णकोटीर्निध्यादिगा विना ॥ ११ ॥ प्रत्याचख्यौ व्रजानेष ऋते च चतुरो व्रजान् । क्षेत्रत्याग च विदधे हलपञ्चशतीं विना ॥ १२ ॥ शकटान् वर्जयामास पञ्च पञ्च शतान्यृते । दिग्याञ्याप्ताना च वहतां चानसामसौ ॥ १३ ॥ दिग्यात्रिकाणि चत्वारि स सांवहनिकानि च । विहाय वहनान्यन्यवहनानि व्यवर्जयत् ॥ १४ ॥ अपर गन्धकाषाय्याः स तत्याजाङ्गपुसनम् । दन्तधावनमार्द्रीया मधुयष्टेर्ऋते जहौ ॥ १५ ॥ वर्जयामास च क्षीरामलकादपर फलम् । अभ्यङ्ग च विना तैले सहस्रशतपाकिमे ॥ १६ ॥ अन्यत् सुरभिगन्धाढ्यादुद्वर्तनकमत्यजत् । अष्टभ्य औष्ट्रिकपयस्कुम्भेभ्योऽन्यच्च मज्जनम् ॥ १७ ॥ अपर क्षौमयुगलाद् वासः सर्वमवर्जयत् । श्रीखण्डागुरुघुसृणान्यपास्यान्यद् विलेपनम् ॥ १८ ॥ ऋते च मालतीमाल्यात् पद्माच्च कुसुम जहौ । कर्णिकानाममुद्राभ्यामन्यच्चाशेषभूषणम् ॥ १९ ॥ तुरुष्कागुरुधूपेभ्य ऋते धूपविधिं जहौ । घृतपूरात् खण्डखाद्यादपर भक्ष्यमत्यजत् ॥ २० ॥ काष्ठपेया विना पेया कलमादन्यदोदनम् । माषमुद्गकलायेभ्य ऋते सूपमपाकरोत् ॥ २१ ॥ घृत च वर्जयामास विना शारदगोघृतात् । शाक स्वस्तिकमण्डूकीं पालक्यां च विना जहौ ॥ २२ ॥ ऋते स्नेहाम्ल-

दान्यम्लात् तीमनं चाम्बु खाम्बुनः । पञ्चसुगन्धिताम्बूलाद् मुखवासं च सोऽमुचत् ॥ २३ ॥ आनन्दः शिवनन्दाया उपेत्याथ ससंमदः । अशेषं कथयामास गृहिधर्मं प्रतिश्रुतम् ॥ २४ ॥ शिवाय शिवनन्दापि यानमारुह्य तत्क्षणम् । भगवत्पादमूलेऽगाद् गृहिधर्मार्थिनी ततः ॥ २५ ॥ तत्र प्रणम्य चरणौ जगत्त्रयगुरोः पुरः । प्रपेदे शिवनन्दापि गृहिधर्मं समाहिता ॥ २६ ॥ अभिरुह्य ततो यानं विमानमिव भासुरम् । भगवद्वाक्सुधापानमुदिता सा गृहं ययौ ॥ २७ ॥ अथ प्रणम्य सर्वज्ञमिति पप्रच्छ गौतमः । महात्मायं किमानन्दो यतिधर्मं ग्रहीष्यति ? ॥ २८ ॥ त्रिकालदर्शी भगवान् कथयामासिवानिति । श्रावकव्रतमानन्दः सुचिरं पालयिष्यति ॥ २९ ॥ ततः सौधर्मकल्पेऽसौ विमाने चारुणप्रभे । भविष्यत्यमरवरश्चतुष्पल्योपमस्थितिः ॥ ३० ॥ सततं जागरूकस्य द्वादशव्रतपालने । आनन्दस्य ततोऽतीयुर्हायनानि चतुर्दश ॥ ३१ ॥ निशान्ते चिन्तयामास सोऽन्येद्युरिति शुद्धधीः । आश्रयः श्रीमतामस्मि भूयसामिह पत्तने ॥ ३२ ॥ विक्षिप्तश्चिन्तया तेषां मा स्म स्खलमहं क्वचित् । अङ्गीकृतेऽस्मिन् सर्वज्ञप्रज्ञप्ते धर्मकर्मणि ॥ ३३ ॥ ततो मनसिकृत्यैवं प्रातरुत्थाय कृत्यवित् । कोल्लाके पोषधशालां सुविशालामचीकरत् ॥ ३४ ॥ निमन्त्र्य मित्रसंबन्धिबान्धवादीनसावथ । भोजयित्वाऽखिलं ज्येष्ठे भारं पुत्रेऽध्यरोपयत् ॥ ३५ ॥ ततश्च पुत्रमित्रादीन् सर्वानप्यनुमान्य सः । ययौ पौषधशालायां धर्मकर्मविधित्सया ॥ ३६ ॥ तस्थौ तत्र महात्मासौ कर्मेव कृशयन् वपुः । धर्मं भगवदादिष्टमात्मानामिव पालयन् ॥ ३७ ॥ निःश्रेणिकल्पां स्वर्गापवर्गसौधाधिरोहणे । श्रावकप्रतिमापङ्क्तिमारुरोह क्रमेण सः ॥ ३८ ॥ तपसा तेन तीव्रेण शुष्कासृक्पिशिताङ्गकः । चर्मवेष्टितयष्ट्याभो महासत्त्वो बभूव सः ॥ ३९ ॥ धर्मजागर्यया जाग्रन्निशीथसमयेऽन्यदा । अभग्नस्तपसानन्दश्च-

तस्यैवमचिन्तयत् ॥ ४० ॥ यावदुत्थातुमीशोऽस्मि शब्दायितुमपीश्वरः । धर्माचार्यश्च भगवान् यावद् विहरते मम ॥ ४१ ॥ सलेखनामुभयथापि कृत्वा मारणान्तिकीम् । तावच्चतुर्विधाहारप्रत्याख्यानं करोम्यहम् ॥ ४२ ॥ चिन्तयित्वैवमानन्दस्तथैव विदधेऽपि च । विसंवदति चिन्तायाश्चेष्टितं न महात्मनाम् ॥ ४३ ॥ निराकाङ्क्षस्य कालेऽपि समत्वाध्यवसायिनः । तस्य जज्ञेऽवधिज्ञानं तदावरणशुद्धितः ॥ ४४ ॥ तत्राजगाम भगवान् श्रीवीरो विहरस्तदा । दूतिपलाशे समवासरच्चक्रे च देशनाम् ॥ ४५ ॥ गौतमश्च तदा भिक्षाचर्यया प्राविशत् पुरे । आत्तान्नपानः कोल्लाके यथावानन्दभूषिते ॥ ४६ ॥ मिलितं तत्र भूयांसं लोकं सजातविस्मयम् ॥ ४७ ॥ शिष्यो जगद्गुरोर्वीरस्यानन्दो नाम पुण्यधीः । प्रपन्नानशनोऽस्तीहः निरीहः सर्वथापि हि॥४८॥ गौतमस्तु तदाकर्ण्य पश्याम्यमुमुपासकम् । इति बुद्ध्या जगामाथ तत्पोषधनिकेतनम् ॥४९॥ अकस्माद् रत्नवृष्ट्याभं तमचिन्तितमागतम् । दृष्ट्वा सानन्दमानन्दोऽवन्दतैवमुवाच च ॥५०॥ भगवन्! तपसाऽनेन क्लिष्टमुत्थातुमक्षमः। इहैहानेमियोगेन यथा पादौ स्पृशामि ते॥५१॥ उपेत्य पुरतस्तस्य तस्थुषोऽस्य महामुनेः । अवन्दत त्रिधानन्दश्चरणौ शिरसा स्पृशन् ॥ ५२ ॥ किं भवत्यवधिज्ञानं भगवन् गृहमेधिनः ?। इत्यानन्देन पृष्टः सन्नामेत्यूचे महामुनिः ॥ ५३ ॥ आनन्दोऽथावदत् स्वामिन्! तर्हि मे गृहमेधिनः । अवधिज्ञानमुत्पेदे गुरुपादप्रसादतः ॥ ५४ ॥ आप च योजनशतीं पूर्वाब्धौ दाक्षिणोदधौ । पश्चिमाब्धौ च वीचेऽहमुदीच्यां त्वा हिमाचलात् ॥ ५५ ॥ ऊर्ध्वं सौधर्मकल्पादा पश्यामि भगवन्नहम् । अधो रत्नप्रभायास्तु पृथ्व्या आ लोलुपाद् वनात् ॥ ५६ ॥ मुनिरूचेऽवधिज्ञानं जायते गृहमेधिनः । न त्वियन्मात्रविषयं स्थानमालोचयास्य तत् ॥ ५७ ॥ आनन्दोऽप्यब्रवीदेतदस्ति मे तत्, सतामपि । भावानामभिधाने किं भवेदालो-

चना काचित् ? ॥ ५८ ॥ भवेदालोचना नो चेद् ननु तद् यूयमेव हि। आलोचनामाददीध्वं स्थानस्यामुष्य संप्रति ॥ ५९ ॥ आनन्देनेत्यभिहिते साशङ्को गौतमस्ततः । ययौ श्रीवीरपादान्ते भक्तपानाद्यदर्शयत् ॥ ६० ॥ आनन्दस्यावधिज्ञानमानविप्रतिपत्तिजम् । वादं चावेदयाञ्चक्रे गौतमस्तं जगद्गुरोः ॥ ६१ ॥ आलोचनीयं तदिह किमानन्देन किं मया ? । गौतमेनेति विज्ञप्ते भवतेत्यादिशत् प्रभुः ॥ ६२ ॥ तथैव प्रतिपेदे तद् विदधे च तथैव सः । क्षमयामास चानन्दं क्षमिणं क्षमिणां वरः ॥ ६३ ॥ वर्षाणि विंशतिमिति प्रतिपाल्य धर्म-मानन्द आसदद-थानशनेन मृत्युम् । जज्ञे सुरोऽरुणविमानवरे विदेहेषूत्पद्य यास्यति पदं परमं ततश्च ॥ ६४ ॥ १५३ ॥

॥ इति आनन्दश्राद्धकथानकम् ॥

---

अथ प्रकृतस्य श्रावकस्योत्तरां गतिं श्लोकद्वयेनाह—

प्राप्तः स कल्पेष्विन्द्रत्वमन्यद्वा स्थानमुत्तमम्। मोदतेऽनुत्तरप्राज्यपुण्यसंभारभाक् ततः ॥१५४॥

च्युत्वोत्पद्य मनुष्येषु भुक्त्वा भोगान् सुदुर्लभान् ।
विरक्तो मुक्तिमाप्नोति शुद्धात्मान्तर्भवाष्टकम् ॥ १५५ ॥

व्याख्या—स श्रावको यथोक्तश्रावकधर्मपरिपालनात् कल्पेषु सौधर्मादिषु, सम्यग्दृष्टीनामन्यत्रोत्पादाभावात् इन्द्रत्वं शक्रत्वम्, अन्यद् वा सामानिक-त्रायस्त्रिंश-पारिषद्य-लोकपालादिसंबन्धि स्थानं पदं प्राप्तः, उत्तममित्या-

भियाग्यादिस्थानव्यवच्छेदार्थम्, तत्रोत्पन्नश्च मोदते प्राप्तरत्नविमानमहोद्यानमज्जनवापीविचित्ररत्नवस्त्राभरण सुरसुन्दरीचामरव्यजनव्याजवार्यमाणमौलिमन्दारमाल्यमधुकरोऽहमहमिकासेवासमायातत्रिदशकोटीचाटुकारजयजयध्वनिप्रतिध्वनितनभोङ्गणो मनोमात्रपरिश्रमसमिलितसकलवैषयिकसुखलालितो नानासिद्धायतनयात्रासमुत्पन्नहर्षप्रकर्ष सन् प्रमोदभाग् भवति। अथ हेतुमाह—अनुत्तरा अनन्यसाधारणा प्राज्या बहवो ये पुण्यसभारास्तान् भजते तद्भाक् ॥ १५४ ॥ तत कल्पेभ्यश्च्युत्वा मनुष्यायुर्निबन्धेन च्यवनमनुभूय मनुष्येषु विशिष्टदेशजातिकुलबलैश्वर्यरूपवत्सूत्पद्यौदारिकशरीरत्वेन जन्म लब्ध्वा, भुक्त्वाऽनुभूय भोगान् शब्द-रूप-रस-गन्ध-स्पर्शलक्षणानकृतपुण्यैरतिशयेन दुर्लभान्, यत् किञ्चिद् निमित्तमवाप्य सासारिकेभ्य सुखेभ्यो विरक्तो वैराग्यस्यैव परमप्रकर्षयोगेन सर्वविरतिं प्रतिपद्य तत्रैव जन्मनि क्षपकश्रेण्याक्रमणक्रमेण केवलज्ञानमुत्पाद्य नि शेषकर्मनिर्मूलनेन शुद्धात्मा मुक्तिमाप्नोति। अथ न तत्रैव जन्मनि मुक्तिस्तदा कियत्सु जन्मान्तरेषु मुक्तिः स्यादित्याह—' अन्तर्भवाष्टकम् ' इति भवाष्टकाभ्यन्तर इत्यर्थः ॥ १५५ ॥

प्रकाशत्रयोक्तमर्थमुपसहरति—

**इति सक्षेपत सम्यग्रत्नत्रयमुदीरितम्। सर्वोऽपि यदनासाद्य नासादयति निर्वृतिम्॥१५६॥**

इति प्रकाशत्रयेण रत्नत्रय ज्ञानदर्शनचारित्रात्मक योगत्वेन प्रत्याख्यातमुदीरित कथितम्। कथम् ? सम्यग् जिनागमाविरोधेन। विस्तरस्यासर्वविदा वक्तुमशक्यत्वादाह—सक्षेपत। रत्नत्रय विनाऽन्यतोऽपि कारणाद् निर्वाणप्राप्तिं शङ्कमान प्रत्याह—सर्वोऽपि, आस्तां कश्चिदेकः, यद् रत्नत्रयमनासाद्य काकतालीयेनापि न्यायेन

नाप्नोति निर्वृतिं मोक्षम् । न ह्यज्ञाततत्त्वोऽश्रद्दधानो नवं कर्म निबन्धन् पूर्वोपात्तानि कर्माणि शुक्लध्यानबलेनाक्षपयन् संसारबन्धनाद् मुक्तिमाप्नोतीति सर्वं समञ्जसम् ॥ १५६ ॥

॥ इति परमार्हतश्रीकुमारपालभूपालशुश्रूषिते आचार्यश्रीहेमचन्द्रविरचितेऽध्यात्मोपनिषन्नाम्नि संजातपट्टबन्धे श्रीयोगशास्त्रे स्वोपज्ञं तृतीयप्रकाशविवरणम् ॥ ३ ॥





॥ अर्हम् ॥

## अथ चतुर्थः प्रकाशः ।

धर्मधर्मिणोर्भेदनयमधिकृत्यात्मनो रत्नत्रयं मुक्तिकारणत्वेनोक्तम् । इदानीमभेदनयाश्रयेणात्मनो रत्नत्रयेणैकत्वमाह—

**आत्मैव दर्शनज्ञानचारित्राण्यथवा यतेः । यत्तदात्मक एवैष शरीरमधितिष्ठति ॥ १ ॥**

अथवेति भेदनयापेक्षया प्रकारान्तरस्याभेदनयस्य प्रकाशनार्थम् । आत्मैव न ततो भिन्नानि दर्शनज्ञानचारित्राणि । यतेरिति संबन्धिपदम् । अत्रोपपत्तिमाह—यद् यस्मात् तदात्मक एव दर्शन-ज्ञान-चारित्रात्मक एव

तदभेदमापन्न एवैष आत्मा शरीरमधितिष्ठति। आत्मभिन्नानां हि दर्शनादीनां नात्मनि मुक्तिहेतुत्वं स्यात्, देवदत्तसम्बन्धिनामिव यज्ञदत्ते ॥ १ ॥

अभेदमेव समर्थयितुमाह—

आत्मानमात्मना वेत्ति मोहत्यागाद्य आत्मनि। तदेव तस्य चारित्रं तज्ज्ञानं तच्च दर्शनम् ॥२॥

आत्मानं कर्मतापन्नमात्मन्याधारभूते आत्मना स्वयमेव यो वेत्ति जानीते। एतच्च ज्ञानं न मूढानां भवतीत्याह—मोहत्यागात्। तदेवात्मज्ञानमेव तस्यात्मनश्चारित्रम्, अनाश्रवरूपत्वात्, तज्ज्ञानं तदेव ज्ञानम्, बोधरूपत्वात्, तच्च दर्शनम्, तदेव दर्शनं श्रद्धानरूपत्वात् ॥ २ ॥

आत्मज्ञानमेव स्तौति—

आत्माज्ञानभवं दुःखमात्मज्ञानेन हन्यते। तपसाप्यात्मविज्ञानहीनैश्छेत्तुं न शक्यते ॥ ३ ॥

इह सर्वं दुःखमनात्मविदां भवति, तदात्माज्ञानभवं प्रतिपक्षभूतेनात्मज्ञानेन शाम्यति क्षयमुपयाति तम इव प्रकाशेन। ननु कर्मक्षयहेतुः प्रधानं तप उक्तम्, यदाहुः,—"(१)पुव्विं दुच्चिणाणं दुप्पडिकंताणं कडाणं कम्माणं वेअइत्ता मोक्खो, नत्थि अवेयइत्ता, तवसा वा झोसइत्ता" इत्यादि,—तपसापि आस्तामन्येनानुष्ठानेन तदात्माज्ञानभवं दुःखमात्मविज्ञानहीनैर्न च्छेत्तुं शक्यते, ज्ञानमन्तरेण तपसोऽल्पफलत्वात्, यदाह—

(१) पूर्वं दुश्चरितानां दुष्प्रतिक्रान्तानां कृतानां कर्मणां वेदयित्वा मोक्षो नास्त्यवेदयित्वा तपसा वा क्षपयित्वा।

²जं अन्नाणी कम्मं खवेइ बहुआहिं वासकोडीहिं । तं णाणी तिहिं गुत्तो खवेइ ऊसासमेत्तेण ॥ १ ॥

तत् स्थितमेतत्—बाह्यविषयव्यामोहमपहाय रत्नत्रयसर्वस्वभूते आत्मज्ञाने प्रयतितव्यम्, यदाहुर्बाह्या अपि—"आत्मा रे श्रोतव्यो मन्तव्यो निदिध्यासितव्य" इति । आत्मज्ञानं च नात्मनः कर्मभूतस्य पृथक् किञ्चित्, अपि त्वात्मनश्चिद्रूपस्य स्वसंवेदनमेव मृग्यते, नातोऽन्यदात्मज्ञानं नाम, एवं दर्शनचारित्रे अपि नात्मनो भिन्ने। एवं च चिद्रूपोऽयं ज्ञानाद्याख्याभिरभिधीयते । ननु विषयान्तरव्युदासेन किमित्यात्मज्ञानमेव मृग्यते ? विषयान्तरज्ञानमेव ह्यज्ञानरूपं दुःखं छिन्द्यात् । नैवम्, सर्वविषयेभ्य आत्मन एव प्रधानत्वात्, तस्यैव कर्मनिबन्धनशरीरपरिग्रहे दुःखितत्वात्, कर्मक्षये च सिद्धस्वरूपत्वात् ॥

एतदेवाह—

**अयमात्मैव चिद्रूपः शरीरी कर्मयोगतः। ध्यानाग्निदग्धकर्मा तु सिद्धात्मा स्यान्निरञ्जनः ॥४॥**

अयमिति सकलप्रमाणप्रतिष्ठितश्चिद्रूपश्चेतनस्वभावः, उपयोगलक्षणत्वाज्जीवस्य; तथा स एव शरीरी भवति, कर्मयोगात्, न त्वन्ये विषयाः; तेन न विषयान्तरज्ञानं मृग्यते । आत्मैव च शुक्लध्यानाग्निदग्धकर्माऽशरीरः सन् मुक्तस्वरूपो भवति निरञ्जनो निर्मलः। अतोऽपि कारणादात्मज्ञानं मृग्यते ॥ ४ ॥ तथा—

**अयमात्मैव संसारः कषायेन्द्रियनिर्जितः । तमेव तद्विजेतारं मोक्षमाहुर्मनीषिणः ॥ ५ ॥**

---

(२) यदज्ञानी कर्म क्षपयति बहुकाभिर्वर्षकोटिभिः । तज्ज्ञानी त्रिभिर्गुप्तः क्षपयत्युच्छ्वासमात्रेण ॥ १ ॥

'अयमात्मैव' इति पूर्ववत् । ससारो नारक-तिर्यग्-नरा-ऽमररूपतया । किंविशिष्टः सन् ? कषायेन्द्रिय-निर्जित कषायैरिन्द्रियैश्च पराभूतः । तमेव चात्मान तद्विजेतार कषायेन्द्रियजेतार मोक्षमाहुः । न हि स्वरूप-लाभादन्यो मोक्षः । याऽप्यानन्दरूपता सापि स्वरूपलाभरूपैव । तस्मादात्मज्ञानमुपासनीयम्, दर्शन-चारित्रादेरत एव सिद्धेरिति ॥ ५ ॥

'कषायेन्द्रियनिर्जित' इत्युक्तम्, तत्र कषायान् विवृणोति—

स्यु कषाया क्रोधमानमायालोभा शरीरिणाम् । चतुर्विधास्ते प्रत्येकं भेदैः सज्वलनादिभि ॥६॥

क्रोधमानमायालोभा कषायशब्दवाच्या भवन्ति कष्यन्ते हिंस्यन्ते प्राणिनोऽस्मिन्ननेनेति वा कष ससारः कर्म वा तस्याया लाभा प्राप्तय इति कृत्वा, अथवा, कष ससारमयन्त एभिरिति कृत्वा । ते च शरीरिणां ससा-रिणां न तु मुक्तानाम् । ते च क्रोधादयः प्रत्येक चतुर्विधाश्चतुष्प्रकारा' सज्वलनादिभिर्भेदैः । तत्र क्रोध सज्व-लन , प्रत्याख्यानावरणः, अप्रत्याख्यानावरण', अनन्तानुबन्धी च । एव मानः, माया लोभश्चेति ॥ ६ ॥

सज्वलनादीना लक्षणमाह—

पक्ष सज्वलन प्रत्याख्यानो मासचतुष्टयम् । अप्रत्याख्यानको वर्षं जन्मानन्तानुबन्धक ॥७॥

पक्ष मासार्धमभिव्याप्य सज्वलनः क्रोधो मानो माया लोभश्च भवति । सज्वलन इति तृणाग्निवद्दीपज्ज्वल-नात्मक , परीषहादिसपाते सपदि ज्वलनात्मको वा । प्रत्याख्यानो "भीमो भीमसेन" इति न्यायेन प्रत्याख्या-

नावरणः प्रत्याख्यानं सर्वविरतिमावृणोतीति कृत्वा । स मासचतुष्टयमभिव्याप्य भवति । अप्रत्याख्यानोऽप्रत्याख्यानावरणः, नञोऽल्पार्थत्वादल्पमपि प्रत्याख्यानमावृणोतीति कृत्वा । स वर्षं संवत्सरमभिव्याप्य भवति । अनन्तं भवमनुबध्नातीत्यनन्तानुबन्धकः मिथ्यात्वसहचारितत्वादस्यानन्तभवानुबन्धित्वम्। स जन्म जीवितकालमभिव्याप्य भवति । प्रसन्नचन्द्रादेः क्षणमात्रस्थितीनामपि कषायाणामनन्तानुबन्धित्वम्, अन्यथा नरकयोग्यकर्मोपार्जनाभावात् ॥ ७ ॥

इति कालनियमकृते संज्वलनादिलक्षणेऽपरितुष्यँल्लक्षणान्तरमाह—

**वीतरागयतिश्राद्धसम्यग्दृष्टित्वघातकाः । ते देवत्वमनुष्यत्वतिर्यक्त्वनरकप्रदाः ॥ ८ ॥**

त्वशब्दः प्रत्येकमभिसंबध्यते, तेन वीतरागत्वस्य, यतित्वस्य, श्रावकत्वस्य, सम्यग्दृष्टित्वस्य च क्रमेण घातकाः, तथाहि—संज्वलनोदये यतित्वं भवति न पुनर्वीतरागत्वम्; प्रत्याख्यानावरणोदये श्रावकत्वं भवति न पुनर्यतित्वम्; अप्रत्याख्यानावरणोदये सम्यग्दृष्टित्वं भवति न पुनः श्रावकत्वम्; अनन्तानुबन्ध्युदये सम्यग्दृष्टित्वं न भवति । एवं वीतरागत्वघातकत्वं संज्वलनस्य, यतित्वघातकत्वं प्रत्याख्यानावरणस्य, श्रावकत्वघातकत्वमप्रत्याख्यानावरणस्य, सम्यग्दृष्टित्वघातकत्वमनन्तानुबन्धिनः स्थितं लक्षणं भवति । उत्तरार्धेनामीषां फलदायकत्वमाह—ते संज्वलनादयो देवत्वादिफलदायकाः; तथाहि—संज्वलनाः क्रोधादयो देवगतिम्, प्रत्याख्यानावरणा मनुष्यगतिम्, अप्रत्यानावरणास्तिर्यग्गतिम्, अनन्तानुबन्धिनो नरकगतिं प्रयच्छन्तीति । एतेषां च संज्वलनादिभेदानां चतुर्णां कषायाणां स्पष्टदृष्टान्तकथनेन स्वरूपमुच्यते—जलराजि–रेणुराजि–पृथिवीराजि–पर्वतराजिसदृशाः

क्रोधाः सञ्ज्वलनादिभेदा, तिनिशलता–काष्ठा–ऽस्थि–शैलस्तम्भसदृशाश्चत्वारो मानाः, अवलेखन–गोमूत्रिका–मेषशृङ्ग–वंशिमूलसमाश्चतस्रो मायाः, हरिद्रा–खञ्जन–कर्दम–कृमिरागसदृशाश्चत्वारो लोभाः, यदाह—

जलरेणुपुढविपव्वयराईसरिसो चउव्विहो कोहो। तिनिसलयाकट्ठट्ठियसेलत्थभोवमो माणो ॥ १ ॥

मायावलेहगोमुत्तिमिंढसिंगघणवंसिमूलसमा। लोहो हलिद्दखंजणकद्दमकिमिरागसारिच्छो ॥ २ ॥ इति ॥ ८ ॥

अथ कषायाणां जेतव्यत्वमुपदर्शयितुं दोषानाह—

तत्रोपतापकः क्रोधः क्रोधो वैरस्य कारणम्। दुर्गतेर्वर्तनी क्रोधः क्रोधः शमसुखार्गला ॥९॥

तत्रेति तेषु कषायेषु क्रोधः प्रथमकषाय उपतापयति शरीरमनसी इत्युपतापकः, तथा वैरस्य परस्परोपघातात्मनो विरोधस्य सुभूम–परशुरामयोरिव कारणम्, तथा दुर्गतेर्नरकलक्षणायास्तयोरिव वर्तनी मार्गः क्रोधः, तथा शमसुखस्य प्रशमानन्दस्यात्मनि प्रविशतोऽर्गलेवार्गला, तदुपरोधकारित्वात्। पुनः पुनः क्रोधग्रहणं तस्यातिदौष्ट्यज्ञापनार्थम् ॥ ९ ॥

स्व–परोपतापकारित्वेऽपि क्रोधस्य कृशानुदृष्टान्तेन स्वोपतापकत्वं समर्थयते,—

उत्पद्यमानः प्रथमं दहत्येव स्वमाश्रयम्। क्रोधः कृशानुवत्पश्चादन्यं दहति वा न वा ॥१०॥

---

( १ ) जलरेणुपृथ्वीपर्वतराजिसदृशश्चतुर्विधः क्रोधः। तिनिशलताकाष्ठास्थिकशैलस्तम्भोपमो मानः ॥ १ ॥

मायाऽवलेखगोमूत्रिकामेंढकशृङ्गघनवंशिमूलसमा। लोभो हरिद्राखञ्जनकर्दमकृमिरागसदृशः ॥ २ ॥

तथाविधकारणसंपाते उत्पद्यमानः क्रोधः कृशानुवत् स्वं स्वकीयमाश्रयं, यत्र स उत्पद्यते तं, नियमेन दहति, पश्चात् कृशानुवदेवान्यं दाह्यान्तरं दहति वा न वा, परस्य क्षमाशीलत्वादिना सार्द्र( सान्द्र )द्रुमादिवत् दग्धुमशक्यत्वात् । अत्रान्तरश्लोकाः,—

आर्जितं पूर्वकोट्या यद् वर्षैरष्टभिरूनया । तपस्तत् तत्क्षणादेव दहति क्रोधपावकः ॥ १ ॥ शमरूपं पयः प्राज्यपुण्यसंभारसंचितम् । अमर्षविषसंपर्कादसेव्यं तत्क्षणाद् भवेत् ॥२॥ चारित्रचित्ररचनां विचित्रगुणधारिणीम् । समुत्सर्पन् क्रोधधूमो श्यामलीकुरुतेतराम् ॥ ३ ॥ यो वैराग्यशमीपत्रपुटैः समरसोऽर्जितः । शाकपत्रपुटाभेन क्रोधेनोत्सृज्यते स किम् ? ॥ ४ ॥ प्रवर्धमानः क्रोधोऽयं किमकार्यं करोति न ?। जज्ञे हि द्वारका द्वैपायनक्रोधानले समित् ॥ ५ ॥ क्रुध्यतः कार्यसिद्धिर्या न सा क्रोधनिबन्धना । जन्मान्तरार्जितोर्जस्विकर्मणः खलु तत्फलम् ॥ ६ ॥ स्वस्य लोकद्वयोच्छित्त्यै नाशाय स्वपरार्थयोः । धिगहो ! दधति क्रोधं शरीरेषु शरीरिणः ॥७॥ क्रोधान्धाः पश्य निघ्नन्ति पितरं मातरं गुरुम् । सुहृदं सोदरं दारानात्मानमपि निर्घृणाः ॥ ८ ॥ १० ॥

क्रोधस्य स्वरूपमुक्त्वा तज्जयोपायमुपदिशति—

**क्रोधवह्नेस्तदह्नाय शमनाय शुभात्मभिः । श्रयणीया क्षमैकैव संयमारामसारणिः ॥ ११ ॥**

यस्मात् क्रोध एवंविधस्तस्मात् क्रोधवह्नेरह्नाय झटिति शमनाय शान्तये शुभात्मभिः पुण्यात्मभिः, अह्नायग्रहणं झटिति क्रोधोपशमोपदेशार्थम्, क्रोधो हि प्रथममेवाप्रतिहतः सन् विवर्धमानो दवानल इव पश्चात् निवारयितुमशक्यः, यदाह—

अणथोव वणथोव अग्गिथोव कसायथोव च । न हु भे वीससियव्व थोव पि हु त बहु होई ॥ १ ॥

श्रयणीया आश्रयितव्या एकैव क्षमा । न हि क्षमामन्तरेण क्रोधोपशमोपायो जगत्यस्ति, क्रोधफलसप्रदान तु वैरहेतुत्वेन प्रत्युत क्रोधवृद्धिहेतुः, न तु तत्प्रशमाय इत्येकग्रहणम् । क्षमा विशिनष्टि—सयमारामसारणि सयम एव नवनवाना सयमस्थानाना तरूणामारोपहेतुत्वेन तद्वृद्धिहेतुत्वेन चारामो विचित्रतरुसमूहात्मकस्तस्य सारणिः कुल्या सयमारामवृद्धिहेतुतया पुष्पफलप्राप्तिहेतुतया च । क्षमा हि प्रशान्तवाहितारूपा चित्तपरिणति. सा सारणित्वेन रूपिता नवनवप्रशमपरम्पराप्रवाहरूपत्वात् । अत्रान्तरश्लोकाः—

अपकारिजने कोपो निरोद्धु शक्यते कथम् । शक्यते सत्त्वमाहात्म्याद् यद्वा भावनयाऽनया ॥ १ ॥ अङ्गीकृत्यात्मन. पाप यो मा बाधितुमिच्छति । स्वकर्मनिहि ( ह ) तायास्मै क कुप्येद् बालिशोऽपि सन् ॥ २ ॥ प्रकुप्याम्यपकारिभ्य इति चेदाशयस्तव । तत् किं न कुप्यसि स्वस्य कर्मणे दु खहेतवे ॥ ३ ॥ उपेक्ष्य लोष्टक्षेप्तार लोष्ट दशति मण्डलः । मृगारि शरमप्रेक्ष्य शरक्षेप्तारमृच्छति ॥ ४ ॥ यैः परः प्रेरितः क्रूरैर्मह्य कुप्यति कर्मभिः । तान्युपेक्ष्य परे क्रुध्यन् किं श्रये मपणश्रियम् । श्रूयते श्रीमहावीर. क्षान्त्यै म्लेच्छेषु जग्मिवान् । अयत्नेनागता क्षान्तिं योढु किमिव नेच्छसि ॥ ६ ॥ त्रैलोक्यप्रलयत्राणक्षमाश्चेदाश्रिता. क्षमाम् । कदलीतुल्यसत्त्वस्य क्षमा तव न किं क्षमा ? ॥ ७ ॥ तथा किं नाकृथाः पुण्य यथा कोऽपि न बाधते ? । स्वप्रमादमिदानीं तु शोचन्नङ्गीकुरु क्षमाम् ॥ ८ ॥ क्रोधान्धस्य मुनेश्चण्डचण्डालस्य च नान्तरम् । तस्मात् क्रोध परित्यज्य भजोज्ज्वलधिया पदम् ।

( १ ) ऋणस्तोक वनस्तोकमग्निस्तोक कषायस्तोक च । न खलु भवता विश्वसितव्य स्तोकमपि तद् बहु भवति ॥ १ ॥

योगशास्त्रम्

षैः क्रोधसंयुक्तो निष्क्रोधः कूरगड्डुकः । ऋषिं मुक्त्वा देवताभिर्ववन्दे कूरगड्डुकः ॥ १० ॥ अरुन्तु-स्तुद्यमानो विचिन्तयेत् । चेत् तथ्यमेतत् कः कोपोऽथ मिथ्योन्मत्तभाषितम् ॥ ११ ॥ वधायोपस्थितेऽहसेद् विस्मितमानसः । वधे मत्कर्मसंसाध्ये वृथा नृत्यति बालिशः ॥ १२ ॥ निहन्तुमुद्यते ध्यायेदायुषः एष नः । तदसौ निर्भयः पापात् करोति मृतमारणम् ॥ १३ ॥ सर्वपुरुषार्थचौरे कोपे कोपो न चेत् तव । त्वां स्वल्पापराधेऽपि परे कोपपरायणम् ॥ १४ ॥ सर्वेन्द्रियग्लानिकरं विजेतुं, कोपं प्रसर्पन्तमिवोग्रसर्पम् । धां सुधीर्जाङ्गुलिकीमिवान-वद्यां क्षमां संततमाद्रियेत ॥ १५ ॥ ११ ॥

मानकषायस्य स्वरूपमाह—

**विनयश्रुतशीलानां त्रिवर्गस्य च घातकः। विवेकलोचनं लुम्पन् मानोऽन्धङ्करणो नृणाम् ॥१२॥**

विनयश्च गुर्वादिषूपचारलक्षणः, श्रुतं च विद्या, शीलं च सुस्वभावता, तेषां घातकः । जात्यादिमदाध्मातो हि पिशाचकिप्रायो न गुर्वादीनां विनीतो भवति । अविनीतश्च गुरूनशुश्रूषमाणो न विद्यां प्रतिलभते । अत एव सर्वजनावज्ञाकारी स्वस्य दुःस्वभावतां प्रकटयति । न केवलं विनयादीनामेव घातको मानो यावत् त्रिवर्गस्य धर्मार्थकामलक्षणस्य । मदावलिप्तस्य हि नेन्द्रियजयः, तदधीनश्च धर्मः कथं स्यात् ?। अर्थोऽपि राजादिसेवापरा-यत्तवृत्तिर्मानस्तब्धस्य कथं स्यात् ?। कामस्तु मार्दवमूल एव, तत् कथं मानस्तब्धे स्थाणाविव भवेत् ?। किञ्च अनन्धोऽन्धः क्रियतेऽनेनेत्यन्धङ्करणो मानः। केषां ? नृणाम् । किं कुर्वन् ? लुम्पन् । किं तत् ? विवेकलोचनं विवेकः कृत्याकृत्यविचारणं स एव लोचनम्, "एकं हि चक्षुरमलं सहजो विवेकः" इति वचनात् । मानवतो हि

द्धमेवामकुर्वाणस्य विवेकलोचनलोपनमवश्यमावि, तस्मिंश्च सत्यन्धङ्करणत्व मानस्य सुवचमेव ॥ १२ ॥

इदानीं मानस्य भेदानुपदर्शयंस्तत्फलमाह—

जातिलाभकुलैश्वर्यबलरूपतप श्रुते । कुर्वन् मद पुनस्तानि हीनानि लभते जन ॥ १३ ॥

जातिश्च लाभश्चेत्यादिद्वन्द्व, तैर्मद मदलिप्तचित्तता कुर्वन्, तान्येव जात्यादीनि जन्मान्तरे हीनानि लभते । अत्रान्तरश्लोका —

जातिभेदान् नैकविधानुत्तमाधममध्यमान् । दृष्ट्वा को नाम कुर्वीत जातु जातिमद सुधीः ॥१॥ उत्तमा जातिमाप्नोति हीनामाप्नोति कर्मत । तत्राशाश्वतिकीं जाति को नामासाद्य माद्यतु ॥२॥ अन्तरायक्षयादेव लाभो भवति नान्यथा । ततश्च वस्तुतत्त्वज्ञो न लाभमदमुद्वहेत् ॥ ३ ॥ परप्रसादशक्त्यादिभवे लाभे महत्यपि । न लाभमदमृच्छन्ति महात्मानः कथञ्चन ॥ ४ ॥ अकुलीनानपि प्रेक्ष्य प्रज्ञाश्रीशीलशालिनः । न कर्तव्यः कुलमदो महाकुलभवैरपि ॥ ५ ॥ किं कुलेन कुशीलस्य सुशीलस्यापि तेन किम् । एव विदन् कुलमद विदध्याद् न विचक्षण ॥ ६ ॥ श्रुत्वा त्रिभुवनैश्वर्यसंपद वज्रधारिण । पुरग्रामधनादीनामैश्वर्ये कीदृशो मदः ॥ ७ ॥ गुणोज्ज्वलादपि भ्रश्येद् दोषवन्तमपि श्रयेत् । कुशीलस्त्रीवदैश्वर्य न मदाय विवेकिनाम् ॥ ८ ॥ महाबलोऽपि रोगाद्यैरबल क्रियते क्षणात् । इत्यनित्ये बले पुंसा युक्तो बलमदो न हि ॥ ९ ॥ बलवन्तोऽपि जरसि मृत्यौ कर्मफलान्तरे । अबलाश्चेद्, ततो हन्त ! तेषा बलमदो मुधा ॥ १० ॥ सप्तधातुमये देहे चयापचयधर्मिणि । जरारुजाभिभाव्यस्य को रूपस्य मद वहेत् ॥ ११ ॥ सनत्कुमारस्य रूप तत्क्षय च

विचारयन् । को वा सकर्णःस्वप्नेऽपि कुर्याद् रूपमदं किल ॥ १२ ॥ नाभेयस्य तपोनिष्ठां श्रुत्वा वीरजिनस्य च । को नाम स्वल्पतपसि स्वकीये मदमाश्रयेत् ॥ १३ ॥ येनैव तपसा त्रुट्येत् तरसा कर्मसंचयः । तेनैव मदादिग्धेन वर्धते कर्मसंचयः ॥ १४ ॥ स्वबुद्ध्या रचितान्यन्यैः शास्त्राण्याघ्राय लीलया । सर्वज्ञोऽस्मीति मदवान् स्वकीयाङ्गानि खादति ॥ १५ ॥ श्रीमद्गणधरेन्द्राणां श्रुत्वा निर्माणधारणे । कः श्रयेत श्रुतमदं सकर्णहृदयो जनः ॥१६॥

केचित्तु ऐश्वर्यतपसोः स्थाने वाल्लभ्यबुद्धिमदौ पठन्ति, उपदिशन्ति च,—

द्रमकैरिव च दुष्कर्मकमुपकारनिमित्तकं परजनस्य । कृत्वा यद् वाल्लभ्यकमवाप्यते को मदस्तेन ॥ १ ॥

गर्वं परप्रसादात्मकेन वाल्लभ्यकेन यः कुर्यात् । तद्वाल्लभ्यकविगमे शोकसमुदयः परामृशति ॥ २ ॥

तथा—

ग्रहणोद्ग्राहणनवकृतिविचारणार्थावधारणाद्येषु । बुद्ध्यङ्गविधिविकल्पेष्वनन्तपर्यायवृद्धेषु ॥ ३ ॥

पूर्वपुरुषसिंहानां विज्ञानातिशयसागरमनन्तम् । श्रुत्वा सांप्रतपुरुषाः कथं स्वबुद्ध्या मदं यान्ति ? ॥४॥१३॥

मानस्य स्वरूपं भेदांश्च प्रतिपाद्य, इदानीं समानप्रतिपक्षभूतं मार्दवं मानजयोपायमुपदिशति,—

**उत्सर्पयन् दोषशाखा गुणमूलान्यधो नयन् । उन्मूलनीयो मानद्रुस्तन्मार्दवसरित्प्लवैः ॥१४॥**

मान एव द्रुर्द्रुम उन्नतिविशेषधारित्वेन । मानद्रुमयोः साधर्म्यमाह–उत्सर्पयन्नूर्ध्वं नयन् दोषा एव प्रसरणशीलत्वेन शाखा दोषशाखास्ताः, गुणा एव मूलानि गुणमूलानि तान्यधो नयन् न्यक्कुर्वन् । कैरुन्मूलनीयः ? मार्दवसरित्प्लवैर्मार्दवमेव सततवाहितया सरित् तस्याः प्लवैः प्रसरैः । मदद्रुमो हि यथा यथा वर्धते तथा तथा

गुणमूलानि तिरोदधाति, दोषशाखाश्च विस्तारयति । तदयं कुठारादिभिरुन्मूलयितुमशक्यो मार्दवभावनासरित्प्रवाहेण समूलमुन्मूलनीय इत्यर्थ' । अत्रान्तरश्लोकाः —

मार्दव नाम मृदुता तच्चौद्धत्यनिषेधनम् । मानस्य पुनरौद्धत्य स्वरूपमनुपाधिकम् ॥ १ ॥ अन्त स्पृशेद् यत्र यत्रौद्धत्य जात्यादिगोचरम् । तत्र तस्य प्रतीकारहेतोर्मार्दवमाश्रयेत् ॥ २ ॥ सर्वत्र मार्दव कुर्यात् पूज्येषु तु विशेषत । येन पापाद् विमुच्येत पूज्यपूजाव्यतिक्रमात् ॥ ३ ॥ मानाद् बाहुबलिर्बद्धो लताभिरिव पाप्मभिः । मार्दवात् तत्क्षण मुक्त सद्य सजातकेवल ॥ ४ ॥ चक्रवर्ती त्यक्तसङ्गो वैरिणामपि वेश्मसु । भिक्षार्थं यात्यहो ! मानच्छेदायामृदु मार्दवम् ॥ ५ ॥ चक्रवर्त्यपि तत्कालदीक्षितो रङ्कसाधवे । नमस्यति त्यक्तमानश्चिर च वरिवस्यति ॥६॥ एव च माननिषय परिमृश्य दोष, ज्ञात्वा च मार्दवनिषेवणज गुणौघम् । मान विहाय यतिधर्मविशेषरूप, सद्यः समाश्रयत मार्दवमेकताना' ॥ ७ ॥ १४ ॥

इदानीं मायाकषायस्वरूपमाह—

**असूनृतस्य जननी परशु शीलशाखिन । जन्मभूमिरविद्याना माया दुर्गतिकारणम् ॥१५॥**

असूनृतस्यानृतस्य जननीव जननी, मायामन्तरेण प्रायेणासूनृतस्याभावात्, ' माया ' इति वक्ष्यमाण सबध्यते, माया वञ्चनात्मकः परिणाम', तथा परशु कुठारः शील सुस्वभावता तदेव शाखी तस्य परशुरिव परशुः, छेदकत्वात्, तथा जन्मभूमिरुत्पत्तिस्थानम्, कासाम् ? अविद्याना मिथ्याज्ञानानाम् । सा च दुर्गतेः कारणमिति प्रधानफलनिर्देश ॥ १५ ॥

परवञ्चनार्थं प्रयुक्ताया मायायाः परमार्थतः स्ववञ्चनमेव फलमित्याह—

कौटिल्यपटवः पापा मायया बकवृत्तयः । भुवनं वञ्चयमाना वञ्चयन्ते स्वमेव हि ॥२१६॥

मायया तृतीयकषायेण भुवनं जगद् वञ्चयमानाः प्रतारयन्तः स्वमेवात्मानमेव वञ्चयन्ते । के ? पापाः पापकर्मकारिणः । पापकर्मनिह्नवार्थंक्षेव बकवृत्तयः, यथा बको मत्स्यादिवञ्चनार्थं मन्दं मन्दं विचेष्टते तथा तेऽपि जगद्वञ्चनार्थं तथा चेष्टन्ते यथा बकसदृशा भवन्ति । ननु मायया जगद्वञ्चनम्, तस्याश्च निह्नवः, इति कुत इयन्तं भारं ते वोढुं समर्थाः ? इत्याह—कौटिल्यपटवः कौटिल्यपाटवरहितो हि न कदाचित् परं वञ्चयते, न वा कदाचिद् निह्नुत इति, कौटिल्यपाटवे तु द्वयं भवति परवञ्चनं वञ्चनाच्छादनं चेति । अत्रान्तरश्लोकाः—

कूटषाड्गुण्ययोगेन च्छलाद् विश्वस्तघातनात् । अर्थलोभाच्च राजानो वञ्चयन्तेऽखिलं जनम् ॥ १ ॥ तिलकैर्मुद्रया मन्त्रैः क्षामतादर्शनेन च । अन्तःशून्या बहिःसारा वञ्चयन्ते द्विजा जनम् ॥२॥ कूटाः कूटतुलामानाशुक्रियाकारियोगतः । वञ्चयन्ते जनं मुग्धं मायाभाजो वणिग्जनाः ॥ ३ ॥ जटामौण्ड्यशिखाभस्मवल्कनाग्न्यादिधारणैः । मुग्धं श्राद्धं गर्धयन्ते पाखण्डा हृदि नास्तिकाः ॥ ४ ॥ अरक्ताभिर्भावहावलीलागतिविलोकनैः । कामिनो रञ्जयन्तीभिर्वेश्याभिर्वञ्च्यते जगत् ॥ ५ ॥ प्रतार्य कूटैः शपथैः कृत्वा कूटकपर्दिकाम् । धनवन्तः प्रतार्यन्ते दुरोदरपरायणैः ॥ ६ ॥ दम्पती पितरः पुत्राः सोदर्याः सुहृदो निजाः । ईशा भृत्यास्तथान्येऽपि माययाऽन्योन्यवञ्चकाः ॥ ७ ॥ अर्थलुब्धा गतघृणा बन्दकारा मलिम्लुचाः । अहर्निशं जागरूकाश्छलयन्ति प्रमादिनम् ॥८॥ कारवश्चान्त्यजाश्चैव स्वकर्मफलजीविनः । माययाऽलीकशपथैः कुर्वते साधुवञ्चनम् ॥ ९ ॥ व्यन्तरादिकुयोनिस्था दृष्ट्वा प्रायः

प्रमादिन । क्रूराश्छलैर्बहुविधैर्बाधन्ते मानवान् पशून् ॥ १० ॥ मत्स्यादयो जलचराश्छलात् स्वापत्यभक्षका । बध्यन्ते धीवरैस्तेऽपि मायया ऽऽनायपाशिभि ॥ ११ ॥ नानोपायैर्मृगयुभिर्वञ्चनप्रवणैर्जडा । निबध्यन्ते विनाश्यन्ते प्राणिन स्थलचारिणः । १२ ॥ नभश्चरा भूरिभेदा वगका लावकादय । बध्यन्ते मायया ऽत्युग्रैः स्वल्पकग्रासगृध्नुभि ॥ १३ ॥ तदेव सर्वलोकेऽपि परवञ्चकतापरा । स्वस्य धर्मं सद्गतिं च नाशयन्तः स्ववञ्चका ॥ १४ ॥ तथा,—

तिर्यग्जाते पर बीजमपवर्गपुरार्गला । विश्वासद्रुमदावाग्निर्माया हेया मनीषिभि ॥ १५ ॥ मल्लिनाथः पूर्वभवे कृत्वा माया तनीयसीम् । मायाशल्यमनुत्खाय स्त्रीत्व प्राप जगत्पतिः ॥ १६ ॥ १६ ॥

इदानीं मायाजयाय तत्प्रतिपक्षभूतमार्जवमुपदिशन्नाह—

## तदार्जवमहौषध्या जगदानन्दहेतुना । जयेज्जगद्द्रोहकरीं मायां विषधरीमिव ॥ १७ ॥

यतो माया एवविधा तत् तस्माद् माया विषधरीमिव जयेत् । मायाविषधर्यो साधर्म्यमाह—जगद्द्रोहकरीं जगतो जङ्गमलोकस्य द्रोहोऽपकारस्त करोतीत्येवशीला जगद्द्रोहकरी ताम् । केन जयेत् ? आर्जवमहौषध्या आर्जवमकौटिल्य तदेव महानुभावा ओषधिर्महौषधिस्तया । उभयोः साधर्म्यमाह—जगदानन्दहेतुना जगतो जगमलोकस्य यथायथ य आनन्द कायारोग्यप्रभव प्रीतिविशेषो वञ्चकत्वपरिहारेण कषायजयाद् मोक्षरूपश्च तस्य हेतुना कारणेन । अत्रान्तरश्लोका —

आर्जव सरल पन्था मुक्तिपुर्याः प्रकीर्तितः । आचारविस्तरः शेषो बाह्या अपि यदूचिरे ॥ १ ॥ सर्वं जिह्म

मृत्युपदमार्जवं ब्रह्मणः पदम् । एतावाञ्ज्ञानविषयः प्रलापः किं करिष्यति ? ॥२॥ इति ॥ भवेयुरार्जवजुषो लोकेऽपि प्रीतिकारणम् । कुटिलादुद्विजन्ते हि जन्तवः पन्नगादिव ॥ ३ ॥ अजिह्मचित्तवृत्तीनां भववासस्पृशामपि । अकृत्रिमं मुक्तिसुखं स्वसंवेद्यं महात्मनाम् ॥ ४ ॥ कौटिल्यशङ्कुना क्लिष्टमनसां वञ्चकात्मनाम् । परव्यापादनिष्ठानां स्वप्नेऽपि स्यात् कुतः सुखम् ॥ ५ ॥ समग्रविद्यावैदुष्येऽधिगतासु कलासु च । धन्यानामुपजायेत बालकानामिवार्जवम् ॥६॥ अज्ञानामपि बालानामार्जवं प्रीतिहेतवे । किं पुनः सर्वशास्त्रार्थपरिनिष्ठितचेतसाम् ? ॥ ७ ॥ स्वाभाविकी हि ऋजुता कृत्रिमा कुटिलात्मता । ततः स्वाभाविकं धर्मं हित्वा कः कृत्रिमं श्रयेत् ? ॥ ८ ॥ छलपैशुन्यवक्रोक्ति-वञ्चनाप्रवणे जने । धन्याः केचिद् निर्विकाराः सुवर्णप्रतिमा इव ॥ ९ ॥ श्रुताम्भोधिपारप्राप्तोऽपि गौतमो गणभृद्वरः । अहो ! शैक्ष इवाश्रौषीदार्जवाद् भगवद्गिरः ॥ १० ॥ अशेषमपि दुष्कर्म ऋज्वालोचनया क्षिपेत् । कुटिलालोचनां कुर्वन्नल्पीयोऽपि विवर्धयेत् ॥ ११ ॥ काये वचसि चित्ते च समन्तात् कुटिलात्मनाम् । न मोक्षः किन्तु मोक्षः स्यात् सर्वत्राकुटिलात्मनाम् ॥ १२ ॥ इति निगदितमुग्रं कर्म कौटिल्यभाजा—मृजुपरिणतिभाजां चानवद्यं चरित्रम् । तदुभयमपि बुद्ध्वा संस्पृशन् मुक्तिकामो, निरुपममृजुभावं संश्रयेच्छुद्धबुद्धिः ॥ १३ ॥ १७ ॥

इदानीं लोभकषायस्वरूपमाह—

**आकरः सर्वदोषाणां गुणग्रसनराक्षसः । कन्दो व्यसनवल्लीनां लोभः सर्वार्थबाधकः ॥ १८ ॥**

आकरः खानिः सर्वदोषाणां प्राणातिपातादीनां 'लोहादीनामिव' इति गम्यते; गुणानां ज्ञानादीनां प्राणिनामिव यद् ग्रसनं कवलनं तत्र राक्षस इव राक्षसः; तथा कन्दो मूलाधोऽवयवः, कासां व्यसनवल्लीनां

व्यसनानि दु.खानि तान्येव वन्नयस्तासाम्, लोभश्चतुर्थकषाय:, तस्य स्वरूपसंग्रहमाह–सर्वार्थबाधकः सर्वेषामर्थ्यन्त इत्यर्थो धर्मार्थकाममोक्षलक्षणास्तेषां बाधकः प्रतिकूलः। लोभस्य सर्वदोषाकरत्वम्, गुणघातकत्वम्, व्यसनहेतुत्व, सर्वपुरुषार्थघातकत्व च प्रसिद्धमेव॥ १८ ॥

लोभस्य दुर्जयत्व श्लोकत्रयेणाह—

धनहीन शतमेक सहस्र शतवानपि । सहस्राधिपतिर्लक्ष कोटिं लक्षेश्वरोऽपि च ॥ १९ ॥
कोटीश्वरो नरेन्द्रत्व नरेन्द्रश्चक्रवर्तिताम् । चक्रवर्ती च देवत्व देवोऽपीन्द्रत्वमिच्छति ॥२०॥
इन्द्रत्वेऽपि हि सप्राप्ते यदिच्छा न निवर्तते । मूले लघीयांस्तल्लोभ सराव इव वर्धते ॥२१॥

स्पष्टम् अत्रान्तरश्लोका —

हिंसेव सर्वपापाना मिथ्यात्वमिव कर्मणाम् । राजयक्ष्मेव रोगाणां लोभ' सर्वागसा गुरु ॥ १ ॥ अहो ! लोभस्य साम्राज्यमेकच्छत्र महीतले । तरवोऽपि निधिं प्राप्य पादैः प्रच्छादयन्ति यत् ॥ २ ॥ अपि द्रविणलोभेन ते द्वित्रिचतुरिन्द्रिया' । स्वकीयान्यधितिष्ठन्ति प्राग्निधानानि मूर्च्छया ॥ ३ ॥ भुजङ्गगृहगोधाखुमुख्याः पञ्चेन्द्रिया अपि । धनलोभेन लीयन्ते निधानस्थानभूमिषु ॥ ४ ॥ पिशाचमुद्गलप्रेतभूतयक्षादयो धनम् । स्वकीय परकीय वाऽप्यधितिष्ठन्ति लोभत. ॥ ५ ॥ भूषणोद्यानवाप्यादौ मूर्च्छितास्त्रिदशा अपि । च्युत्वा तत्रैव जायन्ते पृथ्वीकायादियोनिषु ॥ ६ ॥ प्राप्योपशान्तमोहत्व क्रोधादिविजये सति । लोभांशमात्रदोषेण पतन्ति यतयोऽपि

हि ॥ ७ ॥ एकामिषाभिलाषेण सारमेया इव द्रुतम्। सोदर्या अपि युध्यन्ते धनलेशजिघृक्षया ॥ ८ ॥ लोभाद् ग्रामाद्रिसीमानमुद्दिश्य गतसौहृदाः। ग्राम्या नियुक्ता राजानो वैरायन्ते परस्परम् ॥ ९ ॥ हासशोकद्वेषहर्षानसतोऽप्यात्मनि स्फुटम्। स्वामिनोऽग्रे लोभवन्तो नाटयन्ति नटा इव ॥ १० ॥ आरभ्यते पूरयितुं लोभगर्तो यथा यथा। तथा तथा महच्चित्रं मुहुरेष विवर्धते ॥ ११ ॥ अपि नामैष पूर्येत पयोभिः पयसां पतिः। न तु त्रैलोक्यराज्येऽपि प्राप्ते लोभः प्रपूर्यते ॥ १२ ॥ अनन्ता भोजनाच्छादविषयद्रव्यसंचयाः। भुक्तास्तथापि लोभस्य नांशोऽपि परिपूर्यते ॥ १३ ॥ लोभस्त्यक्तो यदि तदा तपोभिरफलैरलम्। लोभस्त्यक्तो न चेत् तर्हि तपोभिरफलैरलम् ॥१४॥ मृदित्वा शास्त्रसर्वस्वं मयैतदवधारितम्। लोभस्यैकस्य हानाय प्रयतेत महामतिः ॥१५॥१९॥२०॥२१॥

लोभस्वरूपं निरूप्य तज्जयोपायमुपदिशति—

**लोभसागरमुद्वेलमतिवेलं महामतिः। संतोषसेतुबन्धेन प्रसरन्तं निवारयेत् ॥ २२ ॥**

लोभ एवाप्राप्तपारत्वेन सागरस्तम्, उद्वेलमुद्गतवेलं तत्तदुत्कलिकावत्त्वेन विवृद्धोच्छ्रायम्, अतिवेलं भृशम्, एतच्च 'निवारयेत्' इति क्रियाया विशेषणम्। 'प्रसरन्तम्' इति लोभसागरस्य विशेषणम्। महामतिर्मुनिः। निवारणकारणमुपदिशति—संतोषसेतुबन्धेन संतोषो लोभप्रतिपक्षभूतो मनोधर्मः स एव सेतुबन्धो जलस्खलनार्थं पालीबन्धः, तेन प्रतिपक्षभूतेन संतोषेण लोभकषायं निरुन्ध्यादिति भावः। अत्रान्तरश्लोकाः—

यथा नृणां चक्रवर्ती सुराणां पाकशासनः। तथा गुणानां सर्वेषां संतोषः प्रवरो गुणः ॥ १ ॥ संतोषयुक्तस्य यतेरसंतुष्टस्य चक्रिणः। तुलया संमितो मन्ये प्रकर्षः सुखदुःखयोः ॥ २ ॥ स्वाधीनं राज्यमुत्सृज्य संतोषामृ-

ततृष्णया । निस्सङ्गत्वं प्रपद्यन्ते तत्त्वयाचक्रवर्तिनः ॥ ३ ॥ निवृत्तायां धनेच्छायां पार्श्वस्था एव संपदः । अङ्गुल्या पिहिते कर्णे शब्दाद्वैतं विजृम्भते ॥ ४ ॥ संतोषसिद्धौ संसिद्धाः प्रतिवस्तु विरक्तय । अक्ष्णोः पिधाने पिहितं ननु विश्वं चराचरम् ॥ ५ ॥ किमिन्द्रियाणां दमनैः किं कायपरिपीडनैः ? । ननु संतोषमात्रेण मुक्तिश्रीमुखमीक्ष्यते ॥६॥ जीवन्तोऽपि विमुक्तास्ते ये मुक्तिसुखशालिनः । किं वा विमुक्तेः शिरसि शृङ्गं किमपि वर्त्तते ? ॥ ७ ॥ किं रागद्वेषसंकीर्णं किं वा विषयसंभवम् । येन संतोषजं सौख्यं हीयेत शिवसौख्यतः ? ॥ ८ ॥ परप्रत्यायनासारैः किं वा शास्त्रसुभाषितैः ? । मीलिताक्षा विमृशन्तु संतोषास्वादजं सुखम् ॥ ९ ॥ चेत् कारणानुकारीणि कार्याणि प्रतिपद्यसे । संतोषानन्दजन्मा तन्मोक्षानन्दः प्रतीयताम् ॥ १० ॥ ननु तीव्रं तपःकर्म कर्मनिर्मूलनं जगुः । सत्यं तदपि संतोषरहितं विफलं विदुः ॥ ११ ॥ कृषिसेवापाशुपाल्यवाणिज्यैः किं सुखार्थिनाम् । ननु संतोषपानात् किं नात्मा निर्वृतिमाप्यते ? ॥ १२ ॥ यत् संतोषवतां सौख्यं तृणसंस्तरशायिनाम् । क्व तत् संतोषवन्ध्यानां तूलिकाशायिनामपि ॥ १३ ॥ असंतुष्टास्तृणायन्ते धनिनोऽपीशिनां पुरः । ईशिनोऽपि तृणायन्ते संतुष्टानां पुरःस्थिताः ॥ १४ ॥ आयासमानं नश्वरं चक्रिशक्रादिसंपदः । अनायासं च नित्यं च सुखं संतोषसंभवम् ॥ १५ ॥ इति प्रत्यादेष्टुं निखिलमपि लोभस्य ललितं, मयोक्तः संतोषः परमसुखसाम्राज्यसुभगः । कुरुध्वं लोभाग्निप्रसरपरितापं शमयितुं, तदस्मिन् संतोषामृतरसमये वेश्मनि रतिम् ॥ १६ ॥' २२ ॥

एवं च—इत्यनेन वक्ष्यमाणसंग्रहश्लोकस्यावसरमाह—

क्षान्त्या क्रोधो मृदुत्वेन मानो मायार्जवेन च । लोभश्चानीहया जेयाः कषाया इति संग्रहः ॥२३॥

पूर्वोक्तस्यार्थस्य संग्रहणात् संग्रहः ॥ २३ ॥

यद्यपि तुल्ययोगितया कषायेन्द्रियजयौ मोक्षरूपत्वेनोक्तौ, तथाप्यनयोः कषायजयः प्रधानम्, तद्धेतुस्तु इन्द्रियजयः, तदेवाह—

**विनेन्द्रियजयं नैव कषायाञ्जेतुमीश्वरः। हन्यते हैमनं जाड्यं न विना ज्वलितानलम् ॥२४॥**

समकालसंभविनोरपि कषायजयेन्द्रियजययोः प्रदीपप्रकाशयोरिवास्ति कार्यकारणभावः; अत उक्तम्–इन्द्रियजयं विना न कषायजयः। हन्यते इत्यादिना दृष्टान्तः। हैमनजाड्यसदृशाः कषायाः, ज्वलितानलप्रायश्चेन्द्रियजयः। हेमन्ते भवं हैमनम्, "हेमन्ताद् वा तलुक् च" ॥ ६ । ३ । ९१ ॥ इत्यनेनाणि तलोपे वृद्धौ च सिद्धम् ॥२४॥

इन्द्रियजयः कषायजयहेतुत्वेनोक्तः, अजितानां त्विन्द्रियाणां न कषायजयहेतुत्वं प्रत्युतापायहेतुत्वमेवेत्याह—

**अदान्तैरिन्द्रियहयैश्चलैरपथगामिभिः। आकृष्य नरकारण्ये जन्तुः सपदि नीयते ॥ २५ ॥**

इन्द्रियाण्येव हया अश्वा इन्द्रियहयास्तैश्चलैरेकत्रानवस्थायिभिः प्रकृत्या, अदान्तैरजितैः सद्भिरपथगामिभिरुन्मार्गचारिभिराकृष्य बलात्कारेण कृष्ट्वा जन्तुः प्राणी, नरक एवारण्यं विविधभीतिहेतुत्वाद् नरकारण्यं तस्मिन् सपदि तत्क्षणाद् नीयते। यथाऽदान्तो हयोऽपथगामित्वेन स्वमारोहकमरण्ये नयति तथैवाजितैरिन्द्रियैर्जन्तुर्विविधापायबहुले नरके नीयत इत्यर्थः ॥ २५ ॥

कथमजितानीन्द्रियाणि नरकं नयन्तीत्याह—

इन्द्रियैर्विजितो जन्तु कषायैरभिभूयते। वीरै कृष्टेष्टक पूर्वं वप्र' कै कैर्न खण्ड्यते ?॥२६॥

इन्द्रियाणि जेतुमशक्तोऽत एव तैर्विजित , यान् जेतुमिन्द्रियजय उपदिश्यते तैरेव प्रत्युत कषायैरभिभूयते । कषायाभिभूतश्च नरक यातीति सुप्रसिद्धमेव । ननु यदीन्द्रियजयेऽशक्तो जन्तुः, तर्हीन्द्रियजनितैव बाधास्तु, कोऽवसर कषायबाधाया' ? इत्याशङ्कामपनेतु दृष्टान्तमाह—वीरैर्विक्रान्तै कृष्टा इष्टका यस्मात् स कृष्टेष्टक वप्र प्राकारः पूर्वं प्रथमम्, पश्चात् कै' कैर्वीरैरपि एकैकेष्टकाशकलकर्षणेन न खण्ड्यते न खण्डशो नीयते ?। अयमर्थः— यथा वीरपुरुषपातितच्छिद्र प्राकारः कर्मकरप्रायाणामपि गम्यो भवति तथैव वप्रप्राय प्राणी वीरप्रायैरिन्द्रियैर्भग्नप्राय इतरपुरुषप्रायै कषायैर्बाध्यते, इन्द्रियानुसारित्वात् कषायाणाम् ॥ २६ ॥

न केवलमनिर्जितैरिन्द्रियैः कषायाभिभूतो जन्तुर्नरके नीयते, यावदिहलोकेऽपि अनिर्जितानीन्द्रियाण्यपायकारणान्येवेत्याह—

कुलघाताय पाताय बन्धाय च वधाय च। अनिर्जितानि जायन्ते करणानि शरीरिणाम् ॥२७॥

शरीरिणां जन्तूनां करणानीन्द्रियाणि अनिर्जितानि अदान्तानि जायन्ते । कस्मै ? कुलघाताय कुलघातो वंशोच्छेद , पाताय पातो राज्यादिभ्रंश', बन्धाय बन्धो नियमनम्, वधाय वधः प्राणनिग्रह' । तत्र कुलघातायेन्द्रियाणि रावणस्येव । तस्य निर्जितेन्द्रियस्य परदारान् रिरंसमानस्य रामलक्ष्मणाभ्यां कुलक्षयः कृत इत्युक्तपूर्वम् । पातायेन्द्रियाणि सोदासस्येव । स हि राज्य पालयन् मांसप्रियतया नानाविधैर्मांसैरात्मान प्रीणयन्नेकदा

सूपकारैः संस्कृते मांसे बिडालादिभिर्भक्षिते सति तस्मिन् दिने धार्मिकैः श्रावकजनै राजानं प्रसाद्यामारिपटहे दापिते जीववधाभावादन्यमांसाप्राप्तौ सुलभस्य कस्यचिड्डिम्भस्य मांसं परिवेष्य राजा परितोषितः। स चैकान्ते सूपकारान् शपथदानपूर्वकं पप्रच्छ। तैश्च यथास्थिते कथिते मानुषमांसगृद्ध्या सकलनगरे डिम्भमानुषग्रहणाय स्वपुरुषान् नियुक्तवान्। एतच्च ज्ञात्वा पौरजानपदैर्मन्त्रिभिश्च भीतभीतैरेकमतीभूय मद्यपानप्रमत्तो बद्ध्वाऽरण्ये विमुक्तः। स च राज्यात्, कुलात् परिवाराच्च पतितोऽरण्ये श्वापद इव दुःखमनुबभूव। बन्धायेन्द्रियाणि चण्डप्रद्योतस्येव। वधाय मृत्यवे इन्द्रियाणि रावणस्येवेत्युक्तपूर्वम्। अत्रान्तरश्लोकाः—

इन्द्रियैः स्वार्थविवशैः कस्को नैव विडम्ब्यते। अपि विज्ञातशास्त्रार्थाश्चेष्टन्ते बालका इव ॥ १ ॥ किमतोऽपि घृणास्थानमिन्द्रियाणां प्रकाश्यते। यद् बन्धौ बाहुबलिनि भरतोऽप्यस्त्रमाक्षिपत् ॥ २ ॥ जयो यद् बाहुबलिनि भरते च पराजयः। जिताजितानां तत् सर्वमिन्द्रियाणां विजृम्भितम् ॥ ३ ॥ यच्छस्त्राशस्त्रि युध्यन्ते चरमेऽपि भवे स्थिताः। दुरन्तानामिन्द्रियाणां महिम्नानेन लज्जिताः ॥ ४ ॥ दण्ड्यन्तां चण्डचरितैरिन्द्रियैः पशवो जनाः। शान्तमोहाः पूर्वविदो दण्ड्यन्ते यत् तदद्भुतम् ॥ ५ ॥ जिता हृषीकैरत्यन्तं देवदानवमानवाः। जुगुप्सितानि कर्माणि ही! तन्वन्ति तपस्विनः ॥ ६ ॥ अखाद्यान्यपि खादन्त्यपेयान्यपि पिबन्ति च। अगम्यान्यपि गच्छन्ति हृषीकवशगा नराः ॥ ७ ॥ वेश्यानां नीचकर्माणि दास्यान्यपि च कुर्वते। कुलशीलोज्झितास्त्यक्तकरुणैः करणैर्हताः ॥ ८ ॥ परद्रव्ये परस्त्रीषु मोहान्धमनसां नृणाम्। या प्रवृत्तिः सेन्द्रियाणामतन्त्राणां विजृम्भितम् ॥ ९ ॥ पाणिपादेन्द्रियच्छेदमरणानि शरीरिभिः। प्राप्यन्ते यद्वशात् तेभ्यः करणेभ्यो नमो नमः ॥ १० ॥ विनयं ग्राह-

यन्त्यन्यान् ये स्वय करणैर्जिताः । पिधाय पाणिना वक्त्र तान् हसन्ति विवेकिनः ॥ ११ ॥ आ विरिञ्चादा च कीटाद् ये केचिदिह जन्तवः । विमुच्यैक वीतराग ते सर्वेऽपीन्द्रियैर्जिता ॥ १२ ॥ २७ ॥

एव सामान्येनेन्द्रियदोषानभिधाय स्पर्शनादीन्द्रियाणा श्लोकपञ्चकेन दोषानाह—

वशास्पर्शसुखास्वादप्रसारितकर करी । आलानबन्धनक्लेशमासादयति तत्क्षणात् ॥ २८ ॥
पयस्यगाधे विचरन् गिलन् गलगतामिषम् । मैनिकस्य करे दीनो मीन पतति निश्चितम्
निपतन् मत्तमातङ्गकपोले गन्धलोलुप । कर्णतालतलाघाताद् मृत्युमाप्नोति षट्पदः ॥३०॥
कनकच्छेदसकाशशिखालोकविमोहित । रभसेन पतन् दीपे शलभो लभते मृतिम् ॥३१॥
हरिणो हारिणीं गीतिमाकर्णयितुमुद्धुर । आकर्णाकृष्टचापस्य याति व्याधस्य वेध्यताम्

स्पष्टाः नवर वशा हस्तिनी, गलो रज्जुनद्धो लोहकण्टकः, मीनान् हन्तीति मैनिको धीवर, कर्णताल एव तलश्चपेटस्तेनाघात', गीतिं गीतम् ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥

उपसहरति—

एव विषय एकैक पञ्चत्वाय निषेवित । कथ हि युगपत् पञ्च पञ्चत्वाय भवन्ति न ? ॥३३॥

विषय इन्द्रियस्य गोचरः, इन्द्रियप्रकरणेऽपि यद् विषयस्य दोषदर्शनम्, तद् विषयद्वारेणैवेन्द्रियाणा दोष-

जनकत्वमिति दर्शनार्थम्। एकैको विषयो गजादीनां पञ्चत्वाय मरणाय। यस्तु पुमान् सर्वेषु विषयेष्वासक्तस्तं प्रत्याह—कथं हि युगपत् पञ्चापि विषयाः सेविताः पञ्चत्वाय न भवन्ति ? अपि तु भवन्त्येवेति। यदाह—

पञ्चसु सक्ताः पञ्च विनष्टा यत्रागृहीतपरमार्थाः। एकः पञ्चसु सक्तः प्रयाति भस्मान्ततां मूढः ॥ १ ॥ ३३ ॥

इन्द्रियदोषानभिधाय तज्जयोपदेशमाह—

**तदिन्द्रियजयं कुर्याद् मनःशुद्ध्या महामतिः। यां विना यमनियमैः कायक्लेशो वृथा नृणाम् ।३४।**

यस्मादेवंविधानर्थसार्थसमर्थकानीन्द्रियाणि तत् तस्मादिन्द्रियाणां भावेन्द्रियाणां जयं कुर्यात्। द्विविधानि हीन्द्रियाणि, द्रव्येन्द्रियाणि भावेन्द्रियाणि च। तत्र द्रव्येन्द्रियाणि स्पर्शनेन्द्रियाद्याकारपरिणतानि पुद्गलद्रव्याणि, भावेन्द्रियाणि स्पर्शादिष्वभिलाषोपायरूपाणि तेषां जयो लौल्यपरिहारेणावस्थानम्। अत्रान्तरश्लोकाः—

अनिर्जितेन्द्रियग्रामो यतो दुखैः प्रबाध्यते। तस्माज्जयेदिन्द्रियाणि सर्वदुःखविमुक्तये ॥१॥ न चेन्द्रियाणां विजयः सर्वथैवाप्रवर्त्तनम्। रागद्वेषविमुक्त्या तु प्रवृत्तिरपि तज्जयः ॥ २ ॥ अशक्यो विषयोऽस्प्रष्टुमिन्द्रियैः स्वसमीपगः। रागद्वेषौ पुनस्तत्र मतिमान् परिवर्जयेत् ॥३॥ हताहतानीन्द्रियाणि सदा संयमयोगिनाम्। अहतानि हितार्थेषु हतान्य-हितवस्तुषु ॥ ४ ॥ जितान्यक्षाणि मोक्षाय संसारायाजितानि तु। तदेतदन्तरं ज्ञात्वा यद् युक्तं तत् समाचर ॥ ५ ॥ स्पर्शे मृदौ च तूल्यादेरुपलादेश्च कर्कशे। भव रत्यरती हित्वा जेता स्पर्शनमिन्द्रियम् ॥ ६ ॥ रसे स्वादौ च भक्ष्यादेरितरस्मिन्नथापि वा। प्रीत्यप्रीती विमुच्योच्चैर्जिह्वेन्द्रियजयी भव ॥ ७ ॥ घ्राणदेशमनुप्राप्ते शुभे गन्धेऽपरत्र वा। ज्ञात्वा वस्तुपरीणामं घ्राणेन्द्रियजयं कुरु ॥ ८ ॥ मनोज्ञं रूपमालोक्य यदिवा तद्विलक्षणम्। त्यजन् हर्ष

जुगुप्सां च जय त्व चक्षुरिन्द्रियम् ॥ ९ ॥ स्वरे श्रव्ये च वीणादेः खरोष्ट्रादेश्च दुःश्रवे । रतिं जुगुप्सां च जयन् श्रोत्रेन्द्रियजयी भव ॥ १० ॥ कोऽपि नास्तीह विषयो मनोज्ञ इतरोऽपि वा । य इन्द्रियैर्नोपभुक्तस्तत्स्वास्थ्य किं न सेव्यते ? ॥ ११ ॥ शुभा अप्यशुभायन्ते शुभाय तेऽशुभा अपि। विषयास्तत् क रज्येत विरज्येत क चेन्द्रियैः ॥ १२ ॥ स एव रुच्यो द्वेष्यो वा विषयो यदि हेतुत । शुभाशुभत्व भावानां तन्न तत्त्वेन जातुचित् ॥ १३ ॥ एव विमृश्य विषयेषु शुभाशुभत्व-मौपाधिक तदविमुक्तिविरक्तचेता । इन्तेन्द्रियार्थमधिकृत्य जहीहि राग, द्वेष तथेन्द्रियजयाय कृताभिलाष ॥ १४ ॥

अथैव दुर्जयेन्द्रियजय प्रति कोऽसाधारण उपाय इत्याह—मनःशुद्ध्या मनसो निर्मलत्वेन सन्त्यन्यान्यपि यमनियमवृद्धसेवाशास्त्राभ्यासादीनीन्द्रियजयकारणानि किन्तु साधकतम मन शुद्धिरेव । अन्यानि तु नैकान्तिका-न्यात्यन्तिकानि वा, अविशुद्धे हि मनसि यमनियमादीनि सन्त्यपि नेन्द्रियजयनिबन्धनानि, एतदेवाह—यां विना यमेत्यादि । यां मनःशुद्धिं विना यमा मूलगुणा नियमा उत्तरगुणास्तैरुपलक्षणत्वाद् वृद्धसेवादिभिश्च यः कायक्लेश स नृणां पुरुषाणां वृथा । सा च मन शुद्धिः केषाञ्चित् स्वभावत एव भवति मरुदेव्यादीनाम् । केषाञ्चित् तु यमनियमाद्युपायबलाद् नियन्त्रिते मनसि भवति ॥ ३४ ॥

अनियन्त्रित मनो यत्करोति तदाह—

**मनःक्षपाचरो भ्राम्यन्नपशङ्क निरङ्कुश । प्रपातयति ससाराऽऽवर्त्तगर्त्ते जगत्त्रयीम् ॥३५॥**

इह द्विविधं मनः–द्रव्यमनो भावमनश्च । तत्र द्रव्यमनो विशिष्टाकारपरिणताः पुद्गलाः । भावमनस्तु तद्द्रव्योपाधिसंकल्पात्मक आत्मपरीणामः । मन एव संकल्परूपं क्षपाचरो राक्षसः, अविषयेऽपि प्रवृत्तिशीलत्वात्, भ्राम्यन् तत्र तत्र विषये स्थैर्यमनवलम्बमानः । कथं भ्राम्यन् ? अपशङ्कं निर्भयं यथा भवति । तदपि कुतः ? निर्गतस्तत्त्वभावनादिर्नि(नि)वारकत्वात् अङ्कुशो यस्माद् स तथा । प्रपातयति प्रकर्षेण पातयति संसार एवावर्त्तप्रधानोगर्त्तस्तत्र । जगत्त्रयीमिति । न स कश्चिद् जन्तुर्जगत्त्रयेऽप्यस्ति, यो निरङ्कुशेन मनसा संसारावर्त्त-गर्त्ते न पात्यते । जगत्त्रयगतानां जन्तूनां संसारावर्त्तगर्त्ते पातनाद् जगत्त्रयीं पातयतीति उपचारादुक्तम् ॥ ३५ ॥

पुनरनियन्त्रिते मनसि दोषमाह—

**तप्यमानांस्तपो मुक्तौ गन्तुकामान् शरीरिणः । वात्येव तरलं चेतः क्षिपत्यन्यत्र कुत्रचित् ॥३६॥**

तप्यमानान् कुर्वाणान्, किं तत् ? तपः । तथा मुक्तौ मोक्षे गन्तुकामान् गन्तुमध्यवसितान् शरीरिणो जन्तून् तरलमेकत्रानवस्थायि चेतो भावमनः कर्तृ क्षिपत्यन्यत्र कुत्रचित् मोक्षादन्यत्र नरकादौ । किंवद् ? वात्येव, यथा-न्यत्र गन्तुकामान् मनुष्यादीन् वातसमूहो विवक्षिताद् देशात् अन्यत्र नयति, एवं तरलं चेतोऽपि ॥ ३६ ॥

पुनरनियन्त्रितस्य मनसो दोषमाह—

**अनिरुद्धमनस्कः सन् योगश्रद्धां दधाति यः । पद्भ्यां जिगमिषुर्ग्रामं स पङ्गुरिव हस्यते ॥३७॥**

न निरुद्धं चापल्यात् व्यावर्तितं मनो येन सोऽनिरुद्धमनस्कः सन् योगश्रद्धां अहं योगीत्यभिमानं यो दधाति

धारयति स इष्यते विवेकिभि । क इव कथम्भूत । पङ्गुरिव पद्भ्यां पादाभ्यां ग्रामान्तरं जिगमिषु । पादप्रचारूपो हि मनोरोधस्तदभावे कथं पङ्गुग्रामान्तरजिगमिषातुल्या योगश्रद्धेति ॥ ३७ ॥

न केवलमनिरुद्धमनस्कस्य योगश्रद्धा विफला यावदशुभकर्माणि बहुतराण्यस्य प्रादुष्पन्तीत्युत्तरार्द्धेन प्रतिपादयितुं पूर्वार्द्धेन काक्का मनोरोधमुपदिशति—

मनोरोधे निरुध्यन्ते कर्माण्यपि समन्ततः । अनिरुद्धमनस्कस्य प्रसरन्ति हि तान्यपि ॥३८॥

मनसो रोधो विषयेभ्यो निवारणं तस्मिन् सति निरुध्यन्ते प्रतिबाध्यन्ते आश्रवनिरोधात् कर्माण्यपि ज्ञानावरणादीन्यतिप्रबलानि समन्ततः सामस्त्येन । मनोरोधायत्तत्वात् कर्मरोधस्य । प्रकृते योजयति—अनिरुद्धमनस्कस्य पुंसस्तान्यपि कर्माणि प्रसरन्ति विवर्द्धन्ते मन प्रसराधीनत्वात् कर्मप्रसरस्य ॥ ३८ ॥

तदेतन्निश्चित्य मनोनियन्त्रणाय यत्न कार्य इत्येतदाह—

मन कपिरयं विश्वपरिभ्रमणलम्पट । नियन्त्रणीयो यत्नेन मुक्तिमिच्छुभिरात्मन ॥ ३९ ॥

मनो भावमन एव कपिर्मर्कट । अयमिति सर्वेषां स्वसंवेदनसिद्ध । कपित्वरूपेण साधर्म्यमाह—विश्वस्मिन् जगति परिभ्रमणमन्यान्यविषयग्रहरूपमनवस्थानं तत्र लम्पटो लोलुपस्तदेवंविधो मन कपिर्नियन्त्रणीयो निरोद्धव्य चापलं परित्याज्योचिते विषये परिस्थाप्यः । यत्नेन तत्त्वाभ्यासरूपेण । किं कुर्वद्भि ? मुक्तिं मोक्षमिच्छन्तीत्येवंशीलास्तैरात्मन स्वस्य । मनश्चापलनिरोधस्य साध्या हि मुक्तिरिति ॥ ३९ ॥

इदानीमिन्द्रियजयहेतुं मनःशुद्धिं प्रस्तौति—

**दीपिका खल्वनिर्वाणा निर्वाणपथदर्शिनी। एकैव मनसः शुद्धिः समाम्नाता मनीषिभिः॥४०॥**

एकैव सा यमनियमादिरहितापि मनःशुद्धिः दीपिकेव दीपिका, किंविशिष्टा? अनिर्वाणा अविध्याता, निर्वाणस्य मोक्षस्य पन्था निर्वाणपथस्तं दर्शयतीत्येवंशीला निर्वाणपथदर्शिनी, मुमुक्षोः इति शेषः, समाम्नाता पारम्पर्येण कथिता, कैः? मनीषिभिः पूर्वाचार्यैः, यदाह—

ज्ञाने ध्याने दाने माने मौने सदोद्यतो भवतु। यदि निर्मलं न चित्तं तदा हुतं भस्मनि समग्रम् ॥१॥४०॥

मनःशुद्धेरन्वयव्यतिरेकाभ्यां गुणान्तरदर्शनेनोपदेशमाह—

**सत्यां हि मनसः शुद्धौ सन्त्यसन्तोऽपि यद्गुणाः। सन्तोऽप्यसत्यां नो सन्ति सैव कार्या बुधैस्ततः**

यद् यस्मात् सत्यां विद्यमानायां मनसः शुद्धावसन्तोऽप्यविद्यमाना अपि सन्ति भवन्ति तत्फलसद्भावाद् गुणाः क्षान्त्यादयः। सन्तो विद्यमाना अपि गुणा असत्यां मनसः शुद्धौ नो सन्ति न सन्त्येव, तत्फलाभावात्। ततः कारणादन्वयव्यतिरेकाभ्यां निश्चितफला सैव मनःशुद्धिः कार्या बुधैर्विवेकिभिः ॥ ४१ ॥

ये तु "आस्तामेषा मनःशुद्धिः, तपोबलेनैव मुक्तिं वयं साधयिष्यामः," इति प्रतिपद्यन्ते तान् प्रत्याह—

**मनःशुद्धिमबिभ्राणा ये तपस्यन्ति मुक्तये। त्यक्त्वा नावं भुजाभ्यां ते तितीर्षन्ति महार्णवम्॥४२॥**

मनःशुद्धिमबिभ्राणा अधारयन्तो ये मुक्तये मुक्तिनिमित्तं तपस्यन्ति तपःक्लेशमनुभवन्ति, ते दुर्ग्रहग्रहिला:

संनिहितां नाव परित्यज्य महार्णवं भुजाभ्यां तरीतुमिच्छन्ति। यथा नावमन्तरेण महार्णवो भुजाभ्यां दुस्तरः तथा मनःशुद्धिमन्तरेण तपसा मुक्तिर्दुष्प्रापा ॥ ४२ ॥

ये तु ध्यानं तपःसहितं मुक्तिदं इति वदन्तो मनःशुद्धिमुपेक्षन्ते, ध्यानमेव तु कर्मक्षयकारणं इति प्रतिपन्नास्तान् प्रत्याह—

तपस्विनो मनःशुद्धिविनाभूतस्य सर्वथा। ध्यानं खलु मुधा चक्षुर्विकलस्येव दर्पणः ॥ ४३ ॥

तपस्विनोऽपि ध्यानं, खलु निश्चयेन, मुधा। किंविशिष्टस्य ? सर्वथा मनःशुद्धिविनाभूतस्य लेशेनापि मनःशुद्धिरहितस्य। यद्यपि मनःशुद्धिरहितानामपि तपोध्यानबलेन नवमग्रैवेयकं यावद् गतिः श्रूयते, तथापि तत् प्रायिकम्, न च तत् फलत्वेन विवक्षितम्, मोक्षस्यैव फलरूपत्वात्। अतो ध्यानं मुधा। यथा दर्पणो रूपनिरूपणकारणमपि चक्षुर्विकलस्य मुधा, तथा ध्यानमपीति भावः ॥ ४३ ॥

उपसंहरति—

तदवश्यं मनःशुद्धिः कर्तव्या सिद्धिमिच्छता। तपःश्रुतयमप्रायैः किमन्यैः कायदण्डनैः ॥४४॥

तत् तस्मात् अवश्यं निश्चयेन मनःशुद्धिः कर्त्तव्या सिद्धिं मोक्षमभिलषता। आवश्यकत्वे हेतुमाह—किमन्यैः कायदण्डनैः ? कायो दण्ड्यत एभिरिति कायदण्डनास्तैः, कैः ? तपःश्रुतयमप्रायैः—तपोऽनशनादि, श्रुतमागमः, यमा महाव्रतानि। प्रायग्रहणाद् नियमादयो गृह्यन्ते। अत्रेदमनुयोक्तव्यम्—केयं मनसः शुद्धिः ? लेश्याविशुद्ध्या

मनसो निर्मलत्वम् । काः पुनर्लेश्याः ? कृष्णनीलकापोततेजःपद्मशुक्लवर्णद्रव्यसाचिव्यादात्मनस्तदनुरूपः परिणामः, यदाह—

कृष्णादिद्रव्यसाचिव्यात् परिणामो य आत्मनः । स्फटिकस्येव तत्रायं लेश्याशब्दः प्रवर्त्तते ॥ १ ॥

तत्र कृष्णवर्णपुद्गलसन्निधाने य आत्मनोऽशुद्धतमः परिणामः सा कृष्णलेश्या । नीलद्रव्यसन्निधाने य आत्मनोऽशुद्धतरः परिणामः सा नीललेश्या । कापोतवर्णद्रव्यसान्निध्यात्तदनुरूपोऽशुद्ध आत्मपरिणामः कापोतलेश्या । तेजोवर्णद्रव्यसान्निध्यात्तदनुरूपः शुद्ध आत्मपरिणामस्तेजोलेश्या । पद्मवर्णद्रव्यसान्निध्यात्तदनुरूपः शुद्धतर आत्मपरिणामः पद्मलेश्या । शुक्लवर्णद्रव्यसान्निध्याच्छुद्धतम आत्मपरिणामः शुक्ललेश्या । कृष्णादिद्रव्याणि च सकलकर्मप्रकृतिनिःस्यन्दभूतानि, तदुपाधिजन्मानो भावलेश्याः कर्मस्थितिहेतवः । यदाह—

ताः कृष्णनीलकापोततैजसी(स)पद्मशुक्लनामानः । श्लेष इव वर्णबन्धस्य कर्मबन्धस्थितिविधात्र्यः ॥ २ ॥

एताश्चाऽशुद्धतमाऽशुद्धतराऽशुद्धशुद्धशुद्धतरशुद्धतमात्मपरिणामरूपा जम्बूफलखादकदृष्टान्ताद् ग्रामघातकदृष्टान्ताच्चावसेयाः । आगमगाथाश्चात्र—

[१]जह जम्बुतरुवरेगो सुपक्कफलभारियनमियसालग्गो । दिट्ठो छहि पुरिसेहिं ते चिंती जंबु भक्खेमो ॥ १ ॥

किह पुण ते बिंतेगो आरुहमाणाण जीअसंदेहो । ता छिंदिऊण मूले पाडेउं ताहि भक्खेमो ॥ २ ॥

---

(१) यथा जम्बूतरुवर एकः सुपक्कफलभरितनमितसालाग्रः । दृष्टः षड्भिः पुरुषैस्ते ब्रुवन्ति जम्बूनि भक्षयामः ॥ १ ॥
कथं पुनस्ते ब्रुवन्ति एक ( आह ) आरोहतां जीवसन्देहः । ततश्छित्त्वा मूलतः पातयित्वा तानि भक्षयामः ॥ २ ॥

'बीयाह एद्दहेण किं छिन्नेण तरुण उ अम्हति । साहा महल्ल छिंदह तइओ बेई पसाहाओ ॥ ३ ॥
गुच्छे चउत्थओ पुण पचमओ बेइ गेण्हह फलाइ । छट्ठो बेई पडिया एइच्चिय खायह य घेत्तु ॥ ४ ॥
दिट्ठतस्सोवणयो जो बेइ तरु तु छिंद मूलाओ । सो वट्टइ किण्हाए साल महल्लाओ नीलाए ॥ ५ ॥
हवइ पसाहा काऊ गुच्छे तेऊ फलाणि पम्हाए । पडियाणि सुक्कलेसा अहवा अन्न उआहरण ॥ ६ ॥
चोरा गामवहत्थ विणिग्गया एगु बेइ घाएह । ज पेच्छह त सव्व दुपय चउप्पय वावि ॥ ७ ॥
बीओ माणुस पुरिसे य तइओ साउहे चउत्थो अ । पचमओ जुज्झते छट्ठो उण तत्थिम भणइ ॥ ८ ॥
एक ता हरह धण बीअ मारेह मा कुणह एय । केवल हरह धण ता उवसहारो इमो तेसिं ॥ ९ ॥

---

(१) द्वितीय आह एतावता किं छिन्नेन तरुणा तु अस्माकमिति २ । शाखा महतीश्छिन्त तृतीयो ब्रवीति प्रशाखा ॥३॥
गुच्छाश्चतुर्थक पुन पचमो ब्रवीति गृह्णीत फलानि । षष्ठस्तु ब्रवीति पतितान्येवैतानि खादत च गृहीत्वा ॥ ४ ॥
दृष्टान्तस्योपनयो योऽब्रवीत् तरु तु छिन्त मूलत । स वर्त्तते कृष्णाया शाखा महतीर्नीलायाम् ॥ ५ ॥
भवति प्रशाखा ( छिन्तेति ) कापोती गुच्छास्तैजसी फलानि पद्मा । पतितानि शुक्ललेश्या अथवाऽन्यदुदाहरणम् ॥६॥
चौरा ग्रामवधार्थ विनिर्गता एको ब्रवीति घातयत । य प्रेक्षध्व त सर्वं द्विपद चतुष्पद वापि ॥ ७ ॥
द्वितीयो मनुष्यान्, पुरुषान् तृतीय सायुधाश्चतुर्थस्तु । पचमस्तु युध्यत षष्ठ पुनस्तत्रेद भणति ॥ ८ ॥
एक तावद् हरत धन द्वितीय मारयथ मा कार्ष्टैतत् । केवल हरत धन तदुपसहारस्त्वय तेषाम् ॥ ९ ॥

सव्वे मारेहत्ति वट्टइ सो किण्हलेसपरिणामो । एवं कमेण सेसा जा चरमो सुक्कलेसाए ॥ १० ॥

एतास्वाद्यास्तिस्रोऽप्रशस्ताः, उत्तराः प्रशस्ताः एताश्च मनुष्याणां परिवर्त्तमाना भवन्ति । ततश्च यदा उत्तरास्तिस्र आत्मनो भवन्ति तदा विशुद्धिरित्याख्यायते । यदा चैता मरणकाले भवन्ति, तदा तदनुरूपासु गतिष्वात्मा प्रयाति । तत्र कृष्णनीलकापोतलेश्यापरिणतो नरकेषु तिर्यक्षु चोत्पद्यते । पीतपद्मशुक्ललेश्यापरिणतस्तु मनुष्येषु देवेषु चोत्पद्यते । यदाहुर्भगवन्तः—“ जल्लेसे मरइ तल्लेसेसु उववज्जइ । ” लौकिकास्त्वाहुः—“ अन्ते च भरतश्रेष्ठ ! या मतिः सा गतिर्नृणामिति ” । अत्र यदि मतिश्चेतनामात्रं तदा या मतिः सा गतिरिति किं केन संगतम् ? । अथाशुद्धतमादिपरिणामयुक्ता मतिर्व्याख्यायते तर्हीदमेव पारमर्षं वचनं साध्वित्यलं प्रसङ्गेन । एवं तावदशुद्धलेश्यात्यागेन विशुद्धलेश्यापरिग्रहेण च मनसः शुद्धिरुक्ता ॥ ४४ ॥

इदानीं मनःशुद्धिनिमित्तमीषत्करमुपायान्तरमुपदिशति—

**मनःशुद्ध्यै च कर्तव्यो रागद्वेषविनिर्जयः । कालुष्यं येन हित्वात्मा स्वस्वरूपेऽवतिष्ठते ॥ ४५ ॥**

मनसो भावमनस आत्मरूपस्य शुद्धिहेतवे कर्तव्यो रागद्वेषयोः प्रीत्यप्रीत्यात्मकयोर्विनिर्जयो निरोधः, उदितयोर्विफलीकरणेन अनुदितयोश्चानुत्पादनेन । तथा सति किं स्यात् ? कालुष्यमशुद्धत्वं हित्वा आत्मा भावमनोरूपः स्वकीये स्वरूपे परमशुद्धिलक्षणेऽवतिष्ठते स्थिरो भवति ॥ ४५ ॥

---

(१) सर्वान् मारयतेति वर्त्तते स कृष्णलेश्यापरिणामः । एवं क्रमेण शेषा यावच्चरमः शुक्ललेश्यायाम् ॥ १० ॥

(२) यल्लेश्यो म्रियते तासु लेश्यासु उत्पद्यते ।

अथ राग द्वेषयोर्दुर्जयत्वं श्लोकत्रयेणाह—

**आत्मायत्तमपि स्वान्त कुर्वतामत्र योगिनाम् । रागादिभि समाक्रम्य परायत्त विधीयते ॥४६॥**

आत्मायत्तमपि आत्मनि निमग्नमपि स्वान्त मनः कुर्वतां योगिनामत्र जगति रागादिभी रागद्वेषाभ्यां तदविनाभूतेन च मोहेन समाक्रम्य रक्त द्विष्ट मूढ च कृत्वा परायत्तमात्मनोऽनधीन क्रियते ॥ ४६ ॥ तथा—

**रक्ष्यमाणमपि स्वान्त समादाय मनाग् मिषम्। पिशाचा इव रागाद्याश्छलयन्ति मुहुर्मुहुः ॥४७॥**

रक्ष्यमाणमपि गोप्यमानमपि यमनियमादिभिर्मन्त्रतन्त्रप्रायैः स्वान्त मानमन समादाय पुरस्कृत्य मनाग् मिष स्वल्प छल प्रमादरूप, छलयन्ति—आत्मवश कुर्वन्ति । क एते ? रागादयः । क इव ? पिशाचा इव । मुहुर्मुहुरिति यदा यदा प्रमादलेशोऽपि भवति तदा तदा छलयन्ति । यथा हि पिशाचा मन्त्रादिकृतरक्षमपि साधक छल प्राप्यात्मवश कुर्वन्ति, तथा रागादयोऽपि योगिमन इति ॥ ४७ ॥ तथा—

**रागादितिमिरध्वस्तज्ञानेन मनसा जनः । अन्धेनान्ध इवाकृष्ट पात्यते नरकावटे॥ ४८ ॥**

रागादय एव सम्यग्दर्शनविघातहेतुत्वात् तिमिरमक्ष्णोर्विप्लव तेन ध्वस्त ज्ञान तत्त्वालोको यस्य तेन तथाविधेन मनसा आकृष्टो जनो नरकावटे नरककूपे पात्यते । केन क इव ? अन्धेनान्ध इव । रागादिभिरन्धीकृतेन मनसा जनोऽप्यन्ध , तस्यैव मार्गदर्शकत्वात् । ततो यथाऽन्धेनान्धः समाकृष्यावटे पात्यते तथाऽन्धेन मनसा अन्धो जनो नरकावटे पात्यते । अत्रान्तरश्लोकाः—

द्रव्यादिषु रतिप्रीती राग इत्यभिधीयते । तेष्वेवारतिमप्रीतिं चाहुर्द्वेषं मनीषिणः ॥ १ ॥ उभावेतौ दृढतरं बन्धनं सर्वजन्मिनाम् । सर्वदुःखानोकहानां मूलकन्दौ प्रकीर्तितौ ॥ २ ॥ कः सुखे विस्मयस्मेरो दुःखे कः कृपणो भवेत् ? । मोक्षं को नाप्नुयाद् रागद्वेषौ स्यातां न चेदिह ॥ ३ ॥ रागेण ह्यविनाभावी द्वेषो द्वेषेण चेतरः । तयोरेकतरत्यागे परित्यक्तावुभावपि ॥४॥ दोषाः स्मरप्रभृतयो रागस्य परिचारकाः।मिथ्याभिमानप्रमुखा द्वेषस्य तु परिच्छदः ॥५॥ तयोर्मोहः पिता बीजं नायकः परमेश्वरः । ताभ्यामभिन्नस्तद्द्रव्यः सर्वदोषपितामहः ॥ ६ ॥ एवमेते त्रयो दोषा नातो दोषान्तरं क्वचित् । तैरमी जन्तवः सर्वे भ्रम्यन्ते भववारिधौ ॥ ७ ॥ स्वभावेन हि जीवोऽयं स्फटिकोपलनिर्मलः । उपाधिभूतैरेतैस्तु तादात्म्येनावभासते ॥ ८ ॥ अराजकमहो ! विश्वं यदेभिः पश्यतोहरैः । ह्रियते ज्ञानसर्वस्वं स्वरूपमपि जन्मिनाम् ॥ ९ ॥ ये जन्तवो निगोदेषु येऽपि चासन्नमुक्तयः । सर्वत्रास्पृष्टकरुणा पतत्येषां पताकिनी ॥ १० ॥ मुक्त्या वैरं किमेतेषां मुक्तिकामैः सहाथवा । येनोभयसमायोगस्तैर्भवन् प्रतिषिध्यते ॥ ११ ॥ दोषत्रयक्षमाणां हि किमुपेक्षा क्षमाऽर्हताम् । जगद्दाहकरं यत्र शान्तं दोषप्रदीपनम् ॥ १२ ॥ व्याघ्रव्यालजलाग्निभ्यो न बिभेति तथा मुनिः । लोकद्वयापकारिभ्यो रागादिभ्यो भृशं यथा ॥ १३ ॥ वर्त्मातिसंकटमहो ! योगिभिः समुपाश्रितम् । रागद्वेषौ व्याघ्रसिंहौ पार्श्वतो यस्य तिष्ठतः ॥ १४ ॥ ४८ ॥

अथ रागद्वेषजयोपायमुपदिशति—

**अस्ततन्द्रैरतः पुंभिर्निर्वाणपदकाङ्क्षिभिः । विधातव्यः समत्वेन रागद्वेषद्विषज्जयः ॥ ४९ ॥**

यत एवंविधौ रागद्वेषौ, अतः कारणादस्ततन्द्रैर्निरस्तप्रमादैः पुंभिः पुरुषधर्मोपेतैर्योगिभिः, किंविशिष्टैः ?

निर्वाणपदकाङ्क्षिभि' निर्वान्ति रागद्वेषोपतप्ताः शीतीभवन्त्यस्मिन्निति निर्वाणं तदेव पद्यमानत्वात् पदं तत्काङ्क्षणशीला निर्वाणपदकाङ्क्षिणः, तैर्विधातव्यो विधेयो रागद्वेषावेवोपतापकारित्वाद् द्विषन्तौ तयोर्जयोऽभिभव', केनोपायेनेत्याह–ममत्वेन, रागहेतुषु द्वेषहेतुषु च माध्यस्थ्येनौदासीन्येनेति यावत् ॥ ४६ ॥

यथा साम्यं रागद्वेषजयोपायस्तथाऽऽह—

**अमन्दानन्दजनने साम्यवारिणि मज्जताम् । जायते सहसा पुंसां रागद्वेषमलक्षयः ॥ ५० ॥**

साम्यमेवातिशीतीभावजनकत्वाद् वारि तत्र । किंविशिष्टे ? अमन्दस्तीव्रो य आनन्द आह्लादस्तस्य जनने, मज्जतां तन्मध्यमवगाहमानानां, सहसा अकस्मात् । केषां ? पुंसां। रागद्वेषावेव मलस्तस्य क्षयः । प्रसिद्धमेतद् यथा वारिणि मज्जतां मलक्षयो भवति, एवं साम्ये निमज्जतां लीयमानानां रागद्वेषक्षयो भवति ॥ ५० ॥

न परं रागद्वेषयोरेवापनायकं साम्यम्, अपि तु सर्वकर्मणामपीत्याह—

**प्रणिहन्ति क्षणार्धेन साम्यमालम्ब्य कर्म तत् । यन्न हन्यान्नरस्तीव्रतपसा जन्मकोटिभिः ॥५१॥**

प्रणिहन्ति निहन्ति क्षणार्धेनान्तर्मुहूर्तेन साम्यमुक्तलक्षणमालम्ब्याश्रित्य तत् कर्म ज्ञानावरणीयादि, यत् किञ्चित् कर्म न हन्याद् नापनयेद् नर' पुमान् तीव्रतपसा तीव्रेण शरीरमनसोः संतापहेतुनाऽनशनादिरूपेणार्थात् साम्यरहितेन जन्मकोटिभिर्बहुभिरपि जन्मभिः ॥ ५१ ॥

कथमन्तर्मुहूर्त्तमात्रेण साम्यं सर्वकर्मापनायकमित्याह—

कर्म जीवं च संश्लिष्टं परिज्ञातात्मनिश्चयः। विभिन्नीकुरुते साधुः सामायिकशलाकया ॥५२॥

सामायिकमेव समत्वमेव शलाका वंशादिमयी तया विभिन्नीकुरुते पृथक् करोति साधुर्यतिः। किं विभिन्नीकुरुते ? कर्म जीवं च संश्लिष्टं संपृक्तम्, यथा श्लेषद्रव्यसंपृक्तानां पात्रादीनां शलाकया पृथग् भावः क्रियते तथा जीवकर्मणोरपि तादात्म्येन संबद्धयोः सामायिकेनेति। अयमेव कर्मक्षयः। न हि कर्मपुद्गलानामात्यन्तिकः क्षयः संभवति, नित्यत्वात् तेषाम्, आत्मनस्तु पृथग्भूतानि कर्माणि क्षीणानि इत्युच्यन्ते। ननु वाङ्मात्रमेतद् यत् सामायिकशलाकया साधुः कर्माणि पृथक् करोतीत्याह—परिज्ञातात्मनिश्चयः परिज्ञातः पुनः पुनः संविदित आत्मनिश्चय आत्मनिर्णयो येन स तथा। अयमर्थः—आत्मज्ञानमभ्यस्यंस्तथाविधावरणापगमेन तथा पुनः पुनः स्वसंवेदनेनात्मनिश्चयं दृढं करोति यथात्मरूपाद् भिन्नरूपाणि आत्मरूपावारकाणि च कर्माणि परमसामायिकबलेन निर्जरयति ॥ ५२ ॥

न केवलमात्मनिश्चयबलेन कर्माणि पृथक् करोति यावदात्मनि परमात्मदर्शनमपि भवतीत्याह—

रागादिध्वान्तविध्वंसे कृते सामायिकांशुना। स्वस्मिन् स्वरूपं पश्यन्ति योगिनः परमात्मनः ॥५३॥

रागादय एव स्वरूपतिरोधायकत्वाद् ध्वान्तं तस्य विध्वंसस्तस्मिन् कृते। केन ? सामायिकमेवांशुरादित्यस्तेन। ततः किं स्यात् ? स्वस्मिन्नात्मनि परमात्मनः स्वरूपं योगिनः पश्यन्ति। सर्वेऽपि ह्यात्मानस्तत्त्वतः

परमात्मान एव, केवलज्ञानस्य येन तेनांशेन सर्वत्र भावात्, यत् पारमर्षम्—" 'सव्वजीवाणं पि अ ण अक्खरस्साणंतभागो निच्चुग्घाडिओ चेव "। केवल रागद्वेषादिदोषकलुषितत्वाद् न साक्षात् परमात्मस्वरूपाभिव्यक्ति। सामायिकांशुमत्प्रकाशनेन तु रागादितिमिरेऽपगते आत्मन्येव परमात्मस्वरूपमभिव्यक्तं भवति ॥५३॥

इदानीं साम्यप्रभावं व्यनक्ति—

श्लिष्यन्ति जन्तवो नित्यं वैरिणोऽपि परस्परम्। अपि स्वार्थकृते साम्यभाजः साधो प्रभावतः ॥५४॥

अपि स्वार्थकृते स्वार्थनिमित्तमपि साम्यवतः साधो प्रभावाद् नित्यवैरिणोऽप्यहिनकुलादय श्लिष्यन्ति परस्पर मैत्रीं कुर्वन्ति। अयमर्थ —ईदृश साम्यस्य महिमा यदेतत् स्वनिमित्त कृतमपि परेषु नित्यवैरिषु पर्यवस्यति, यत् स्तुवन्ति विद्वास —

देवाकृष्य करेण केशरिपदं दन्ती कपोलस्थलीं, कण्डूयत्यहिरेव बभ्रुपुरतो मार्गं निरुध्य स्थितः।
व्याघ्रव्यात्तविशालवक्त्रकुहर जिघ्रत्यजस्रं मृगो, यत्रैव पशवः प्रशान्तमनसस्तामर्थये त्वद्भुवम् ॥ १ ॥

लौकिका अपि साम्यवता योगिना स्तुतिमाहुर्यथा–तत्सन्निधौ वैरत्याग इति। अत्रान्तरश्लोकाः—

चेतनाचेतनैर्भावैरिष्टानिष्टतया स्थितै। न मुह्यति मनो यस्य तस्य साम्यं प्रचक्षते ॥ १ ॥ गोशीर्षचन्दनालेपे वासीच्छेदे च बाह्वयो[2]। अभिन्ना चित्तवृत्तिश्चेत् तदा साम्यमनुत्तरम् ॥२॥ अभिष्टोतरि च प्रीते रोषान्धे चापि

१ सर्वजीवानामप्यक्षरस्यानन्तभागो नित्योद्घाटित एव। २ भुजयो

शत्रुरि । यस्याविशेषणं चेतः स साम्यमवगाहते ॥ ३ ॥ न हूयते तप्यते न दीयते वा न किञ्चन । अहो ! अमूल्यक्रीतीयं साम्यमात्रेण निर्वृतिः ॥ ४ ॥ प्रयत्नकृष्टैः क्लिष्टैश्च रागाद्यैः किमुपासितैः ? । अयत्नलभ्यं हृद्यं च श्रय साम्यं सुखावहम् ॥ ५ ॥ परोक्षार्थप्रतिक्षेपात् स्वर्गमोक्षावपह्नुताम् । साम्यशर्म स्वसंवेद्यं नास्तिकोऽपि न निह्नुते ॥ ६ ॥ कविप्रलापरूढेऽस्मिन्नमृते किं विमुह्यसि ? । स्वसंवेद्यरसं मूढ ! पिब साम्यरसायनम् ॥ ७ ॥ खाद्यलेह्यचू(चो)ष्यपेयरसेभ्यो विमुखा अपि । पिबन्ति यतयः स्वैरं साम्यामृतरसं मुहुः ॥ ८ ॥ कण्ठपीठे लुठन् भोगिभोगो मन्दारदाम च । यस्याप्रीत्यै न वा नो वा प्रीत्यै स समतापतिः ॥ ९ ॥ न गूढं किञ्चनाचार्यमुष्टिः काचिद् न चापरा । बालानां सुधियां चैकं साम्यं भवरुजौषधम् ॥ १० ॥ अतिक्रूरतरं कर्म शान्तानामपि योगिनाम् । यद् घ्नन्ति साम्यशस्त्रेण रागादीनां कुलानि ते ॥ ११ ॥ अयं प्रभावः परमः समत्वस्य प्रतीयताम् । यत् पापिनः क्षणेनापि पदमियूति शाश्वतम् ॥ १२ ॥ यस्मिन् सति सफलताममत्यफलतां व्रजेत् । रत्नत्रयं नमस्तस्मै समत्वाय महौजसे ॥ १३ ॥ विगाह्य सर्वशास्त्रार्थमिदमुच्चैस्तरां ब्रुवे । इहामुत्र स्वपरयोर्नान्यत् साम्यात् सुखाकरम् ॥ १४ ॥ संसर्गेऽप्युपसर्गाणामपि मृत्यावुपस्थिते । नैतत्कालोचितं किञ्चित् साम्यादौपयिकं परम् ॥ १५ ॥ रागद्वेषादिशत्रुप्रतिहतिनिपुणां साम्यसाम्राज्यलक्ष्मीं, भुक्त्वा भुक्त्वा निरन्ताः शुभगतिपदवीं लेभिरे प्राणभाजः । तेनैतद् मानुषत्वं सपदि सफलतां नेतुकामैर्निकामं, साम्ये निस्सीमसौख्यप्रचयपरिचिते न प्रमादो विधेयः ॥१६॥५४॥

नन्ववगतमेतत् सर्वदोषनिवारणकारणं समत्वम्, प्रीताः स्मः, यदि तु साम्यं प्रत्यप्युपायः कश्चन स्यात् । तदुपायेऽप्युपायान्तरमीषत्करं स्यात्, तदा निराकाङ्क्षाः प्रमोदामहे, इत्येतद् मनसि कृत्वा श्लोकद्वयमाह—

साम्य स्याद् निर्ममत्वेन तत्कृते भावना श्रयेत्। अनित्यतामशरणं भवमेकत्वमन्यताम् ॥५५॥
अशौचमास्रवविधिं संवरं कर्मनिर्जराम्। धर्मस्वाख्यातता लोकं द्वादशीं बोधिभावनाम् ॥५६॥

साम्यं यथोक्तस्वरूपं निर्ममत्वेनोपायेन स्यात्। ननु साम्यनिर्ममत्वयोः को भेदः ? उच्यते–साम्यं राग-द्वेषयोरुभयोरपि प्रतिपक्षभूतम्, निर्ममत्वं रागस्यैकस्य प्रतिपक्षभूतम्। तद्दोषद्वयनिवारणाय साम्ये चिकीर्षिते भवति बलवत्तरस्य रागस्य प्रतिपक्षभूतं निर्ममत्वमुपायः। यथा हि बलवत्या सेनायां बलवत्तरस्य कस्यचिद् विनाशः इतरेषां विनाशाय, तथा रागनिग्रहहेतुः निर्ममत्वं हीनबलानां द्वेषादीनां विनाशायेति अलं प्रसङ्गेन। निर्ममत्वस्याप्युपायं दर्शयति–तत्कृते निर्ममत्वनिमित्तं भावना अनुप्रेक्षाः श्रयेद् योगी। प्रकृता भावना नामतः कथयति–अनित्यतामित्यादि, स्पष्टं चैतत् ॥ ५५ ॥ ५६ ॥

तद्यथा। तद्यथा इत्युपस्कारपूर्वकमनित्यताख्यां प्रथमां भावनां दर्शयति—

यत्प्रातस्तन्न मध्याह्ने यन्मध्याह्ने न तन्निशि। निरीक्ष्यते भवेऽस्मिन् हि पदार्थानामनित्यता॥५७॥
शरीरं देहिनां सर्वपुरुषार्थनिबन्धनम्। प्रचण्डपवनोद्धूतघनाघनविनश्वरम् ॥ ५८ ॥
कल्लोलचपला लक्ष्मीः संगमाः स्वप्नसंनिभाः। वात्याव्यतिकरोत्क्षिप्ततूलतुल्यं च यौवनम् ॥५९॥

श्लोकत्रयं स्पष्टम्, नवरं शरीरमित्यादिश्लोके पूर्वार्द्धे यदिति शेषः, उत्तरार्द्धे तदिति शेषः ॥ अत्रान्तरश्लोकाः —

स्वतोऽन्यतश्च सर्वाभ्यो दिग्भ्यश्चागच्छदापदः । कृतान्तदन्तयन्त्रस्थाः कष्टं जीवन्ति जन्तवः ॥ १ ॥ वज्र-
सारेषु देहेषु यद्यास्कन्दत्यनित्यता । रम्भागर्भसगर्भेषु का कथा तर्हि देहिनाम् ? ॥ २ ॥ असारेषु शरीरेषु स्थे-
मानं यश्चिकीर्षति । जीर्णशीर्णपलालोत्थे चञ्चापुंसि करोतु सः ॥ ३ ॥ न मन्त्रतन्त्रभैषज्यकरणानि शरीरिणाम् ।
त्राणाय मरणव्याघ्रमुखकोटरवासिनाम् ॥ ४ ॥ प्रवर्द्धमानं पुरुषं प्रथमं ग्रसते जरा । ततः कृतान्तस्त्वरते धिगहो !
जन्म देहिनाम् ॥ ५ ॥ यद्यात्मानं विजानीयात् कृतान्तवशवर्तिनम् । को ग्रासमपि गृह्णीयात् पापकर्मसु का कथा ?
॥ ६ ॥ समुत्पद्य समुत्पद्य विपद्यन्तेऽप्सु बुद्बुदाः । यथा तथा क्षणेनैव शरीराणि शरीरिणाम् ॥ ७ ॥
आढ्यं निःस्वं नृपं रङ्कं ज्ञं मूर्खं सज्जनं खलम् । अविशेषेण संहर्तुं समवर्ती प्रवर्तते ॥ ८ ॥ न
गुणेष्वस्य दाक्षिण्यं द्वेषो दोषेषु चास्ति न । दवाग्निवदरण्यानि विलुम्पत्यन्तको जनम् ॥ ९ ॥
इदं तु मा स्म शङ्किष्ठाः कुशास्त्रैरपि मोहितः । कुतोऽप्युपायतः कायो निरपायो भवेदिति ॥१०॥ ये मेरुं दण्डसात्
कर्तुं पृथ्वीं वा छत्रसात् क्षमाः । तेऽपि त्रातुं स्वमन्यं वा न मृत्योः प्रभविष्णवः ॥ ११ ॥ आ कीटादा च
देवेन्द्रात् प्रभावन्तकशासने । अनुन्मत्तो न भाषेत कथञ्चित् कालवञ्चनम् ॥१२॥ पूर्वेषां चेत् क्वचित् कश्चिज्जीवन्
दृश्येत तद् वयम् । मनोरथातीतमपि प्रतीमः कालवञ्चनम् ॥ १३ ॥ अनित्यं यौवनमपि प्रतियन्तु मनीषिणः ।
बलरूपापहारिण्या जरसा जर्जरीभवेत् ॥ १४ ॥ यौवने कामिनीभिर्ये काम्यन्ते कामलीलया । निकामकृतथूत्कारं
त्यज्यन्ते तेऽपि वार्द्धके ॥ १५ ॥ यदर्जितं बहुक्लेशैरभुक्त्वा यच्च पालितम् । तद् याति क्षणमात्रेण निधनं धनिनां
धनम् ॥ १६ ॥ उपमानपदं किं स्यात् फेनबुद्बुदविद्युताम् । धनस्य नश्यतोऽवश्यं पश्यतामपि तद्वताम् ? ॥ १७॥

समागमा सापगमा. सुहृद्भिर्बन्धुभिर्निजैः । स्वस्य वाऽन्यस्य वा नाशे विकृतेऽपकृतेऽपि वा ॥१८॥ ध्यायन्ननित्यतां नित्य मृत पुत्र न शोचति । नित्यताग्रहमूढस्तु कुड्यमङ्गेऽपि रोदिति ॥ १९ ॥ एतच्छरीरधनयौवनबान्धवादि, तावद् न केवलमनित्यमिहासुभाजाम् । विश्व सचेतनमचेतनमप्यशेष-मुत्पत्तिधर्मकमनित्यमुशन्ति सन्तः ॥ २० ॥ ५७ ॥ ५८ ॥ ५९ ॥

अनित्यताभावनामुपसहरन्नुपदर्शयति—

इत्यनित्य जगद्वृत्त स्थिरचित्तः प्रतिक्षणम् । तृष्णाकृष्णाहिमन्त्राय निर्ममत्वाय चिन्तयेत् ॥६०॥

इति पूर्वोक्तप्रकारेण जगद्वृत्त जगत्स्वरूपमनित्य प्रतिक्षण चिन्तयेदवधारयेत्, स्थिरचित्तो निश्चलचित्तः सन्। किमर्थम् ? निर्ममत्वाय-अनित्यत्वादिभावनासाध्यवीतरागत्वनिमित्तम् । किंविशिष्टाय ? तृष्णाकृष्णाहिमन्त्राय-तृष्णा राग' सैव कृष्णाहिस्तस्या मन्त्राय मन्त्रस्वरूपाय । अहिशब्दः स्त्रीलिङ्गोऽप्यस्तीति नोपमानोपमेययोर्भिन्न-लिङ्गत्वम् । अनित्यता ॥ १ ॥ ६० ॥

अथाशरणभावनामुपदिशति—

इन्द्रोपेन्द्रादयोऽप्येते यन्मृत्योर्यान्ति गोचरम् । अहो ! तदन्तकातङ्के क' शरण्य शरीरिणाम्? ॥

इन्द्र' सुरनाथः, उपेन्द्रो वासुदेवस्तावादी येषां सुरमनुष्यादीनां, चक्रवर्तिपरिहारेणोपेन्द्रग्रहण लोके मृत्युकाले शरणत्वोपहासपरम्, तेऽपि यद् यस्माद् मृत्योर्गोचर वश यान्ति, अहो इति विस्मये, तत् तस्मादन्तकातङ्के मृत्यु-

भये उपस्थिते कः शरण्यः शरणे साधुः शरीरिणां जन्तूनाम् ?—कोऽपि नास्तीत्यर्थः ॥ ६१ ॥ तथा—

पितुर्मातुः स्वसुर्भ्रातुस्तनयानां च पश्यताम्। अत्राणो नीयते जन्तुः कर्मभिर्यमसद्मनि ॥६२॥

पित्रादीनां पश्यतांताननादृत्यैवात्राणोऽशरणो जन्तुः कर्मभिः परभववेदनीयैः शुभाशुभैर्यमसद्मनि यमालये नीयते। एतच्च लोकप्रसिद्ध्यपेक्षम्, न पुनर्यमसद्मनि कश्चिद् नीयते, अपि तु चतुर्गतिस्वरूपे संसारे तत्तद्गत्युचितैः कर्मभिस्तत्र तत्र नीयत इति परमार्थः ॥ ६२ ॥ तथा—

शोचन्ति स्वजनानन्तं नीयमानान् स्वकर्मभिः। नेष्यमाणं तु शोचन्ति नात्मानं मूढबुद्धयः ॥६३॥

शोचन्ति शोकविषयतां नयन्ति स्वजनान् बन्धून्, अन्तमवसानं नीयमानान् स्वकर्मभिर्भवान्तरवेदनीयैर्मूढबुद्धय इत्युत्तरेण योगः। आत्मानं तु स्वकर्मभिरेवान्तं नेष्यमाणं न शोचन्ति। संनिहितपरित्यागे हि व्यवहितं प्रति कारणं वाच्यम्, संनिहितश्चात्मा, तस्य शोचनीयतां मुक्त्वा व्यवहितस्य स्वजनादेः शोचनं बुद्धिमोहनिबन्धनमेव ॥ ६३ ॥

अशरणभावनामुपसंहरति—

संसारे दुःखदावाग्निज्वलज्ज्वालाकरालिते। वने मृगार्भकस्येव शरणं नास्ति देहिनः ॥ ६४ ॥

संसारे शरणं देहिनो नास्ति। कस्येव कुत्र ? वने मृगार्भकस्येव। किंविशिष्टे संसारे ? दुःखमेव दावाग्निस्तस्य ज्वलन्त्यो या ज्वाला दुःखस्यैव प्रभेदास्तैः करालिते रौद्रे। वने किंविशिष्टे ? दुःखो दुःखहेतुर्यो दावाग्निस्तस्य ज्वलन्त्यो या ज्वालास्ताभिः करालिते। अर्भकग्रहणमतिमौग्ध्यख्यापनार्थम्। अशरणभावना। अत्रान्तरश्लोकाः—

अष्टाङ्गेनायुर्वेदेन जीवातुभिरगदैः । मृत्युंजयादिभिर्मन्त्रैस्त्राणं नैवास्ति मृत्युतः ॥ १ ॥ खड्गपञ्जरमध्यस्थश्चतुरङ्गचमूवृतः । रङ्कवत् कृष्यते राजा हठेन यमकिङ्करैः ॥२॥ जलमध्यस्थितस्तम्भमूर्ध्वपञ्जरमध्यगम् । राज्ञः प्रियसुतं मृत्युश्चकर्षान्यस्य का कथा ? ॥३॥ षष्टिं पुत्रसहस्राणि सगरस्यापि चक्रिणः । तृणवत् त्राणरहितान्यदहज्ज्वलनप्रभः ॥४॥ आस्कन्द्य स्कन्दकाचार्यं मुनिपञ्चशतीं मृत । न कश्चिदभवत् त्राता पालकादन्तकादिव ॥५॥ यथा मृत्युप्रतीकारं पशवो नैव जानते । विपश्चितोऽपि हि तथा धिक् प्रतीकारमूढताम् ॥ ६ ॥ येऽसिमात्रोपकरणा कुर्वते क्ष्मामकण्टकाम् । यमभ्रूभङ्गभीतास्तेऽप्यास्ये निदधतेऽङ्गुली ॥ ७ ॥ स्नेहादाश्लिष्य शक्रेणार्द्धासनेऽध्यास्यते स यः । श्रेणिकः सोऽप्यशरणोऽश्रोतव्यां प्राप तां दशाम् ॥८॥ मुनीनामप्यपापानामसिधारोपमैर्व्रतैः । न शक्यते कृतान्तस्य प्रतिकर्तुं कदाचन ॥ ९ ॥ अशरण्यमहो ! विश्वमराजकमनायकम् । यदेतदप्रतीकारं ग्रस्यते यमरक्षसा ॥ १० ॥ योऽपि धर्मप्रतीकारो न सोऽपि मरणं प्रति । शुभां गतिं ददानस्तु प्रतिकर्तेति कीर्त्यते ॥ ११ ॥ एवं विश्वमनाकुलः कवलयन्नाब्रह्म कीटावधि, श्रान्तिं याति कथञ्चनापि न खलु त्रैलोक्यभीमो यमः । नैवास्य प्रतिकारकर्मणि सुराधीशोऽप्यलम्भूष्णुता-मालम्बेत शरण्यवर्जितमिदं हा ! हा ! जगत् ताम्यति ॥ १२ ॥ अशरणभावना ॥ २ ॥ ६४ ॥

अथ संसारभावनां श्लोकत्रयेणाह—

श्रोत्रियः श्वपचः स्वामी पत्तिर्ब्रह्मा कृमिश्च सः । संसारनाट्ये नटवत् संसारी हन्त ! चेष्टते ॥६५॥

संसारो नानायोनिषु सञ्चरणं स एव नाट्यं नटकर्म तत्र नटवत् नर्तकवत् संसारी जन्तुश्चेष्टते विविधा चेष्टां करो-

तीति। हन्तेत्यामन्त्रणे। केनोल्लेखेन चेष्टते? श्रोत्रियो वेदपारगः स एव श्वपचो भवति, स्वामी प्रभुः स एव पत्तिर्भवति, ब्रह्मा प्रजापतिः स एव कृमिर्भवति। यथेष्टं च विध्यनुवादौ, तेन श्वपचः श्रोत्रियः, पत्तिः स्वामी, कृमिर्ब्रह्मा, इत्यपि द्रष्टव्यम्। यथा हि नाट्ये विविधवर्णकादियोगाद् भूमिकान्तरं नटाः प्रतिपद्यन्ते तथैव संसारी विविधकर्मोपाधिः श्रोत्रियादितां प्रतिपद्यते, न पुनरस्य तथाविधं परमार्थतो रूपमस्ति ॥ ६५ ॥ तथा—

**न याति कतमां योनिं कतमां वा न मुञ्चति। संसारी कर्मसम्बन्धादवक्रयकुटीमिव ॥६६॥**

योनिमेकेन्द्रियादिलक्षणां कतमां न याति? सर्वामपि यातीत्यर्थः, कतमां वा योनिं न मुञ्चति? सर्वामपि मुञ्चतीत्यर्थः, संसारी जन्तुः। कुतो हेतोरित्याह—कर्मसम्बन्धात्; अवक्रयकुटीमिव भाटककुटीमिव। यथा हि तथाविधोपयोगहेतोर्गृहमेधी एकां कुटीं प्रविशति, उपयोगाभावे तां मुञ्चति; उपयोगान्तराच्च कुट्यन्तरमादत्ते, परिहरति च; एवं नियतकर्मोपभोगहेतोरेकां योनिं जन्तुः प्रविशति, तद्योग्यकर्मोपभोगानन्तरं तु तां विमुञ्चति, योन्यन्तरं तूपादत्ते पुनश्च परिहरति, न पुनर्नियतः कोऽपि योनिपरिग्रहोऽस्तीति ॥ ६६ ॥ तथा—

**समस्तलोकाकाशेऽपि नानारूपैः स्वकर्मतः। वालाग्रमपि तन्नास्ति यन्न स्पृष्टं शरीरिभिः ॥६७॥**

इहाकाशं द्विविधं—लोकाकाशमलोकाकाशं च। यत्र धर्माधर्मजीवपुद्गलानां सम्भवोऽस्ति तल्लोकाकाशम्, इतरत्त्वलोकाकाशम्, यदाह;—

धर्मादीनां वृत्तिर्द्रव्याणां यत्र भवति तत् क्षेत्रम्। तैर्द्रव्यैः सह लोकस्तद्विपरीतं ह्यलोकाख्यम् ॥ १ ॥

ततः समग्रेऽपि लोकाकाशे चतुर्दशरज्ज्वात्मके वालाग्रमपि वालाग्रप्रमाणमपि तत् क्षेत्र नास्ति यत् शरीरिभिरुत्पद्यमानैर्विपद्यमानैश्च न स्पृष्टम् । अत्र हेतुमाह—किंविशिष्टै शरीरिभि ? सूक्ष्मबादरप्रत्येकसाधारणैकेन्द्रियभेदतो द्वित्रिचतुष्पञ्चेन्द्रियभेदतश्च यथायोग्य नानारूपै. । नानारूपत्वमपि कुतः ? स्वकर्मतः, न त्वीश्वरादिप्रेरणया, यदाहु परे—

अज्ञो जन्तुरनीश' स्यादात्मनः सुखदुःखयो. । ईश्वरप्रेरितो गच्छेत् स्वर्गं वा श्वभ्रमेव वा ॥ १ ॥

तत्रेश्वरप्रेरणा यदि कर्मनिरपेक्षा तदा विश्वस्य वैश्वरूप्य विलीयेत । कर्मसापेक्षतायां त्वीश्वरस्यास्वातन्त्र्य वैफल्य वा स्यादिति कर्मैवास्तु प्रेरकम्, किमीश्वरेण ? यदवोचाम वीतरागस्तोत्रे--

कर्मापेक्षः स चेत् तर्हि न स्वतन्त्रोऽस्मदादिवत् । कर्मजन्ये च वैचित्र्ये किमनेन शिखण्डिना ? ॥ १ ॥

अत्रान्तरश्लोका —

संसारिणश्चतुर्भेदाः श्वभ्रतिर्यग्नरामरा' । प्रायेण दु खबहुलाः कर्मसम्बन्धबाधिताः ॥ १ ॥ आद्येषु त्रिषु नरकेषूष्ण शीत परेषु च । चतुर्थे शीतमुष्ण च दु ख क्षेत्रोद्भव त्विदम् ॥ २ ॥ नरकेषूष्णशीतेषु चेत् पतेल्लोहपर्वतः । विलीयेत निशीर्येत तदा भुवमनाप्नुवन् ॥ ३ ॥ उदीरितमहादुःखा अन्योन्येनासुरैश्च ते । इति त्रिविधदु खार्त्ता वसन्ति नरकावनौ ॥ ४ ॥ समुत्पन्ना घटीयन्त्रेष्वधार्मिकसुरैर्बलात् । आकृष्यन्ते लघुद्वाराद् यथा सीसशलाकिकाः ॥ ५ ॥ गृहीत्वा पाणिपादादौ वज्रकण्टकसङ्कटे । आस्फाल्यन्ते शिलापृष्ठे वासांसि रजकैरिव ॥६॥ दारुदार विदार्यन्ते दारुणैः क्रकचैः क्वचित् । तिलपेष च पिष्यन्ते चित्रयन्त्रैः क्वचित् पुनः ॥ ७ ॥ पिपासार्त्ताः

पुनस्तप्तत्रपुसीसकवाहिनीम् । नदीं वैतरणीं नामावतार्यन्ते वराककाः ॥ ८ ॥ छायाभिकाङ्क्षिणः क्षिप्रमसिपत्रवनं गताः । पत्रशस्त्रैः पतद्भिस्ते छिद्यन्ते तिलशोऽसकृत् ॥ ९ ॥ आश्लेष्यन्ते च शाल्मल्यो वज्रकण्टकसङ्कटाः । तप्तायः-पुत्रिकाः क्वापि स्मारितान्यवधूरतम् ॥ १० ॥ संस्मार्य मांसलोलत्वमाश्यन्ते मांसमङ्गजम् । प्रख्याप्य मधुलौल्यं च पाय्यन्ते तापितं त्रपु ॥ ११ ॥ आष्ट्रकन्दुमहाशूलकुम्भीपाकादिवेदनाः । अश्रान्तमनुभाव्यन्ते भृज्यन्ते च भटित्रवत् ॥ १२ । छिन्नभिन्नशरीराणां पुनर्मिलितवर्ष्मणाम् । नेत्राद्यङ्गानि कृष्यन्ते बककङ्कादिपक्षिभिः ॥ १३ ॥ एवं महादुःखहताः सुखांशेनापि वर्जिताः । गमयन्ति बहुं कालमात्रयस्त्रिंशसागरम् ॥ १४ ॥

तिर्यग्गतिमपि प्राप्ताः सम्प्राप्यैकेन्द्रियादिताम् । तत्रापि पृथिवीकायरूपतां समुपागताः ॥ १५ ॥ हलादिशस्त्रैः पाट्यन्ते मृद्यन्तेऽश्वगजादिभिः । वारिप्रवाहैः प्लाव्यन्ते दह्यन्ते च दवाग्निना ॥ १६ ॥ व्यथ्यन्ते लवणाचाम्ल-मूत्रादिसलिलैरपि । लवणक्षारतां प्राप्ताः क्वथ्यन्ते चोष्णवारिणि ॥ १७ ॥ पच्यन्ते कुम्भकाराद्यैः कृत्वा कुम्भेष्ट-कादिसात् । चीयन्ते भित्तिमध्ये च कृत्वा कर्दमरूपताम् ॥ १८ ॥ केचिच्छाणैर्निघृष्यन्ते विपच्य क्षारमृत्पुटैः । टङ्कान्दुकैर्विदार्यन्ते पाट्यन्तेऽद्रिसरित्स्रवैः ॥ १९ ॥ अप्कायतां पुनः प्राप्तास्ताप्यन्ते तपनांशुभिः । घनीक्रियन्ते तुहिनैः संशोष्यन्ते च पांशुभिः ॥ २० ॥ क्षारेतररसाश्लेषाद् विपद्यन्ते परस्परम् । स्थाल्यन्तस्था विपच्यन्ते पीयन्ते च पिपासितैः ॥ २१ ॥ तेजस्कायत्वमाप्ताश्च विध्याप्यन्ते जलादिभिः । घनादिभिः प्रकुट्यन्ते ज्वाल्यन्ते चेन्धनादिभिः ॥ २२ ॥ वायुकायत्वमप्याप्ता हन्यन्ते व्यजनादिभिः । शीतोष्णादिद्रव्ययोगाद् विपद्यन्ते क्षणे क्षणे ॥ २३ ॥ प्राचीनाद्यास्तु सर्वेऽपि विराध्यन्ते परस्परम् । मुखादिवातैर्बाध्यन्ते पीयन्ते चोरगादिभिः ॥ २४ ॥

वनस्पतित्व दशधा प्राप्ता कन्दादिभेदत । छिद्यन्ते चाथ भिद्यन्ते पच्यन्ते चाग्नियोगत' ॥ २५ ॥ सशोष्यन्ते निपिष्यन्ते प्लुष्यन्तेऽन्योन्यघर्षणैः । चारादिभिश्च दह्यन्ते सधीयन्ते च भोक्तृभिः ॥ २६ ॥ सर्वावस्थासु खाद्यन्ते भज्यन्ते च प्रभञ्जनैः । क्रियन्ते भस्मसाद् दावैरुन्मूल्यन्ते सरित्प्लवैः ॥ २७ ॥ सर्वेऽपि वनस्पतय' सर्वेषां भोज्यतां गता' । सर्वैः शस्त्रैः सर्वदाऽनुभवन्ति क्लेशसन्ततिम् ॥ २८ ॥ द्वीन्द्रियत्वे च ताप्यन्ते पीयन्ते पूतरादयः । चूर्ण्यन्ते कृमय पादैर्भक्ष्यन्ते चटकादिभि ॥ २९ ॥ शङ्खादयो निखन्यन्ते निकृष्यन्ते जलौकसः। गण्डूपदाद्या पात्यन्ते जठरादौषधादिभि ॥ ३० ॥ त्रीन्द्रियत्वेऽपि सम्प्राप्ते षट्पदीमत्कुणादय' । विमृज्यन्ते शरीरेण ताप्यन्ते चोष्णवारिणा ॥ ३१ ॥ पिपीलिकास्तु तुद्यन्ते पादैः सम्मार्जनेन च । अदृश्यमानाः कुन्थ्वाद्या मथ्यन्ते चासनादिभिः ॥ ३२ ॥ चतुरिन्द्रियताभाज सरघाभ्रमरादय. । मधुमक्षैर्विराध्यन्ते यष्टिलोष्टादिताडनैः ॥ ३३ ॥ ताड्यन्ते तालवृन्ताद्यैर्द्राग् दशमशकादय । ग्रसन्ते गृहगोधाद्यैर्मक्षिकामर्कटादयः ॥ ३४ ॥ पञ्चेन्द्रिया जलचरा. खादन्त्यन्योन्यमुत्सुका । धीवरैः परिगृह्यन्ते गिल्यन्ते च बकादिभि ॥ ३५ ॥ उत्कील्यन्ते त्वचयद्भि प्राप्यन्ते च भटित्रताम् । भोक्तुकामैर्विपच्यन्ते निगाल्यन्ते वसार्थिभि. ॥ ३६ ॥ स्थलचारिषु चोत्पन्ना अबला बलवत्तरैः । मृगाद्या. सिंहप्रमुखैर्मार्यन्ते मांसकाङ्क्षिभि ॥ ३७ ॥ मृगयासक्तचित्तैश्च क्रीडया मांसकाम्यया । नरैस्तत्तदुपायेन हन्यन्तेऽनपराधिन ॥ ३८ ॥ क्षुधापिपासाशीतोष्णातिभारारोपणादिना । कशाङ्कुशप्रतोदैश्च वेदना प्रसहन्त्यमी ॥ ३९ ॥ खेचरास्तित्तिरशुककपोतचटकादयः । श्येनसिञ्चानगृध्राद्यैर्ग्रस्यन्ते मांसगृध्नुभिः ॥ ४० ॥ मांसलुब्धैः शाकुनिकैर्नानोपायप्रपञ्चत । संगृह्य प्रतिहन्यन्ते नानारूपैर्विडम्बनैः ॥ ४१ ॥ जलाग्निशस्त्रादिभव

तिरश्चां सर्वतो भयम् । कियद् वा वर्ण्यते स्वस्वकर्मबन्धनिबन्धनम् ॥ ४२ ॥

मनुष्यत्वेऽनार्यदेशे समुत्पन्नाः शरीरिणः । तत् तत् पापं प्रकुर्वन्ति यद् वक्तुमपि न क्षमम् ॥ ४३ ॥ उत्पन्ना आर्यदेशेऽपि चण्डालश्वपचादयः । पापकर्माणि कुर्वन्ति दुःखान्यनुभवन्ति च ॥ ४४ ॥ आर्यवंशसमुद्भूता अप्यनार्यविचेष्टिताः । दुःखदारिद्र्यदौर्भाग्यनिर्दग्धा दुःखमासते ॥ ४५ ॥ परसम्पत्प्रकर्षेणापकर्षेण स्वसम्पदाम् । परप्रेष्यतया दग्धा दुःखं जीवन्ति मानवाः ॥ ४६ ॥ रुग्जरामरणैर्ग्रस्ता नीचकर्मकदर्थिताः । तां तां दुःखदशां दीनाः प्रपद्यन्ते दयास्पदम् ॥ ४७ ॥ जरा रुजा मृतिर्दास्यं न तथा दुःखकारणम् । गर्भवासो यथा घोरनरके वाससन्निभः ॥ ४८ ॥ सूचिभिरग्निवर्णाभिर्भिन्नस्य प्रतिरोम यत् । दुःखं नरस्याष्टगुणं तद् भवेद् गर्भवासिनः ॥ ४९ ॥ योनियन्त्राद् विनिष्क्रामन् यद् दुःखं लभते भवी । गर्भवासभवाद् दुःखात् तदनन्तगुणं खलु ॥ ५० ॥ बाल्ये मूत्रपुरीषाभ्यां यौवने रतचेष्टितैः । वार्द्धक्ये श्वासकासाद्यैर्जनो जातु न लज्जते ॥५१॥ पुरीषशूकरः पूर्वं ततो मदनगर्दभः । जराजरद्गवः पश्चात् कदापि न पुमान् पुमान् ॥ ५२ ॥ स्याच्छैशवे मातृमुखस्तारुण्ये तरुणीमुखः । वृद्धभावे सुतमुखो मूर्खो नान्तर्मुखः क्वचित् ॥ ५३ ॥ सेवाकर्षणवाणिज्यपाशुपाल्यादिकर्मभिः । क्षपयत्यफलं जन्म धनाशाविह्वलो जनः ॥ ५४ ॥ क्वचिच्चौर्यं क्वचिद् द्यूतं क्वचिद् नीचैर्भुजङ्गता । मनुष्याणामहो ! भूयो भवभ्रमनिबन्धनम् ॥ ५५ ॥ सुखित्वे कामललितैर्दुःखित्वे दैन्यरोदनैः । नयन्ति जन्म मोहान्धा न पुनर्द्धर्मकर्मभिः ॥ ५६ ॥ अनन्तकर्मप्रचयक्षयक्षममिदं क्षणात् । मानुषत्वमपि प्राप्ताः पापाः पापानि कुर्वते ॥५७॥ ज्ञानदर्शनचारित्ररत्नत्रितयभाजने । मनुजत्वे पापकर्म स्वर्णभाण्डे सुरोपमम् ॥ ५८ ॥ संसारसागरगतैः शमिला-

युगयोगवत् । लब्ध कथञ्चिद् मानुष्य हा ! रत्नमिव हार्यते ॥ ५९ ॥ लब्धे मानुष्यके स्वर्ग–मोक्षप्राप्तिनिबन्धने। हा ! नरकाप्त्युपायेषु कर्मस्विष्ठते जन॰ ॥ ६० ॥ आशास्यते यत् प्रयत्नादनुत्तरसुरैरपि । तत् सम्प्राप्त मनुष्यत्व पापै पापेषु योज्यते ॥ ६१ ॥ परोक्ष नरके दुःख प्रत्यक्ष नरजन्मनि । तत्प्रपञ्चः प्रपञ्चेन किमर्थमुपवर्ण्यते ? ॥ ६२ ॥

शोकामर्षविषादेर्ष्यादैन्यादिहतबुद्धिषु । अमरेष्वपि दु.खस्य साम्राज्यमनुवर्तते ॥ ६३ ॥ दृष्ट्वा परस्य महतीं श्रिय प्राग्जन्मजीवितम् । अर्जितस्वल्पसुकृत शोचन्ति सुचिर सुरा॰ ॥ ६४ ॥ विराद्धा बलिनान्येन प्रतिकर्तुं तमक्षमा । तीव्रशेनामर्षशल्येन दोदूयन्ते निरन्तरम् ॥ ६५ ॥ न कृत सुकृत किञ्चिदाभियोग्य ततो हि नः । दृष्टोत्तरोत्तरश्रीका विषीदन्तीति नाकिन ॥ ६६ ॥ दृष्ट्वान्येषा विमानस्त्रीरत्नोपवनसम्पदम् । यावज्जीव विपच्यन्ते ज्वलदीर्ष्यानलोर्मिभि॰ ॥६७॥ हा प्राणेश ! प्रभो ! देव ! प्रसीदेति सगद्गदम् । परैर्मुषितसर्वस्वा भाषन्ते दीनवृत्तयः ॥ ६८ ॥ प्राप्तेऽपि पुण्यत स्वर्गे कामक्रोधभयातुरा । न स्वस्थतामश्नुवते सुराः कान्दर्पिकादय ॥६९॥ अथ च्यवनचिह्नानि दृष्ट्वा दृष्ट्वा विमृश्य च । विलीयन्तेऽथ जल्पन्ति क्व निलीयामहे वयम् ? ॥ ७० ॥

तथाहि—

अम्लाना अपि हि मालाः सुरद्रुमसमुद्भवा । म्लानीभवन्ति देवाना वदनाम्भोरुहैः समम् ॥ ७१ ॥ हृदयेन सम विष्वग् विश्लिष्यत्सन्धिबन्धना॰ । महाबलैरप्यकम्प्याः कम्पन्ते कल्पपादपाः ॥ ७२ ॥ अकालप्रतिपन्नाभ्यां प्रियाभ्यां च सहैव हि । श्रीह्रीभ्यां परिमुच्यन्ते कृतागस इवामराः ॥ ७३ ॥ अम्बरश्रीरपमला मलिनीभवति

क्षणात् । अप्यकस्माद्विसृमरैरघौघैर्मलिनैर्घनैः ॥ ७४ ॥ अदीना अपि दैन्येन विनिद्रा अपि निद्रया । आश्रीयन्ते मृत्युकाले पक्षाभ्यामिव कीटिकाः ॥ ७५ ॥ विषयेष्वतिरज्यन्ते ऽन्यायधर्मविबाधया । अपथ्यान्यपि यत्नेन स्पृहयन्ति मुमूर्षवः ॥ ७६ ॥ नीरुजामपि भज्यन्ते सर्वाङ्गोपाङ्गसन्धयः । भाविदुर्गतिपातोत्थवेदनाविवशा इव ॥ ७७ ॥ पदार्थग्रहणेऽकस्माद् भवन्त्यपटुदृष्टयः । परेषां सम्पदुत्कर्षमिव प्रेक्षितुमक्षमाः ॥ ७८ ॥ गर्भावासनिवासोत्थदुःखागमभयादिव । प्रकम्पतरलैरङ्गैर्भापयन्ते परानपि ॥ ७९ ॥ निश्चितच्यवनाश्चिह्नैर्लभन्ते न रतिं क्वचित् । विमाने नन्दने वाप्यामङ्गारालिङ्गिता इव ॥ ८० ॥ हा ! प्रिया ! हा ! विमानानि ! हा वाप्यो ! हा ! सुरद्रुमाः ! । क्व द्रष्टव्याः पुनर्यूयं हतदैवनियोजिताः ? ॥ ८१ ॥ अहो ! स्मितं सुधावृष्टिरहो ! बिम्बाधरः सुधा । अहो ! वाणी सुधावर्षिण्यहो ! कान्ता सुधामयी ॥ ८२ ॥ हा ! रत्नघटिताः स्तम्भाः हा श्रीमन्मणिकुट्टिम ! । हा ! वेदिका ! रत्नमय्यः ! कस्य यास्यथ संश्रयम् ? ॥ ८३ ॥ हा ! रत्नसोपानचिताः कमलोत्पलमालिताः । भविष्यन्त्युपभोगाय कस्येमाः पूर्णवापयः ? ॥ ८४ ॥ हे ! पारिजात ! मन्दार ! सन्तान ! हरिचन्दन ! । कल्पद्रुम ! विमोक्तव्यः किं भवद्भिरयं जनः ? ॥ ८५ ॥ हा ! हा ! स्त्रीगर्भनरके वस्तव्यमवशस्य मे । हहाऽशुचिरसास्वादः कर्तव्यो मयका मुहुः ॥ ८६ ॥ हहा हा ! जठराङ्गारशकटीपाकसम्भवम् । मया दुःखं विसोढव्यं बद्धेन निजकर्मणा ॥ ८७ ॥ रतेरिव निधानानि क्व तास्ताः सुरयोषितः ? । क्वाशुचिस्यन्दबीभत्सा भोक्तव्या नरयोषितः ? ॥ ८८ ॥ एवं स्वर्लोकवस्तूनि स्मारं स्मारं दिवौकसः । विलपन्तः क्षणस्यान्तर्विध्यायन्ति प्रदीपवत् ॥ ८९ ॥ (नवभिः कुलकम् ॥) एवं नास्ति सुखं चतुर्गतिजुषामप्यत्र संसारिणां, दुःखं केवलमेव मानसमथो शारीर-

मत्याधतम् । ज्ञात्वैव ममतानिरासविधये ध्यायन्तु शुद्धाशया अश्रान्तं भवभावनां भवभयच्छेदोन्मुखत्वं यदि ॥ ६० ॥

॥ संसारभावना २ ॥ ६७ ॥

अथैकत्वभावनां श्लोकद्वयेनाह—

एक उत्पद्यते जन्तुरेक एव विपद्यते । कर्माण्यनुभवत्येकः प्रचितानि भवान्तरे ॥ ६८ ॥

एकोऽसहाय उत्पद्यते शरीरसम्बन्धमनुभवति जन्तुः प्राणी, विपद्यते शरीरेण वियुज्यते, कर्माणि ज्ञानावरणीयादीनि भवान्तरे पूर्वजन्मनि प्रचितानि कृतानि अनुभवति वेदयते, भवान्तरग्रहणमुपलक्षणम्, इहजन्मकृतानामप्यनुभवात्, यदाहुर्भगवन्तः,—'परलोअकडा कम्मा इहलोए वेइज्जंति, इहलोअकडा कम्मा इहलोए वेइज्जंति ॥ ६८ ॥ तथा—

अन्यैस्तेनार्जितं वित्तं भूयः संभूय भुज्यते । स त्वेको नरकक्रोडे क्लिश्यते निजकर्मभिः ॥६९॥

तेनैकेन जन्तुनाऽर्जितं महारम्भपरिग्रहादिनोपार्जितं वित्तमन्यैः सम्बन्धिबन्धुभृत्यप्रभृतिभिः सम्भूय मिलित्वा भूयः पुनः पुनर्भुज्यते वित्तस्य विनियोगः क्रियते । स तु वित्तस्यार्जयिता एको मोक्तृलोकविरहितो नरकक्रोडे नरकोत्सङ्गे क्लिश्यते बाध्यते निजकर्मभिर्धनार्जनकालप्रचितैः पापकर्मभिः ॥ अत्रान्तरश्लोकाः—

दुःखदावाग्निभीष्मेऽस्मिन् वितते भवकानने । बम्भ्रमीत्येक एवासौ जन्तुः कर्मवशीकृतः ॥ १ ॥ ननु जीवस्य

---

(१) परलोककृतानि कर्माणि इहलोके वेद्यन्ते । इहलोके कृतानि कर्माणि इहलोके वेद्यन्ते ॥

मा भूवन् सहाया बान्धवादयः। शरीरं तु सहायोऽस्तु सुखदुःखानुभूतिदम् ॥ २ ॥ नायाति पूर्वभवतो न याति च भवान्तरम्। ततः कायः सहायः स्यात् संफेटमिलितः कथम्?॥ ३ ॥ धर्माधर्मौ समासन्नौ सहायाविति चेद् मतिः। नैषा सत्या न मोक्षेऽस्ति धर्माधर्मसहायता ॥ ४ ॥ तस्मादेको बम्भ्रमीति भवे कुर्वन् शुभाशुभे। जन्तुर्वेदयते चैतदनुरूपे शुभाशुभे ॥ ५ ॥ एक एव समादत्ते मोक्षश्रियमनुत्तराम्। सर्वसम्बन्धिविरहाद् द्वितीयस्य न सम्भवः ॥ ६ ॥ यद् दुःखं भवसम्बन्धि यत् सुखं मोक्षसम्भवम्। एक एवोपभुङ्क्ते तद् न सहायोऽस्ति कश्चन ॥ ७ ॥ यथैवैकस्तरन् सिन्धुं पारं व्रजति तत्क्षणात्। न तु हृत्पाणिपादादिसंयोजितपरिग्रहः ॥ ८ ॥ तथैव धनदेहादिपरिग्रहपराङ्मुखः। स्वस्थ एको भवाम्भोधेः पारमासादयत्यसौ ॥ ९ ॥ एकः पापात् पतति नरके याति पुण्यात् स्वरेकः, पुण्यापुण्यप्रचयविगमाद् मोक्षमेकः प्रयाति। एवं ज्ञात्वा चिरमवितथां निर्ममत्वस्य हेतो-रेकत्वाख्यामवहितधियो भावनां भावयन्तु ॥ १० ॥

॥ एकत्वभावना ४ ॥ ६९ ॥

अथान्यत्वभावनामाह—

**यत्रान्यत्वं शरीरस्य वैसदृश्याच्छरीरिणः। धनबन्धुसहायानां तत्रान्यत्वं न दुर्वचम् ॥७०॥**

यत्रेति प्रक्रमार्थमव्ययम्। अन्यत्वं भेदः शरीरस्य कायस्य। कस्माद् भेदः? शरीरिण आत्मनः सकाशात्। कुतो हेतोः?। वैसदृश्यात्। प्रतीतमेव हि वैसदृश्यं शरीरशरीरिणोर्मूर्तत्वामूर्तत्वाभ्याम्, अचेतनत्वचेतनत्वाभ्याम्, अनित्यत्वनित्यत्वाभ्याम्, भवान्तरेष्वगमनगमनाभ्यां च। तत्रेति प्रक्रमोपसंहारे, शरीरिणः सकाशादन्यत्वं न

दुर्वेच न दुर्भेद्यम् । केषाम्? धनबन्धुसहायानां धनानां धनधान्यादिभेदैर्नैकविधानाम्, बन्धूनां मातृपितृपुत्रादीनाम्, सहायानां सुहृत्-सेवक-पत्न्यादीनाम् । अयमर्थः—यो जीवात् शरीरस्योपपत्त्या भेद ग्राहित स धनादिभ्यो भेद ग्राहयितु सुशक एवेति ॥ ७० ॥

न केवलमन्यत्वभावनाया निर्ममत्वमेव फलम्, किन्तु तत्फलान्तरमप्यस्ति, तदेवाह—

**यो देहधनबन्धुभ्यो भिन्नमात्मानमीक्षते। क्व शोकशङ्कुना तस्य हन्तातङ्क: प्रतन्यते ॥७१॥**

य प्राणी देहाद् धनाद् बन्धुभ्यश्च भिन्नमात्मान स्वमीक्षते विवेकालोकेन, तस्य भेदप्रेक्षितु, क्व नैवेत्यर्थ', शोकशङ्कुना शोकशल्येन, हन्तेति हर्षार्थमव्ययम्, आतङ्क: पीडा प्रतन्यते क्रियते । अत्रान्तरश्लोकाः—

इहान्यत्व भवेद् भेदः स वैलक्षण्यलक्षणः । आत्मदेहादिभावाना साक्षादेव प्रतीयते ॥ १ ॥ देहाद्या इन्द्रियग्राह्या आत्मानुभवगोचर । तदेतेषामनन्यत्व कथ नामोपपद्यते ॥ २ ॥ आत्मदेहादिभावानां यद्यन्यत्व स्फुट ननु । ततो देहप्रहारादौ कथमात्मा प्रपीड्यते ॥ ३ ॥ सत्य येषां शरीरादौ भेदबुद्धिर्न विद्यते । तेषां देहप्रहारा दावात्मपीडोपजायते ॥ ४ ॥ ये तु देहात्मनोर्भेद सम्यगेव प्रपेदिरे । तेषां देहप्रहारादावपि नात्मा प्रपीड्यते ॥ ५ ॥ तथाहि लोहचक्रेण वैरेयीपचनेन च । देहबाधेऽप्यबाधात्मा तद्भेदज्ञोऽन्तिमो जिनः ॥ ६ ॥ नमिर्धनात्मभेदज्ञ' पूर्दाहेऽपीन्द्रमब्रवीत् । दाहेऽपि मिथिलापुर्यां न मे किमपि दह्यते ॥ ७ ॥ भेद विद्वान् न पीड्येत पितृदुःखेऽप्युपस्थिते । आत्मीयत्वाभिमानेन भृत्यदु खेऽपि मुह्यति ॥ ८ ॥ अस्वत्वेन गृहीतः सन् पुत्रोऽपि पर एव

हि। स्वकीयत्वेन भृत्योऽपि स्वपुत्रादतिरिच्यते ॥ ९ ॥ ममेति मतिमाश्रिताः परतरेऽपि वस्तुन्यहो!, निबध्य दधतेतरां स्वमिह कोशकारा इव। विविच्य तदिदं मुहुर्वितथभावनावर्जनाद्, भजेत ममताच्छिदे सततमन्यत्व-भावनाम् ॥ १० ॥

॥ अन्यत्वभावना ५ ॥ ७१ ॥

अथाशुचित्वभावनामाह—

**रसासृग्मांसमेदोऽस्थिमज्जाशुक्रान्त्रवर्चसाम्। अशुचीनां पदं कायः शुचित्वं तस्य तत् कुतः? ॥७२॥**

रसो भुक्तपीतान्नपानपरिणामजो निस्यन्दः, असृग् रक्तं रससम्भवो धातुः मांसं पिशितमसृग्भवम्, मेदो वसा मांससम्भवम्, अस्थि कीकसं मेदसम्भवम्, मज्जासारोऽस्थिसम्भवः, शुक्रं रेतो मज्जासम्भवम्, अन्त्रं पुरीतत्, वर्चो विष्ठा, एतेषामशुचिद्रव्याणां पदं स्थानं कायः। तत् तस्मात् तस्य कायस्य कथं शुचित्वम्? न कथञ्चिदित्यर्थः ॥७२॥

ये त्वत्रापि शुचित्वमानिनस्तानुपालभते—

**नवस्रोतःस्रवद्विस्ररसनिःस्यन्दपिच्छिले। देहेऽपि शौचसङ्कल्पो महन्मोहविजृम्भितम् ॥७३॥**

नवभ्यो नेत्रश्रोत्रनासामुखपायूपस्थेभ्यः स्रोतोभ्यो निर्गमद्वारेभ्यः स्रवन् चरन् विस्रामामगन्धिर्योऽसौ रसस्तस्य निःस्यन्दो निर्यासस्तेन पिच्छिलो यः कायस्तस्मिन्नपि शौचसङ्कल्पः शुचित्वाभिमानो यः स महद् गुरुतरं मोहस्य विजृम्भितम्। अत्रान्तरश्लोकाः—

शुक्रशोणितसम्भूतो मलनि स्यन्दवर्धित' । गर्भे जरायुसञ्छन्नः शुचिः काय कथ भवेत् ? ॥ १ ॥ मातृज-ग्धान्नपानोत्थरस नाडीक्रमागतम् । पाय पाय विवृद्ध. सन् शौच मन्येत कस्तनौ ? ॥ २ ॥ दोषधातुमलाकीर्णं कृमिगण्डूपदास्पदम् । रोगभोगिगणैर्जग्ध शरीरं को वदेत् शुचि ॥ ३ ॥ सुस्वादून्यन्नपानानि क्षीरेक्षुविकृती अपि। भुक्तानि यत्र विष्टायै तच्छरीर कथ शुचि ? ॥ ४ ॥ विलेपनार्थमासक्तः सुगन्धिर्यक्षकर्दम' । मलीभवति यत्राशु क शौच तत्र वर्ष्मणि ? ॥ ५ ॥ जग्ध्वा सुगन्धि ताम्बूल सुप्तो निश्युत्थितः प्रगे । जुगुप्सते वक्त्रगन्ध यत्र तत् किं वपु' शुचि ? ॥ ६ ॥ स्वत' सुगन्धयो गन्धधूपपुष्पस्रगादयः । यत्सङ्गाद् यान्ति दौर्गन्ध्य सोऽपि कायः शुचीयते ? ॥७॥ अभ्यक्तोऽपि विलिप्तोऽपि धौतोऽपि घटकोटिभिः । न याति शुचितां कायः शुण्डाघट इवाशुचि' ॥८॥ मृज्जलानलवाताशुस्नानै शौच वदन्ति ये । गतानुगतिकैस्तैस्तु विहित तुपकण्डनम् ॥९॥ शरीरकस्यैवमशौ-चभावना, मदाभिमानस्मरसाददायिनीम्। विभावयन् निर्ममतामहाभर, वोढु दृढ. स्याद् बहुनोदितेन किम् ? ॥१०॥ अशौचभावना ॥ ६ ॥ ७३ ॥ अथाश्रवभावनामाह—

मनोवाक्कायकर्माणि योगा' कर्म शुभाशुभम् । यदाश्रवन्ति जन्तूनामाश्रवास्तेन कीर्तिता ॥७४॥

मनश्च वाक् च कायश्च मनोवाक्कायास्तेषा कर्माणि व्यापारा योगशब्देनोच्यन्ते, तत्रात्मना शरीरवता सर्वप्र-देशैर्गृहीता मनोयोग्या पुद्गलाः शुभादिमननार्थं करणभावमालम्बन्ते, तत्सम्बन्धादात्मन' पराक्रमविशेषो मनोयोग, स च पञ्चेन्द्रियाणा समनस्कानां भवति । तथा आत्मना शरीरवता वाग्योग्यपुद्गला गृहीता विसृ-ज्यमाना वाक्त्वेन करणतामापद्यन्ते, तेन वाक्करणेन सम्बन्धादात्मनो भाषणशक्तिर्वाग्योगः । सा च द्वीन्द्रिया-

दीनाम् । कायः शरीरमात्मनो निवासस्तद्योगाज्जीवस्य वीर्यपरिणामः काययोगः । ते चामी त्रयोऽपि मनोवाक्-कायसम्बन्धादग्निसम्बन्धादिष्टकादे रक्ततेवात्मनो वीर्यपरिणतिविशेषा योगा इत्युच्यन्ते, यदाह;—

योगो वीरिश्रं थामो उच्छाह परिक्कमो तहा चेट्ठा । सत्ती सामत्थं चिश्र जोगस्स हवंति पज्जाया ॥ १ ॥

एते च स्थविरस्य दुर्बलस्य वा आलम्बनयष्ट्यादिवज्जीवस्योपग्राहकाः । तत्र मनोयोग्यपुद्गलात्मप्रदेशपरिणामो मनोयोगः, भाषायोग्यपुद्गलात्मप्रदेशपरिणामो वाग्योगः, काययोग्यपुद्गलात्मप्रदेशपरिणामो गमनादिक्रियाहेतुः काययोगः । एते योगाः, यस्मात् शुभं सद्वेद्यादि, अशुभमसद्वेद्यादि कर्माश्रवन्ति प्रस्नुवते, तेन कारणेनाश्रवा इति कीर्तिताः, आश्रूयते कर्मैभिरित्याश्रवाः । एतेषां च करणभूतानामपि कर्तृत्वमिहोक्तम्, स्वातन्त्र्यविवक्षणात् । यथा असिश्छिनत्ति इति ॥ ७४ ॥

'योगाः कर्म शुभाशुभमाश्रवन्ति' इत्युक्तम्, कार्याणां च कारणानुकारित्वं दृष्टम्, इति शुभानां शुभकर्म-हेतुत्वम्, अशुभानामशुभकर्महेतुत्वं च विवेकेन दर्शयति—

**मैत्र्यादिवासितं चेतः कर्म सूते शुभात्मकम् । कषायविषयाक्रान्तं वितनोत्यशुभं पुनः ॥७५॥**

मैत्रीमुदिताकरुणोपेक्षालक्षणाभिश्चतसृभिर्भावनाभिर्वासितं भावितं चेतो मनः कर्तृ, शुभात्मकं पुण्यात्मकं कर्म सूते । तच्च सद्वेद्य–सम्यक्त्व–हास्य–रति–पुरुषवेद–शुभायु–नाम–गोत्रलक्षणम् । तदेव मनः, कषायाः

(१) योगो वीर्यं स्थामोत्साहः पराक्रमस्तथा चेष्टा । शक्तिः सामर्थ्यमेव योगस्य भवन्ति पर्यायाः ॥ १ ॥

क्रोधादयो, विषिण्वन्ति बध्नन्ति ससारिण काम्यमाना. सन्त इन्द्रियार्था' स्पर्शादयो विषयाः, कषायाश्च विषयाश्च तैराक्रान्त वशीकृत वितनोति करोत्यशुभमसद्वेद्यादि कर्म ॥ ७५ ॥ तथा—

शुभार्जनाय निर्मिथ्य श्रुतज्ञानाश्रित वच । विपरीत पुनर्ज्ञेयमशुभार्जनहेतवे ॥ ७६ ॥

निर्मिथ्यमवितथम्, तच्च जैनमेव वचन भवतीत्याह–श्रुतज्ञानाश्रित वच., श्रुतज्ञान द्वादशाङ्ग गणिपिटक तदाश्रित तदविरोधेन वर्तमान वचो वाग्योगः स शुभस्य कर्मणोऽर्जनाय । तदेव वचो विपरीत मिथ्या श्रुतज्ञान-विरोधि चाशुभस्य कर्मणोऽर्जनाय ॥ ७६ ॥ तथा—

शरीरेण सुगुप्तेन शरीरी चिनुते शुभम् । सततारम्भिणा जन्तुघातकेनाशुभ पुन ॥ ७७ ॥

शरीरेण कायेन सुगुप्तेनासच्चेष्टारहितेन कायोत्सर्गाद्यवस्थायां निश्चेष्टेन शरीरी जन्तुश्चिनुते करोति शुभ सद्वेद्यादि कर्म। सततारम्भिणा पुनर्महारम्भिणा अत एव जन्तुघातकेन प्राणिव्यापादकेनाशुभ कर्मासद्वेद्यादि चिनोति। इति शुभाशुभयोगमूलत्वेन शुभाशुभकर्मणा जन्मप्रतिपादनाद् न कार्यकारणभावविरोध' ॥ ७७ ॥

शुभयोगानां शुभफलहेतुत्व प्रसङ्गादुक्तम् । भावनाप्रकरणे त्वशुभयोगानामशुभफलहेतुत्व वैराग्योत्पादनाय प्रतिपादनीयम्, इत्युक्तानुक्तानशुभहेतून् सगृह्णाति—

कषाया विषया योगा प्रमादाविरती तथा । मिथ्यात्वमार्तरौद्रे चेत्यशुभ प्रति हेतव ॥७८॥

कषाया· क्रोध मान-माया लोभलक्षणाः, नोकषायाश्च कषायसहचारिता हास्यरत्यरतिभयशोकजुगुप्सापुस्त्री-

नपुंसकवेदलक्षणा नव कषायशब्देन गृह्यन्ते, विषयाः काम्यमानाः स्पर्शादयः, योगा मनोवाक्कायकर्मलक्षणाः, प्रमादोऽज्ञान-संशय-विपर्यय-राग-द्वेष-स्मृतिभ्रंश-धर्मानादर-योगदुष्प्रणिधानभेदैरष्टधा, अविरतिर्नियमाभावः, मिथ्यात्वं मिथ्यादर्शनम्, आर्त-रौद्रे ध्यानभेदावुक्तपूर्वौ, इत्येतेऽशुभं कर्म प्रति हेतवः। नन्वेते बन्धं प्रति हेतुत्वेनोक्ताः, यद् वाचकमुख्याः—"मिथ्यादर्शनाविरतिप्रमादकषाययोगा बन्धहेतवः" इति. तत् किमाश्रवभावनायां बन्धहेतूनामेतेषामभिधानम्? सत्यम्, आश्रवभावनेव बन्धभावनापि न महद्भिर्भावनात्वेनोक्ता, आश्रवभावनयैव गतार्थत्वात्। आश्रवेण ह्युपात्ताः कर्मपुद्गला आत्मना सम्बध्यमाना बन्ध इत्यभिधीयते, यदाह—सकषायत्वाज्जीवः कर्मणो योग्यान् पुद्गलानादत्ते स बन्धः इति। ततश्च बन्धाश्रवयोर्भेदो न विवक्षितः। ननु कर्मपुद्गलैः सह क्षीरनीरन्यायेनात्मनः सम्बन्धो बन्ध उच्यते, तत् कथमाश्रव एव बन्धः? युक्तमेतत्, तथाप्याश्रवेणानुपात्तानां कर्मपुद्गलानां कथं बन्धः स्यात्?। इत्यतोऽपि कर्मपुद्गलादानहेतावाश्रवे बन्धहेतूनामभिधानमदुष्टम्। ननु तथापि बन्धहेतूनां पाठो निरर्थकः। नैवम्, बन्धाश्रवयोरेकत्वेनोक्तत्वात्, आश्रवहेतूनामेवायं पाठ इति सर्वमवदातम्। अत्रान्तरश्लोकाः—

यः कर्मपुद्गलादानहेतुः प्रोक्तः स आश्रवः। कर्माणि चाष्टधा ज्ञानावरणीयादिभेदतः॥ १॥ ज्ञानदर्शनयोस्तद्वत् तद्धेतूनां च ये किल। विघ्ननिह्नवपैशून्याशातनाघातमत्सराः ॥२॥ ते ज्ञानदर्शनावारकर्महेतव आश्रवाः। देवपूजा गुरूपास्तिः पात्रदानं दया क्षमा॥ ३॥ सरागसंयमो देशसंयमोऽकामनिर्जरा। शौचं बालतपश्चेति सद्वेद्यस्य स्युराश्रवाः॥ ४॥ दुःखशोकवधास्तापाक्रन्दने परिदेवनम्। स्वान्योभयस्थाः स्युरसद्वेद्यस्यामी इहाश्रवाः

॥ ५ ॥ वीतरागे श्रुते सघे धर्मे सर्वसुरेषु च । अवर्णवादिता तीव्रमिथ्यात्वपरिणामिता ॥ ६ ॥ सर्वज्ञसिद्धदेवापह्नवो धार्मिकदूषणम् । उन्मार्गदेशनाऽनर्थाग्रहोऽसयतपूजनम् ॥ ७ ॥ असमीक्षितकारित्व गुर्वादिष्ववमानना । इत्यादयो दृष्टिमोहस्याश्रवा' परिकीर्तिता ॥ ८ ॥ कषायोदयतस्तीव्र परिणामो य आत्मन' । चारित्रमोहनीयस्य स आश्रव उदीरित. ॥ ९ ॥ उत्प्रासन सकन्दर्पोपहासो हासशीलता । बहुप्रलापो दैन्योक्तिर्हास्यस्यामी स्युराश्रवा. ॥ १० ॥ देशादिदर्शनौत्सुक्य चित्रे रमणखेलने । परचित्तावर्जन चेत्याश्रवा. कीर्तिता रते ॥ ११ ॥ असूया पापशीलत्व परेषा रतिनाशनम् । अकुशलप्रोत्साहन चारतेराश्रवा अमी ॥ १२ ॥ स्वय भयपरीणाम परेषामथ भापनम् । त्रासन निर्दयत्व च भय प्रत्याश्रवा अमी ॥ १३ ॥ परशोकाविष्करण स्वशोकोत्पादशोचने । रोदनादिप्रसक्तिश्च शोकस्यैते स्युराश्रवाः ॥ १४ ॥ चतुर्वर्णस्य सङ्घस्य परिवादजुगुप्सने । सदाचारजुगुप्सा च जुगुप्साया. स्युराश्रवाः ॥ १५ ॥ ईर्ष्याविषयगार्द्धे च मृषावादोऽतिवक्रता । परदाररतासक्तिः स्त्रीवेदस्याश्रवा इमे ॥ १६ ॥ स्वदारमात्रसन्तोषोऽनीर्ष्या मन्दकषायता । अवक्राचारशीलत्व पुवेदस्याश्रवा इति ॥ १७ ॥ स्त्रीपुसानङ्गसेवोग्रा' कषायास्तीव्रकामता । पाखण्डस्त्रीव्रतभ्रशः षण्ढवेदाश्रवा अमी ॥ १८ ॥ साधूनां गर्हणा धर्मोन्मुखानां विघ्नकारिता । मधुमासविरतानामविरत्यभिवर्णनम् ॥ १९ ॥ विरताविरताना चान्तरायकरण मुहु । अचारित्रगुणाख्यान तथा चारित्रदूषणम् ॥ २० ॥ कषायनोकषायाणामन्यस्थानामुदीरणम् । चारित्रमोहनीयस्य सामान्येनाश्रवा अमी ॥ २१ ॥ पञ्चेन्द्रियप्राणिवधो बह्वारम्भपरिग्रहौ । निरनुग्रहता मासभोजन स्थिरवैरता ॥ २२ ॥ रौद्रध्यान मिथ्यात्वानन्तानुबन्धिकषायता । कृष्णनीलकापोताश्च लेश्या अनृतभाषणम् ॥ २३ ॥ परद्रव्यापहरण मुहुर्मैथुनसेवनम् ।

अवशेन्द्रियता चेति नारकायुष आश्रवाः ॥२४॥ उन्मार्गदेशना मार्गप्रणाशो मूढचित्तता। आर्तध्यानं सशल्यत्वं मायारम्भपरिग्रहौ ॥ २५ ॥ शीलव्रते सातिचारे नीलकापोतलेश्यता। अप्रत्याख्यानाः कषायास्तिर्यगायुष आश्रवाः ॥२६॥ अल्पौ परिग्रहारम्भौ सहजे मार्दवार्जवे। कापोतपीतलेश्यत्वं धर्मध्यानानुरागिता ॥२७॥ प्रत्याख्यानकषायत्वं परिणामश्च मध्यमः। संविभागविधायित्वं देवतागुरुपूजनम् ॥ २८ ॥ पूर्वालापप्रियालापौ सुखप्रज्ञापनीयता। लोकयात्रासु माध्यस्थ्यं मानुषायुष आश्रवाः ॥२९॥ सरागसंयमो देशसंयमोऽकामनिर्जरा। कल्याणमित्रसम्पर्को धर्मश्रवणशीलता ॥३०॥ पात्रे दानं तपःश्रद्धा रत्नत्रय्या विराधना। मृत्युकाले परीणामो लेश्ययोः पद्मपीतयोः ॥३१॥ बालतपोऽग्नितोयादिसाधनोल्लम्बनानि च। अव्यक्तसामायिकता देवस्यायुष आश्रवाः ॥३२॥ मनोवाक्काय-वक्रत्वं परेषां विप्रतारणम्। मायाप्रयोगो मिथ्यात्वं पैशून्यं चलचित्तता ॥३३॥ सुवर्णादिप्रतिच्छन्दकरणं कूटसा-क्षिता। वर्णगन्धरसस्पर्शाद्यन्यथापादनानि च ॥३४॥ अङ्गोपाङ्गच्यावनानि यन्त्रपञ्जरकर्म्म च। कूटमानतुलाकर्मा-न्यनिन्दात्मप्रशंसनम् ॥ ३५ ॥ हिंसानृतस्तेयाब्रह्ममहारम्भपरिग्रहाः। परुषासभ्यवचनं शुचिवेषादिना मदः ॥३६॥ मौखर्याक्रोशौ सौभाग्योपघातः कार्मणक्रिया। परकौतूहलोत्पादः परिहासविडम्बना ॥ ३७ ॥ वेश्यादीनामलङ्का-रदानं दावाग्निदीपनम्। देवादिव्याजाद् गन्धादिचौर्यं तीव्रकषायता ॥ ३८ ॥ चैत्यप्रतिश्रयारामप्रतिमानां विना-शनम्। अङ्गारादिक्रिया चेत्यशुभस्य नाम्न आश्रवाः ॥ ३९ ॥ एते एवान्यथारूपास्तथा संसारभीरुता। प्रमादहानं सद्भावार्पणं क्षान्त्यादयोऽपि च ॥ ४० ॥ दर्शने धार्मिकाणां च संभ्रम स्वागतक्रिया। आश्रवाः शुभनाम्नोऽथ तीर्थकृन्नाम्न आश्रवाः ॥ ४१ ॥ भक्तिरर्हत्सु सिद्धेषु गुरुषु स्थविरेषु च। बहुश्रुतेषु गच्छे च श्रुतज्ञाने तपस्विषु

॥ ४२ ॥ आवश्यके व्रतशीलेष्वप्रमादो विनीतता । ज्ञानाभ्यासस्तपस्त्यागौ मुहुर्ध्यानं प्रभावना ॥ ४३ ॥ सघे समाधिजननं वैयावृत्त्यं च साधुषु । अपूर्वज्ञानग्रहणं विशुद्धिर्दर्शनस्य च ॥ ४४ ॥ आद्यन्ततीर्थनाथाभ्यामेते विंशतिराश्रवाः । एको द्वौ वा त्रय सर्वे चान्यैः स्पृष्टा जिनेश्वरैः ॥ ४५ ॥ परस्य निन्दावज्ञोपहासा सद्गुण लोपनम् । सदसद्दोषकथनमात्मनस्तु प्रशसनम् ॥ ४६ ॥ सदसद्गुणशसा च सद्दोषाच्छादनं तथा । जात्यादिभिर्मदश्चेति नीचैर्गोत्राश्रवा अमी ॥ ४७ ॥ नीचैर्गोत्राश्रवविपर्यासो विगतगर्वता । वाक्कायचित्तैर्विनय उच्चैर्गोत्राश्रवा अमी ॥ ४८ ॥ दाने लाभे च वीर्ये च तथा भोगोपभोगयोः । सव्याजाव्याजविघ्नोऽन्तरायकर्मण आश्रवाः ॥४९॥ प्रस्तावतः खलु शुभाश्रव एष उक्तो, वैराग्यकारणमसौ न तु देहभाजाम् । ज्ञात्वा तदेवमशुभाश्रव एव भाव्यो भव्यैर्जनैः सपदि निर्ममतानिमित्तम् ॥ ५० ॥ आश्रवभावना ॥ ७ ॥ ७८ ॥

अथ सवरभावनामाह—

सर्वेषामाश्रवाणां तु निरोधः सवरः स्मृतः । स पुनर्भिद्यते द्वेधा द्रव्यभावविभेदतः ॥७९॥

सर्वेषां पूर्वोक्तानामाश्रवाणां निरुध्यन्तेऽनेनेति निरोधः सवर उक्तः सव्रियतेऽनेनेति कृत्वा । स चायोगिकेवलिनामेव । इदं च सर्वसवरस्य स्वरूपम् । एकद्वित्र्याद्याश्रवनिरोधस्तु सामर्थ्याद् देशसवरः । स चायोगिकेवलिनः प्राग्गुणस्थानकेषु । सर्वसवरो देशसवरश्च प्रत्येकं द्रव्यभावभेदेन द्विविधः ॥ ७९ ॥

द्वैविध्यमेवाह—

**यः कर्मपुद्गलादानच्छेदः स द्रव्यसंवरः । भवहेतुक्रियात्यागः स पुनर्भावसंवरः ॥ ८० ॥**

कर्मपुद्गलानामाश्रवद्वारेणादानं प्रवेशनं तस्य यश्छिद्यतेऽनेनेति च्छेदः स द्रव्याणां संवरो द्रव्यसंवरः । भावसंवरस्तु संसारकारणभूतायाः क्रियाया आत्मव्यापाररूपायास्त्याग इति ॥ ८० ॥

इदानीं कषाया विषया योगा इत्यादिनाऽभिहितानामशुभकर्महेतूनां प्रतिपक्षभूतानुपायान् स्तौति—

**येन येन ह्युपायेन रुध्यते यो य आश्रवः । तस्य तस्य निरोधाय स स योज्यो मनीषिभिः ॥८१॥**

स्पष्टः ॥ ८१ ॥ उपायानाह—

**क्षमया मृदुभावेन ऋजुत्वेनाऽप्यनीहया । क्रोधं मानं तथा मायां लोभं रुन्ध्याद् यथाक्रमम् ॥८२॥**

क्षमया प्रतिपक्षभूतया क्रोधम्, मृदुभावेन मानम्, ऋजुत्वेन मायाम्, अनीहया लोभं निरुन्ध्यात् संवरार्थं कृतोद्यम इति चतुर्थश्लोकपदेन योगः ॥ ८२ ॥

कषायाणां प्रतिपक्षतः क्षयमुक्त्वा विषयाणामाह—

**असंयमकृतोत्सेकान् विषयान् विषसंनिभान् । निराकुर्यादखण्डेन संयमेन महामतिः ॥ ८३ ॥**

असंयमेनेन्द्रियोन्मादेन कृत उत्सेकः स्वकार्यजननं प्रति सामर्थ्यं येषां तान् विषयान् स्पर्शादीन्, किंविशिष्टान् ? विषसंनिभान् आपातरम्यत्वेन परिणामदारुणत्वेन च विषतुल्यान्, निराकुर्याद् निवारयेत् । केन ? संयमेनेन्द्रियजयेन । किंविशिष्टेन ? अखण्डेनाप्रतिहतेन ॥ ८३ ॥

इदानीं योगप्रमादाविरतीनां प्रतिपक्षानाह—

तिसृभिर्गुप्तिभिर्योगान् प्रमादं चाप्रमादतः । सावद्ययोगहानेनाविरतिं चापि साधयेत् ॥८४॥

गुप्तिभिर्मनोवाक्कायरक्षणलक्षणाभिः, तिसृभिरिति तासां संख्यावचनम्, योगान् मनोवाक्कायव्यापारलक्षणान्, प्रमादं मद्यविषयकषायनिद्राविकथालक्षणं पञ्चविधम्, अज्ञानसंशयविपर्ययरागद्वेषस्मृतिभ्रंशधर्मानादरयोगदुष्प्रणिधानरूपतयाऽष्टविधं वाऽप्रमादेन तत्प्रतिपक्षभूतेन साधयेत्, सावद्या ये योगा व्यापारास्तेषां हानेन त्यागेनाविरतिमनियमं साधयेत् ॥ ८४ ॥

इदानीं मिथ्यात्वार्तरौद्रध्यानानां प्रतिपक्षानाह—

सद्दर्शनेन मिथ्यात्वं शुभस्थैर्येण चेतसः । विजयेतार्तरौद्रे च संवरार्थं कृतोद्यमः ॥ ८५ ॥

सद्दर्शनेन सम्यग्दर्शनेन मिथ्यात्वं मिथ्यादर्शनं विजयेत, शुभं धर्मशुक्लध्यानरूपं यच्चेतसः स्थैर्यं तेनार्तरौद्रध्याने विजयेत, संवरार्थं संवरनिमित्तं कृतोद्यमः प्रयत्नवान् योगी । अत्रान्तरश्लोकाः—

यथा चतुष्पथस्थस्य बहुद्वारस्य वेश्मनः । अनावृतेषु द्वारेषु रजः प्रविशति ध्रुवम् ॥ १ ॥ प्रविष्टं स्नेहयोगाच्च तन्मयत्वेन बध्यते । न विशेन्न च बध्येत द्वारेषु स्थगितेषु तु ॥ २ ॥ यथा वा सरसि क्वापि सर्वैर्द्वारैर्विशेज्जलम् । तेषु तु प्रतिरुद्धेषु प्रविशेद् न मनागपि ॥ ३ ॥ यथा वा यानपात्रस्य मध्ये रन्ध्रैर्विशेज्जलम् । कृते रन्ध्रपिधाने तु न स्तोकमपि तद् विशेत् ॥ ४ ॥ योगादिष्वाश्रवद्वारेष्वेवं रुद्धेषु सर्वतः । कर्मद्रव्यप्रवेशो न जीवे

संवरशालिनि ॥ ५ ॥ संवरादाश्रवद्वारनिरोधः संवरः पुनः। क्षान्त्यादिभेदाद् बहुधा तथैव प्रतिपादितः ॥ ६ ॥ गुणस्थानेषु यो यः स्यात् संवरः स स उच्यते। मिथ्यात्वानुदयादुत्तरेषु मिथ्यात्वसंवरः ॥ ७ ॥ तथा देशविरत्यादौ स्यादविरतिसंवरः। अप्रमत्तसंयतादौ प्रमादसंवरो मतः ॥ ८ ॥ प्रशान्तक्षीणमोहादौ भवेत् कषायसंवरः। अयोगाख्यकेवलिनि सम्पूर्णो योगसंवरः ॥ ९ ॥ एवमाश्रवनिरोधकारणं संवरः प्रकटितः प्रपञ्चतः। भावनागणशिरोमणिस्त्वयं, भावनीय इह भव्यजन्तुभिः ॥ १० ॥ संवरभावना ॥ ८ ॥ ८५ ॥

अथ निर्जराभावनामाह—

**संसारबीजभूतानां कर्मणां जरणादिह। निर्जरा सा स्मृता द्वेधा सकामा कामवर्जिता ॥८६॥**

जन्तूनां चतुर्गतिभ्रमणरूपस्य संसारस्य बीजभूतानां कारणभूतानां कर्मणां जरणादात्मप्रदेशेभ्योऽनुभूतरसकर्मपुद्गलपरिशाटनादिह प्रवचने निर्जरोच्यते। सा निर्जरा द्वेधा—सह कामेन 'निर्जरा मे भूयात्' इत्यभिलाषेण युक्ता सकामा, न पुनरिहलोकपरलोकफलादिकामेन युक्ता, तस्य प्रतिषिद्धत्वात्, यदाहुः ;"—नो इहलोगट्ठयाए तवमहिट्ठिज्जा, नो परलोगट्ठयाए तवमहिट्ठिज्जा, नो कित्तिवण्णसद्दसिलोगट्ठयाए तवमहिट्ठिज्जा नन्नत्थ निज्जरट्ठयाए तवमहिट्ठिज्जा" इत्येका निर्जरा। द्वितीया तु कामवर्जिता कामेन पूर्वोक्तेन वर्जिता। अत्र चकारमन्त-

(१) नो इहलोकार्थं तपोऽधितिष्ठेत्, नो परलोकार्थं तपोऽधितिष्ठेत्। नो कीर्त्तिवर्णशब्दश्लोकार्थं तपोऽधितिष्ठेत्, नान्यत्र निर्जरार्थात् तपोऽधितिष्ठेत्।

रेखापि समुच्चयो गम्यते, इति चकारो नोक्त', यथा—

अहरहर्नयमानो गामश्च पुरुष पशुम्। वैवस्वतो न तृप्यति सुराया इव दुर्मदी ॥ १ ॥ ८६ ॥

उभयीमपि निर्जरा व्याचष्टे—

**ज्ञेया सकामा यमिनामकामा त्वन्यदेहिनाम्। कर्मणां फलवत्पाको यदुपायात्स्वतोऽपि हि॥८७॥**

सकामा निर्जराऽभिलाषवर्ती यमिनां यतीनां विज्ञेया। ते हि कर्मक्षयार्थं तपस्तप्यन्ते। अकामा तु कर्मक्षय लक्षणफलनिरपेक्षा निर्जराऽन्यदेहिना यतिव्यतिरिक्तानामेकेन्द्रियादीनां प्राणिनाम्, तथाहि–एकेन्द्रिया पृथिव्यादयो वनस्पतिपर्यन्ता' शीतोष्णवर्षोजलाग्निशस्त्राद्यभिघातच्छेदभेदादिनाऽसद्वेद्य कर्मानुभूय नीरस कर्म स्वदेशेभ्य परिशाटयन्ति। विकलेन्द्रियाश्च क्षुत्पिपासाशीतोष्णादिभिः, पञ्चेन्द्रियतिर्यञ्चश्च छेदभेददाहशस्त्रादिभि', नारकाश्च त्रिविधया वेदनया, मनुष्याश्च क्षुत्–पिपासा–व्याधि–दारिद्र्यादिना, देवाश्च पराभियोग–किल्विषत्वादिनाऽसद्वेद्य कर्मानुभूय स्वप्रदेशेभ्यः परिशाटयन्ति। इत्येषामकामा निर्जरा। ननु सकामत्वाकामत्वस्वरूपेण निर्जराया द्वैविध्य कुत्र दृष्टम्? इति प्रश्ने स्पष्ट दृष्टान्तमाह–कर्मणामसद्वेद्यादीनां फलवत् फलानामिव यद् यस्मात् पाक उपायाद् निवातप्रदेशपलालाच्छादनादिरूपात् स्वतोऽपि वा वृक्षस्थानामेव। तदेव यथा फलाना पाकस्य स्वत उपायतश्च द्वैविध्य दृश्यते तद्वत् कर्मणामपि, इत्युक्तम्–सकामा कामवर्जिता च निर्जरा इति। ननु फलपाकस्य द्वैविध्ये कर्मणा पाकस्य किमायातम्? नैवम्, पाकस्य निर्जरारूपत्वात्। ततो यथा फलपाको द्वेधा भवति तथा कर्मनिर्जरापि ॥८७॥

अथ सकामनिर्जराया हेतुं स्पष्टदृष्टान्तेनाह—

**सदोषमपि दीप्तेन सुवर्णं वह्निना यथा । तपोऽग्निना तप्यमानस्तथा जीवो विशुध्यति ॥८८॥**

सदोषमपि किट्टिकादिदोषयुक्तमपि सुवर्णं दीप्तेन वह्निना तप्यमानं यथा विशुध्यति तथा जीवोऽप्यसद्वेद्यादिकर्मदोषयुक्तस्तपोऽग्निना तप्यमानो विशुध्यति। तपस्तु तप्यन्ते रसादिधातवः कर्माणि चानेनेत्यन्वयात्, यदाह—

रसरुधिरमांसमेदोऽस्थिमज्जाशुक्राण्यनेन तप्यन्ते । कर्माणि चाशुभानीत्यतस्तपो नाम नैरुक्तम् ॥ १ ॥

तच्च निर्जराहेतुः, यदाह;—

यद्वद् विशोषणादुपचितोऽपि यत्नेन जीर्यते दोषः । तद्वत् कर्मोपचितं निर्जरयति संवृतस्तपसा ॥ १ ॥ ८८ ॥

तच्च बाह्याभ्यन्तरभेदेन द्विविधम् तत्र बाह्यं तपस्तावद् भेदेनाह—

**अनशनमौनोदर्यं वृत्तेः संक्षेपणं तथा । रसत्यागस्तनुक्लेशो लीनतेति बहिस्तपः ॥ ८९ ॥**

अशनमाहारस्तत्परित्यागोऽनशनम् । तद् द्विधा–इत्वरं यावज्जीविकं च । इत्वरं नमस्कारसहितादि श्रीमन्महावीरतीर्थे षण्मासपर्यन्तम्, श्रीनाभेयतीर्थे तु संवत्सरपर्यन्तम्, मध्यमतीर्थकरतीर्थेषु त्वष्टौ मासान् यावत् । यावज्जीविकं तु पादपोपगमनेङ्गिनीभक्तप्रत्याख्यानभेदात् त्रिविधम् । तत्र पादपोपगमनं द्विधा–सव्याघातमव्याघातं च । तत्र सतोऽप्यायुषः समुपजातव्याधिविधुरेणोत्पन्नमहावेदनेन वा देहिना यदुत्क्रान्तिः क्रियते तत् सव्याघातम् । निर्व्याघातं तु—

निप्फाइआ य सीसा गच्छो परिपालिओ महाभागो । अब्भुज्जिओ विहारो अहवा अब्भुज्जय मरण ॥ १ ॥

इति दशावय'परिणामे मति त्रस-स्थावरविरहिते स्थण्डिले पादपवद् निश्चेष्टस्य येन तेन सस्थानेन प्रशस्त-ध्यानव्यापृतान्त.करणस्य प्राणोत्क्रान्ति यावदवस्थितिरिति । तदेतद् द्विविधमपि पादपोपगमनम् । इङ्गिनी श्रुत-विहित क्रियाविशेषस्तद्विशिष्टमनशनमिङ्गिनी । अस्य प्रतिपत्ता तेनैव क्रमेणायुष परिहाणिमवबुध्य तथाविध एव स्थण्डिले एकाकी कृतचतुर्विधाहारप्रत्याख्यानश्छायात उष्णमुष्णाच्छाया सक्रामन् सचेष्ट' सम्यग्ध्यानपरा-यण' प्राणान् जहाति । इत्येतदिङ्गिनीरूपमनशनम् । यस्तु गच्छमध्यवर्ती समाश्रितमृदुसस्तारक' समुत्सृष्टशरीरो-पकरणममत्वस्त्रिविध चतुर्विध वाऽऽहार प्रत्याख्याय स्वयमेवोद्ग्राहितनमस्कार. समीपवर्तिसाधुदत्तनमस्कारो वोद्वर्त्तन-परिवर्तनादि कुर्वाण' समाधिना काल करोति, तस्य भक्तप्रत्याख्यानमनशनम् ।

अथौनोदर्यम्—ऊनमवममुदर यस्य स ऊनोदरस्तस्य भाव औनोदर्य्यम् । तच्च चतुर्धा-अल्पाहारौनोदर्य्यम्, उपार्धौनोदर्य्यम्, अर्धौनोदर्य्यम्, प्रमाणप्राप्तात् किञ्चिदूनौनोदर्य्यं च । तत्राहार' पुसो द्वात्रिंशत्कवलप्रमाणः । कवलश्चोत्कृष्टापकृष्टौ वर्जयित्वा मध्यम इह गृह्यते । स चाविकृतस्वमुखविवरप्रमाण । तत्र कवलाष्टकाभ्यवहारोऽल्पाहारौनोदर्य्यम् । अर्धस्य समीपमुपार्धं द्वादश कवला, यत कवलचतुष्टयप्रक्षेपात् सम्पूर्णमर्धं भवति, ततो द्वादश कवला उपार्धौनोदर्यम् । षोडश कवला अर्धौनोदर्य्यम् । प्रमाणप्राप्त आहारो द्वात्रिंशत् कवला, स चैका-दिकवलैरूनश्चतुर्विंशतिकवलान् यावत् प्रमाणप्राप्तात् किञ्चिदूनौनोदर्य्यम् । चतुर्विधेऽप्यस्मिन्नेकैककवलहानेन

---

( १ ) निष्पादिताश्च शिष्या गच्छ परिपालितो महाभाग । अभ्युद्यतो विहारोऽथवाऽभ्युद्यत मरणम् ॥ १ ॥

बहूनि स्थानानि जायन्ते । सर्वाणि चामून्यौनोदर्य्यविशेषाः । योषितस्तु अष्टाविंशतिकवलाहारप्रमाणम्, यदाह;—

बत्तीसं खलु कवला आहारो कुच्छिपूरओ भणिओ । पुरिसस्स महिलिआए अट्ठावीसं भवे कवला ॥ १ ॥

तस्याः पुरुषानुसारेण न्यूनाहारादिकं भावनीयम् ।

तथा वर्ततेऽनयेति वृत्तिर्भैक्ष्यम्, तस्याः संक्षेपणं ह्रासः । तच्च दत्तिपरिमाणरूपम् । एकद्वित्र्याद्यगारनियमो रथ्याग्रामार्धग्रामनियमश्च । अत्रैव द्रव्य-क्षेत्र-काल-भावाभिग्रहा अन्तर्भूताः ।

तथा रसानां मतुलोपाद् विशिष्टरसवतां वृष्याणां विकारहेतूनाम्, अत एव विकृतिशब्दवाच्यानां मद्यमांस-मधुनवनीतानां दुग्ध-दधि-घृत-तैल-गुडावग्राह्यादीनां च त्यागो वर्जनं रसत्यागः ।

तथा तनुः कायस्तस्याः क्लेशः शास्त्राविरोधेन बाधनं तनुक्लेशः । ननु तनोरचेतनत्वात् कथं क्लेशसम्भवः ? उच्यते—शरीर-शरीरिणोः क्षीरनीरन्यायेनाभेदादात्मक्लेशे तनुक्लेशस्यापि सम्भवात् तनुक्लेश इत्युक्तम् । स च विशिष्टासनकरणेनाप्रतिकर्मशरीरत्वकेशोल्लुञ्चनादिना चावसेयः । ननु परीषहेभ्यः कोऽस्य विशेषः ? उच्यते—स्वकृतक्लेशानुभवरूपस्तनुक्लेशः, परीषहास्तु स्वपरकृतक्लेशरूपा इति विशेषः ।

तथा लीनता विविक्तशय्यासनता । सा चैकान्तेनाबाधेऽसंसक्ते स्त्रीपशुपण्डकविवर्जिते शून्यागारदेवकुलसभा-पर्वतगुहादीनामन्यतमस्मिन् स्थानेऽवस्थानं, मनोवाक्कायकषायेन्द्रियसंवृतता च । इति षट्प्रकारं बहिस्तपो बाह्यं तपः । बाह्यत्वं च बाह्यद्रव्यापेक्षत्वात्, परप्रत्यक्षत्वात्, कुतीर्थिकैर्गृहस्थैश्च कार्य्यत्वाच्च । अस्मात् षड्विधादपि

---

(१) द्वात्रिंशत् खलु कवला आहारः कुक्षिपूरको भणितः । पुरुषस्य महिलाया अष्टाविंशतिर्भवेयुः कवलाः ॥ १ ॥

बाह्यात् तपस सङ्गत्याग-शरीरलाघवे-न्द्रियविजय-सयमरक्षण-कर्मनिर्जरा भवन्ति ॥ ८९ ॥

आभ्यन्तर तप आह—

प्रायश्चित्तवैयावृत्त्य स्वाध्यायो विनयोऽपि च । व्युत्सर्गोऽथ शुभं ध्यान षोढेत्याभ्यन्तर तपः।९०।

मूलोत्तरगुणेषु स्वल्पोऽप्यतीचारो निश्चित मलिनयतीति तच्छुद्ध्यर्थ प्रायश्चित्तम्-प्रकर्षेण अयते गच्छत्य-सादाचारधर्म इति प्रायो मुनिलोकस्तेन विचिन्त्यते स्मर्यतेऽतिचारविशुद्ध्यर्थमिति निरुक्तात् प्रायश्चित्तमनुष्ठान-विशेषः । अथवा प्रायो बाहुल्येन व्रतातिक्रम चेतसि सञ्जानीते चेतश्च न पुनराचरतीत्यत प्रायश्चित्तम् । अथवा प्रायोऽपराध उच्यते स येन चेतति विशुध्यति तत् प्रायश्चित्तम् । भीमसेनात् पूर्वे आचार्य्याश्चिते(ती)धातु विशुद्धा-वपि पठन्ति, यदाहुः—' चितीं सञ्ज्ञानविशुद्ध्यो ' ।

प्रायश्चित्त च दशविधम्—आलोचनम्, प्रतिक्रमणम्, मिश्रम्, विवेक', व्युत्सर्गः, तप, छेदः, मूलम्, अनवस्थाप्यता, पाराञ्चिकमिति ।

तत्रालोचन गुरो पुरत स्वापराधस्य प्रकटनम् । तच्चासेवनानुलोम्येन प्रायश्चित्तानुलोम्येन च । आसेवनानु-लोम्य येन क्रमेणातिचार आसेवितस्तेनैव क्रमेण गुरो पुरतः प्रकटनम् । प्रायश्चित्तानुलोम्य च गीतार्थस्य शिष्यस्य भवति । स हि पञ्चक-दशक-पञ्चदशकक्रमेण प्रायश्चित्तानि गुरुलघ्वपराधानुरूपाणि विज्ञाय योऽपराधो गुरुस्त त प्रथममालोचयति, पश्चाल्लघु लघुतर च ।

अतीचाराभिमुख्यपरिहारेण प्रतीप क्रमणमपसरण प्रतिक्रमण मिथ्यादुष्कृतसयुक्तेन पश्चात्तापेन ' पुनरेव न

करिष्यामि ' इति प्रत्याख्यानम् ।

मिश्रमालोचनप्रतिक्रमणरूपम्, प्रागालोचनं पश्चाद् गुरुसन्दिष्टेन प्रतिक्रमणम् ।

विवेकः संसक्तान्नपानोपकरणशय्यादिविषयस्त्यागः ।

व्युत्सर्गोऽनेषणीयादिषु त्यक्तेषु गमनागमनसावद्यस्वप्नदर्शननौसन्तरणोच्चारप्रश्रवणेषु च विशिष्टप्रणिधानपूर्वकः कायवाङ्मनोव्यापारत्यागः ।

तपस्तु च्छेदग्रन्थानुसारेण जीतकल्पानुसारेण वा येन केनचित् तपसा विशुद्धिर्भवति तत् तद् देयमासेवनीयं च ।

छेदस्तपसा दुर्दमस्याहोरात्रपञ्चकादिना क्रमेण श्रमणपर्यायच्छेदनम् ।

मूलं महाव्रतानां मूलत आरोपणम् ।

तथा अवस्थाप्यत इत्यवस्थाप्यस्तन्निषेधादनवस्थाप्यस्तस्य भावोऽनवस्थाप्यता दुष्टतरपरिणामस्याकृततपोविशेषस्य व्रतानामारोपणम्, तपः कर्म चास्योत्थाननिषदनादिकर्मकरणाशक्तिपर्यन्तम् । स हि यदोत्थानाद्यपि कर्तुमशक्तस्तदाऽन्यान् प्रार्थयते—' आर्याः ! उत्थातुमिच्छामि ' इत्यादि । ते तु तेन सह संभाषणमकुर्वाणास्तत्कृत्यं कुर्वन्ति, यदाह—

[१]उट्ठिज्ज निसीअज्ज व भिक्खं हिंडिज्ज मत्तगं पेहे । कुविअपिअबंधवस्स करेइ इयरो वि तुसिणीओ ॥ १ ॥

एतावति तपसि कृते तस्योत्थापना क्रियते ।

---

(१) उत्तिष्ठ निषीद वा भिक्षां हिण्ड गात्रकं प्रेक्षस्व । कुपितप्रियबान्धवस्य करोतीतरोऽपि तूष्णीकस्तु ॥ १ ॥

तथा पारमन्त प्रायश्चित्तानां, तत उत्कृष्टतरप्रायश्चित्ताभावात्, अपराधानां वा पारमश्नाति गच्छतीत्येवंशील पाराश्चि तदेव पाराश्चिकम्। तच्च महत्यपराधे लिङ्गकुलगणसंघेभ्यो बहिष्करणम्।

एतच्च छेदपर्यन्त प्रायश्चित्त व्रणचिकित्सातुल्य पूर्वसूरिभिरभिहितम्। तत्र तनुरतीक्ष्णमुखो रुधिरमप्राप्तस्त्वग्लग्न शल्यो देहादुध्रियते, न तत्र व्रणस्य मर्दन विधीयते शल्याल्पत्वेन व्रणस्याल्पत्वात्। द्वितीये तु लग्नोध्धृतशल्ये मर्दन क्रियते न तु कर्णमलेन पूर्यते। तृतीये तु दूरतरगतशल्ये शल्योद्धारमलनकरणमलपूरणानि क्रियन्ते। चतुर्थे तु शल्यकर्षणमर्दनरुधिरगालनानि वेदनापहारार्थं क्रियन्ते। पञ्चमे तु गाढतरावगाढशल्योद्धरण, ततो गमनादिचेष्टा निवार्यते। षष्ठे हितमितभोज्यभोजनोऽभोजनो वा शल्योद्धारानन्तर भवति। सप्तमे तु शल्योद्धारानन्तर यावच्छल्येन मांसादिदूषित तावत् छिद्यते, गोनसभक्षितादौ पादवल्मीके वा पूर्वोक्तक्रियाभिरनुपशमाद् विसर्पति, अङ्गच्छेद सहास्थ्ना शेषरक्षणार्थं विधीयते। एव द्रव्यव्रणदृष्टान्तेन मूलोत्तरगुणरूपस्य चारित्रपुरुषस्यापराधरूपो व्रण आलोचनादिना छेदान्तेन प्रायश्चित्तविधिना शोधनीय, यदाहुर्भगवद्भद्रबाहुस्वामिपादा:—

तणुओ अतिक्खतुडो असोणिओ केवल तयालग्गो। उद्धरिउ अवउज्झइ सल्लो न मलिज्जइ वणो उ ॥ १ ॥
लग्गुद्धियम्मि बीए मलिज्जइ पर अदूरगे सल्ले। उद्धरणमलणपूरण दूरयरगए तइयगम्मि ॥ २ ॥

---

(१) तनुकोऽतीक्ष्णतुण्डोऽशोणित केवल त्वग्लग्न। उध्धृत्यापत्यज्यते शल्यो न मृद्यते व्रणस्तु ॥ १ ॥
लग्नोध्धृते द्वितीये मृद्यते परमदूरगे शल्ये। उद्धरणमलनपूरणानि दूरतरगते तृतीयके ॥ २ ॥

मा वेयणा उ तो उद्धरित्तु गालंति सोणिअ चउत्थे । रुज्झइ लहुं ति चेट्ठा वारिज्जइ पंचमे वणिणो ॥ ३ ॥
रोहेइ वणं छट्ठे हिअमिअभोइ अभुंजमाणो वा । तत्तियमेत्तं छिज्जइ सत्तमए पूइमंसाई ॥ ४ ॥
तहविअ अट्ठायमाणे गोणसखइयाइ रप्फए वावि । कीरइ तयंगछेओ सअट्ठिओ सेसरक्खट्ठा ॥ ५ ॥
मूलोत्तरगुणरूवस्स ताइणो परमचरणपुरिसस्स । अवराहसल्लपहवो भाववणो होइ नायव्वो ॥ ६ ॥
भिक्खायरियाइ सुज्झइ अइयारो कोइ वियडणाए उ । बीओ ह असमिओ मित्ति कीस सहसा अगुत्तो वा ॥ ७ ॥
सद्दाइएसु रागं दोसं च मणा गओ तइअगम्मि । नाउं अणेसणिज्जं भत्ताइविगिंचण चउत्थे ॥ ८ ॥
उस्सग्गेण वि सुज्झइ अइयारो कोइ कोइ उ तवेणं । तेण वि असुज्झमाणं छेयविसेसा विसोहिंति ॥ ९ ॥

---

(१) मा वेदनास्तत उध्धृत्य गालयन्ति शोणितं चतुर्थे । रुह्यते लघु इति चेष्टा वार्य्यते पञ्चमे व्रणिनः ॥ ३ ॥
रोहयति व्रणं षष्ठे हितमितभोजी अभुञ्जानो वा । तावन्मात्रं छिद्यते सप्तमके पूतिमांसादि ॥ ४ ॥
तथापि अतिष्ठति गोनसभक्षितादौ रप्फकैर्वापि । क्रियते तदङ्गच्छेदः सहास्थिकः शेषरक्षार्थम् ॥ ५ ॥
मूलोत्तरगुणरूपस्य तायिनः परमचरणपुरुषस्य । अपराधशल्यप्रभवो भावव्रणो भवति ज्ञातव्यः ॥ ६ ॥
भिक्षाचर्यादिः शुध्यत्यतिचारः कश्चिद्विकटनयैव । द्वितीयोहासमितोऽस्मीति किं सहसाऽगुप्तो वा ॥ ७ ॥
शब्दादिकेषु रागं द्वेषं च मनाक् गतस्तृतीयके । ज्ञात्वाऽनेषणीयं भक्तादिविगिञ्चना चतुर्थे ॥ ८ ॥
उत्सर्गेणापि शुध्यत्यतिचारः कश्चित् कश्चित् तु तपसा । तेनाप्यशुध्यमानं छेदविशेषा विशोधयन्ति ॥ ९ ॥

प्रमाददोषव्युदासभावप्रसादनै शल्यानवस्थाव्यावृत्तिमर्यादात्यागसंयमदार्ढ्याराधनादिप्रायश्चित्तफलम् ।

अथ वैयावृत्त्यम्—व्यावृत्तो व्यापारप्रवृत्तः प्रवचनोदितक्रियानुष्ठानपरस्तस्य भावः कर्म वा वैयावृत्त्यम् । व्याधिपरीषहमिथ्यात्वाद्युपनिपाते तत्प्रतीकारो बाह्यद्रव्यासम्भवे स्वकायेन तदानुकूल्यानुष्ठानं च । तच्चाचार्योपाध्यायस्थविरतपस्विशैक्षग्लानसाधर्मिककुलगणसङ्घलक्षणविषयभेदेन दशधा । तत्र स्वयमाचरति परांश्चाचारयति, आचर्यते सेव्यत इति चाऽऽचार्यः । स पञ्चधा प्रव्राजकाचार्यः, दिगाचार्यः, उद्देशकाचार्यः, समुद्देशानुज्ञाचार्यः, आम्नायार्थवाचकाचार्य इति । तत्र सामायिकव्रतादेरारोपयिता प्रव्राजकाचार्यः । सचित्ताचित्तमिश्रवस्त्वनुज्ञायी दिगाचार्यः । प्रथमत एव श्रुतमुद्दिशति यः स उद्देशाचार्यः । उद्देष्टृगुर्वभावे तदेव श्रुतं समुद्दिशत्यनुजानीते वा यः स समुद्देशानुज्ञाचार्यः । आम्नायमुत्सर्गापवादलक्षणमर्थं वक्ति यः स प्रवचनार्थकथनेनानुग्राहकोऽवनिपद्याद्यनुज्ञायी आम्नायार्थवाचकः, आचारगोचरविषयं स्वाध्यायं वा । आचार्याल्लब्धानुज्ञाः साधव उप समीपेऽधीयतेऽस्मादित्युपाध्यायः । स्थविरो वृद्धः । स श्रुत–पर्याय–वयोभेदात् त्रिविधः । श्रुतस्थविरः समवायाङ्गं यावदध्येता, पर्यायस्थविरो यस्य दीक्षितस्य विंशत्यादीनि वर्षाणि, वयःस्थविरः सप्तत्यादिवर्षजीवितः । विकृष्टं दशमादि किञ्चिन्न्यूनषण्मासान्तं तपः कुर्वंस्तपस्वी । अचिरप्रव्रजितः शिक्षार्हः शैक्षः । रोगादिक्लिष्टशरीरो ग्लानः । साधर्मिकाः समानधर्मिणो द्वादशविधसम्भोगवन्तश्च । बहूनां गच्छानामेकजातीयानां समूहः कुलं चन्द्रादि । गच्छस्त्वेकाचार्यप्रणेयः साधुसमूहः । कुलसमुदायो गणः कोटिकादिः । सङ्घः साधुसाध्वीश्रावकश्राविकासमुदायः । एषामाचार्यादीनामन्नपानवस्त्रपात्रप्रतिश्रयपीठफलकसंस्तारकादिभिर्धर्मसाधनैरुपग्रहः शुश्रूषा

भैषजक्रिया, कान्ताररोगोपसर्गेषु परिपालनम्, एवमादि वैयावृत्त्यम्।

अथ स्वाध्यायः। सुष्ठु मर्यादया कालवेलापरिहारेण पौरुष्यपेक्षया वाऽध्ययनं स्वाध्यायः। स पञ्चविधः—वाचनम्, प्रच्छनम्, अनुप्रेक्षा, आम्नायः, धर्मोपदेशश्चेति। तत्र वाचनं शिष्याध्यापनम्। प्रच्छनं ग्रन्थार्थयोः सन्देहच्छेदाय निश्चितबलाधानाय वा परानुयोगः। अनुप्रेक्षा ग्रन्थार्थयोरेव मनसाऽभ्यासः। आम्नायो घोषविशुद्धं परिवर्तनम्, गुणनम्, रूपादानमिति यावत्। धर्मोपदेशोऽर्थोपदेशो व्याख्यानमनुयोगो वर्णनमिति यावत्।

अथ विनयः—विनीयते क्षिप्यतेऽष्टप्रकारं कर्मानेनेति विनयः। स चतुर्धा, ज्ञान-दर्शन-चारित्रो-पचार-भेदात्। तत्र सबहुमानं ज्ञानग्रहणाभ्यासस्मरणादि ज्ञानविनयः। सामायिकादौ लोकबिन्दुसारपर्यन्ते श्रुते भगवत्प्रकाशितपदार्थान्यथात्वासम्भवात् तत्त्वार्थश्रद्धानिःशङ्कितत्वादिना दर्शनविनयः। चारित्रवतश्चारित्रे समाहितचित्तता चारित्रविनयः। प्रत्यक्षेष्वाचार्यादिष्वभ्युत्थानाभिगमनाञ्जलिकरणादि उपचारविनयः, परोक्षेष्वपि कायवाग्मनोभिरञ्जलिक्रियागुणसंकीर्त्तनानुस्मरणादिरुपचारविनयः।

अथ व्युत्सर्गः—व्युत्सर्जनीयस्य परित्यागो व्युत्सर्गः। स द्विविधः—बाह्य आभ्यन्तरश्च। तत्र बाह्यो द्वादशादिभेदस्योपधेरतिरिक्तस्य, अनेषणीयस्य संसक्तस्य वाऽन्नपानादेर्वा[1] त्यागः। आभ्यन्तरः कषायाणाम्, मृत्युकाले शरीरस्य च त्यागः। ननु व्युत्सर्गः प्रायश्चित्तमध्य एवोक्तस्तत् किं पुनरत्र वचनेन? सत्यम्, सोऽतिचारविशुद्ध्यर्थ उक्तः, अयं तु सामान्येन निर्जरार्थ इत्यपौनरुक्त्यम्।

१ अन्नपात्रादेर्वा- इति वा पाठः।

अथ शुभध्यानम्—शुभमार्तरौद्रविवेकेन शुभरूप धर्म-शुक्लरूप ध्यानम् अत्रार्तरौद्रध्याने उक्तपूर्वे, धर्म शुक्ल च शुभध्याने वक्ष्येते। इत्यनेन प्रकारेण षोढाऽऽभ्यन्तर तप । इद चाभ्यन्तरस्य कर्मणस्तापकत्वात्, अभ्यन्तरैरेवान्तर्मुखैर्भगवद्भिर्ज्ञायमानत्वाचाभ्यन्तरम् । ध्यानस्य सर्वेषां तपसामुपरि पाठो मोक्षसाधनेष्वस्य प्राधान्यख्यापनार्थं , यदाह,—

'सवरविणिज्जराओ मोक्खस्स पहो तवो पहो तासिं । ज्झाण च पहाणग तवस्स तो मोक्खहेऊ त ॥ १ ॥ ९० ॥

अथ तपसो निर्जराहेतुत्व प्रकटयन्नाह—

दीप्यमाने तपोवह्नौ बाह्ये चाभ्यन्तरेऽपि च।यमी जरति कर्माणि दुर्जराण्यपि तत्क्षणात् ॥९१॥

तप एव वह्नि' पापवनदाहकत्वात् तपोवह्निस्तस्मिन् दीप्यमाने प्रबलीभूते । किंविशिष्टे ? बाह्येऽनशनादौ, आभ्यन्तरे प्रायश्चित्तादौ सति। यमी सयमवान् जरति भस्मसात् करोति। अन्तर्भूतण्यर्थत्वात् सकर्मकता। कर्माणि ज्ञानावरणीयादीनि दुर्जराण्यपि दु खक्षयाण्यपि । निर्जराहेतुत्व तपस उपलक्षणम्, सवरहेतुत्वादप्यस्य, यदाह वाचकमुख्य'—तपसा निर्जरा च तपसा निर्जरा सवरश्च भवतीत्यर्थ । तपश्च सवरत्वादभिनवकर्मोपचयप्रतिषेधकम् , निर्जरणफलत्वाच्चिरन्तनकर्मनिर्जरकम् , तथा च निर्वाणप्रापकमिति । अत्रान्तरश्लोका:—

यथा हि पिहितद्वारमुपायै सर्वत सर' । नवैर्नवैर्जलापूरै पूर्यते नैव सर्वथा ॥ १ तथैवाश्रवनिरोधेन कर्म-

(१) सवरविनिर्जरे मोक्षस्य पन्थास्तप पन्थास्तयो । ध्यान च प्रधानाङ्ग तपसस्ततो मोक्षहेतुस्तत् ॥ १ ॥

द्रव्यैर्नवैर्नवैः । अयं न पूर्यते जीवः संवरेण समावृतः ॥ २ ॥ यथैव सरसस्तोयं संशुष्यति पुरा चितम् । दिवाकरकरालातपातिसन्तापितं मुहुः ॥ ३ ॥ तथैव पूर्वसम्बद्धं सर्वकर्म शरीरिणा । तपसा ताप्यमानं सत् क्षयमायाति तत्क्षणात् ॥ ४ ॥ निर्जराकरणे बाह्याच्छ्रेष्ठमाभ्यन्तरं तपः । तत्राप्येकातपत्रत्वं ध्यानस्य मुनयो जगुः ॥ ५ ॥ चिरार्जितानि भूयांसि प्रबलान्यपि तत्क्षणात् । कर्माणि निर्जरन्त्येव योगिनो ध्यानशालिनः ॥ ६ ॥ यथैवोपचितो दोषः शोषमायाति लङ्घनात् । तथैव तपसा कर्म क्षीयते पूर्वसञ्चितम् ॥ ७ । यथा वा मेघसङ्घाताः प्रचण्डपवनैर्हताः । इतस्ततो विशीर्यन्ते कर्माणि तपसा तथा ॥ ८ ॥ प्रतिक्षणं सम्भवन्त्यावपि संवरनिर्जरे । प्रकृष्येते यदा मोक्षं प्रसुवाते तदा ध्रुवम् ॥ ९ ॥ निर्जरां निर्जरां कुर्वंस्तपोभिर्द्विविधैरपि । सर्वकर्मविनिर्मोक्षं मोक्षमाप्नोति शुद्धधीः ॥ १० ॥ एवं तपोभिरभितैः परिचीयमाना, स्यान्निर्जरा सकलकर्मविघातहेतुः । सेतुर्भवोदधिसमुत्तरणे ममत्व–व्याघातकारणमतः खलु भावयेत् ताम् ॥ ११ ॥

॥ निर्जराभावना ९ ॥ ९१ ॥

अथ धर्मस्वाख्यातभावना—

**स्वाख्यातः खलु धर्मोऽयं भगवद्भिर्जिनोत्तमैः । यं समालम्बमानो हि न मज्जेद् भवसागरे ॥९२॥**

सुष्ठु कुतीर्थिकापेक्षया प्राधान्येन, अविधिप्रतिषेधमर्यादया ख्यातः कथितः खलु निश्चयेन धर्मो वक्ष्यमाणलक्षणः, अयं विपश्चितां चेतसि विवर्त्तमानः । कैः ? जिनोत्तमैरवधिजिनादिभ्यः प्रकृष्टैः केवलिभिः । कथम्भूतैः ? भगवद्भिर्व्याख्यातस्वरूपैरर्हद्भिरिति यावत् । स्वाख्याततामेवाह–यं धर्मं समालम्बमानो दुर्गतिपातभयादाश्रयन्,

जन्तुरिति गम्यते, न मज्जेद् बुडेद् भवसमुद्रे ॥ ९२ ॥

स्वाख्यात धर्ममाह—

सयम सूनृत शौच ब्रह्माकिञ्चनता तप । क्षान्तिर्मार्दवमृजुता मुक्तिश्च दशधा स तु ॥९३॥

स तु धर्मो दशधा दशप्रकार' । तत्र सयमः प्राणिदया सप्तदशविधः । तत्र पृथिव्यप्तेजोवायुवनस्पतिद्वित्रिचतुष्पञ्चेन्द्रियाणा मनोवाक्कायकर्मभि' करणकारणानुमतिभिश्च सरम्भसमारम्भारम्भवर्जनमिति नवधा । अजीवरूपाण्यपि पुस्तकादीनि दुःषमादोषात् प्रज्ञाबलहीनशिष्यानुग्रहार्थं यतनया प्रतिलेखनाप्रमार्जनापूर्वं धारयतोऽजीवसयम । तथा प्रेक्ष्य चक्षुषा दृष्ट्वा स्थण्डिल बीजजन्तुहरितादिरहित, तत्र शयनासनादीनि कुर्वीतेति प्रेक्षासयमः । गृहस्थान् सावद्यव्यापारप्रसक्तानव्यापारणेनोपेक्षमाणस्योपेक्षासयम । प्रेक्षितेऽपि स्थण्डिले रजोहरणादिना प्रमृज्य शयनासनादीन् कुर्वतः स्थण्डिलाच्च स्थण्डिल सक्रामतः सचित्ताचित्तमिश्रासु पृथिवीषु रजोऽवगुण्ठितौ चरणौ प्रमार्ज्य गच्छतो वा प्रमार्जनासयमः। भक्तपानादिकमनेषणीय वस्त्रपात्रादिक चानुपकारक ससक्त वा निर्जन्तुके स्थण्डिले परिष्ठापयतः परिष्ठापनासयमः । मनसोऽभिद्रोहाभिमानेर्ष्यादिभ्यो निवृत्तिर्धर्मध्यानादिषु च प्रवृत्तिर्मन सयम• । वाचो हिंस्रपरुषादिवचोभ्यो निवृत्तिः शुभभाषाया च प्रवृत्तिर्वाक् सयम । कायस्य धावनवल्गनादिभ्यो निवृत्ति शुभक्रियासु च प्रवृत्ति' कायसयम इति । एव सप्तदशप्रकारः प्राणातिपातनिवृत्तिरूपः सयम , यदाहु ,—

पुढविदगअगणिमारुयवणस्सइबितिचउपर्णिदिअजीवे । पेहुप्पेहपमज्जणपरिट्ठवणामणोवईकाए ॥ १ ॥

तथा 'ऊनण् परिहाणे' अस्य धातोः सुष्ठु ऊन्यतेऽप्रियमात्राश्रयणं मितीक्रियते इति सून्, सून् च तदृतं च सूनृतं प्रियं सत्यं च । तच्च पारुष्य-पैशून्या-सभ्यत्व-चापला-विलत्व-विरलत्व-संभ्रान्तत्व-सान्दिग्धत्व- ग्राम्यत्व-रागद्वेषयुक्तत्वो-पधावद्यविकत्थनपरिहारेण माधुर्यौदार्यस्फुटत्वाभिजात्यपदार्थाभिव्याहाराऽर्हद्वचनानुसारार्थत्वार्थिजनभावग्राहकत्वदेशकालोपपन्नत्वयतमितहितत्वैर्युक्तं वाचनप्रच्छनप्रश्नव्याकरणादिरूपमिति मृषावादपरिहाररूपं सूनृतम् ।

शौचं संयमं प्रति निरुपलेपता । सा चादत्तादानपरिहाररूपा । लोभार्त्तो हि परधनं जिघृक्षन् संयमं मलिनयति । लौकिका अप्याहुः—

सर्वेषामेव शौचानामर्थशौचं परं स्मृतम् । योऽर्थेषु शुचिः स शुचिर्न मृद्वारिशुचिः शुचिः ॥ १ ॥

अशुचिर्हि भावकल्मषसंयुक्त इहामुत्र चाशुभं कर्मोपचिनोति, उपदिश्यमानमपि च श्रेयो न प्रतिपद्यते, इत्यदत्तादानपरिहाररूपं शौचम् ।

नवब्रह्मगुप्तिसनाथमुपस्थसंयमो ब्रह्म 'भीमो भीमसेनः' इति न्यायाद् ब्रह्मचर्यं बृहत्त्वाद् ब्रह्मात्मा तत्र चरणं ब्रह्मचर्यमात्मारामतेत्यर्थः । तदर्थं गुरुकुलसेवनमपि ब्रह्मचर्यमित्यब्रह्मनिवृत्तिरूपं ब्रह्मचर्यम् । नास्य किञ्चन द्रव्यमस्तीत्यकिञ्चनस्तस्य भावोऽकिञ्चनता । उपलक्षणं चैतत्, तेन शरीरधर्मोपकरणादिष्वपि निर्ममत्वमाकिञ्चनत्वम् ।

(१) पृथिवीदकाग्निमारुतवनस्पतिद्वित्रिचतुष्पञ्चेन्द्रियाजीवाः । प्रेक्षोप्रेक्षाप्रमार्जनपरिष्ठापनमनोवाक्कायाः ॥ १ ॥

शरीरमपि धारयन्तो मुनयो निर्ममत्वात् तत् परिग्रहरहिता भोजनादिकमपि संयमयात्रार्थं शकटाक्षलेपनवत् कुर्वन्ति, न मूर्च्छया। उपकरणमपि च रजोहरणादिकं संयमरक्षार्थं वस्त्रपात्रादिकं च संयमशरीरपरित्राणार्थं धारयन्ति, न पुनर्लोभादिना इति निष्परिग्रहा एव। इति परिग्रहपरिहाररूपाऽकिञ्चनता।

तप उक्तनिर्वचनम्, उक्तस्य संयमादेरन्त्यमाणस्य चान्त्यादेः संवरहेतोर्धर्मस्य मध्ये पठितम्, संवरनिर्जराहेतुत्वात्। तच्च द्वादशप्रकारं पूर्वमुक्तम्। प्रकीर्णकं चेदमनेकविधम्, तद्यथा—यवमध्य वज्रमध्य, चान्द्रायण, कनकरत्नमुक्तावल्यस्तिस्रः, सिंहविक्रीडिते द्वे, सप्त सप्तमिकाद्याः प्रतिमाश्चतस्रः सर्वतोभद्रम्, भद्रोत्तरम्, आचाम्लवर्धमानमित्येवमादि। तथा, द्वादशभिक्षुप्रतिमा मासिक्याद्या आ सप्तमासिक्याः सप्त, सप्तरात्रिक्यस्तिस्रः, अहोरात्रिकी, एकरात्रिकी च।

क्षान्ति क्षमा शक्तस्याशक्तस्य वा सहनपरिणामः। सा च क्रोधनिमित्तस्यात्मनि भावाभावचिन्तनात्, क्रोधदोषचिन्तनात्, बालस्वभावचिन्तनात्, स्वकृतकर्मफलाभ्यागमचिन्तनात्, क्षमागुणानुप्रेक्षणाच्च। तत्र येन दोषेण मामाक्रोशति परः स दोषो मयि यद्यस्ति तदस्य सद्भूतमर्थं प्रकाशयतः कोऽपराधः? । अथ नास्ति, तर्हि मृषाऽसौ वदतीति भावाभावविचिन्तनात् क्षमितव्यमेव, यदाह—

आक्रुष्टेन मतिमता तत्त्वार्थविचारणे मतिः कार्या। यदि सत्यं कः कोपः स्यादनृतं किं नु कोपेन ॥ १ ॥

क्रोधदोषचिन्तनादपि क्षमितव्यमेव। क्रुद्धस्य तावद् ध्रुवः कर्मबन्धः, ततः पराभिघातः, ततोऽप्यहिंसाव्रतलोपः, क्रुद्धस्य चापवदतः अनृतव्रतलोपः, निस्सृतप्रव्रज्याप्रतिपत्तिश्चादत्तमपि गृह्णीयात् ततोऽस्तेयव्रतलोपः, द्वेषात्

परपाखण्डिनीष्वब्रह्मासेवमानस्य ब्रह्मचर्यव्रतलोपः, प्रद्विष्टस्याविरतेषु गृहस्थेषु सहायबुद्ध्या मूर्च्छापि स्यादित्यपरिग्रहव्रतलोपः । उत्तरगुणभङ्गप्रसङ्गे तु का कथा ? । क्रुद्धश्च गुरूनप्यासातयेदाधिक्षिपेद् वा। इति क्रोधदोषचिन्तनम् । बालस्वभावचिन्तनाच्च क्षन्तव्यम् । बालोऽज्ञस्तत्स्वभावचिन्तनं पुनर्बालः कदाचित् परोक्षमाक्रोशति कदाचित् प्रत्यक्षम् । आक्रोशन्नपि कश्चित् ताडयति, कश्चिद् मारयति, कश्चिद् धर्मभ्रंशमपि चिकीर्षति, तद् दिष्ट्या वर्धामहे मामेष परोक्षमाक्रोशति न प्रत्यक्षम्, प्रत्यक्षं वाऽऽक्रोशति न ताडयति, ताडयति वा न मारयति, मारयति वा न धर्माद् भ्रंशयति, इत्युत्तरस्योत्तरस्याभावे लाभ एष ममेति मन्यते, यदाहुः;—

अक्कोसहणणमारणधम्मब्भंसाण बालसुलहाण । लाभं मन्नइ धीरो जहोत्तराणं अभावम्मि ॥ १ ॥

इति बालस्वभावचिन्तनम् । स्वकृतकर्मफलाभ्यागमचिन्तनादपि क्षन्तव्यमेव । पूर्वकृतकर्मणां फलाभ्यागम एषः, फलभोगं तपो वा विना न निकाचितस्य कर्मणः क्षय इत्यवश्यभोक्तव्ये फले निमित्तमात्रमेव परः, यदाह;—

सव्वो पुव्वकयाणं कम्माणं पावफलविवागो । अवराहेसु गुणेसु अ निमित्तमित्तं परो होइ ॥ १ ॥

इति स्वकृतकर्मफलाभ्यागमचिन्तनम् । क्षमागुणानुप्रेक्षणाच्च क्षन्तव्यम्—अनायासः क्रोधनिमित्तप्रायश्चित्ताभावः, शुभध्यानाध्यवसायः, परसमाधानोत्पादनम्, स्तिमितप्रसन्नान्तरात्मत्वम्, प्रहरणसहायान्वेषणाभावः, असंरम्भः, प्रसन्नमुखता, धवलविलोचनता, अस्वेदता, निष्कम्पता परप्रहारवेदनाऽभाव इति क्षमागुणाः । इति

(१) आक्रोशहननमारणधर्मभ्रंशानां बालसुलभानाम् । लाभं मन्यते धीरो यथोत्तराणामभावे ॥ १ ॥

(२) सर्वः पूर्वकृतानां कर्मणां पापफलविपाकः । अपराधेषु गुणेषु च निमित्तमात्रं परो भवति ॥ १ ॥

क्रोधविपक्षः क्षमाधर्मः ।

अथ मार्दवम्—मृदुरस्तब्धस्तस्य भावः कर्म वा मार्दवं नीचैर्वृत्तिरनुत्सेकश्च, तदुभयमपि मदनिग्रहाद् भवति । मदाश्च जातिमदादयः पूर्वमुक्ता । ततश्च जातिकुलरूपबललाभबुद्धिवाल्लभ्यकश्रुतमदान्धाः क्लीबा परत्र चेह च हितमप्यर्थं न पश्यन्तीत्यादिमददोषपरिहारहेतुर्मानप्रतिपक्षो मार्दवम् ।

अथ ऋजुता—ऋजुरवक्रमनोवाक्कायकर्मा तस्य भावः कर्म वा ऋजुता मनोवाक्कायविक्रियाविरह इत्यर्थः, मायारहितत्वमिति यावत् । मायावी हि सर्वातिसन्धानपरतया सर्वाभिशङ्कनीयो भवति, यदाह—

मायाशीलः पुरुषो यद्यपि न करोति किञ्चिदपराधम् । सर्प इवाविश्वास्यो भवति तथा ह्या(प्या)त्मदोषहतः ॥१॥

इति मायाप्रतिपक्षभूता ऋजुता ।

अथ मुक्तिः—सा च बाह्याभ्यन्तरवस्तुषु तृष्णाविच्छेदरूपा लोभाभाव इत्यर्थः । लोभाभिभूतो हि क्रोध-मान-माया-हिंसा-ऽनृत-स्तेया-ऽब्रह्म-परिग्रहदोषजालेनोपचीयते, यदाह—

सर्वविनाशाश्रयिणः सर्वव्यसनैकराजमार्गस्य । लोभस्य को मुखगतः क्षणमपि दुःखान्तरमुपेयात् ! ॥ १ ॥

इति लोभपरिहाररूपा निर्भयत्व-स्वपरहितात्मप्रवृत्तिमत्त्व-ममत्वाभाव-निस्सङ्गता-ऽपरद्रोहकत्वादिगुणयुक्ता रजोहरणादिकेष्वप्युपकरणेष्वनभिष्वङ्गस्वभावा मुक्तिः । इति दशविधो धर्मः । ननु संयम-सूनृत-शौच-ब्रह्मा-ऽकिञ्चनतानां महाव्रतेषु, क्षमामार्दवार्जवमुक्तीनां संवरप्रकरणे, तपसश्च संवर-निर्जराहेतुत्वेनोक्तत्वाद् धर्मप्रतिपादनप्रकरणे पुनरुक्तत्वमेव । उच्यते—नात्र संयमादीनां पुनर्भणनं प्रकृतम्, किन्तु संयमादिदशविधधर्मप्रतिपादन-

प्रकारेण भगवतामर्हतां स्वाख्यातधर्मत्वानुप्रेक्षणमेव, इति धर्माणां गुणभावेन तदाख्यातॄणां भगवतामनुप्रेक्षानिमित्तं स्तुतिरिति सर्वं समञ्जसम् ॥ ९३ ॥

अथास्य धर्मस्य माहात्म्यमाह—

**धर्मप्रभावतः कल्पद्रुमाद्या ददतीप्सितम्। गोचरेऽपि न ते यत्स्युरधर्माधिष्ठितात्मनाम् ॥९४॥**

कल्पद्रुमः कल्पवृक्षः, आदिशब्दाच्चिन्तामण्यादयः परिगृह्यन्ते, ते वनस्पतिरूपा उपलरूपाश्च धर्मवद्भ्यः सुषमादिकालभाविभ्योऽभीष्टफलदायिनो भवन्ति । ते एव धर्महीनानां दुःषमादिकालभाविनाम्, आस्तामभीष्टं न ददति, गोचरेऽपि न भवन्ति । अत्रार्थप्राप्तिः फलम् ॥ ९४ ॥ तथा—

**अपारे व्यसनाम्भोधौ पतन्तं पाति देहिनम्। सदा सविधवर्त्येकबन्धुर्धर्मोऽतिवत्सलः ॥९५॥**

स्पष्टः । अत्रानर्थपरिहारः फलम् ॥ ९५ ॥ तथा—

**आप्लावयति नाम्भोधिराश्वासयति चाम्बुदः। यन्महीं स प्रभावोऽयं ध्रुवं धर्मस्य केवलः ॥९६॥**

अत्रानर्थपरिहारोऽर्थप्राप्तिश्च फलम् ॥ ९६ ॥

इदानीं साधारणधर्मस्य साधारणं फलमाह—

**न ज्वलत्यनलस्तिर्यग् यदूर्ध्वं वाति नानिलः। अचिन्त्यमहिमा तत्र धर्म एव निबन्धनम् ॥९७॥**

स्पष्टः । मिथ्यादृशोऽप्याहुः ;—अग्नेरूर्ध्वज्वलनम्, वायोस्तिर्यक् पवनमदृष्टकारितम् इति ॥ ९७ ॥ तथा—

निरालम्बा निराधारा विश्वाधारो वसुन्धरा। यच्चावतिष्ठते तत्र धर्मादन्यद् न कारणम् ॥९८॥

निरालम्बा आलम्बनस्य रज्ज्वादेरभावात्, निराधारा आधारस्य शेषकूर्मवराहदिक्कुञ्जरादे प्रमाणानुपपन्नत्वेनाभावात्, विश्वस्य चराचरभेदस्य जगत आधार, वसुन्धरा पृथ्वी यदवतिष्ठते, नाधः पतति, तत्र धर्मादन्यद् न कारणम्, अन्वयव्यतिरेकाभ्यामन्यस्य कस्यचिदवस्थानहेतोरभावात् ॥ ९८ ॥ तथा—

सूर्याचन्द्रमसावेतौ विश्वोपकृतिहेतवे। उदयेते जगत्यस्मिन् नून धर्मस्य शासनात् ॥९९॥

स्पष्टः ॥ ९९ ॥

अबन्धुनामसौ बन्धुरसखीनामसौ सखा। अनाथानामसौ नाथो धर्मो विश्वैकवत्सलः ॥१००॥

अबन्धूनां बन्धुरहितानामसौ धर्मो बन्धुः, बन्धुकार्यस्य विपदुत्तारणादेः करणात्, असखीनां मित्ररहितानामसौ सखा, प्रीत्युत्पादकत्वात्, अनाथानामस्वामिकानामसौ नाथः, योगक्षेमकारित्वात्, यदाह—योगक्षेमकृद् नाथः इति। अत्र हेतुर्विश्वैकवत्सलः—वत्स लाति स्नेहेनादत्ते वत्सला गौस्तद्वत् सकलजगत्प्रीतिहेतुत्वाद् धर्मोऽपि वत्सलः ॥ १०० ॥

इदानीमनर्थनिवृत्तेः प्राक्तैरप्याकाङ्क्ष्यमाणत्वाद् धर्मफलमाह—

रक्षोयक्षोरगव्याघ्रव्यालानलगरादय.। नापकर्तुमल तेषां यैर्धर्मः शरण श्रित ॥ १०१ ॥

स्पष्टः ॥ १०१ ॥ इदानीं प्रधानभूतामनर्थनिवृत्तिमर्थप्राप्तिं च धर्मस्य फलमाह—

धर्मो नरकपातालपातादवति देहिनः । धर्मो निरुपमं यच्छत्यपि सर्वज्ञवैभवम् ॥ १०२ ॥

नरकपातरक्षणलक्षणा अनर्थनिवृत्तिः सर्वज्ञवैभवप्राप्तिश्चार्थप्राप्तिप्रधानभूता धर्मस्य फलम्, शेषं त्वानुषङ्गिकमुक्तमिति । अत्रान्तरश्लोकाः—

अयं दशविधो धर्मो मिथ्यादृग्भिर्न वीक्षितः । योऽपि कश्चित् क्वचित् प्रोक्तो सोऽपि वाङ्मात्रवर्णनम् ॥ १ ॥ तत्त्वार्थो वाचि सर्वेषां केषाञ्चन मनस्यपि । क्रिययापि नरीनर्त्ति नित्यं जिनमतस्पृशाम् ॥ २ ॥ वेदशास्त्रपराधीनबुद्धयः सूत्रकण्ठकाः । न लेशमपि जानन्ति धर्मरत्नस्य तत्त्वतः ॥ ३ ॥ गोमेधनरमेधाश्वमेधाद्यध्वरकारिणाम् । याज्ञिकानां कुतो धर्मः प्राणिघातविधायिनाम् ? ॥ ४ ॥ अश्रद्धेयमसद्भूतं परस्परविरोधि च । वस्तु प्रलपतां धर्मः कः पुराणविधायिनाम् ? ॥ ५ ॥ असद्भूतव्यवस्थाभिः परद्रव्यं जिघृक्षताम् । मृत्पानीयादिभिः शौचं स्मार्तादीनां कुतो ननु ? ॥ ६ ॥ ऋतुकाले व्यतिक्रान्ते भ्रूणहत्याविधायिनाम् । ब्राह्मणानां कुतो ब्रह्म ब्रह्मचर्यापलापिनाम् ? ॥७॥ अदित्सतोऽपि सर्वस्वं यजमानाज्जिघृक्षताम् । अर्थार्थे त्यजतां प्राणान् क्वाकिञ्चन्यं द्विजन्मनाम् ? ॥ ८ । दिवसे च रजन्यां च मुखमापृच्छ्य भक्षताम् । भक्ष्याभक्ष्याविवेकानां सौगतानां कुतस्तपः ? ॥ ९ ॥ मृद्वी शय्या प्रातः पेया मध्ये भक्तं सायं पानम् । द्राक्षाखण्डं रात्रेर्मध्ये शाक्योपज्ञः साधुर्धर्मः ॥ १० ॥ स्वल्पेष्वप्यपराधेषु क्षणात् शापं प्रयच्छताम् । लौकिकानामृषीणां न क्षमालेशोऽपि दृश्यते ॥ ११ ॥ जात्यादिमददुर्वृत्तपरिनर्तितचेतसाम् । क्व मार्दवं द्विजातीनां चतुराश्रमवर्तिनाम् ॥ १२ ॥ दम्भसंरम्भगर्भाणां बकवृत्तिजुषां बहिः । भवेदार्जवलेशोऽपि पाखण्डव्रतिनां कथम् ? ॥ १३ ॥ गृहिणीगृहपुत्रादिपरिग्रहवतां सदा । द्विजन्मनां कथं मुक्ति-

लोभैककुलवेश्मनाम् ? ॥ १४ ॥ अरक्तद्विष्टमूढानां केवलज्ञानशालिनाम् । ततो भगवतामेषा धर्मस्याख्यातताऽर्हताम् ॥ १५ ॥ रागाद् द्वेषात् तथा मोहाद् भवेद् वितथवादिता । तदभावे कथं नामाऽर्हतां वितथवादिता ? ॥ १६ ॥ ये तु रागादिभिर्दोषैः कलुषीकृतचेतसः । न तेषां सूनृता वाचः प्रसरन्ति कदाचन ॥ १७ ॥ तथाहि यागहोमादिकर्माणीष्टानि कुर्वताम् । वापीकूपतडागादीन्यपि पूर्तान्यनेकशः ॥ १८ ॥ पशूपघाततः स्वर्गलोकसौख्यं विमार्गताम् । द्विजेभ्यो भोजनैर्दत्तैः पितृतृप्तिं चिकीर्षताम् ॥ १९ ॥ घृतयोन्यादिकरणैः प्रायश्चित्तविधायिनाम् । पञ्चस्वापत्सु नारीणां पुनरुद्वाहकारिणाम् ॥ २० ॥ अपत्यासम्भवे स्त्रीषु क्षेत्रजापत्यवादिनाम् । सदोषाणामपि स्त्रीणां रजसा शुद्धिवादिनाम् ॥ २१ ॥ श्रेयोबुद्ध्याऽध्वरहतच्छागशिश्नोपजीविनाम् । सौत्रामण्यासप्ततन्तौ सीधुपानविधायिनाम् ॥ २२ ॥ गूथाशिनीनां च गवां स्पर्शतः पूतमानिनाम् । जलादिस्नानमात्रेण पापशुद्ध्यभिधायिनाम् ॥ २३ ॥ वटाश्वत्थामलक्यादिद्रुमपूजाविधायिनाम् । वह्नौ हुतेन हव्येन देवप्रीणनमानिनाम् ॥ २४ ॥ भुवि गोदोहकरणाद् रिष्टशान्तिकमानिनाम् । योषिद्विडम्बनाप्रायव्रतधर्मोपदेशिनाम् ॥ २५ ॥ तथा—जटापटलभस्माङ्गरागकौपीनधारिणाम् । अर्कधत्तूरमालूरैर्देवपूजाविधायिनाम् ॥ २६ ॥ कुर्वतां गीतनृत्यादि पुरो वादयतां मुहुः । मुहुर्वदननादेनातोद्यनादविधायिनाम् ॥ २७ ॥ असत्यभाषापूर्वं च मुनीन् देवान् जनान् घ्नताम् । विधाय व्रतभङ्गं च दासीदासत्वमिच्छताम् ॥ २८ ॥ गृह्णतां मुञ्चतां भूयो भूयः पाशुपतं व्रतम् । भेषजादिप्रयोगेण यूकालिक्षं प्रणिघ्नताम् ॥ २९ ॥ नरास्थिभूषणभृतां शूलखट्वाङ्गवाहिनाम् । कपालभाजनभुजां घण्टानूपुरधारिणाम् ॥ ३० ॥ मद्यमांसाङ्गनाभोगप्रसक्तानां निरन्तरम् । पुतानुबद्धघण्टानां गायतां नृत्यतां मुहुः ॥ ३१ ॥

तथा—

अनन्तकायकन्दादिफलमूलदलाशिनाम् । कलत्रपुत्रयुक्तानां वनवासजुषामपि ॥ ३२ ॥

तथा—

भक्ष्याभक्ष्ये पेयापेये गम्यागम्ये समात्मनाम् । योगिनाम्ना प्रसिद्धानां कौलाचार्यान्तवासिनाम् ॥ ३३ ॥ अन्येषामपि जैनेन्द्रशासनास्पृष्टचेतसाम् । क धर्मः क फलं तस्य तस्य स्वाख्याततता कथम् ? ॥ ३४ ॥ जिनेन्द्रस्यापि धर्मस्य यदत्रामुत्र वा फलम् । आनुषङ्गिकमेवेदं मुख्यं मोक्षं प्रचक्षते ॥ ३५ ॥ सस्यहेतौ कृषौ यद्वत् पलालाद्यानुषङ्गिकम् । अपवर्गफले धर्मे तद्वत् सांसारिकं फलम् ॥ ३६ ॥ स्वाख्याततामिति जिनाधिपतिप्रणीत-धर्माश्रितामसकृदेव विभावयन्तः । मुक्ता ममत्वविषवेगविकारदोषैः, साम्यं प्रकर्षपदवीं परमां नयन्ति ॥ ३७ ॥

धर्मस्वाख्याततताभावना १० ॥ १०२ ॥

अथ लोकभावनामाह—

**कटिस्थकरवैशाखस्थानकस्थनराकृतिम् । द्रव्यैः पूर्णं स्मरेल्लोकं स्थित्युत्पत्तिव्ययात्मकैः ॥१०३॥**

कटिः श्रोणिस्तत्र तिष्ठत इति कटिस्थौ करौ यस्यासौ कटिस्थकरः, वैशाखं प्रसारितपादं तच्च तत् स्थानकं च तत्र तिष्ठति तत्स्थः, स चासौ नरश्च, तद्वदाकृतिर्यस्य तं लोकमाकाशक्षेत्रं चतुर्दशरज्जुप्रमाणं स्मरेदनुप्रेक्षेत । किंविशिष्टम् ? द्रव्यैर्धर्माधर्मकालजीवपुद्गलैः पूर्णम्, किंविशिष्टैर्द्रव्यैः ? स्थित्युत्पत्तिव्ययात्मकैः स्थितिर्ध्रौव्यम्, उत्पत्तिरुत्पादः, व्ययो विनाशस्ते आत्मानः स्वरूपं येषां तानि तथा । सर्वमपि हि वस्तु स्थित्युत्पादव्ययात्मकम्,

यदाह;–" उत्पादव्ययध्रौव्ययुक्त सत् "। आकाशादयोऽपि हि नित्यानित्यत्वेन प्रसिद्धाः प्रतिक्षण तेन तेन पर्यायेणोत्पद्यन्ते विपद्यन्ते च। प्रदीपादयोऽप्युत्पादविनाशयोगिनोऽवतिष्ठन्ते, न पुनरैकान्तिकस्थितियोगि उत्पादविनाशयोगि वा किञ्चिदस्ति, यदवोचाम,—

आदीपमाव्योम समस्वभाव, स्याद्वादमुद्रानतिभेदि वस्तु।
तन्नित्यमेवैकमनित्यमन्य-दिति त्वदाज्ञाद्विषतां प्रलापाः ॥ १ ॥ इति ॥ १०३ ॥

लोकस्वरूपमेवाह—

**लोको जगत्त्रयाकीर्णो भुव. सप्तात्र वेष्टिताः। घनाम्भोधिमहावाततनुवातैर्महाबलै ॥१०४॥**

लोक उक्तस्वरूपो जगतां लोकदेशानां त्रयेणाधस्तिर्यगूर्ध्वरूपेणाकीर्णो व्याप्तः, वदन्ति हि ' अधोलोक, तिर्यग्लोकः, ऊर्ध्वलोक ' इति। तत्र लोके सप्तसंख्या भुव पृथिव्यो रत्नप्रभा–शर्कराप्रभा–वालुकाप्रभा–पङ्कप्रभा–धूमप्रभा–तम प्रभा–महातम.प्रभा यथार्थाभिधाना., अनादिकालप्रसिद्धाऽनन्वर्थसंज्ञाश्च, तद्यथा–घर्मा, वंशा, शैला, अञ्जना; अरिष्टा, माघव्या, माघवी च। ततश्च प्रत्येक रत्नप्रभाया अधोऽध पृथुतरा.। तासु त्रिंशत्, पञ्चविंशतिः, पञ्चदश, दश, त्रीण्येक पञ्चोन नरकावासशतसहस्र, पञ्चैव नारकावासा यथाक्रमम्। ताश्च वेष्टिताः परिवृता अध. पार्श्वतश्च। कैः ? घनो निबिडो न तु द्रवो योऽसावम्भोधिः, महांश्चासौ वातश्च महावातो घनवात, तनुश्चासौ वातश्च तनुवातः, तैः। किं विशिष्टैः ? महाबलै पृथ्वीधारणसमर्थ।

तत्र सर्वासां पृथिवीनामधो घनोदधयः मध्योत्सेधे विंशतियोजनसहस्राणि, महावाताः उत्सेधे घनोदधितोऽसंख्यानि योजनसहस्राणि, तनुवाताश्च महावातेभ्योऽसंख्यानि योजनसहस्राणि, ततोऽप्यसंख्येयानि योजनसहस्राण्याकाशम् । एतच्च मध्ये उत्सेधमानम् । ततः परं क्रमेण हीयमानं प्रान्ते वलयतुल्यमानमिति । घनोदधिवलयविष्कम्भमानं रत्नप्रभायाः षड्योजनानि, घनवातवलयविष्कम्भमानमर्धपञ्चमयोजनानि, तनुवातवलयविष्कम्भमानं सार्धं योजनम् । रत्नप्रभावलयमानादुपरि योजनत्रिभागो घनोदधौ, घनवाते गव्यूतम्, तनुवाते च गव्यूतत्रिभागो वर्त्तते । एतच्छर्कराप्रभायां वलयमानम् । एवं शर्कराप्रभावलयमानादुपर्ययमेव प्रक्षेपः । एवं पूर्वपूर्ववलयमानादुपर्ययमेव प्रक्षेपः सप्तमपृथिवीं यावत्, यदाह;—

तिभागो गाउयं चेव तिभागो गाउयस्स य । आइधुवे पक्खेवो अहो अहो जाव सत्तमिआ ॥ १ ॥

प्रक्षेपे सति वलयविष्कम्भमानमाभ्यो गाथाभ्योऽवसेयम्, तद्यथा—

छेस्सतिभाग पउणा य पंच वलयाण जोअणपरिमाणं । एगं बारसभागा सत्त कमा बीयपुढवीए ॥ १ ॥

जोअणसत्ततिभागोण पंच एगं च वलयपरिमाणं । बारसभागा अट्ठ उ तइयाइ जहक्कमं नेयं ॥ २ ॥

---

( १ ) त्रिभागो गव्यूतं चैव त्रिभागो गव्यूतस्य च । आदिध्रुवे प्रक्षेपोऽधोऽधो यावत् सप्तमीम् ॥ १ ॥

( २ ) षट्कत्रिभागः प्रनूनाश्च पञ्च वलयानां योजनपरिमाणम् । एकं द्वादशभागाः सप्त क्रमेण द्वितीयपृथिव्याम् ॥ १ ॥
योजनसप्तत्रिभागोनं पञ्चैकं च वलयपरिमाणम् । द्वादशभागा अष्ट तु तृतीयायां यथाक्रमं ने(ज्ञे)यम् ॥ २ ॥

सत्त सवाया पंच उ पउणा दो जोअणा चउत्थीए। घणउअहिमाइयाणं वलयाणं माणमेयं तु ॥ ३ ॥
सतिभागसत्त तह अद्धछट्ठ वलयाणं माणमेयं तु। जोअणमेग बारसभागा दस पंचमीए तहा ॥ ४ ॥
अट्ठ तिभागोणाइं पउणाइं छच्च वलयमाणं तु। छट्ठीए जोअणं तहा बारसभागा य एक्कारा ॥ ५ ॥
अट्ठ य छच्चि य दु च्चिय घणोअहीमाइयाण माणं तु। सत्तममहीए नेयं जहासखेणं तिण्ह पि ॥ ६ ॥

एतानि च वलयानि पृथिव्याधारभूतघनोदध्यादिभ्यः पृथ्वीपर्यन्तपरिभिप्रान्तेषु वलयाकारतया एतावद्विष्कम्भाणि पृथिव्युत्सेधसमोत्सेधानि च ॥ १०४ ॥

पुनर्लोकस्वरूपमाह—

वेत्रासनसमोऽधस्तान्मध्यतो झल्लरीनिभ। अग्रे मुरजसङ्काशो लोकः स्यादेवमाकृतिः ॥१०५॥

अधस्तादधोभागे वेत्रासनमधस्ताद् विस्तीर्णमुपर्युपरिसङ्कोचवत् तत्समस्तदाकार, मध्यतो मध्ये झल्लरी वाद्यविशेषस्तत्सदृश, अग्रे मध्यलोकादुपरि मुरज ऊर्ध्वमधश्च सकुचितो मध्यभागे विस्तृतो वाद्यविशेषस्तत्सदृशः।

---

(१) सप्त सपादा पञ्च तु प्रनूने द्वे योजने चतुर्थ्याम्। घनोदध्यादिकाना वलयाना मानमेतत्तु ॥ ३ ॥
सत्रिभागसप्त तथा अर्धषष्ठ वलयाना मानमेतत्तु। योजनमेक द्वादशभागा दश पञ्चम्या तथा ॥ ४ ॥
अष्ट त्रिभागोनानि प्रनूनानि षट् च वलयमान तु। षष्ठ्या योजन तथा द्वादशभागाश्चैकादश ॥ ५ ॥
अष्ट च षट् चैव द्वौ चैव घनोदध्यादिकाना मान तु। सप्तममह्या ने(ज्ञे)य यथासख्येन त्रयाणामपि ॥ ६ ॥

एवमधोमध्योर्ध्वेषु आकारत्रययोगी लोकः, यदाहुः—

तत्राधोमुखमल्लकसंस्थानं वर्णयन्त्यधोलोकम् । स्थालमिव च तिर्यग्लोकमूर्ध्वमथ मल्लकसमुद्गम् ॥ १ ॥

इह चाधास्तिर्यगूर्ध्वलोका रुचकापेक्षया । रुचकश्च मेरुमध्यगोस्तनाकारचतुराकाशप्रदेशप्रमाणोऽधः, तादृश एवोर्ध्वम्, एवमष्टप्रदेशः, यदाहुः—

अट्ठपएसो रुअगो तिरियलोगस्स मज्झयारम्मि । एस पहवो दिसाणं एसेव भवे अणुदिसाणं ॥ १ ॥

तत्र रुचकादध उपरि च नव नव योजनशतानि तिर्यग्लोक इत्युत्सेधेऽष्टादशयोजनशतप्रमाणः, तिर्यग्लोकादधो नवयोजनशतोनसप्तरज्जुप्रमाणोऽधोलोकः । तत्र सप्त पृथिव्य उक्तरूपाः । तत्र रत्नप्रभायां पृथिव्यामशीतिसहस्राधिकयोजनलक्षबाहल्यायामुपर्यधश्च योजनसहस्रं मुक्त्वा मध्येऽष्टसप्ततिसहस्राधिके योजनलक्षे भवनपतीनां भवनानि । ते चासुरनागविद्युत्सुपर्णाग्निवातस्तनितोदधिद्वीपदिक्कुमाराः । ते च चूडामणिफणिवज्रगरुडघटाश्ववर्धमानमकरसिंहहस्तिचिह्नाः । तत्र भवनपतयो दक्षिणोत्तरदिग्व्यवस्थिताः । तत्रासुरकुमाराणां द्वाविन्द्रौ चमरो बलिश्च । नागकुमाराणां धरणो भूतानन्दश्च । विद्युत्कुमाराणां हरिर्हरिसहश्च । सुपर्णकुमाराणां वेणुदेवो वेणुदालिश्च । अग्निकुमाराणामग्निशिखोऽग्निमाणवश्च । वातकुमाराणां वेलम्बः प्रभञ्जनश्च । स्तनितकुमाराणां सुघोषो महाघोषश्च । उदधिकुमाराणां जलकान्तो जलप्रभश्च । द्वीपकुमाराणां पूर्णो वशिष्ठश्च । दिक्कुमाराणाममितो मितवाहनश्च । अस्यामेव रत्नप्रभायामुपरितनयोजनसहस्रस्याध उपरि च योजनशतं मुक्त्वा मध्येऽष्टासु योजनशतेष्वष्ट-

(१) अष्टप्रदेशो रुचकस्तिर्यग्लोकस्य मध्यकारे । एष प्रभवो दिशानामेष एव भवेदनुदिशानाम् ॥ १ ॥

विधानां पिशाचभूतयक्षराक्षसकिन्नरकिम्पुरुषमहोरगगन्धर्वाणां कदम्बवृक्षसुलसवृक्षवटवृक्षखट्वाङ्गाशोकवृक्षचम्पकवृक्षनागवृक्षतुम्बरुवृक्षचिह्नानां तिर्यग्लोकवासिनां व्यन्तराणां नगराणि । तेष्वपि दक्षिणोत्तरदिग्व्यवस्थितेषु द्वौ द्वाविन्द्रौ । तत्र पिशाचानामिन्द्रौ कालो महाकालश्च । भूतानां सुरूपः प्रतिरूपश्च । यक्षाणां पूर्णभद्रो माणिभद्रश्च । राक्षसानां भीमो महाभीमश्च । किन्नराणां किन्नरः किंपुरुषश्च । किंपुरुषाणां सत्पुरुषो महापुरुषश्च । महोरगाणामतिकायो महाकायश्च । गन्धर्वाणां गीतरतिर्गीतयशाश्च ।

रत्नप्रभायामेव प्रथमस्य शतस्याध उपरि च दश दश योजनानि मुक्त्वा मध्येऽशीतौ योजनेषु अणपन्निप्रपणपन्निप्रभृतयस्तथैव दक्षिणोत्तरव्यवस्थिता अष्टौ व्यन्तरनिकायाः, तथैव द्वौ द्वाविन्द्रौ ।

तथा रत्नप्रभायाः पृथिव्याः समतलादुपरि सप्तसु नवत्यधिकेषु योजनशतेषु ज्योतिषामधस्तलप्रदेशः, तदुपरि दशयोजनेषु सूर्यः, तदुपर्यशीतियोजनेषु चन्द्रः, तदुपरि विंशतियोजनेषु तारा ग्रहाश्च । एवमयं ज्योतिर्लोको दशोत्तरं योजनशतं बाहल्येन । एकादशभिर्योजनशतैरेकविंशत्युत्तरैर्जम्बूद्वीपकमेरुमस्पृशन् सर्वासु दिक्षु मण्डलिकया व्यवस्थितं ज्योतिश्चक्रं ध्रुववर्जं भ्राम्यति, लोकान्तं च एकादशभिर्योजनशतैरेकादशोत्तरैरस्पृशन् मण्डलिकया तिष्ठति, यदाह,—

ऐक्कारसेक्कवीसा सयमेक्कारहिआ य एक्कारा । मेरु अलोगा बाहं जोइसचक्कं चरइ ठाइ ॥ १ ॥

अत्र सर्वोपरि किल स्वातिनक्षत्रम्, सर्वेषामधो भरणिनक्षत्रम्, सर्वदक्षिणो मूलः, सर्वोत्तरश्चाभीचिः । तत्र

(१) एकादशैकविंशति शतान्येकादशाधिकाश्चैकादश । मेरु-अलोकाभ्यां बहिर्ज्योतिश्चक्रं चरति तिष्ठति ॥ १ ॥

जम्बूद्वीपे द्वौ चन्द्रौ द्वौ सूर्यौ। लवणसमुद्रे चत्वारश्चन्द्राः सूर्याश्च। धातकीखण्डे द्वादश चन्द्राः सूर्याश्च। कालोदे द्विचत्वारिंशच्चन्द्रा सूर्याश्च। पुष्करवरार्धे द्वासप्ततिश्चन्द्राः सूर्याश्च। इत्येवं मनुष्यलोके द्वात्रिंशं चन्द्रशतं सूर्यशतं च भवति। अष्टाशीतिर्ग्रहाः, अष्टाविंशतिर्नक्षत्राणि, षट्षष्टिः सहस्राणि नव शतानि पञ्चसप्तत्यधिकानि तारकाकोटिकोटीनामेकैकस्य चन्द्रमसः परिग्रहः। तत्र एकषष्टिभागीकृतस्य योजनस्य षट्पञ्चाशद्भागा आयामविष्कम्भाभ्यां चन्द्रविमानं, अष्टचत्वारिंशत् (भागाः) सूर्यविमानं, ग्रहाणामर्धयोजनं, नक्षत्राणां गव्यूतं, आयुषा सर्वोत्कृष्टायास्ताराया अर्धक्रोशः, सर्वजघन्यायाः पञ्च धनुःशतानि, बाहल्यं तु सर्वेषामायामार्धेन। एते च पञ्चचत्वारिंशल्लक्षयोजनप्रमिते मनुष्यक्षेत्रे भवन्ति। चन्द्रादिविमानवाहनानि च पुरतः सिंहाः, दक्षिणतो गजाः, अपरतो वृषभाः, उत्तरतोऽश्वाः। ते चाभियोगिका देवाश्चन्द्रसूर्ययोः षोडश सहस्राणि, ग्रहाणामष्टौ, नक्षत्राणां चत्वारि, तारकाणां द्वे, स्वरसप्रवृत्तगतीनामपि चन्द्रादीनामाभियोग्यकर्मवशात्तत्रोपतिष्ठन्ति। मानुषोत्तरात् परतः पञ्चाशता योजनसहस्रैः परस्परमन्तरिताः सूर्यान्तरिताश्चन्द्राः चन्द्रान्तरिताः सूर्याः मनुष्यक्षेत्रीयचन्द्रसूर्यप्रमाणादर्धप्रमाणा यथोत्तरं क्षेत्रपरिधिवृद्ध्या संख्यया वर्धमानाः शुभलेश्या ग्रहनक्षत्रतारापरिवारा घण्टाकारा असंख्येया आ स्वयंभूरमणाल्लक्षयोजनान्तरिताभिः पङ्क्तिभिस्तिष्ठन्ति। मध्यलोके तु जम्बूद्वीपलवणादयः शुभनामानो द्वीपसमुद्रा असङ्ख्याता द्विगुणद्विगुणविस्ताराः पूर्वपूर्वपरिक्षेपिणो वलयाकृतयः। अन्त्यः स्वयंभूरमणः समुद्रः॥

जम्बूद्वीपमध्ये मेरुः काञ्चनस्थालमिव वृत्तो योजनसहस्रमधो धरणितलमवगाढो, नवनवतियोजनसहस्रोच्छ्रितो, दश योजनसहस्राणि सातिरेकनवत्यधिकानि कन्दे विस्तृतो, धरणितले दश योजनसहस्राणि विस्तृतः, उपरि

योजनसहस्र विस्तृत , त्रिकाण्डः, त्रिलोकप्रविभक्तमूर्ति , चतुर्भिर्वनैर्भद्रशालनन्दनसौमनसपाण्डकैः परिवृतः । तत्र शुद्धपृथिव्युपलवज्रशर्कराबहुल योजनसहस्रमेक प्रथम काण्ड, द्वितीय त्रिषष्टियोजनसहस्राणि रजतजातरूपाङ्कस्फटिकबहुल, तृतीय षट्त्रिंशद्योजनसहस्राणि जाम्बूनदबहुल वैडूर्यबहुलाऽस्य चूलिका चत्वारिंशद्योजनानि उच्छ्रायेण, मूले द्वादश विष्कम्भेण, मध्येऽष्टौ, उपरि चत्वारीति । मेरोर्मूलभूमौ वलयाकृति भद्रशालवन । भद्रशालवनात् पञ्चभ्यो योजनशतेभ्य ऊर्ध्वं पञ्चयोजनशतविस्तार मेखलाया वलयाकृति नन्दनवन, तत सार्धद्विषष्टियोजनसहस्रेभ्य ऊर्ध्वं द्वितीयमेखलाया पञ्चयोजनशतविस्तार वलयाकृति सौमनस वन, ततोऽपि षट्त्रिंशद्योजनसहस्रेभ्य ऊर्ध्वं तृतीयमेखलायां चतुर्नवत्यधिकचतुर्योजनशतविस्तार वलयाकृति मेरो' शिरसि पाण्डकवनम् ॥

तत्र जम्बूद्वीपे सप्त वर्षाणि । तत्र दक्षिणतो भरतक्षेत्र, तदुत्तरतो हैमवत, ततोऽपि हरिवर्ष, ततोऽपि विदेहाः, ततोऽपि रम्यकक्षेत्र, ततोऽपि हैरण्यवत, ततोऽप्यैरावतमिति । क्षेत्रविभागकारिणस्तु हिमवन्महाहिमवन्निषधनीलरुक्मिशिखरिणो वर्षधरपर्वता , ते च यथाक्रम हेमार्जुनतपनीयवैडूर्यरजततपनीयमया मणिविचित्रपार्श्वा मूलोपरि तुल्यविस्ताराः । तत्र पञ्चविंशतियोजनान्यवगाढो योजनशतोच्छ्रायो हिमवान्, तद्द्विगुणो महाहिमवान्, तद्द्विगुणो निषधः, तत्समो नील', महाहिमवत्समो रुक्मी, हिमवत्समः शिखरी । तदुपरि पद्ममहापद्मतिगिञ्छिकेशरिमहापुण्डरीकपुण्डरीका ह्रदा' । योजनसहस्रायामस्तदर्धविस्तीर्णः प्रथमः, तद्द्विगुणद्विगुणायामविस्तारौ परौ, उत्तरे पुण्डरीकादयो दक्षिणतुल्याः । सर्वेष्वपि च पद्मानि दशयोजनावगाहानि । तन्निवासिन्यः क्रमेण श्रीह्रीधृतिकी-

---

( १ ) अधोलोके १०० । तिर्यग्लोके १८०० । ऊर्ध्वलोके ९८१०० ॥

र्तिबुद्धिलक्ष्म्यः पल्योपमस्थितयः सामानिकपारिषद्यात्मरक्षानीकपरिवृताः ।

तत्र भरते गङ्गासिन्धू महानद्यौ, हैमवते रोहितांशारोहिते, हरिवर्षे हरिकान्ताहरिते, महाविदेहे शीताशीतोदे, रम्यके नारीनरकान्ते, हैरण्यवते सुवर्णकूलारूप्यकूले, ऐरवते रक्तारक्तोदे । प्रथमाः पूर्वगाः, द्वितीयाः पश्चिमगाः । तत्र चतुर्दशनदीसहस्रपरिवृते प्रत्येकं गङ्गासिन्धू । यथोत्तरं द्विगुणनदीपरिवृते द्वे द्वे नद्यौ शीताशीतोदाभ्यामर्वाक्, ते तु प्रत्येकं द्वात्रिंशत्सहस्राधिकपञ्चलक्षनदीपरिवृते । उत्तरास्तु दक्षिणाभिस्तुल्याः ।

तत्र भरतक्षेत्रं विष्कम्भतः पञ्चयोजनशतानि षड्विंशानि एकोनविंशतिभागीकृतस्य योजनस्य षड् भागाः, तद्द्विगुणविष्कम्भा यथोत्तरं वर्षधरवर्षा विदेहान्ताः । उत्तरा दक्षिणतुल्याः ।

विदेहेषु निषधस्योत्तरतो मेरोर्दक्षिणतो विद्युत्प्रभसौमनसाभ्यां पश्चिमपूर्वाभ्यां निषधमेवान्तर्वर्तिभ्यां गजदन्ताकृतिभ्यां पर्वताभ्यामावृताः शीतोदानदीभिन्नह्रदपञ्चकोभयपार्श्वव्यवस्थितैर्दशभिर्दशभिः काञ्चनपर्वतैर्विराजिताः शीतोदानदीपूर्वापरकूलस्थिताभ्यां योजनसहस्रोच्चाभ्यां तावदधोविस्तृताभ्यां तदर्धोपरिविस्तृताभ्यां च विचित्रकूटचित्रकूटाभ्यां शोभिताश्च देवकुरवः विष्कम्भेणैकादशयोजनसहस्राणि अष्टौ शतानि द्विचत्वारिंशदधिकानि । मेरोरुत्तरतो नीलाद्दक्षिणतो गन्धमादनमाल्यवत्पर्वताभ्यां गजदन्ताकृतिभ्यां मेरुनीलान्तरस्थाभ्यामावृताः शीतानदीविभिन्नह्रदपञ्चकोभयपार्श्वस्थितकाञ्चनपर्वतशतेन शीतानद्युभयकूलस्थाभ्यां काञ्चनाभ्यां यमकपर्वताभ्यां विचित्रकूटचित्रकूटमानाभ्यां च विराजिता उत्तराः कुरवः ।

देवकुरूत्तरकुरुभ्यः पूर्वतः पूर्वविदेहाः, पश्चिमतोऽपरविदेहाः । पूर्वविदेहेषु चक्रवर्तिविजेतव्या नदीपर्वतविभक्ताः

परस्परमगम्या' षोडश विजयाः, एवमपरविदेहेष्वपि ॥

भरतक्षेत्रमध्ये च पूर्वापरायत उभयत. समुद्रमवगाढो दक्षिणोत्तरार्धविभागकारी तमिस्राखण्डप्रपातागुहाद्वयोपशोभित षड् योजनानि सक्रोशानि धरणितलमवगाढः पञ्चाशद्योजनविस्तृत पञ्चविंशतियोजनोच्छ्रितो वैताढ्यपर्वत. । अत्र च दक्षिणोत्तरपार्श्वयो भूमितो दशयोजनेभ्य ऊर्ध्वं दशयोजनविस्तृते विद्याधरश्रेण्यौ । तत्र दक्षिणस्या सजनपदानि पञ्चाशन्नगराणि, उत्तरस्या तु षष्टि । विद्याधरश्रेणिभ्यामूर्ध्वमुभयतो दशयोजनान्ते व्यन्तरश्रेण्यौ, तयोर्व्यन्तरावासा । व्यन्तरश्रेण्योरुपरि पञ्चसु योजनेषु नव कूटानि । वैताढ्यवक्तव्यता ऐरावतक्षेत्रेऽपि समाना वक्तव्या ॥

जम्बूद्वीपस्य च प्राकारभूता वज्रमयी अष्टयोजनोच्छ्राया जगती, द्वादश योजनान्यस्या मूले विष्कम्भः, मध्येऽष्टौ योजनानि, उपरि चत्वारि योजनानि, तदुपरि द्विगव्यूत्युच्छ्रायो जालकटको विद्याधरक्रीडास्थानम् । तस्याप्युपरि पद्मवरवेदिका देवभोगभूमि । अस्याश्च जगत्याः पूर्वादिषु दिक्षु विजयवैजयन्तजयन्तापराजिताख्यानि चत्वारि द्वाराणि, हिमवन्महाहिमवतोरन्तरे शब्दापाती नाम वृत्तवैताढ्यपर्वतः । रुक्मिशिखरिणोर्मध्ये विकटापाती । महाहिमवन्निषधयोरन्तरे गन्धापाती । नीलरुक्मिणोरन्तरे माल्यवान् । सर्वेऽपि योजनसहस्रोच्छ्रायाः पल्याकृतय ॥

तथा जम्बूद्वीपपरिक्षेपी तद्द्विगुणविस्तारो (मध्ये दशयोजनसहस्रे) योजनसहस्रावगाढो मात्रया पञ्चनवति-

---

१ तिर्यग्जृम्भकाना.

योजनसहस्राणि यावदुभयत उच्छ्रयेण ( सप्तशतयोजन ) प्रवर्धमानजलो मध्ये दशसहस्रविस्तारे षोडशयोजनसहस्रोच्छ्रयशिखरः तदुपरिकालद्वयेऽपि गव्यूतद्वितयं यावत् ह्रासवृद्धिमान् लवणोदः समुद्रः । तत्र मध्ये चतुर्दिशं योजनलक्षप्रमाणाः प्राक्क्रमात् वडवामुखकेयूरपूपकईश्वराख्याः सहस्र ( योजन ) वज्रमयकुड्या दशयोजनसहस्राण्यधो मुखे च विस्तृताः कालमहाकालवेलम्बप्रभञ्जनसुरावासा वायुधृतत्रिभागजला महालिञ्जराकृतयः पातालकलशाः । क्षुल्लकाश्चान्ये साहस्राः अधो मुखे च शत्याः, दशयोजनकुड्याः, वायून्नामितमध्यामिश्रोपरिजलाः चतुरशीत्यधिकाष्टशतान्वितसप्तसहस्रसङ्ख्याः ( ७८८४ ) तथा द्विचत्वारिंशत्सहस्रसङ्ख्या ( ४२००० ) नागकुमारा अन्तर्वेलाधारिणः, द्विसप्ततिसहस्राणि ( ७२००० ) बाह्यवेलाधारिणः, षष्टिसहस्राणि ( ६०००० ) शिखावेलाधारिणः । गोस्तूपोदकाभासशङ्खोदकसीमानो वेलाधारीन्द्रगिरयः कनकाङ्करजतस्फटिकमया गोस्तूपशिवकशङ्खमनःशिलावासाः द्विचत्वारिंशद्योजनसहस्रेषु दिश्याः एकविंशसप्तदशयोजनशतोच्चाः ( १७२१ ), अधो द्वाविंशत्यधिकयोजनसहस्रविस्ताराः ( १०२२ ), उपरि चतुर्विंशचतुःशतयोजनाः ( ४२४ ), तदुपरि प्रासादाः । कर्कोटककार्दमकैलासारुणप्रभा अणुवेलाधारीन्द्रगिरयः सर्वरत्नमयाः कर्कोटविद्युज्जिह्वकैलासारुणप्रभावासाः । तथा विदिक्षु द्वादशयोजनसहस्रेषु प्राच्यामिन्दुद्वीपौ तावद्विस्तारायामौ तावत्परेण सवित्रोः । तथा गौतमद्वीपः सुस्थितावासस्तावति । तथा अन्तर्बाह्यलावणिकचन्द्रसूर्याणां ( द्वीपाः ) सर्वेषु च प्रासादाः, लवणो लवणरसः ॥

लवणोदाधिपरिक्षेपी तद्द्विगुणो धातकीखण्डः । य एते मेरुवर्षधरवर्षादयो जम्बूद्वीपेऽभिहिता एते द्विगुणा

(१) उच्चत्वे विस्तारे च । (२) महागर्ताकाराः । उच्चत्वे विस्तारे च सहस्रम् । (३) वेलंधरपर्वताः (४) जम्बूद्वीपजगत्याः॥

धातकीखण्डे द्वाभ्यामिषुकारपर्वताभ्यां दक्षिणोत्तरायताभ्यां विभक्ताः, एभिरेव नामभिर्जम्बूद्वीपकसमसङ्ख्याः, पूर्वार्धे चापरार्धे च चक्रारसंस्थिता ( जम्बूद्वीपसवन्ति ) निषधादिसमोच्छ्रायाः कालोदधिलवणजलस्पर्शिनो वर्षधरा' सेष्वाकारपर्वताः, अराविवरसंस्थिताश्च वर्षा इति ॥

धातकीखण्डपरिक्षेपी अष्टयोजनलक्षविष्कम्भः कालोद समुद्रः ॥

कालोदपरिक्षेपी तद्द्विगुणविस्तार पुष्करवरद्वीपः, तदर्धं यावन्मानुष क्षेत्र । यश्च धातकीखण्डे मेर्वादीनां सेष्वाकारपर्वतानां सङ्ख्याविषयनियमः स एव पुष्करार्धे वेदितव्य, धातकीखण्डक्षेत्रादिविभागतो द्विगुणक्षेत्रादिविभागश्च । धातकीखण्डपुष्करार्धयोश्च क्षुद्रमेरवश्चत्वारोऽपि महामेरोः पञ्चदशभिर्योजनसहस्रैर्हीनोच्छ्रायाः ( ८५००० ) षड्भिर्योजनशतैर्धरणितले हीनविष्कम्भाः, तेषां प्रथम काण्ड महामेरुतुल्य ( १००० ), द्वितीय सप्तभिर्योजनसहस्रैर्हीन ( ५६००० ), तृतीयमष्टाभि' ( २८००० ), भद्रशालनन्दनवने महामेरुवत् सार्धपञ्चपञ्चाशद्योजनसहस्रोपरि पञ्चयोजनशतविस्तृत सौमनस, ततोऽष्टाविंशतियोजनसहस्रोपरि चतुर्णवत्याधिकचतुर्योजनशतविस्तृत पाण्डकवनम्, उपरि चाधश्च विष्कम्भोऽवगाहश्च ( १०००–१००००–१००० ) तुल्यो महामेरुणा, चूलिका चेति ॥

तदेव मानुष क्षेत्रमर्धतृतीया द्वीपा, समुद्रद्वय, पञ्च मेरवः, पञ्चत्रिंशत्क्षेत्राणि, त्रिंशद्वर्षधरपर्वता, पञ्च देवकुरवः, पञ्चोत्तरा कुरवः, शत षष्ट्यधिक विजयानामिति ॥

ततः पर मानुषोत्तरो नाम पर्वतो मानुषलोकपरिक्षेपी महानगरप्राकारवृत्तः पुष्करवरद्वीपार्धविनिविष्टः काञ्च-

नमथः सप्तदशयोजनशतान्येकविंशान्युच्छ्रितः चत्वारि योजनशतानि त्रिंशानि क्रोशं चाधो धरणितलमवगाढो, योजनसहस्रं द्वाविंशमधस्ताद्विस्तृतः, सप्त योजनशतानि त्रयोविंशानि मध्ये, चत्वारि योजनशतानि चतुर्विंशान्युपरीति । न कदाचिदस्मात्परतो मनुष्या जायन्ते वा म्रियन्ते वा। येऽपि चारणविद्याधरर्द्धिप्राप्ता मनुष्यास्तमुल्लङ्घ्य परतो गतास्तेऽपि तत्र न म्रियन्ते, अत एव मानुषोत्तर इत्युच्यते । न च तत्परतो बादराग्निमेघविद्युन्नदीकालपरिवेषादयः । मानुषोत्तरादर्वाक् पुनः पञ्चत्रिंशति क्षेत्रेषु सान्तरद्वीपेषु जन्मतो मनुष्या भवन्ति, संहरणविद्यार्द्धियोगात्तु सर्वेष्वर्धतृतीयेषु द्वीपेषु समेर्वादिशिखरेषु समुद्रद्वये चेति ॥

भारतका हैमवतका इत्येवमादयः क्षेत्रविभागेन, जम्बूद्वीपका लवणका इत्यादयो द्वीपसमुद्रविभागेन मनुष्या इति । ते च द्विविधा आर्या म्लेच्छाश्च । तत्रार्याः सार्धपञ्चविंशतिजनपदप्रभवाः । जनपदास्तु विशिष्टनगरोपलक्षिता इमे, तद्यथा—

रायगिह मगह १ चंपा अंगा २ तह तामलित्ति वंगा ३ य। कंचणपुरं कलिंगा ४ वाणारसी चेव कासी ५ अ ॥१॥
साकेय कोसला ६ गयपुरं च कुरु ७ सोरिअं कुसट्टाय ८। कंपिल्लं पंचाला ९ अहिछत्ता जंगला १० चेव ॥२॥

---

( १ ) जंघाचारणविद्याचारणाः ॥

१ राजगृहं मगधाः १ चंपा अङ्गा २ स्तथा तामलिप्तिर्वङ्गाश्च ३ । काञ्चनपुरं कलिङ्गा ४ वाणारसी चेव काशी ५ च ॥१॥
साकेतं कोशला ६ गजपुरं च कुरवः ७ शौर्यं कुशार्ताश्च ८ । काम्पीलयं पञ्चाला ९ अहिच्छत्रा जाङ्गलाश्चैव १० ॥२॥

बारवई अ सुरट्ठा ११ मिहिलविदेहा १२ अ वच्छ कोसंबी। नंदिपुर संडिल्ला १४ भद्दिलपुरमेव मलया १५ य ॥३॥
वइराड मच्छ १६ वरणा अच्छा १७ तह मत्तियावइ दसण्णा १८। सुत्तीमई य चेदी १९ वीअभय सिंधुसोवीरा २०॥४॥
महुरा य सूरसेणा २१ पावा भंगा २२ अ मास पुरिवट्टा २३। सावत्थी अ कुणाला २४ कोडीवरिस च लाढा २५ य ॥५॥
सेयविया वि य नयरी केअयअद्धं २६ च आरिअं भणिअं। जत्थोप्पत्ति जिणाणं चक्कीणं रामकण्हाणं ॥६॥

शकयवनादयस्तु म्लेच्छा । तद्यथा—

(२) सगजवणसबरबब्बरकायमुरुंडुड्डगोणपक्कणया । अरवागहूणरोमसपारसखसखासिया चेव ॥ १ ॥
डुम्बिल अ लउस बुक्कस भिल्लंध पुलिंद कुंच भमररुआ । कापोअ चीण चंचुअ मालव दविडा कुलत्था(क्खा)य ॥२॥
केकय किराय हयमुह खरमुहगयतुरगमेंढमुहा य । हयकण्णा गयकण्णा अन्ने वि अणारिआ बहवे ॥ ३ ॥

---

(१) द्वारवती च सुराष्ट्रा ११ मिथिला विदेहाश्च १२ वत्सा कौशाम्बी १३। नन्दीपुर शाडिल्या १४ भद्दिलपुरमेव मलयाश्च १५॥३॥
विराट मत्स्या १६ वरुणा अच्छा १७ तथा मृत्तिकावती दशार्णा १८। शुक्तिमती च चेदय १९ वीतभय सिन्धुसौवीरा २०॥४॥
मथुरा च च शूरसेना २१ पापा भङ्गाश्च २२ माषपुरी वर्ता २३। श्रावस्तिश्च कुणाला २४ कोटिवर्षं च लाढाश्च २५ ॥५॥
श्वेतम्बिकाऽपि च नगरी कैकेयार्धं २६ चार्या भणिता । यत्रोत्पत्तिर्जिनानां चक्रिणां रामकृष्णानाम् ॥ ६ ॥
(२) शकयवनशबरबर्बरकायमुरुण्डोड्डगोणपक्वणका । आख्यानकहूणरोमशपारसखसकौशिकाश्चेव ॥ १ ॥
दुम्बलिश्च लकुशबुक्कसभिल्लान्ध्रपुलिन्द्रक्रौंचभ्रमररुचय । कापोतचीनचञ्चुकमालवद्रविडकुलार्था(ख्या)श्च ॥ २ ॥
कैकेयकिरातहयमुखखरमुखगजतुरगमिंढप्रमुखाश्च । हयकर्णा गजकर्णा अन्येऽप्यनार्या बहव ॥ ३ ॥

पावा य चंडकम्मा अणारिया निग्घिणा निरणुतावा । धम्मो त्ति अक्खराइं सुविणे वि न नज्जए ताण ॥४॥

तथाऽन्तरद्वीपजा अपि म्लेच्छाः । अन्तरद्वीपाश्च षट्पञ्चाशत् । तद्यथा–हिमवतः प्राग्भागे पश्चाद्भागे च विदिक्षु पूर्वोत्तरादिकासु चतसृषु त्रीणि योजनशतानि लवणजलधिमवगाह्य पूर्वोत्तरस्यां दिशि योजनशतत्रयायामविष्कम्भः प्रथमोऽन्तरद्वीपः एकोरुकाभिधानः स्थितः, स चैकोरुकपुरुषाणामधिवासः, द्वीपनामतश्च पुरुषनामानि, पुरुषास्तु सर्वाङ्गोपाङ्गसुन्दरा नैकोरुका एव, एवं शेषा अपि । दक्षिणपूर्वस्यां त्रीणि योजनशतानि लवणजलधिमवगाह्य योजनत्रिशतायामविष्कम्भ आभाषिकपुरुषाधिवासः प्रथम आभाषिकोऽन्तरद्वीपः । तथा दक्षिणापरस्यां त्रीणि योजनशतानि लवणजलधिमवगाह्य योजनत्रिशतायामविष्कम्भो लाङ्गूलिकमनुष्यावासो लाङ्गूलकाभिधानः प्रथमोऽन्तरद्वीपः । तथोत्तरापरस्यां त्रीणि योजनशतानि लवणजलधिमवगाह्य योजनत्रिशतायामविष्कम्भो वैषाणिकमनुष्यावासो वैशाणिकाभिधानः प्रथमोऽन्तरद्वीपः ॥

ततश्चत्वारि योजनशतान्यवगाह्य चतुर्योजनशतायामविष्कम्भा एवमेव हयकर्णानां गजकर्णानां गोकर्णानां शष्कुलिकर्णानां चत्वारोऽन्तरद्वीपाः ॥ ततः पञ्च योजनशतान्यवगाह्य पञ्चयोजनशतायामविष्कम्भा आदर्शमुखानां मेषमुखानां हयमुखानां गजमुखानामन्तरद्वीपाः ॥ ततः षड् योजनशतान्यवगाह्य तावदायामविष्कम्भा अश्वमुखानां हस्तिमुखानां सिंहमुखानां व्याघ्रमुखाणामन्तरद्वीपाः ॥ ततः सप्त योजनशतान्यवगाह्य तावदायामविष्कम्भा अश्व-

(१) पापाश्च चण्डकर्माणोऽनार्या निर्घृणा निरनुतापाः । धर्म इत्यक्षराणि स्वप्नेऽपि न ज्ञायन्ते तेषाम् ॥ ४ ॥

कर्णानां सिंहकर्णानां हस्तिकर्णानां कर्णप्रावरणानामन्तरद्वीपाः ॥ ततोऽष्टौ योजनशतान्यवगाह्य तावदायामविष्कम्भा उल्कामुखानां विद्युज्जिह्वानां मेषमुखानां विद्युद्दन्तानामन्तरद्वीपाः ॥ ततो नव योजनशतान्यवगाह्य तावदायामविष्कम्भा घनदन्तानां गूढदन्तानां श्रेष्ठदन्तानां शुद्धदन्तानामन्तरद्वीपा ॥ एतेषु च मनुष्या युग्मप्रसवा पल्योपमासङ्ख्येयभागायुषोऽष्टधनु:शतोच्चा भवन्ति । तथैरावतक्षेत्रविभागकारिणः शिखरिणोऽपि पूर्वोत्तरादिविदिक्षु अमुनैव क्रमेण नामकलापेन चान्तरद्वीपकानामष्टाविंशतिर्भवति, मिलिताः षट्पञ्चाशदन्तरद्वीपका भवन्ति॥

मानुषोत्तरात्परतस्तु पुष्करवरद्वीपस्य द्वितीयमर्धं । पुष्करवरद्वीपात् परतस्तत्परिक्षेपी द्वीपद्विगुणविस्तारः पुष्करोद समुद्र: । ततो वारुणिवरद्वीपसमुद्रौ, क्षीरवरद्वीपसमुद्रौ, घृतवरद्वीपसमुद्रौ, इक्षुवरद्वीपसमुद्रौ च भवत: । अष्टमो नन्दीश्वरद्वीप:, स च चतुरशीतिलक्षोपेतत्रिषष्टिकोट्यधिकयोजनकोटिशतप्रमाणवलयाविष्कम्भो विविधविन्यासोद्यानवान् देवलोकप्रतिस्पर्धी जिनेन्द्रपूजाव्यापृतदेवसपातातिरुचिर: स्वेच्छाविविधक्रियादेवसभोगरम्यः । तत्र तस्य मध्यभागे चतसृषु दिक्षु चत्वारोऽञ्जनगिरयोऽञ्जनवर्णा बाह्यमेरुसमुच्छ्राया ( ८४००० योजन ) दशयोजनसहस्रातिरिक्तविस्तारा मूले, उपरि साहस्रा । ते च क्रमादेवरमणनित्योद्योतस्वयप्रभरमणीयनामान । तेषु जिनायतनानि योजनशतायामानि तदर्धविस्ताराणि द्विसप्ततियोजनोच्चानि । तत्र षोडशयोजनोच्चानि अष्टयोजनविस्ताराणि अष्टयोजनप्रवेशानि देवासुरनागसुपर्णाख्यामरनिवासानि तन्नामानि च चत्वारि द्वाराणि, तन्मध्ये मणिपीठिका षोडशयोजनायामविस्तारा अष्टयोजनोत्सेधाः तदुपरि देवच्छन्दका साधिकायामोच्चकाः, तेषु प्रत्येकमृ-

( १ ) मूले दशयोजनसहस्रविस्ताराः इत्यपि ज्ञेयम् ( २ ) सहस्रयोजनविस्तारा इत्यर्थ ।

षभावर्धमानावारिषेणाचन्द्राननाभिख्यानां शाश्वतजिनप्रतिमानां पर्यङ्कनिषण्णानां स्वपरिवारवृतानामष्टोत्तरं शतं। प्रतिप्रतिमं च द्वे नागप्रतिमे यक्षप्रतिमे भूतप्रतिमे कुण्डधरप्रतिमे चामरधरप्रतिमे च भवतः, पृष्ठतश्छत्रधरप्रतिमैका। तानि च दामघण्टाधूपघटिकाऽष्टमङ्गलकतोरणध्वजपुष्पचङ्गेरिकापटलच्छत्रासनादिमन्ति तपनीयरुचिररजोवालुकाप्रस्तृतानि षोडशपूर्णकलशादिभूषितानि आयतनमानमुखमण्डपप्रेक्षामण्डपाक्षवाटकमणिपीठिकास्तूपप्रतिमाचैत्यवृक्षेन्द्रध्वजपुष्करिणीक्रमरचनानि।

अञ्जनगिरीणां चतुसृषु दिक्षु प्रत्येकं लक्षयोजनमानाः पुष्करिण्यः, तद्यथा—नन्दिषेणा, अमोघा, गोस्तूपा, सुदर्शना। नन्दोत्तरा, नन्दा, सुनन्दा, नन्दिवर्धना। भद्रा, विशाला, कुमुदा, पुण्डरीकिणी। विजया, वैजयन्ती, जयन्ती, अपराजिता। प्राक्क्रमाद्दण्याः। तासां च प्रत्येकं पञ्चयोजनशत्याः परतो लक्षयोजनायामानि पञ्चयोजनशतीपृथूनि अशोकसप्तच्छदचम्पकचूताभिधानान्युद्यानानि। वापीनां च मध्ये स्फाटिका दधिमुखा ललामवेदिकोद्यानादिलाञ्छनाश्चतुःषष्टियोजनसहस्रोच्चा योजनसहस्रमवगाढा दशयोजनसहस्राधोविस्तृताः तावदुपरि, पल्याकृतयः। केचित्तु पुष्करिणीनामन्तरे द्वौ द्वौ रतिकरपर्वतावाहुः। ते च द्वात्रिंशद्भवन्ति। दधिमुखेषु रतिकरेषु चाञ्जनवदायतनानि। द्वीपविदिक्षु रतिकराश्चत्वारो दशयोजनसहस्रायामविष्कम्भा योजनसहस्रोच्चाः सर्वरत्नमया झल्लर्याकृतयः। तत्र दक्षिणयोः शक्रस्य उत्तरयोरीशानस्य अष्टाष्टानां महादेवीनां योजनशतसहस्राबाधस्थाना दिक्षु जम्बूद्वीपसमाः प्रत्येकं जिनायतनभूषिता अष्टाष्ट राजधान्यः सुजाता सौमनसा आर्चिर्माली प्रभाकरा पद्मा शिवा शुचिरञ्जना भूता भूतावतंसा गोस्तूपा सुदर्शना अमला अप्सरा रोहिणी नवमी चेति। तथा रत्ना रत्नोच्चया सर्वरत्ना

रत्नसचया वसुः वसुमित्रा वसुभागा वसुधरा नन्दोत्तरा नन्दा उत्तरकुरु देवकुरु कृष्णा कृष्णराजिः रामा रामरक्षिता चेति प्राग्दक्षिणाक्रमात् । तत्र देवाः सर्वसम्पद्वन्तः स ( स्व ) परिवारानुगताः पुण्यतिथिषु सुरासुरविद्याधरादिपूज्यानां जिनानामायतनेषु प्रमुदितमनसोऽष्टाहिकीपूजा' कुर्वन्ति । इह चाञ्जनेषु ( ४ ) दधिमुखेषु (१६) च विंशतिर्जिनायतनानि, रतिकरेषु द्वात्रिंशत् । एव गिरिशिखरेषु द्विपञ्चाशत् राजधानीषु ( च ) द्वात्रिंशज्जिनायतनानि, केचित्तु षोडश मन्यन्ते । एतदर्थसंवादिन्यो गाथाः—

जोयण कोडि सय तिसट्ठ चउरासीलक्खवलयविक्खभो। अट्ठमदीवो नदीसरोऽत्थि सइ विलासिर सुरोहो ॥१॥
तत्थ मज्झे चउरो दिसासु अजनगिरी गवलवन्ना । जोयणसहस्स चुलसीइ मूसिया सहसमवगाढा ॥ २ ॥
भूमितले दससहसा (१००००) चउनउइ सया (९४००) य सहसमुवरितले (१०००)। पिहुला अडवीससत्तिग ( ३/८ ) दससो य खयवुड्ढी ॥ ३ ॥
पुव्वदिसि देवरमणो निच्चुज्जोओ अ दाहिणदिसाए । अवरदिसाए सयपभ रमणिज्जो उत्तरे पासे ॥ ४ ॥

---

(१) योजनकोटिशतत्रिषष्टिचतुरशीतिलक्षवलयविष्कम्भ । अष्टमद्वीपो नन्दीश्वरोऽस्ति सदा विलसितसुरौघ ॥ १ ॥
तत्र मध्ये चत्वारो दिक्षु अञ्जनगिरयो गवल(महिषशृङ्ग)वर्णा । योजनसहस्रचतुरशीतिमुच्छ्रिता सहस्रमवगाढा ॥ २ ॥
भूमितले दशसहस्रा चतुर्नवतिशतानि च (भूमौ) सहस्रमुपरितले । पृथुला अष्टाविंशाशत्रिक दशाशश्च क्षयवृद्धी ॥ ३ ॥
पूर्वदिशि देवरमणो नित्योद्योतश्च दक्षिणदिशि । अपरदिशि स्वयप्रभो रमणीय उत्तरे पार्श्वे ॥ ४ ॥

[1]अंजणयाण चउदिसिं जोयणलक्खम्मि लक्खविक्खंभा। पुक्खरिणीउ सहस्सोवेहा निम्मच्छसच्छजला ॥५॥
नंदिसेणा १ अमोहा य २ गोत्थुभा य ३ सुदंसणा ४। नंदुत्तरा १ य नंदा २ सुनंदा ३ नंदिवद्धणा ४ ॥६॥
भद्दा १ विसाला २ कुमुया ३ बारसी पुंडरीगिणी ४। विजया १ वैजयंती २ य जयंती ३ अपराजिआ ४ ॥७॥
पुव्वाइकमा नामा पुक्खरिणीणं तओ अ पंचसए। गंतूण लक्खदीहा वणसंडा पंचसयपिहुला ॥८॥
पुव्वेण असोगवणं दक्खिणओ वा सत्तवन्नवणं। चंपकवणमवरेणुत्तरेण सव्वाण चूअवणं ॥९॥
पल्लसमा जोअणदससहस्सपिहुला सहस्समोगाढा। चउसट्ठिसहस्सुच्चा फलिहमया पुक्खरिणिमज्झे ॥१०॥
सोलस दहिमुहगिरिणो अंजणदहिमुहनगोवरितलेसु। जोयणसयदीह तयद्धवित्थडा दुगसयरिमुच्चा ॥११॥

---

(१) अञ्जनकानां चतुर्दिक्षु योजनलक्षे लक्षविष्कम्भाः। पुष्करिण्यः सहस्रोद्वेधा निर्मत्स्यस्वच्छजलाः ॥५॥
नन्दिषेणा १ अमोघा २ च गोस्तूपा ३ च सुदर्शना ४। नन्दोत्तरा १ च नन्दा २ सुनन्दा ३ नन्दिवर्धना ४ ॥६॥
भद्रा १ विशाला २ कुमुदा ३ द्वादशी पुण्डरीकिणी ४। विजया १ वैजयन्ती च २ जयन्ती ३ अपराजिता ४ ॥७॥
पूर्वादिक्रमात् नामानि पुष्करिणीनां ततश्च पञ्चशतम्। गत्वा लक्षदीर्घा वनखण्डाः पञ्चशतपृथुलाः ॥८॥
पूर्वेण अशोकवनं दक्षिणतो वा सप्तपर्णवनम्। चम्पकवनमपरेणोत्तरेण सर्वेषां चूतवनम् ॥९॥
पल्यसमा योजनदशसहस्रपृथुलाः सहस्रमवगाढाः। चतुःषष्टिसहस्रोच्चाः स्फटिकमयाः पुष्करिणीमध्ये ॥१०॥
षोडश दधिमुखगिरयः अञ्जनदधिमुखनगोपरितलेषु। योजनशतदीर्घतदर्धविस्तृतानि द्वासप्ततिमुच्चानि ॥११॥

बहुविविहरूवरूवगविचित्तविच्छित्तिभत्तिसयकलिया । पत्तेय जिणभवणा तोरणज्झयमंगलाइजुआ ॥ १२ ॥
देवासुरनागसुवन्ननामगा नामसमसुरारक्खा । दारा सोलट्ठट्ठुच्चपिहुपवेसा य चउरेसु ॥ १३ ॥
पइदार कलसाईमुहमंडवपेच्छमंडवक्खाडा । मणिपीढथूभपडिमाचिइतरुज्झयपुक्खरणिओ अ ॥ १४ ॥
अट्ठुच्चसोलसाययपिहुला मणिपीढिया जिणहरंतो । तदुवरि देवच्छंदा रयणमया साहियपमाणा ॥ १५ ॥
तत्थुसभवद्धमाणयचंदाणणवारिसेणनामाण । सासयजिणपडिमाण पलिअंकनिसण्णमट्ठसय ॥ १६ ॥
पइपडिम पुरो दो दो नागपडिमजक्खभूयकुंडधरा । दुहओ दो चमरधरा पिट्ठे छत्तधरपडिमेगा ॥ १७ ॥
तह घंटाचंदणघडभिंगारायरिसयाइसुपइट्ठा । पुप्फाइणेगचंगेरिपडलछत्तासणाइ इह ॥ १८ ॥

---

(१) बहुविविधरूपरूपकविचित्रविच्छित्तिभक्तिशतकलितानि । प्रत्येक जिनभवनानि तोरणध्वजमङ्गलादियुतानि ॥ १२ ॥
देवासुरनागसुपर्णनामकानि नामसमसुरारक्ष्याणि। द्वाराणि षोडशाष्टाष्टोच्चपृथुप्रवेशानि च चतुर्षु ( भवनेषु ) ॥ १३ ॥
प्रतिद्वार कलशादिमुखमण्डपप्रेक्षामण्डपाक्षाटका । मणिपीठस्तूपप्रतिमाचैत्यतरुध्वजपुष्करिण्यश्च ॥ १४ ॥
अष्टोच्चा षोडशायतपृथुला मणिपीठिका जिनगृहान्त । तदुपरि देवच्छन्दा रत्नमया साधिकप्रमाणा ॥ १५ ॥
तत्र ऋषभवर्धमानकचन्द्राननवारिषेणनाम्नाम् । शाश्वतजिनप्रतिमाना पल्यङ्कनिषण्णमष्टशतम् (१०८) ॥ १६ ॥
प्रतिप्रतिम पुरो द्वे द्वे नागप्रतिमायक्षभूतकुण्डधरा । उभयतो द्वे चामरधरे पृष्ठे छत्रधरप्रतिमैका ॥ १७ ॥
तथा घण्टाचन्दनघटभृङ्गारादर्शकादिसुप्रतिष्ठा । पुष्पाद्यनेकचङ्गेरीपटलच्छत्रासनादि इह ॥ १८ ॥

इह सुत्तवुत्तमाएसउ दुपुक्खरिणिअंतरे दो दो। रइकरगनगा बत्तीसमेसु पुव्वंव जिणभवणा ॥ १९ ॥
वंदंतनमंसंतअभित्थुणंतपूयंतइंतजंतेहिं । खयरसुरेहि अरहिआ पुन्नतिहिं महामहकरेहिं ॥ २० ॥
तह जोयणसहसुच्चा विक्खंभायामसमदससहस्सा । झल्लरिनिभा रइकरा रयणमया विदिसि दीवंतो ॥ २१ ॥
तेसु चउण्ह दिसासु जोयणलक्खम्मि जंबुदीवसमा । अट्ठट्ठ रायहाणी सक्केसाणग्गमहिसीणं ॥ २२ ॥
विमलमणिसालवलयाण ताण मज्झे पुढो जिणाययणा । जिणपडिमा पुव्वमिवेह अणुवमपरमरमणिज्जा ॥२३॥
इय वीसं बावन्नं च जिणहरे गिरिसिरेसु संथुणिमो । इंदाणिरायहाणिसु बत्तीसं सोलस च वंदे ॥ २४ ॥

नन्दीश्वरद्वीपपरिक्षेपी नन्दीश्वरः समुद्रः । ततः परमरुणो द्वीपः, अरुणोदः समुद्रः । ततोऽरुणवरो द्वीपः, अरुणवरः समुद्रः । ततोऽरुणाभासो द्वीपः, अरुणाभासः समुद्रः । ततः कुण्डलो द्वीपः, कुण्डलोदः समुद्रः । ततो

---

(१) इह सूत्रोक्तादेशात् द्विपुष्करिण्यन्तरे द्वौ द्वौ । रतिकरकनगौ द्वात्रिंशत् एषु पूर्ववत् जिनभवनानि ॥ १९ ॥
वन्दमाननमस्यदभिस्तुवत्पूजयद्गच्छदागच्छद्भिः । खचरसुरैः अरहिताः पुण्यतिथौ महामहकरैः ॥ २० ॥
तथा योजनसहस्रोच्चा विष्कम्भायामसमदशसहस्राः । झल्लरीनिभा रतिकरा रत्नमया विदिक्षु द्वीपस्य(दीप्यमानाः) ॥२१॥
तेषां चतुर्णां दिक्षु योजनलक्षे जम्बूद्वीपसमाः । अष्टाष्ट राजधान्यः शक्रेशानाग्रमहिषीणाम् ॥ २२ ॥
विमलमणिशालवलयानां तासां मध्ये पृथक् जिनायतनानि । जिनप्रतिमाः पूर्ववदिह अनुपमपरमरमणीयाः ॥ २३ ॥
इति विंशति द्विपञ्चाशतं च जिनगृहाणि गिरिशिखरेषु संस्तुवीमः । इन्द्राणीराजधानीषु द्वात्रिंशतं षोडश वा वन्दे ॥ २४॥

रुचको द्वीप', रुचक समुद्र' । एवं प्रशस्तनामानो द्विगुणमाना द्वीपसमुद्रा. । अन्त्यः स्वयम्भूरमणः समुद्र ॥

एषां च मध्येऽर्धतृतीयद्वीपेषु भरतैरवतविदेहा कर्मभूमयोऽन्यत्र देवकुरूत्तरकुरुभ्यः। कालोदपुष्करस्वयभूरमणा उदकरसा' । लवणोदो लवणरस' । वारुणोदश्चित्रपानरसान् । क्षीरोद' खण्डादिमिश्रघृतचतुर्भागगोक्षीररसवान् । घृतोद सुक्वथितसद्योविस्यन्दितगोघृतरस । शेषाश्चतुर्जातकयुक्तत्रिभागच्छिन्नेक्षुरसवज्जला' । लवणकालोदस्वयभूरमणा बहुमत्स्यकच्छपाः, नेतरे ॥

तथा जम्बूद्वीपे जघन्येन चत्वारस्तीर्थकृतः चक्रवर्तिनो बलदेवा वासुदेवाश्च सदा भवन्ति । उत्कर्षेण चतुस्त्रिंशज्जिनाः त्रिंशच्च क्षितीशा ( चक्रिण. ) । धातकीखण्डे पुष्करार्धे च द्विगुणा ॥

तिर्यग्लोकादूर्ध्वं नवयोजनशतोनसप्तरज्जुप्रमाण ऊर्ध्वलोक । तत्र सौधर्मेशानसनत्कुमारमाहेन्द्रब्रह्मलोकलान्तकमहाशुक्रसहस्रारानतप्राणतारणाच्युता द्वादश कल्पा' । तदुपरि नव ग्रैवेयका. । तदुपरि विजयवैजयन्तजयन्तापराजितानि विमानानि प्राक्क्रमात्, मध्ये सर्वार्थसिद्धम् । तदुपरि द्वादशसु योजनेषु पञ्चचत्वारिंशद्योजनलक्षायामविष्कम्भा ईषत्प्राग्भारा नाम पृथ्वी, सा सिद्धिशिला । ततोऽप्युपरि गव्यूतत्रयादूर्ध्वं चतुर्थगव्यूतषष्ठभागे आ लोकान्तात् सिद्धाः ॥

तत्र धरणितलात् समभागात् सौधर्मेशानौ यावत्सार्धरज्जु । सनत्कुमारमाहेन्द्रौ यावत् सार्धं रज्जुद्वय । सहस्रार यावत् पञ्च रज्जव । अच्युत यावत् षट् रज्जव. । लोकान्त यावत्सप्त रज्जवः ॥

सौधर्मेशानौ वृत्तौ चन्द्रमण्डलाकारौ। तत्र दक्षिणार्धे शक्र इन्द्रः, उत्तरार्धे ईशानः । सनत्कुमारमाहेन्द्रावप्येवं,

तत्र दक्षिणार्धे सनत्कुमार उत्तरार्धे माहेन्द्रः। तत ऊर्ध्वलोकमध्यभागे लोकपुरुषकूर्परसमप्रदेशे ब्रह्मलोकः, तन्नामेन्द्रः, तदेकदेशवासिनः सारस्वतादित्यवह्न्यरुणगर्दतोयतुषिताव्याबाधमरुतारिष्टाख्या लोकान्तिका देवाः। ततोऽप्युपरि लान्तकः, तन्नामेन्द्रः। ततोऽप्युपरि महाशुक्रः, तन्नामेन्द्रः। ततोऽप्युपरि सहस्रारः तन्नामेन्द्रः। ततोऽप्युपरि सौधर्मैशानवच्चन्द्राकारावानतप्राणतौ कल्पौ, तत्र प्राणतवासी तन्नामा तयोरेक इन्द्रः। ततोऽप्युपरि प्राग्वच्चन्द्राकारावारणाच्युतौ, तत्राच्युतनिवासी तन्नामा तयोरेक इन्द्रः। ततः परमहमिन्द्रा देवाः॥

तत्र प्रथमौ कल्पौ घनोदधिप्रतिष्ठानौ। तदुपरि त्रयो वायुप्रतिष्ठानाः। ततः परं त्रयो घनोदधिघनवातप्रतिष्ठानाः। तदुपर्याकाशप्रतिष्ठानाः। तेष्विन्द्रसामानिकत्रायस्त्रिंशत्पारिषद्यात्मरक्षलोकपालानीकप्रकीर्णकाभियोग्यकिल्बिषिका देवाः। तत्रेन्द्राः सामानिकादिभेदानां नवानामधिपतयः। इंद्रसमानाः सामानिका अमात्यपितृगुरूपाध्यायमहत्तरवत्केवलमिन्द्रत्वहीनाः १। त्रायस्त्रिंशा मन्त्रिपुरोहितस्थानीयाः २। पारिषद्या वयस्यस्थानीयाः ३। आत्मरक्षा अङ्गरक्षस्थानीयाः ४। लोकपाला आरक्षकार्थचरस्थानीयाः ५। अनीकान्यनीकस्थानीयानि, तदधिपतयो दण्डनायकस्थानीया अप्यनीकानि ६। प्रकीर्णकाः पौरजनपदस्थानीयाः ७। आभियोग्या दासस्थानीयाः ८। किल्विषिका अन्तस्थ ( अन्त्यज ) स्थानीयाः ९। त्रायस्त्रिंशल्लोकपालवर्जा व्यन्तरा ज्योतिष्काः॥

सौधर्मे विमानानां द्वात्रिंशल्लक्षाः। ऐशानेऽष्टाविंशतिः। सनत्कुमारे द्वादश। माहेन्द्रेऽष्टौ। ब्रह्मलोके चत्वारः। लान्तके पञ्चाशत्सहस्राणि। शुक्रे चत्वारिंशत्सहस्राणि। सहस्रारे षट् सहस्राणि। आनतप्राणतयोश्चत्वारि शतानि। आरणाच्युतयोस्त्रीणि। प्रथमे ग्रैवेयकत्रिके एकादशोत्तरं शतं। मध्यमे त्रिके सप्तोत्तरं। उपरि त्रिके एकमेव शतं।

अनुत्तरविमानानि पञ्चैव इति। एवं विमानानां चतुरशीतिर्लक्षा सप्तनवतिश्च सहस्राणि त्रयोविंशानीति। विजयादिषु चतुर्ष्वनुत्तरविमानेषु द्विचरमा देवा। सर्वार्थसिद्धे त्वेकचरमाः॥

एतेषु च सौधर्मादारभ्य सर्वार्थसिद्धं यावद्देवा स्थित्या प्रभावेण सुखेन दीप्त्या लेश्यया विशुध्या इन्द्रियविषयेण अवधिज्ञानविषयेण च पूर्वपूर्वेभ्य उत्तरोत्तरेऽधिकाः, गत्या शरीरेण परिग्रहेणाभिमानेन च हीनहीनतराः। उच्छ्वास सर्वजघन्यस्थितीनां भवनपत्यादीनां देवानां सप्तस्तोकान्ते, आहारश्चतुर्थान्ते। पल्योपमस्थितीनामन्तर्दिवसस्योच्छ्वास, दिवसपृथक्त्वतश्चाहार। यस्य यावन्ति सागरोपमाणि (आयुष) तस्य तावत्स्वर्धमासेषूच्छ्वासः, तावत्स्वेव वर्षसहस्रेष्वाहार। देवाश्च सद्वेदनाः प्रायेण भवन्ति, यदि चासद्वेदना भवन्ति ततोऽन्तर्मुहूर्त्तमेव, न परतः॥

उत्पत्तिर्देवीनामा ईशानात्, गमनं च आ अच्युतात्। तापसानामा ज्योतिष्कादुत्पत्तिः। आ ब्रह्मलोकाच्चरकपरिव्राजकानां। पञ्चेन्द्रियतिरश्चामा सहस्रारात्। मनुष्यश्रावकाणामा अच्युतात्। मिथ्यादृष्टीनां प्रतिपन्नजिनलिङ्गानां यथोक्तसामाचारीपरिपालकानामा नवमग्रैवेयकात्। चतुर्दशपूर्वधराणां ब्रह्मलोकादूर्ध्वमा सर्वार्थसिद्धात्। अविराधितव्रतानां साधूनां श्रावकाणां च जघन्येन सौधर्मे॥

भवनवास्यादयो देवा आ ईशानात् कायप्रवीचारा। ते हि संक्लिष्टकर्माणो मनुष्यवन्मैथुनसुखमनुप्रलीयमानास्तीव्रानुशया कायसंक्लेशजं सर्वाङ्गीणं स्पर्शसुखमवाप्य प्रीतिमुपलभन्ते इति। शेषा स्पर्शरूपशब्दप्रवीचारा

(१) चरमभविन ॥

द्वयोर्द्वयोः, चतुर्षु मनःप्रवीचाराः, परेष्वप्रवीचाराः प्रवीचारवद्भ्यो देवेभ्योऽनन्तगुणसुखा इति । अयमधस्तिर्यगूर्ध्वभेदो लोकः । अस्य च मध्ये रज्जुप्रमाणायामविष्कम्भा ऊर्ध्वाधश्चतुर्दशरज्ज्वात्मिका त्रसनाडी त्रसाः स्थावराश्च जीवा अत्र भवन्तीति कृत्वा । त्रसनाड्या बहिः स्थावरा एव जीवा भवन्तीति ॥ १०५ ॥

लोकस्यैव विशेषस्वरूपमाह—

**निष्पादितो न केनापि न धृतः केनचिच्च सः। स्वयंसिद्धो निराधारो गगने किंत्ववस्थितः॥१०६॥**

निष्पादितः कृतो न केनापि प्रकृतीश्वरविष्णुब्रह्मपुरुषप्रभृतीनामन्यतमेन । प्रकृतेरचेतनत्वात् कर्तृत्वानुपपत्तेः । ईश्वरादीनां च न कर्तृत्वं प्रयोजनाभावात् । क्रीडा प्रयोजनमिति चेत्, न, क्रीडायाः कुमारकाणामिव रागिणामेव संभवात्, क्रीडासाध्यायाश्च प्रीतेस्तेषां शाश्वतिकत्वात्, क्रीडानिमित्तायां तु प्रीतौ तेषां पूर्वमसत्त्वप्रसङ्गः । कृपया प्रवृत्तिरिति चेत् तर्हि सुख्येव सर्गः स्यात् न दुःखी । कर्मापेक्षः सुखदुःखमयः सर्ग इति चेत् तर्हि कर्मैव कारणमस्तु । कर्मापेक्षत्वे चैषां स्वातन्त्र्यविघातः । कर्मजन्ये च भावानां वैचित्र्ये किमीश्वरादिभिः प्रयोजनम् ? । अथ प्रयोजनमन्तरेणैव तेषां सर्गक्रमः, तदयुक्तं, न प्रयोजनमन्तरेण बालोऽपि किञ्चित्करोति, तस्मान्न केनचिदयं लोको निष्पादित इति । न च केनचिदयं ध्रियते, शेषकूर्मवराहादयस्तस्य धारका इति चेत् तेषामपि किं धारकमिति वाच्यं, आकाशमिति चेत् तस्यापि किं धारकं ? स्वप्रतिष्ठमेवेदमिति चेत्, लोकोऽपि तथाऽस्तु । एवं च सति केनचिदनुत्पादितत्वात्स्वयंसिद्धः, केनचिदधृतत्वान्निराधारः । ननु निराधारस्यापि तस्य कुत्रावस्थानम् ? इत्याह—गगने किं त्ववस्थितः आकाशरूप एवायमाकाश च प्रतिष्ठितः इत्यर्थः । अत्रान्तरश्लोकाः—

ननु लोकभावनाया भावनात्र कथं भवेत् ? । उच्यते निर्ममत्वं स्यादितोऽपि हि निशम्यताम् ॥ १ ॥ सुखहेतौ क्वचिद्भावे मनो रज्यन्मुहुर्मुहु । लोकभावनयाऽत्यर्थं विप्रकीर्णं निधीयते ॥ २ ॥ भूद्वीपसागरादीनि धर्मध्यानस्य गोचर । इत्युक्त ध्यानशतके नर्ते तल्लोकभावनाम् ॥३॥ जिनोक्ते लोकरूपे च सर्वादिनि विनिश्चिते । अतीन्द्रिये मोक्षमार्गेऽथाधत्ते प्रत्यय जन ॥ ४ ॥

इति लोकभावना ॥ ११ ॥ १०६ ॥

अथ बोधिदुर्लभत्वभावना श्लोकत्रयेणाह—

अकामनिर्जरारूपात् पुण्याज्जन्तो प्रजायते। स्थावरत्वात्त्रसत्वं वा तिर्यक्त्वं वा कथञ्चन ॥१०७॥

अकामनिर्जरा यथाप्रवृत्तिकरणेन गिरिसरिदुपलघोलनाकल्पेनाकामस्य निरभिलाषस्य या निर्जरा कर्मप्रदेशविचटनरूपा सैव रूप यस्य तस्मात्, पुण्यादिति पुण्य न पुण्यप्रकृतिरूप, किन्तु कर्मलाघवरूप तस्मात्, जन्तोः शरीरिण' प्रजायते भवति । किं तदित्याह–स्थावरत्वादेकेन्द्रियजातिसहचारिस्थावरनामकर्मोदयकृतात् पर्यायविशेषात्, त्रसत्व वा त्रसनामकर्मोदयज द्वीन्द्रियत्वादिसहचारि, तिर्यक्त्व वा पञ्चेन्द्रियतिर्यग्रूपता, कथञ्चन विशिष्टात्कर्मलाघवात् ॥ १०७ ॥ तथा—

मानुष्यमार्यदेशश्च जाति सर्वाक्षपाटवम्। आयुश्च प्राप्यते तत्र कथञ्चित्कर्मलाघवात् ॥१०८॥

मानुषस्य भावो मानुष्य, कुतोऽपि कर्मलाघवात् युगच्छिद्रे शमिलाप्रवेशन्यायेन । ततोऽपि शकयवनाद्यनार्य-

देशपरिहारेणार्यदेशो मगधादिः । ततोऽप्यार्यदेशप्राप्तावपि जातिः अन्त्यजादिपरिहारेणोत्तमजातिः, जात्या कुलमुपलक्ष्यते। जातिकुलप्राप्तावपि सर्वाक्षपाटवमहीनपञ्चेन्द्रियता। तत्र सर्वाक्षपाटवेऽपि दीर्घमायुः कथञ्चित्कर्मलाघवात् अशुभस्य कर्मणो लाघवात् अपचयात्, उपलक्षणात् पुण्यस्योपचयाच्च प्राप्यते, न ह्यल्पायुः किञ्चनैहिकमामुष्मिकं वा कार्यं कर्तुं शक्तः, भगवन्तोऽपि वीतरागा "हे आयुष्मन्! गौतम!" इत्यादि वदन्तो दीर्घायुष्कं (ष्ट्वं) सर्वगुणेभ्योऽधिकमाचचक्षिरे ॥ १०८ ॥ तथा—

**प्राप्तेषु पुण्यतः श्रद्धाकथकश्रवणेष्वपि । तत्त्वनिश्चयरूपं तद्बोधिरत्नं सुदुर्लभम् ॥ १०९ ॥**

पुण्यतः कर्मलाघवलक्षणात् शुभकर्मोदयलक्षणाच्च प्राप्तेष्वासादितेषु । केषु? इत्याह—श्रद्धा धर्माभिलाषः, कथको धर्मोपदेष्टा गुरुः, श्रवणं तद्वचनाकर्णनं, एतेषु सत्स्वपि । तदिति प्रसिद्धं, बोधिरत्नं सुदुर्लभं, बोधिस्तु तत्त्वनिश्चयः तत्त्वस्य देवगुरुधर्मरूपस्य निश्चयो दृढोऽभिनिवेशः, तदेव रूपं यस्य तत् तत्त्वनिश्चयरूपं । स्थावरत्वात्त्रसत्वादीन्यपि दुर्लभानि, तेभ्योऽपि बोधिरत्नं दुर्लभमिति सुशब्देनाह । यतो मिथ्यादृशोऽपि त्रसत्वादीनि श्रवणान्तान्यनन्तशः प्राप्नुवन्ति, बोधिरत्नं तु न लभन्ते, तच्चाविघ्नं मोक्षतरुबीजमिति । अत्रान्तरश्लोकाः—

राज्यं वा चक्रभृत्त्वं वा शक्रत्वं वा न दुर्लभम् । यथा जिनप्रवचने बोधिरत्यन्तदुर्लभा ॥ १ ॥ सर्वे भावाः सर्वजीवैः प्राप्तपूर्वा अनन्तशः । बोधिर्न जातुचित्प्राप्ता भवभ्रमणदर्शनात् ॥ २ ॥ पुद्गलानां परावर्तेष्वनन्तेषु गतेष्विह । उपार्धपुद्गलावर्ते शेषे सर्वशरीरिणाम् ॥ ३ ॥ सर्वेषां कर्मणां शेषे कोटिकोट्यन्तरस्थितौ । ग्रन्थिभेदात् कश्चिदेव लभते बोधिमुत्तमाम् ॥४॥ यथाप्रवृत्तिकरणादन्ये तु ग्रन्थिसीमानि । प्राप्ता अप्यवसीदन्ति भ्रमन्ति च पुनर्भवम् ॥५॥

कुशास्त्रश्रवण सङ्गो मिथ्यादृग्भि' कुवासना । प्रमादशीलता चेति स्युर्बोधेः परिपन्थिन ॥ ६ ॥ चारित्रस्यापि सप्राप्तिर्दुर्लभा यद्यपीरिता । तथापि बोधिप्राप्तौ सा सफला नि फलाऽन्यथा ॥ ७ ॥ अभव्या अपि चारित्र प्राप्य ग्रैवेयकादिषु । उत्पद्यन्ते विना बोधिं त्वाप्नुवन्ति न निर्वृतिम् ॥ ८ ॥ असप्राप्ते बोधिरत्ने चक्रवर्त्यपि रङ्कवत् । सप्राप्तबोधिरत्नस्तु रङ्कोऽपि स्यात्ततोऽधिक' ॥ ९ ॥ सप्राप्तबोधयो जीवा न रज्यन्ते भवे क्वचित् । निर्ममत्वाद्भजन्त्येक मुक्तिमार्गमनर्गला ॥ १० ॥ ये प्राप्ता परम पद तदपरे प्राप्स्यन्ति ये केऽपि वा, ये वा केचिदवाप्नुवन्ति विकसत्पुण्यर्द्धयः सप्रति । सर्वेऽप्यप्रतिमप्रभावविभवा बोधिं समासाद्य ते, तस्माद्बोधिरुपास्यता किमपर सस्तूयतां श्रूयताम् ॥ ११ ॥

इति बोधिभावना १२ ॥ १०९ ॥

भावनां निर्ममत्वहेतुकामुपसहरन् प्रकृते समत्वे योजयति—

भावनाभिरविश्रांतमिति भावितमानस । निर्मम. सर्वभावेषु समत्वमवलम्बते ॥ ११० ॥

स्पष्टः ॥ ११० ॥ साम्यस्यैव फलमाह—

विषयेभ्यो विरक्तानां साम्यवासितचेतसाम् । उपशाम्येत् कषायाग्निर्बोधिदीप. समुन्मिषेत् १११

साम्यवासितचेतसा योगिनामत एव विषयेभ्यो विरक्तानामुपशाम्येत् कषायाग्निरित्यनर्थनिषेध., बोधिदीप समुन्मिषेदित्यर्थप्राप्ति ॥ १११ ॥

तदेवं कषायजयमिन्द्रियजयेन, इन्द्रियजयं मनःशुद्ध्या, मनःशुद्धिं रागद्वेषजयेन, रागद्वेषजयं समत्वेन, समत्वं च भावनाहेतुकनिर्ममत्वेन प्रतिपाद्योत्तरं प्रकरणं प्रक्रमते—

**समत्वमवलम्ब्याथ ध्यानं योगी समाश्रयेत् । विना समत्वमारब्धे ध्याने स्वात्मा विडम्ब्यते ।१११।**

अथानन्तरं योगी मुनिः समत्वमवलम्ब्य दृढं चेतसि व्यवस्थाप्य ध्यानं वक्ष्यमाणलक्षणं समाश्रयेत् । यद्यपि ध्यानमपि समत्वमेव, तथापि विशिष्टतरं साम्यं ध्यानमुच्यते, ध्यानरूपतायोग्यं त्वाभ्यासिकं साम्यमिति न पौनरुक्त्यम् । व्यतिरेकमाह—अनुप्रेक्षादिबललब्धं समत्वं विनाऽऽरब्धे ध्याने स्वकीय एवात्मा विडम्ब्यते । तथाहि—इन्द्रियाणि न गुप्तानि मनःशुद्धिर्न वा कृता । रागद्वेषौ जितौ नैव निर्ममत्वं न निर्मितम् ॥ १ ॥ नाभ्यस्ता समता किन्तु गतानुगतिकत्वतः । मूढैरारभ्यते ध्यानं लोकद्वयपथच्युतैः ॥ २ ॥

यथाविधि ध्यानं तु विधीयमानं न विडम्बना, प्रत्युतात्महिताय ॥ ११२ ॥ एतदेवाह—

**मोक्षः कर्मक्षयादेव स चात्मज्ञानतो भवेत् । ध्यानसाध्यं मतं तच्च तद्ध्यानं हितमात्मनः ॥११३॥**

मोक्षः स्वरूपलाभलक्षणः कर्मणां स्वरूपावरणीयानां क्षयादेव, नान्यथा इत्येतदविवादसिद्धं । स च कर्मक्षय आत्मज्ञानादेव भवतीत्यत्राप्यविवादः । तच्चात्मज्ञानं ध्यानसाध्यं ध्यानेनैव साध्यते, ध्यानस्य साध्यमेवेत्यन्ययोगव्यवच्छेदस्वयोगव्यवस्थाभ्यां ध्यानसाध्यता । तत्तस्माद्धेतोर्ध्यानमात्मनो हितमिति प्रकृतम् ॥ ११३ ॥

ननु पूर्वमर्थप्राप्तयेऽनर्थपरिहाराय च साम्यमुक्तं, इदानीं तु ध्यानस्यात्महितत्वमुच्यते, तत्कस्य प्राधान्यं ?

उच्यते—द्वयोरपि प्राधान्य नान्तरीयकत्वात् । एतदेवाह—

**न साम्येन विना ध्यान न ध्यानेन विना च तत्। निष्कम्प जायते तस्माद्द्वयमन्योऽन्यकारणम् ११४**

साम्य विना न ध्यान भवति, न च ध्यान विना साम्य भवति । एव तर्हीतरेतराश्रय ? नैव, साम्यमन्तरेण ध्यान न भवत्येव, ध्यान तु विना साम्य भवदपि निष्कम्प न भवतीति इतरेतराश्रयदोषाभाव । एव च सति द्वयमन्योऽन्यस्य हेतुत्वेनावतिष्ठते ॥ ११४ ॥

साम्य पूर्वमेव व्याख्यातम्, इदानीं ध्यानस्य स्वरूप व्याख्यायते—

**मुहूर्त्तान्तर्मन स्थैर्यं ध्यान छद्मस्थयोगिनाम्। धर्म्यं शुक्ल च तद्द्वेधा योगरोधस्त्वयोगिनाम् ११५**

इह द्वये ध्यातार –सयोगा अयोगिनश्च । सयोगा अपि द्विविधा —छद्मस्था केवलिनश्च । तत्र छद्मस्थयोगिना ध्यानस्य लक्षणमेतत्, यदुतान्तर्मुहूर्त्त कालमेकस्मिन्नालम्बने चेतस. स्थिति , यदाह—उत्तमसंहननस्यैकाग्रचित्तनिरोधो ध्यानमान्तर्मुहूर्त्तात् । तच्च छद्मस्थयोगिनां द्वेधा–धर्म्यं शुक्ल च । तत्र धर्माद्दशविधादनपेत धर्मेण प्राप्य वा धर्म्यम् । शुक्ल शुचि निर्मल सकलकर्ममलक्षयहेतुत्वात् । यद्वा शुग् दु ख तत्कारण वाऽष्टविध कर्म, शुच क्लमयतीति शुक्ल । अयोगिनां तु अयोगिकेवलिनां ध्यान योगनिरोधः योगाना मनोवाक्कायाना निरोधो निग्रह । सयोगिकेवलिना तु योगनिरोधकाल एव ध्यानसभव इति पृथग् नोक्त, ते हि देशोनपूर्वकोटिं यावन्मनोवाक्कायव्यापारयुक्ता एव विहरन्ति । अपवर्गकाले तु योगनिरोध कुर्वन्तीति ॥ ११५ ॥

ननु छद्मस्थयोगिनां यदि मुहूर्त्तकालं ध्यानं तर्हि ततः परं किं स्यादित्याह—

**मुहूर्त्तात्परतश्चिन्ता यद्वा ध्यानान्तरं भवेत् । बह्वर्थसंक्रमे तु स्याद्दीर्घोऽपि ध्यानसंततिः ॥११६॥**

मुहूर्त्तात्परतो मुहूर्त्तोत्तरकालं चिन्ता भवेत् यद्वा ध्यानान्तरं आलम्बनभेदेन भिन्नं भवेत्, न पुनरेकमेव ध्यानं मुहूर्त्तात् परतो भवति तत्स्वाभाव्यादिति । एवं चैकस्मादर्थाद्द्वितीयमर्थमालम्बमानस्य पुनस्तृतीयं चतुर्थं च दीर्घोऽपि दीर्घकालाऽपि ध्यानसंततिर्भवेत्, मुहूर्त्तान्तरं च प्रथमे ध्याने समाप्तप्राये आलम्बनान्तरे तद्विवृद्ध्यर्थं ध्याने भावनां कुर्वीत् ॥ ११६ ॥

तदेवाह—

**मैत्रीप्रमोदकारुण्यमाध्यस्थ्यानि नियोजयेत् । धर्म्यध्यानमुपस्कर्तुं तद्धि तस्य रसायनम् ॥११७॥**

'ञिमिदाच्' स्नेहने, मे(मि)द्यति स्निह्यतीति मित्रं, तस्य भावः समस्तसत्त्वविषयः स्नेहपरिणामो मैत्री । प्रमोदनं प्रमोदो वदनप्रसादादिभिर्गुणाधिकेष्वभिव्यज्यमानान्तर्भक्तिरनुरागः । करुणैव कारुण्यं दीनादिष्वनुकम्पा । रागद्वेषयोरन्तरालं मध्यं, तत्र स्थितो मध्यस्थः अरागद्वेषवृत्तिः, तद्भावो माध्यस्थ्यमुपेक्षा । तानि आत्मनि नियोजयेत् । किमर्थं ? धर्म्यध्यानमुपस्कर्तुं त्रुट्यतो ध्यानस्य पुनर्ध्यानान्तरेण सन्धानं कर्तुं । कुत इत्याह—तद्धि तस्य रसायनं तत् मैत्र्यादियोजनं हिर्यस्मात्तस्य ध्यानस्य जराजर्जरस्येव शरीरस्य त्रुट्यतो रसायनमिव रसायनम् ॥ ११७ ॥

तत्र मैत्रीस्वरूपमाह—

मा कार्षीत् कोऽपि पापानि मा च भूत् कोऽपि दु खित'। मुच्यतां जगदप्येषा मतिर्मैत्री निगद्यते

कोऽपि जन्तुरुपकार्यनुपकारी वा पापानि दु खनिबन्धनानि मा कार्षीत्, पापकरणनिषेधात् मा च भूत् कोऽपि दु खित'। जगदिति तांस्तान् देवमानुषतिर्यग्नारकपर्यायानत्यर्थं गच्छतीति जगत् प्राणिजात। अपिशब्दान्नैक कश्चित्, किं तु सकल जगत् मुच्यतां मोक्षमाप्नुयादित्यर्थः। एषा उक्तस्वरूपा मतिर्मैत्रीशब्देनोच्यते। न हि कस्यचिदेकस्य मित्र मित्र भवति, व्याघ्रादेरपि स्वापत्यादौ मैत्रीदर्शनात्, तस्मादशेषसत्त्वविषया मैत्री। एव कृतापकाराणामपि सर्वसत्त्वाना मित्रता व्यवस्थाप्य क्षमेऽह सम्यग्मनोवाक्कायैर्येषा च मयाऽपकार' कृतस्तानपि सर्वान् क्षमयेऽहमिति मैत्रीभावना॥ ११८॥

अथ प्रमोदस्वरूपमाह—

अपास्ताशेषदोषाणां, वस्तुतत्त्वावलोकिनाम्। गुणेषु पक्षपातो यः स प्रमोद' प्रकीर्तित.॥११९॥

अपास्ता अशेषा दोषाः प्राणिवधादयो यैस्तेषा। तथा वस्तुतत्त्वमवलोकन्त इत्येवशीलास्तेषां। अनेन ज्ञान-क्रियाद्वय मोक्षहेतुमाह, यदाह भाष्यकार —" नाणकिरियाहि मोक्खो " इति (ज्ञानक्रियाभ्या मोक्षः) एव-विधानां मुनीनां गुणेषु क्षायोपशमिकादिभावावर्जितेषु शमदमौचित्यगाम्भीर्यधैर्यादिषु यः पक्षपातो विनयप्रयोग-वन्दनस्तुतिवर्णवादवैयावृत्त्यकरणादिभिः परात्मोभयकृतपूजाजनितश्च सर्वेन्द्रियाभिव्यक्तो मनःप्रहर्षः स प्रमोदः

प्रकीर्तितः ॥ ११९ ॥

अथ कारुण्यस्वरूपमाह—

दीनेष्वार्त्तेषु भीतेषु याचमानेषु जीवितम्। प्रतीकारपरा बुद्धिः कारुण्यमभिधीयते ॥ १२० ॥

दीनेषु मतिश्रुताज्ञानविभङ्गबलेन प्रवर्तितकुशास्त्रेषु स्वयं नष्टेषु परानपि नाशयत्सु अत एव दयास्पदत्वाद्दीनेषु । तथाऽऽर्त्तेषु नवनवविषयार्जनपूर्वार्जितपरिभोगजनिततृष्णाग्निना दंदह्यमानेषु, हिताहितप्राप्तिपरिहारविपरीतवृत्तिषु अर्थार्जनरक्षणव्ययनाशपीडावत्सु च । तथा भीतेषु विविधदुःखपीडिततया अनाथकृपणबालवृद्धप्रेष्यादिषु सर्वतो बिभ्यत्सु । तथा वैरिभिराक्रान्तेषु रोगपीडितेषु मृत्युमुखमधिशयितेष्विव याचमानेषु प्रार्थयमानेषु जीवितं प्राणत्राणं । एतेषु दीनादिषु "अहो कुशास्त्रप्रणेतारः तपस्विनो यदि कुमार्गप्रणयनान्मोच्येरन्, भगवानपि हि भुवनगुरुः स (उ)न्मार्गदेशनात्सागरोपमकोटिकोटिं यावद्भवे भ्रान्तः तत्काऽन्येषां स्वपापप्रतीकारं कर्तुमशक्नुवतां गतिः ?, तथा धिगमी विषयार्जनभोगतरलहृदया अनन्तभवानुभूतेष्वपि विषयेष्वसंतृप्तमनसः कथं नाम प्रशमामृततृप्ततया वीतरागदशां नेतुं शक्या ? इति, तथा बालवृद्धादयोऽपि विविधभयहेतुभ्यो भीतमनसः कथं नामैकान्तिकात्यन्तिकभयवियोगभाजनीकरिष्यन्ते ? इति, तथा मृत्युमुखमधिशयिताः स्वधनदारपुत्रादिवियोगमुत्प्रेक्षमाणा मारणान्तिकीं पीडामनुभवन्तः सकलभयरहितेन पारमेश्वरवचनामृतेन सिक्ताः कथमजरामरीकरिष्यन्ते ?" इत्येवं प्रतीकारपरा या बुद्धिः, न तु साक्षात्प्रतीकार एव, तस्य सर्वेष्वशक्यक्रियत्वात्, सा कारुण्यमभिधीयते । या तु अशक्यप्रतीकारेषु सर्वान् जन्तून् मोचयित्वा मोक्षं यास्यामीति सौगतानां करुणा, न सा

कल्पना, वाङ्मात्रत्वात्, न ह्येव शक्यं भवितुं संसारिषु मुक्तेषु मया मोक्तव्यामिति, संसारोच्छेदप्रसङ्गेन सर्वसंसारिणां मुक्त्यभावात्, तस्माद्वाङ्मात्रमेतत् मुग्धजनप्रतारकं सौगतानां कारुण्यं। एतच्च कुर्वन् हितोपदेशदेशकालपेक्षान्नपानाश्रयवस्त्र ( पात्र ) भेषजैरपिताननुगृह्णातीति ॥ १२० ॥

अथ माध्यस्थ्यस्वरूपमाह—

क्रूरकर्मसु निःशङ्कं देवतागुरुनिन्दिषु। आत्मशंसिषु योपेक्षा तन्माध्यस्थ्यमुदीरितम् ॥१२१॥

क्रूराणि अभक्ष्यभक्षणापेयपानागम्यगमनऋषिबालस्त्रीभ्रूणघातादीनि कर्माणि येषां तेषु, तेऽपि कदाचिदवाप्तसंवेगा नोपेक्षणीयाः स्युरत आह—देवतागुरुनिन्दिषु देवताश्चतुर्स्त्रिंशदतिशयादियुक्ता वीतरागाः, गुरवः तदुक्तानुष्ठानस्य पालका उपदेष्टारश्च तान् रक्तद्विष्टमूढपूर्वव्युद्ग्राहिततया निन्दन्तीत्येवं शीलाः तेषु, तथाविधा अपि कथंचन वैराग्यदशापन्ना आत्मदोषदर्शिनो नोपेक्षणीयाः स्युरित्याह—आत्मशंसिषु आत्मानं सदोषमपि शंसन्ति प्रशंसन्तीत्येवंशीलाः आत्मनहुमानिन इत्यर्थः तेषु मुद्गशैलेष्विव पुष्करावर्त्तवारिभिर्मृदूकर्तुमशक्येषु देशनाभिः, योपेक्षा तन्माध्यस्थ्यमुदीरितम् ॥ १२१ ॥

अथ यदुक्तं धर्मध्यानमुपस्कर्तुमिति तद्विवेचयति—

आत्मानं भावयन्नाभिर्भावनाभिर्महामतिः। त्रुटितामपि संधत्ते विशुद्धध्यानसंततिम् ॥१२२॥

---

१ कारुण्यम्।

स्पष्टः ॥ १२२ ॥ ध्यानसाधनाय स्थानं निदर्शयति—

**तीर्थं वा स्वस्थताहेतु यत्तद्वा ध्यानसिद्धये । कृतासनजयो योगी विविक्तं स्थानमाश्रयेत् ॥१२३॥**

तीर्थं तीर्थकृतां जन्मदीक्षाज्ञाननिर्वाणभूर्मि, तदभावे स्वास्थ्यहेतु यत्तद्वा गिरिगुहादि विविक्तं स्त्रीपशुपण्डकादिरहितं स्थानमाश्रयेत्। यदाह—

[1]निच्चं चिअ जुवइपसूनपुंसगकुसीलवज्जिअं जइणो । ठाणं विअणं भणिअं विसेसओ झाणकालम्मि ॥१॥
थिरकयजोगाणं पुण मुणीणं झाणे सुनिच्चलमणाणं । गामम्मि जणाइण्णे सुन्नेऽरण्णे व न विसेसो ॥ २ ॥
तो जत्थ समाहाणं होइ मणोवयणकायजोगाणं । भूओवरोहरहिओ सो देसो झाए(य)माणस्स ॥३॥

स्थानग्रहणेन कालोऽप्युपलक्ष्यते । यदाह—

[2]कालो वि सो च्चिय जहिं जोगसमाहाणमुत्तमं लहइ । न उ दिवसनिसावेलाए निअमणं झाइणो भणिअं ॥१॥

ध्यानसिद्धये योगी स्थानमाश्रयेदिति संबन्धः । किंविशिष्टः ? कृतासनजयः कृत आसनानां कायसन्निवेशविशेषाणां वक्ष्यमाणस्वरूपाणां जयोऽभ्यासो येन स तथा ॥ १२३ ॥

---

(१) नित्यं चैव युवतिपशुनपुंसककुशीलवर्जितं यतेः । स्थानं विजनं भणितं विशेषतो ध्यानकाले ॥ १ ॥
स्थिरकृतयोगानां पुनर्मुनीनां ध्याने सुनिश्चलमनसाम् । ग्रामे जनाकीर्णे शून्येऽरण्ये वा न विशेषः ॥ २ ॥
ततो यत्र समाधानं भवति मनोवचनकाययोगानाम् । भूतोपरोधरहितः स देशो ध्यायतः ॥ ३ ॥

(२) कालोऽपि स चैव यत्र योगसमाधानमुत्तमं लभते । न तु दिवसनिशावेलाया नियमनं ध्यानिनो भणितम् ॥ १ ॥

अथासनान्येवाह—

पर्यङ्कवीरवज्राब्जभद्रदण्डासनानि च । उत्कटिका गोदोहिका कायोत्सर्गस्तथासनम् ॥१२४॥

पर्यङ्कादिषु प्रत्येकमासनशब्दः सम्बध्यते ॥ १२४ ॥

क्रमेणासनानि व्याचष्टे—

स्याज्जङ्घयोरधोभागे पादोपरि कृते सति । पर्यङ्को नाभिगोत्तानदक्षिणोत्तरपाणिकः ॥१२५॥

जङ्घयोरधोभागे पादोपरि कृते सति पाणिद्वय नाभ्यासन्नमुत्तान दक्षिणोत्तर यत्र दक्षिणोत्तरोपरिवर्ती यत्र तत्तथा एतत्पर्यङ्को नाम शाश्वतप्रतिमाना श्रीमहावीरस्य च निर्वाणकाले आसन यथा पर्यङ्कः पादोपरि भवति तथाऽयमपीति पर्यङ्क " जानुप्रसारितबाहो' शयन पर्यङ्क " इति पातञ्जलाः ॥ १२५ ॥

अथ वीरासनम्—

वामोऽङ्घ्रिर्दक्षिणोरूर्ध्वं वामोरूपरि दक्षिण । क्रियते यत्र तद्वीरोचित वीरासन स्मृतम् ॥१२६॥

वामोऽङ्घ्रिर्वामपादो दक्षिणोरूर्ध्वं वामस्य चोरोरुपरि दक्षिणोऽङ्घ्रिर्यत्र क्रियते तद्वीराणां तीर्थकरप्रभृतीनामुचित, न कातराणां, वीरासन स्मृत । अग्रहस्तन्यास पर्यङ्कवत्, इद पद्मासनमित्येके, एकस्यैव पादस्य ऊरावारोपणेऽर्धपद्मासनम् ॥ १२६ ॥

अथ वज्रासनम्—

पृष्ठे वज्राकृतीभूते दोर्भ्यां वीरासने सति । गृह्णीयात् पादयोर्यत्राङ्गुष्ठौ वज्रासन तु तत् ॥१२७॥

उक्तस्वरूपे वीरासने सति पृष्ठे वज्राकाराभ्यां दोर्भ्यां पादयोर्यत्राङ्गुष्ठौ गृह्णीयात् तद्वज्रासनं। इदं वेतालासनमित्यन्ये ॥ १२७ ॥ मतान्तरेण वीरासनमाह—

सिंहासनाधिरूढस्यासनापनयने सति। तथैवावस्थितिर्या तामन्ये वीरासनं विदुः ॥ १२८ ॥

सिंहासनमधिरूढस्य भूमिन्यस्तपादस्य सिंहासनापनयने सति तथैवावस्थानं वीरासनम्। अन्ये इति सैद्धान्तिकाः कायक्लेशतपःप्रकरणे व्याख्यातवन्तः। पातञ्जलास्त्वाहुः—ऊर्ध्वस्थितस्यैकतरः पादो भून्यस्त एकश्चाकुञ्चितजानुरूर्ध्वमित्येतद्वीरासनमिति ॥ १२८ ॥ अथ पद्मासनम्—

जङ्घाया मध्यभागे तु संश्लेषो यत्र जङ्घया। पद्मासनमिति प्रोक्तं तदासनविचक्षणैः ॥१२९॥

जङ्घाया वामाया दक्षिणाया वा द्वितीयया जङ्घया मध्यभागे संश्लेषो यत्र तत् पद्मासनम् ॥ १२९ ॥

अथ भद्रासनम्—

संपुटीकृत्य मुष्काग्रे तलपादौ तथोपरि। पाणिकच्छपिकां कुर्याद्यत्र भद्रासनं तु तत् ॥१३०॥

स्पष्टम्। यत्पातञ्जलाः—पादतले वृषणसमीपे संपुटीकृत्य तस्योपरि पाणिकच्छपिकां कुर्यात्, एतद्भद्रासनम् ॥ १३० ॥

अथ दण्डासनम्—

श्लिष्टाङ्गुली श्लिष्टगुल्फौ भूश्लिष्टोरू प्रसारयेत्। यत्रोपविश्य पादौ तद्दण्डासनमुदीरितम् ॥१३१॥

स्पष्टम्। यत्पातञ्जलाः—उपविश्य श्लिष्टाङ्गुलीकौ श्लिष्टगुल्फौ भूमिश्लिष्टजङ्घौ च पादौ प्रसार्य दण्डासन-

मभ्यस्येत् ॥ १३१ ॥ अथोत्कटिकासनगोदोहिकासने—

**पुतपार्ष्णिसमायोगे प्राहुरुत्कटिकासनम् । पार्ष्णिभ्यां तु भुवस्त्यागे तत्स्याद्गोदोहिकासनम् १३२**

पुतयोः पार्ष्णिभ्यां भूमिलग्नाभ्यां योगे उत्कटिकासनं प्राहुः, यत्र भगवतः श्रीवीरस्य केवलज्ञानमुत्पन्नम् । यदाह—

[1]जंभिअवहि उजुवालिअतीरे विसाहसियदसमिपहरतिगे । छट्ठेणोक्कुडुअट्ठिअस्स केवलं आसि सालतले ॥१॥

तदेवोत्कटिकासनं गोदोहिकासनं गोदोहकसमाकारत्वात् पार्ष्णिभ्यां भुवस्त्यागे सति । इदं च प्रतिमाकल्पिकादीनां विधेयतयोपदिष्टम् ॥ १३२ ॥ अथ कायोत्सर्गः—

**प्रलम्बितभुजद्वन्द्वमूर्ध्वस्थस्यासितस्य वा । स्थानं कायानपेक्षं यत्कायोत्सर्गः स कीर्तितः ॥१३३॥**

प्रलम्बितं भुजयोर्द्वन्द्वं यत्र तत्तथा, कायानपेक्षं स्थानं स कायोत्सर्गो नामासनमूर्ध्वस्थस्यासितस्य वा ऊर्ध्वस्थितानां कायोत्सर्गो जिनकल्पिकादीनां छद्मस्थतीर्थकराणां च भवति, ते हि ऊर्ध्वजव एवासते, स्थविरकल्पिकानां तु ऊर्ध्वस्थितानामासितानां वा, उपलक्षणात् शयितानां वा यथाशक्ति भवति कायोत्सर्ग इति स्थानध्यानमौनक्रियाव्यतिरेकेण क्रियान्तरसम्बन्धिनः कायस्योत्सर्गस्त्याग इत्यर्थः । इदं चासनानां दिक्प्रदर्शनमात्रमुक्तमासनान्तराणामुपलक्षणार्थं, तथाहि—आम्रकुब्जासनम् आम्राकारतयाऽवस्थितिः, यथा भगवान् महावीर एकरा-

---

(१) जम्भिकाद्बहि ऋजुवालिकातीरे वैशाखसितदशमीप्रहरत्रिके । षष्ठेनोत्कटिकास्थितस्य केवलमासीत् सालतले ॥ १ ॥

त्रिकीं प्रतिमां श्रितः संगमकसुराधमेन विहितां विंशतिमुपसर्गाणामाधिसेहे । तथा एकपार्श्वशायित्वम् तच्चोर्ध्वमुखस्याधोमुखस्य तिर्यङ्मुखस्य वा भवति । तथा दण्डायतशायित्वम् ऋजूकृतशरीरस्य प्रसारितजङ्घोरुद्वयस्य चलनरहितस्य तद्भवति। तथा लगडशायित्वं मूर्ध्नः पार्ष्ण्योश्च भूमिस्पर्शे शरीरेण भूमेरस्पर्शे तद्भवति। तथा समसंस्थानं यत् पार्ष्ण्यग्रपादाभ्यां द्वयोराकुञ्चितयोरन्योऽन्यपीडनं । तथा दुर्योधासनं यद्भूमिप्रतिष्ठितशिरस उत्पादमवस्थानं कपालीकरणमिति च प्रसिद्धं, तस्मिन्नेव यदा जङ्घे पद्मासनीकृते भवतस्तदा दण्डपद्मासनं । तथा स्वस्तिकासनं यत्र सव्यमाकुञ्चितं चरणं दक्षिणजङ्घोर्वन्तरे निक्षिपेत् दक्षिणं चाकुञ्चितं वामजङ्घोर्वन्तरे इति । तथा सोपाश्रयं योगपट्टकयोगाद्यद्भवति। तथा क्रौञ्चनिषदनहंसानिषदनगरुडनिषदनादीन्यासनानि क्रौञ्चादीनां निषण्णानां संस्थानदर्शनात् प्रत्येतव्यानि । तदेवं न व्यवतिष्ठते आसनविधिः ॥ १३३ ॥

ततः—

**जायते येन येनेह विहितेन स्थिरं मनः । तत्तदेव विधातव्यमासनं ध्यानसाधनम् ॥१३४॥**

मेदस्विनामितरेषां च बलवतामपरेषां च येन येनासनेन कृतेन सात्म्यविशेषात् स्थिरं मनो जायते तत्तदेवासनं ध्यानसाधनत्वेन विधेयं । यदाह—

सव्वासु वट्टमाणा मुणओ जं देसकालचिट्ठासु । वरकेवलाइलाभं पत्ता बहुसो समिअपावा ॥ १ ॥

---

( १ ) सर्वासु वर्तमाना मुनयो यद् देशकालचेष्टासु । वरकेवलादिलाभं प्राप्ता बहुशः शमितपापाः ॥ १ ॥

'तो देसकालचेट्ठानियमो ज्झाणस्स नत्थि समयम्मि । जोगाण समाहाणं जह होइ तहा पयइअव्व ॥२॥

न चैवमासनाभिधानमनर्थकं, प्रतिमाकल्पिकान् प्रत्यासननियमस्याभिधानात् द्वादशसु भिक्षुप्रतिमासु अष्टम्यां प्रतिमायामासननियमो यथा—

उंत्ताणगपासल्ली नेसज्जीवावि ठाणठाइत्ता। सह उवसग्गे घोरे दिव्वाई तत्थ अविकंपो ॥१॥ नवम्यां यथा—

दोचा वि एरिस चिय बहिआ गामाइआण नवर तु । उक्कडलगडसाई दडाययउव्व ठाइत्ता ॥ २ ॥

दशम्यां यथा—

तचावि एव नवर ठाण तु तस्स होइ गोदोही । वीरासणमहवा वी ठाइज वि अंबखुज्जो उ ॥ ३ ॥ १२४ ॥

इदानीमासनानां यथा ध्यानसाधनत्वं भवति तथा श्लोकद्वयेनाह—

**सुखासनसमासीनः सुश्लिष्टाधरपल्लवः । नासाग्रन्यस्तदृग्द्वन्द्वो दन्तैर्दन्तानसंस्पृशन् ॥१२५॥**

**प्रसन्नवदनः पूर्वाभिमुखो वाप्युदङ्मुखः। अप्रमत्तः सुसंस्थानो ध्याता ध्यानोद्यतो भवेत्॥१२६॥**

---

(१) ततो देशकालचेष्टानियमो ध्यानस्य नास्ति समये । योगाना समाधान यथा भवति तथा प्रयतितव्यम् ॥ २ ॥

(२) उत्तानक पार्श्वशायी नैषधिको वापि स्थान स्थित्वा । सहेतोपसर्गान् घोरान् दिव्यादीन् तत्राविकम्प ॥ १ ॥

(३) द्वितीयाऽपीदृशी चैव बहिर्ग्रामादिभ्यो नवर तु । उत्कटिकलगडशायी दण्डायतिक इव (को वा) स्थित्वा ॥२॥

(४) तृतीयाऽप्येव नवर स्थान तु तस्य भवति गोदोही । वीरासनमथवाऽपि तिष्ठेदप्याम्रकुब्ज तु (वा) ॥३॥

सुखं सुखावहं आस्यतेऽनेन आस्ते वाऽनेन तदासनं, सुखं च तदासनं च तेनासीनः, अनेनासनजयमाह । सुश्लिष्टौ मिलितावधरपल्लवौ यस्य स तथा, अनेन प्राणप्रसरनिषेधमाह । नासाग्रे न्यस्तं दृग्द्वन्द्वं येन स तथा, अनेन प्राणजयस्य हेतुमाह । दन्तैरुपरितनैरधस्तनैश्च दन्तानुपरितनानधस्तनांश्चासंस्पृशन्, तत्संस्पर्शे हि ध्याननिश्चलता न स्यात् । तथा प्रसन्नं रजस्तमोरहितत्वेन प्रसादवत् भ्रूविक्षेपादिरहितं वदनं यस्य सः । तथा पूर्वाभिमुखो वा उदङ्मुखो वा, अनेनानयोर्दिशोः पूज्यत्वमाह । जिनजिनप्रतिमाभिमुखो वा । अप्रमत्तः प्रमादरहितः, अनेन मुख्यमधिकारिणमाह । यदाह—धर्म्यमप्रमत्तसंयतस्य शोभनमृज्वायतमूर्त्तिकं संस्थानं शरीरसन्निवेशो यस्य स तथा । एवंविधः सन् ध्याता ध्यानोद्यतो भवेत् ध्याने उद्यच्छेत् ।

इति निगदितमेतत्साधनं ध्यानसिद्धे-र्यतिगृहिगतभेदाद्भिन्नरत्नत्रयं च ।

सकलमपि यदन्यध्ध्यानभेदादि सम्यक्, प्रकटितमुपरिष्टादष्टभिस्तत्प्रकाशैः ॥ १ ॥ १३५ ॥ १३६ ॥

इति परमार्हतश्रीकुमारपालभूपालशुश्रूषिते आचार्यश्रीहेमचन्द्रविरचिते अध्यात्मोपनिषन्नाम्नि संजातपट्टबन्धे श्रीयोगशास्त्रे स्वोपज्ञं चतुर्थप्रकाशविवरणम् ॥

**इति योगशास्त्रे प्रथमो विभागः**

आचार्य श्री हेमचन्द्रविरचितम् ।

# ॥ योगशास्त्रम् ॥

( स्वोपज्ञविवरणसहितम् )

( द्वितीयो विभागः )

## ॥ पञ्चमः प्रकाशः ॥

ॐ नमः सर्वज्ञाय परमात्मने श्रीजिनेन्द्राय ॥ अत्रान्तरे परै प्राणायाम उपदिष्टो " यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टावङ्गानि योगस्येति " वचनात् । न च प्राणायामो मुक्तिसाधने ध्याने उपयोगी, असौमनस्यकारित्वात् । यदाहु —

ऊसास न निरुभइ आभिग्गहिओ वि किमुअ चिट्ठाए ? । सज्ज मरण निरोहे सुहुमोसास तु जयणाए ॥१॥

तथापि कायारोग्यकालज्ञानादौ स उपयोगीत्यस्माभिरपीहोपदर्श्यते—

**प्राणायामस्ततः कैश्चिदाश्रितो ध्यानसिद्धये। शक्यो नेतरथा कर्तुं मन पवननिर्जय ॥१॥**

(१) उच्छ्वास न निरुणद्धि आभिग्रहिकोऽपि किमुत चेष्टावान् ? । सद्यो मरण निरोधे (तत )सूक्ष्मोच्छ्वास तु यतनया (ग्राह्य ) ॥१॥

प्राणस्य मुखनासान्तरसंचारिणो वायोः आ समन्तात् यमनं गतिविच्छेदः प्राणायामः । ततः आसनजयादनन्तरं कैश्चित् पातञ्जलिप्रभृतिभिः आश्रितोऽङ्गीकृतः ध्यानसिद्धये ध्यानसिद्ध्यर्थं । तदाश्रयणे कारणमाह— इतरथा मनसः पवनस्य च जयः कर्तुं न शक्यः ॥ १ ॥

ननु प्राणायामात् पवनविजयो भवतु, मनोविजयस्तु कथं ? इत्याह—

**मनो यत्र मरुत्तत्र मरुद्यत्र मनस्ततः । अतस्तुल्यक्रियावेतौ संवीतौ क्षीरनीरवत् ॥ २ ॥**

मनश्चेतो यत्र देशे तत्र मरुत्, यत्र मरुत् ततो मनः, तत इति आद्यादित्वेन सप्तम्यन्तात्तसुः । अत एतौ मनःपवनौ तुल्यक्रियौ तुल्ये क्रिये गमनस्थानलक्षणे ययोस्तौ तथा । संवीतौ क्षीरनीरवत् यथा क्षीरनीरे मिलिते समरसतया वर्तेते तथा मनःपवनावपि ॥ २ ॥

तुल्यक्रियत्वमेव भावयति—

**एकस्य नाशेऽन्यस्य स्यान्नाशो वृत्तौ च वर्तनम् । ध्वस्तयोरिन्द्रियमतिध्वंसान्मोक्षश्च जायते ॥३॥**

एकस्य मनःपवनयोरन्यतरस्य नाशेऽन्यस्य तदेकतरस्य नाशः स्यात्, वृत्तौ प्रवृत्तौ वर्तनं प्रवृत्तिः स्यात् । मनःपवनयोर्ध्वस्तयोः सतोरिन्द्रियमतिध्वंसो भवति, इन्द्रियमतिध्वंसाच्च मोक्षो भवति ॥ ३ ॥

प्राणायामस्य लक्षणं तद्भेदांश्चाह—

**प्राणायामो गतिच्छेदः श्वासप्रश्वासयोर्मतः । रेचकः पूरकश्चैव कुम्भकश्चेति स त्रिधा ॥४॥**

बाह्यस्य वायोराचमन श्वास., कोष्ठस्य वायोर्निःश्वसन प्रश्वास', तयोर्गतिच्छेद प्राणायामः । स त्रिधा–रेचकः पूरक कुम्भकश्चेति ॥ ४ ॥

आचार्यान्तरमतेन भेदान्तराण्याह—

प्रत्याहारस्तथा शान्त उत्तरश्चाधरस्तथा । एभिर्भेदैश्चतुर्भिस्तु सप्तधा कीर्त्यते परे ॥ ५ ॥

प्रत्याहारशान्तोत्तराधरलक्षणैश्चतुर्भिर्भेदैः पूर्वभेदसहितै प्राणायाम सप्तधा ॥ ५ ॥

क्रमेणैषां लक्षणमाह—

यत्कोष्ठादतियत्नेन नासाब्रह्मपुराननैः । वहि. प्रक्षेपण वायो स रेचक इति स्मृतः ॥ ६ ॥

कोष्ठादुदरात् अतियत्नेन नासया ब्रह्मरन्ध्रेणाननेन च यद् वहि प्रक्षेपण वायोः स रेचक. प्राणायामः ॥६॥

तथा—

समाकृष्य यदापानात् पूरण स तु पूरक । नाभिपद्मे स्थिरीकृत्य रोधनं स तु कुम्भकः ॥७॥

बाह्येन वायुना आकृष्टेन आ अपान (नात्) यत् कोष्ठस्य पूरण स पूरकः । यत् पुनर्नाभिपद्मे कुम्भ इव वायोः स्थिरीकरण स कुम्भकः ॥ ७ ॥ तथा—

स्थानात्स्थानान्तरोत्कर्ष· प्रत्याहार· प्रकीर्तित. । तालुनासाननद्वारैर्निरोध. शान्त उच्यते ॥८॥

स्थानात् नाभ्यादेः स्थानान्तरे हृदयादौ वायोरुत्कर्षण स प्रत्याहार. । तालु च नासा चानन च तालुनासा-

ननं तत्र द्वाराणि तैर्यो वायोर्निरोधः स शान्तः ॥ ८ ॥ तथा—

**आपीयोर्ध्वं यदुत्कृष्य हृदयादिषु धारणम् । उत्तरः स समाख्यातो विपरीतस्ततोऽधरः ॥९॥**

आपीय पीत्वा बाह्यवायुमूर्ध्वमुत्कृष्योन्नीय हृदयादिषु यद्वायोर्धारणं स उत्तरः, ततो विपरीतोऽधरः ऊर्ध्वदेशादधोनयनरूपः । ननु रेचकादिषु कथं प्राणायामो गतिविच्छेदरूपो हि स उच्यते ? उच्यते—यत्र रेचके कोष्ठ्यो वायुर्विरेच्य बहिर्धार्यते तत्रास्ति श्वासप्रश्वासयोर्गतिच्छेदः, यत्रापि पूरके बाह्यो वायुराचम्यान्तर्धार्यते तत्राप्यस्ति श्वासप्रश्वासयोर्गतिच्छेदः, एवं कुम्भकादिष्वपि ॥ ९ ॥

रेचकादीनां फलमाह—

**रेचनादुदरव्याधेः कफस्य च परिक्षयः । पुष्टिः पूरकयोगेन व्याधिघातश्च जायते ॥ १० ॥**

**विकसत्याशु हृत्पद्मं ग्रन्थिरन्तर्विभिद्यते । बलस्थैर्यविवृद्धिश्च कुम्भकाद्भवति स्फुटम् ॥११॥**

**प्रत्याहाराद्बलं कान्तिर्दोषशान्तिश्च शान्ततः । उत्तराधरसेवातः स्थिरता कुम्भकस्य तु ॥१२॥**

श्लोकत्रयं स्पष्टम् ॥ १० ॥ ११ ॥ १२ ॥

न केवलं प्राणायामः प्राणस्यैव जयहेतुः, किन्तु पञ्चानामपि वायूनां जयहेतुरित्याह—

**प्राणमपानसमानावुदानं व्यानमेव च । प्राणायामैर्जयेत् स्थानवर्णक्रियार्थबीजवित् ॥ १३ ॥**

प्रकर्षेण नयतीति प्राण , मूत्रपुरीषगर्भादीनपनयतीत्यपान., अशितपीताहारपरिणतिभेदं रस तत्र तत्र स्थाने सममनुरूप नयतीति समानः, रसादीनूर्ध्वं नयतीत्युदानः, व्यानयति व्याप्नोतीति व्यानः, डप्रत्ययान्ता एते । अथवा प्रमरणेनापसरणेन समन्तात्प्रसरणादूर्ध्वं व्याप्त्या च अनिति अनेनेति घञन्ता प्राणमपान समानमुदान व्यान च वायु प्राणायामे रेचकादिभिर्जयेद्योगी । किंविशिष्टः ? स्थानवर्णक्रियार्थबीजवित् प्राणादीना स्थान वर्णं क्रियामर्थं बीज च वेत्ति य स तथा ॥ १३ ॥

तत्र प्राणस्य स्थानादीन्याह—

प्राणो नासाग्रहृन्नाभिपादाङ्गुष्ठान्तगो हरित् । गमागमप्रयोगेण तज्जयो धारणेन वा ॥१४॥

प्राणो नाम वायुर्नासाग्रे हृदि नाभौ पादाङ्गुष्ठान्ते च गच्छतीति स तथा इति स्थान । हरिदिति वर्णः । गमागमप्रयोगेण धारणेन च ( वा ) तज्जयः इति क्रिया । अर्थो बीज च वक्ष्यते ॥ १४ ॥

अथ गमागमप्रयोग धारण च व्याचष्टे—

नासादिस्थानयोगेन पूरणाद्रेचनान्मुहु । गमागमप्रयोग. स्याद्धारण कुम्भनात् पुन ॥१५॥

स्पष्ट. ॥ १५ ॥ अथापानस्य—

अपान कृष्णरुग्मन्यापृष्ठपृष्ठान्तपार्ष्णिग । जेय स्वस्थानयोगेन रेचनात् पूरणान्मुहु ॥१६॥

कृष्णरुक् कृष्णवर्ण', मन्ये ग्रीवापश्चान्नाड्यौ, पृष्ठ तदधोभागः, पृष्ठान्तो गुदः, पार्ष्णी पादपश्चाद्भागौ, तेषु

गच्छति यः स तथा, स्वस्थानं मन्यादि तद्गतरेचनपूरणाभ्यां जेयः ॥ १६ ॥

अथ समानस्य—

शुक्लः समानो हृन्नाभिसर्वसन्धिष्ववस्थितः । जेयः स्वस्थानयोगेनासकृद्रेचनपूरणात् ॥१७॥

शुक्लो वर्णेन । हृदये नाभौ सर्वसन्धिषु च स्थानमस्य स स्वस्थानेऽसकृद्रेचनात् पूरणाच्च जेयः ॥ १७ ॥

अथोदानस्य—

रक्तो हृत्कण्ठतालुभ्रूमध्यमूर्धनि संस्थितः । उदानो वश्यतां नेयो गत्यागतिनियोगतः ॥१८॥

रक्तो वर्णेन । हृदयं कण्ठः तालु भ्रूमध्यं मूर्धा च स्थानमस्य । स उदानो गत्यागतिप्रयोगेण वशमायत्ततां नेयः ॥१८॥

गत्यागतिप्रयोगमेवाह—

नासाकर्षणयोगेन स्थापयेत्तं हृदादिषु । बलादुत्कृष्यमाणं च रुध्वा रुध्वा वशं नयेत् ॥१९॥

तमुदानं हृदयादिषु स्थापयेत् । केन ? नासाकर्षणयोगेन नासयाऽऽकर्षणमधस्तान्नयनं स एव योगस्तेन, तथाऽप्यजीयमानं बलादाकृष्यमाणं ऊर्ध्वं नीयमानं रुध्वा रुध्वा विधार्य विधार्य वशं नयेत् ॥ १९ ॥

अथ व्यानस्य—

सर्वत्वग्वृत्तिको व्यानः शक्रकार्मुकसन्निभः । जेतव्यः कुम्भकाभ्यासात्सङ्कोचप्रसृतिक्रमात् ॥२०॥

सर्वस्यां त्वचि वर्तमानः इति स्थाननिर्देशः । शक्रकार्मुकसन्निभ इति वर्णनिर्देशः । कुम्भकाभ्यासाज्जेतव्यः ।

अभ्यासक्रममेवाह—सङ्कोचप्रसृतिक्रमात् सङ्कोचेन प्रसरणेन चेत्यर्थ ॥ २० ॥

अथैषां ध्यातव्यबीजान्याह—

**प्राणापानसमानोदानव्यानेष्वेषु वायुषु। यैं पैं वैं रौं लौं बीजानि ध्यातव्यानि यथाक्रमम् ॥२१॥**

प्राणस्य यैं इति बीज, अपानस्य पैं, समानस्य वैं, उदानस्य रौं, व्यानस्य लौं ॥ २१ ॥

इदानीं श्लोकत्रयेण प्राणादिजयस्यार्थमाह—

**प्राबल्य जाठरस्याग्नेर्दीर्घश्वासमरुज्जयौ । लाघव च शरीरस्य प्राणस्य विजये भवेत् ॥२२॥**

दीर्घोऽव्युच्छिन्न श्वासः प्राणधारणमत्ययार्थं, प्राणप्रतिबद्धा सर्वे मरुतः, तज्जये सर्वमरुज्जयो भवतीति॥२२॥तथा—

**रोहण क्षतभङ्गादेरुदराग्नेः प्रदीपनम् । वर्चोऽल्पत्व व्याधिघात समानापानयोर्जये ॥२३॥**

रोहण रोपण, कस्य ? क्षतभङ्गादेः क्षतस्य–व्रणस्य, भङ्गस्य–अस्थ्यादिसन्धिन., आदिशब्दादन्यस्य तत्प्रकारस्य । शेष स्पष्टम् ॥ २३ ॥ तथा—

**उत्क्रान्तिर्वारिपङ्काद्यैश्चाबाधोदाननिर्जये । जये व्यानस्य शीतोष्णासङ्ग कान्तिररोगिता ॥२४॥**

उत्क्रान्तिरुत्क्रमण प्रयाणकालेऽर्चिरादिमार्गेण स्ववशित्वेनोत्क्रान्ति करोतीत्यर्थ. । जलपङ्कादिभिश्चाबाधा, तैर्न प्रतिहन्यत इत्यर्थः । आदिशब्दात् कण्टकादिपरिग्रह. उदाननिर्जये सति । व्यानस्य जये शीतोष्णाभ्यामसङ्गः अबाधा, कान्तिर्दीप्ति , अरोगिताऽऽरोग्यम् ॥ २४ ॥

प्राणादीनां जये प्रत्येकं फलमुक्त्वा सामस्त्येन फलमाह—

यत्र यत्र भवेत् स्थाने जन्तो रोगः प्रपीडकः। तच्छान्त्यै धारयेत्तत्र प्राणादिमरुतः सदा ॥२५॥

स्पष्टः ॥ २५ ॥ पूर्वोक्तमुपसंहरन्नुत्तरं संबध्नाति—

एवं प्राणादिविजये कृताभ्यासः प्रतिक्षणम्। धारणादिकमभ्यस्येन्मनःस्थैर्यकृते सदा ॥२६॥

धारणादिकमभ्यस्येत्, आदिशब्दात् ध्यानसमाधी, किमर्थं ? मनःस्थैर्यार्थम् ॥ २६ ॥

अथ धारणादिविधिं श्लोकपञ्चकेनाह—

उक्तासनसमासीनो रेचयित्वाऽनिलं शनैः। आपादाङ्गुष्ठपर्यन्तं वाममार्गेण पूरयेत् ॥ २७ ॥

पादाङ्गुष्ठे मनः पूर्वं रुध्वा पादतले ततः। पार्ष्णौ गुल्फे च जङ्घायां जानुन्यूरौ गुदे ततः ॥२८॥

लिङ्गे नाभौ च तुन्दे च हृत्कण्ठरसनेऽपि च। तालुनासाग्रनेत्रे च भ्रुवोर्भाले शिरस्यथ ॥२९॥

एवं रश्मिक्रमेणैव धारयन्मरुता सह। स्थानात्स्थानान्तरं नीत्वा यावद्ब्रह्मपुरं नयेत् ॥३०॥

ततः क्रमेण तेनैव पादाङ्गुष्ठान्तमानयेत्। नाभिपद्मान्तरं नीत्वा ततो वायुं विरेचयेत् ॥३१॥

उक्तानि यानि पर्यङ्कादीन्यासनानि तेषु समासीनः पवनं रेचयित्वा शनैरिति मन्दं मन्दं पादाङ्गुष्ठप्रान्तं यावत् पूरयेत् वाममार्गेण वामनाड्या ॥ २७ ॥ पादाङ्गुष्ठे मनः प्रथमं रुध्वा धारयित्वा, ततः पादतले, ततोऽपि पार्ष्णौ,

ततो गुल्फे, ततो जङ्घायां, ततो जानुनि, ततोऽप्यूरौ, ततो गुदे ॥ २८ ॥ ततो लिङ्गे, ततो नाभौ, ततस्तुन्दे, ततो हृदि, तत कण्ठे, ततो रसनायां, ततस्तालुनि, ततो नासाग्रे, ततो नेत्रयो , ततो भ्रुवोः, ततो ललाटे, ततः शिरसि ॥ २९ ॥ एव रश्मिक्रमेण मनो मरुता सह धारयन् स्थानात् स्थानान्तर नीत्वा ब्रह्मपुर नयेत् ॥ ३० ॥ ततस्तेनैवारोहक्रमेण पादाङ्गुष्ठान्त मनो मरुता सहानयेत्, ततो नाभिपद्ममध्य नीत्वा वायु विरेचयेत् ॥ ३१ ॥

अथ धारणाया' फल श्लोकचतुष्टयेनाह—

पादाङ्गुष्ठादौ जङ्घायां जानूरुगुदमेढ्ने । धारित क्रमशो वायु शीघ्रगत्यै बलाय च ॥३२॥
नाभौ ज्वरादिघाताय जठरे कायशुद्धये । ज्ञानाय हृदये कूर्मनाड्यां रोगजराच्छिदे ॥३३॥
कण्ठे क्षुत्तर्षनाशाय जिह्वाग्रे रससंविदे । गन्धज्ञानाय नासाग्रे रूपज्ञानाय चक्षुषो ॥३४॥
भाले तद्रोगनाशाय क्रोधस्योपशमाय च । ब्रह्मरन्ध्रे च सिद्धानां साक्षाद्दर्शनहेतवे ॥३५॥

पादाङ्गुष्ठे, आदिशब्दात् पार्ष्णौ गुल्फे च, जङ्घायां, जानुनि, ऊरौ, गुदे, मेढ्ने, क्रमेण धारितो वायुः शीघ्रगत्यै बलाय च भवति ॥ ३२ ॥ शेष सुगमम् ॥ ३३ ॥ ३४ ॥ ३५ ॥

अथ धारणामुपसहृत्य पवनचेष्टितमाह—

अभ्यस्य धारणामेव सिद्धीनां कारणं परम् । चेष्टित पवमानस्य जानीयाद्गतसशय ॥३६॥

स्पष्ट' ॥ ३६ ॥ तद्यथा—

नाभेर्निष्क्रामतश्चारं हृन्मध्ये नयतो गतिम्। तिष्ठतो द्वादशान्ते तु विन्द्यात्स्थानं नभस्वतः ॥३७॥

स्पष्टः । नवरं गतिं नयत इति गच्छतः । द्वादशान्तं तु ब्रह्मरन्ध्रम् ॥ ३७ ॥

अथ चारादीनां ज्ञानस्य फलमाह—

तच्चारगमनस्थानज्ञानादभ्यासयोगतः । जानीयात् कालमायुश्च शुभाशुभफलोदयम् ॥३८॥

कालं मृत्युं, आयुर्जीवितं, शुभाशुभफलस्य चोदयं जानीयात्, एतच्च यथास्थानं वक्ष्यते ॥ ३८ ॥

उत्तरकरणीयमाह—

ततः शनैः समाकृष्य पवनेन समं मनः। योगी हृदयपद्मान्तर्विनिवेश्य नियन्त्रयेत् ॥३९॥

ततोऽनन्तरं शनैर्मन्दं मन्दं ब्रह्मरन्ध्रात् पवनेन सह मनः समाकृष्य हृदयपद्मस्यान्तर्मध्ये विनिवेश्य नियन्त्रयेत् धारयेत् ॥ ३९ ॥

हृदयस्थे पवने मनसि च यत्फलं तदाह—

ततोऽविद्या विलीयन्ते विषयेच्छा विनश्यति । विकल्पा विनिवर्तन्ते ज्ञानमन्तर्विजृम्भते॥४०॥

अविद्याः कुवासना विलीयन्ते । शेषं स्पष्टम् ॥ ४० ॥

हृदये स्थिरीकृते मनसि वायोः स्वरूपज्ञानार्थं प्रक्रमते—

क्व मण्डले गतिर्वायोः संक्रमः क्व क्व विश्रमः । का च नाडीति जानीयात्तत्र चित्ते स्थिरीकृते।४१॥

कुत्र मण्डले वायोर्गति ? क्व सक्रमश्च ? क्व वा विश्राम ? का च नाडी वामादिरूपा ? इति जानीयात् तत्र हृदये स्थिरीकृते मनसि ॥ ४१ ॥

तत्र मण्डलान्याहुः—

मण्डलानि च चत्वारि नासिकाविवरे विदुः। भौमवारुणवायव्याग्नेयाख्यानि यथोत्तरम् ॥४२॥

यथोत्तरमिति प्रथम भौम पार्थिव मण्डल, ततो वारुणमाप्य, ततो वायव्य, ततोऽप्याग्नेयम् ॥ ४२ ॥

भौम मण्डल व्याचष्टे—

पृथिवीबीजसपूर्णं वज्रलाञ्छनसयुतम्। चतुरस्र द्रुतस्वर्णप्रभ स्याद्भौममण्डलम् ॥ ४३ ॥

पृथिवीबीज क्षितिलक्षण तेन मध्ये सपूर्ण, चतुरस्र, कोणेषु वज्रलाञ्छन, तप्तस्वर्णवर्ण, भौममण्डल स्यात् ॥४३॥

अथ वारुणम्—

स्यादर्धचन्द्रसस्थान वारुणाक्षरलाञ्छितम्। चन्द्राभममृतस्यन्दसान्द्र वारुणमण्डलम् ॥४४॥

अष्टमीचन्द्रसस्थान, वारुणाक्षरो वकारस्तेन लाञ्छित, चन्द्राभ श्वेतवर्ण, अमृतस्य पीयूषस्य स्पन्द. क्षरण तेन सान्द्र बहल वारुणमण्डलम् ॥ ४४ ॥

अथ वायव्यम्—

स्निग्धाञ्जनघनच्छाय सुवृत्त बिन्दुसकुलम्। दुर्लक्ष्य पवनाक्रान्त चञ्चल वायुमण्डलम् ॥४५॥

स्निग्धयोरञ्जनघनयोरिव च्छाया यस्य तत्तथा, सुष्ठु वृत्तं वर्तुलं, मध्ये बिन्दुसंकुलं, दुर्लक्ष्यं दुरवगमं, परितः पवनवेष्टितं, चञ्चलं वायव्यमण्डलम् ॥ ४५ ॥ अथाग्नेयम्—

**ऊर्ध्वज्वालाञ्चितं भीमं त्रिकोणं स्वस्तिकान्वितम् । स्फुलिङ्गपिंगं तद्बीजं ज्ञेयमाग्नेयमण्डलम् ॥४६॥**

ऊर्ध्वगामिनीभिर्ज्वालाभिरञ्चितं, भीमं भयानकं, त्रिकोणं, कोणेषु स्वस्तिकाञ्चितं, स्फुलिङ्गवत् पिङ्गं, तदित्यनेनाग्नेः परामर्शः, बीजं च रेफः, एतदाग्नेयमण्डलम् ॥ ४६ ॥

अश्रद्दधानबोधार्थमाह—

**अभ्यासेन स्वसंवेद्यं स्यान्मण्डलचतुष्टयम् । क्रमेण संचरन्नत्र वायुर्ज्ञेयश्चतुर्विधः ॥ ४७ ॥**

अभ्यासेन स्वसंवेद्यमेतत् मण्डलचतुष्टयं स्यात्, नापातमात्रेण, अत्र मण्डलचतुष्टये संचरन् वायुर्मण्डलभेदेन चतुर्विधो भवतीति क्रमेणाह ॥ ४७ ॥

**नासिकारन्ध्रमापूर्य पीतवर्णः शनैर्वहन् । कवोष्णोऽष्टाङ्गुलः स्वच्छो भवेद्वायुः पुरन्दरः ॥४८॥**

नासाविवरमापूर्य पीतवर्णः शनैर्मन्दं मन्दं वहन् किञ्चिदुष्णः अष्टाङ्गुलप्रमाणः स्वच्छः पार्थिवः पुरन्दरनामा वायुः ॥ ४८ ॥ तथा—

**धवलः शीतलोऽधस्तात्त्वरितत्वरितं वहन् । द्वादशांगुलमानश्च वायुर्वरुण उच्यते ॥ ४९ ॥**

वर्णेन धवलः, स्पर्शेन शीतः, अधस्तादधः त्वरितत्वरितं वहन् द्वादशाङ्गुलप्रमाणो वायुर्वरुणनामा ॥४९॥तथा—

उष्णः शीतश्च कृष्णश्च वहन् तिर्यगनारतम्। षडङ्गुलप्रमाणश्च वायुः पवनसंज्ञितः ॥५०॥

स्पर्शेन क्वचिदुष्णः क्वचिच्छीतः, कृष्णो वर्णेन, तिर्यक् सततं वहन् षडङ्गुलप्रमाणो वायुः पवननामा ॥५०॥ तथा—

स्पर्शेन क्वचिदुष्णः क्वचिच्छीतः, कृष्णो वर्णेन, तिर्यक् सततं वहन् ... पवनो दहनः स्मृतः ॥५१॥

बालादित्यसमज्योतिरत्युष्णश्चतुरङ्गुलः। आवर्तवान् वहन्नूर्ध्वं पवनो दहनः स्मृतः ॥५१॥

बालार्कारुणो वर्णेन, अतिशयोष्णः स्पर्शेन, चतुरङ्गुलप्रमाणः, आवर्तवान्, ऊर्ध्वं वहन् दहननामा पवनः॥५१॥

यस्मिन् वायौ यत्कार्यं कुर्यात्तदाह—

इन्द्रः स्तम्भादिकार्येषु वरुणः शस्तकर्मसु। वायुः मलिनलोलेषु वश्यादौ वह्निमादिशेत् ॥५२॥

स्तम्भस्तोभादिषु पुरन्दरः, प्रशस्तेषु कर्मसु वरुणः, मलिनेषु चलेषु च कर्मसु वायुः, वशीकरणादौ वह्निपवनमादिशेत् ॥ ५२ ॥

इदानीमारब्धे कार्ये कार्यप्रश्ने च यो यदा वायुर्वहति तस्य फलं श्लोकचतुष्टयेनाह—

छत्रचामरहस्त्यश्वरामाराज्यादिसंपदम्। मनीषितं फलं वायुः समाचष्टे पुरन्दरः ॥ ५३ ॥

रामाराज्यादिसंपूर्णैः पुत्रस्वजनबन्धुभिः। सारेण वस्तुना चापि योजयेद्वरुणः क्षणात् ॥५४॥

कृषिसेवादिकं सर्वमपि सिद्धं विनश्यति। मृत्युभीः कलहो वैरं त्रासश्च पवने भवेत् ॥५५॥

भयं शोकं रुजं दुःखं विघ्नव्यूहपरंपराम्। संसूचयेद्विनाशं च दहनो दहनात्मकः ॥ ५६ ॥

स्पष्टाः ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ एतेषामेव सूक्ष्मतरं फलमाह—

शशाङ्करविमार्गेण वायवो मण्डलेष्वमी। विशन्तः शुभदाः सर्वे निष्क्रामन्तोऽन्यथा स्मृताः।५७।

सर्वेऽपि वायवः पुरन्दरादयः शशाङ्कमार्गेण वामेन रविमार्गेण दक्षिणेन प्रविशन्तः शुभावहाः, निःसरन्तस्तु अशुभावहाः ॥ ५७ ॥

प्रवेशनिर्गमयोः शुभाशुभत्वे कारणमाह—

प्रवेशसमये वायुर्जीवो मृत्युस्तु निर्गमे । उच्यते ज्ञानिभिस्तादृक्फलमप्यनयोस्ततः ॥५८॥

स्पष्टः ॥ ५८ ॥ इदानीं वायोः शुभत्वमशुभत्वं मध्यमत्वं (च) नाडीभेदात् श्लोकद्वयेनाह—

पथेन्दोरिन्द्रवरुणौ विशन्तौ सर्वसिद्धिदौ। रविमार्गेण निर्यान्तौ प्रविशन्तौ च मध्यमौ ॥५९॥

दक्षिणेन विनिर्यान्तौ विनाशायानिलानलौ । निःसरन्तौ विशन्तौ च मध्यमावितरेण तु ॥६०॥

स्पष्टौ ॥ ५९ ॥ ६० ॥ अथ नाडीरेवाह—

इडा च पिङ्गला चैव सुषुम्णा चेति नाडिकाः। शशिसूर्यशिवस्थानं वामदक्षिणमध्यगाः ॥६१॥

वामगा इडा नाडी शशिनः स्थानं, दक्षिणगा पिङ्गला नाम रवेः स्थानं, मध्यमगा सुषुम्णा नाम शिवस्थानम्॥६१॥

एतासु वायुसंचारे फलं श्लोकद्वयेनाह—

पीयूषमिव वर्षन्ती सर्वगात्रेषु सर्वदा । वामाऽमृतमयी नाडी सम्मताऽभीष्टसूचिका ॥६२॥
वहन्त्यनिष्टशंसित्री संहर्त्री दक्षिणा पुन । सुषुम्णा तु भवेत् सिद्धिनिर्वाणफलकारणम् ॥६३॥

स्पष्टौ । नवरं सिद्धयोऽणिमाद्याः, निर्वाणं मुक्तिः ॥ ६२ ॥ ६३ ॥ वामदक्षिणयो कार्यं प्रति विशेषमाह—

वामैवाभ्युदयादीष्टशस्तकार्येषु सम्मता । दक्षिणा तु रताहारयुद्धादौ दीप्तकर्मणि ॥ ६४ ॥

अभ्युदयादीनीष्टानि शस्तानि च यानि कार्याणि तेषु वामैव नाडी सम्मता, दक्षिणा तु रतारम्भे, भोजनकाले, युद्धे, आदिशब्दादन्यत्रापि दीप्ते कर्मणि सम्मता ॥ ६४ ॥

पुनर्वामदक्षिणयोर्विषयविभागमाह—

वामा शस्तोदये पक्षे सिते कृष्णे तु दक्षिणा । त्रीणि त्रीणि दिनानीन्दुसूर्ययोरुदय शुभ ॥६५॥

सिते पक्षे आदित्योदयकाले वहन्ती वामा शस्ता भवति, कृष्णपक्षे तु दक्षिणा शस्ता । किं सकलेऽपि पक्षे ? नेत्याह—इन्दुसूर्ययोर्वामदक्षिणयोर्नाड्योस्त्रीणि त्रीणि दिनानि उदयः शुभ' ॥ ६५ ॥

उदयनियममुक्त्वाऽस्तनियममाह—

शशाङ्केनोदये वायो सूर्येणास्त शुभावहम् । उदये रविणा त्वस्य शशिनास्तं शिव मतम् ॥६६॥

यत्र दिने शशाङ्केन वायोरुदयस्तत्रास्त सूर्येण शुभावह, यत्र च सूर्येणोदयस्तत्रास्त शशाङ्केन शुभावहम् ॥६६॥

पूर्वोक्तमेवार्थं त्रिभि श्लोकैर्विस्तरेणाह—

सितपक्षे दिनारम्भे यत्नेन प्रतिपद्दिने। वायोर्वीक्षेत संचारं प्रशस्तमितरं तथा ॥ ६७ ॥
उदेति पवनः पूर्वं शशिन्येष त्र्यहं ततः। संक्रामति त्र्यहं सूर्ये शशिन्येव पुनस्त्र्यहम् ॥६८॥
वहेद्यावद् बृहत्पर्व क्रमेणानेन मारुतः। कृष्णपक्षे पुनः सूर्योदयपूर्वमयं क्रमः ॥ ६९ ॥

स्पष्टाः ॥ ६७ ॥ ६८ ॥ ६९ ॥ अस्य क्रमस्य व्यतिक्रमे फलं श्लोकद्वयेनाह—

त्रीन् पक्षानन्यथात्वेऽस्य मासषट्केन पञ्चता। पक्षद्वयं विपर्यासेऽभीष्टबन्धुविपद्भवेत् ॥७०॥
भवेत्तु दारुणो व्याधिरेकं पक्षं विपर्यये। द्वित्र्याद्यहविपर्यासे कलहादिकमुद्दिशेत् ॥ ७१ ॥

पूर्वोक्तस्य चन्द्रसूर्यचारस्य त्रीन् पक्षान् यावद् व्यतिक्रमे षड्भिर्मासैर्मरणं, द्वौ पक्षौ यावद्व्यतिक्रमेऽभीष्टबन्धुविपद्भवेत्, पक्षमेकं यावद्व्यतिक्रमे दारुणो व्याधिर्भवेत् ॥ ७० ॥ ७१ ॥ तथा—

एकं द्वे त्रीण्यहोरात्राण्यर्क एव मरुद्वहन्। वर्षैस्त्रिभिर्द्वाभ्यामेकेनान्तायेन्दौ रुजे पुनः॥७२॥

एकमहोरात्रम् अर्क एव पवनो वहन् वर्षत्रयेण मरणाय, द्वे अहोरात्रे वहन् वर्षद्वयेन, त्रीणि त्वहोरात्राणि वहन् वर्षेणैकेन। इन्दौ तु तथा वहन् पवनो रोगाय ॥ ७२ ॥ तथा—

मासमेकं रवावेव वहन् वायुर्विनिर्दिशेत्। अहोरात्रावधि मृत्युं शशाङ्के तु धनक्षयम् ॥७३॥

स्पष्टः ॥ ७३ ॥ तथा—

वायुस्त्रिमार्गगं शसेन्मध्याह्नात् परतो मृतिम्। दशाहं तु द्विमार्गस्थे सङ्क्रान्तौ मरणं दिशेत् ।७४।

त्रिषु मार्गेषु इडापिङ्गलासुषुम्णालक्षणेषु गच्छतीति त्रिमार्गगो वायुः मध्याह्नात् परतो मरणं शंसेत् । दश दिनानि यावदसङ्क्रान्त एव द्विमार्गगो वायुः ततः परं सङ्क्रामन् मरणं सूचयति ॥ ७४ ॥ तथा—

दशाहं तु वहन्निन्दावेवोद्वेगरुजे मरुत् । इतश्चेतश्च यामार्धं वहन् लाभार्चनादिकृत् ॥७५॥

चन्द्र एव दशाहानि वहन् मरुत् उद्वेगाय रुजे च स्यात् । यामार्धं यावदितश्चेतश्च वामाया दक्षिणायां, दक्षिणायाः ( च ) वामाया वायुर्वहन् लाभपूजादिकारी भवति ॥ ७५ ॥ तथा—

विषुवत्समयप्राप्तौ स्पन्देते यस्य चक्षुषी । अहोरात्रेण जानीयात्तस्य नाशमसंशयम् ॥७६॥

समरात्रिन्दिवः कालो विषुवान् स चासौ समयश्च तस्य प्राप्तौ सङ्गमे यस्य चक्षुषी स्पन्देते, स्पन्दनं वायोर्विकार इति नाधिकारभ्रंशः । शेषं स्पष्टम् ॥ ७६ ॥ तथा—

पञ्चातिक्रम्य सङ्क्रान्तीर्मुखे वायुर्वहन् दिशेत् । मित्रार्थहानी निस्तेजोऽनर्थान् सर्वान्मृतिं विना ॥

नाड्या नाड्यन्तरे वायोः सङ्क्रमकालः सङ्क्रान्तिः, तत्सङ्क्रान्तिपञ्चकमतिक्रम्य षष्ठ्यां सङ्क्रान्तौ यदा मुखेन वायुर्वहति तदा मित्रहानिमर्थहानिं, निस्तेजं, सर्वाननर्थानिति उद्वेगरोगदेशान्तरगमनादीनादिशेत्, मरणं विना, मृतिस्तु न स्यात् ॥ ७७ ॥ तथा—

संक्रान्तीः समतिक्रम्य त्रयोदश समीरणः । प्रवहन् वामनासायां रोगोद्वेगादि सूचयेत् ॥७८॥

वामनासायां त्रयोदश संक्रान्तीर्व्यतिक्रम्य चतुर्दश्यां संक्रान्तौ वहन् वायू रोगोद्वेगादि सूचयति ॥७८॥ तथा–

मार्गशीर्षस्य संक्रान्तिकालादारभ्य मारुतः । वहन् पञ्चाहमाचष्टे वत्सरेऽष्टादशे मृतिम् ॥७९॥

मार्गशीर्षस्य प्रथमदिवसादारभ्य यदा पञ्चरात्रमेकनाड्यां वहेत् वायुः तदाऽष्टादशे वर्षे मरणम् ॥७९॥ तथा–

शरत्संक्रान्तिकालाच्च पञ्चाहं मारुतो वहन् । ततः पञ्चदशाब्दानामन्ते मरणमादिशेत् ॥८०॥

अश्वयुक्प्रथमदिवसादारभ्य पञ्च दिनान्येकनाड्यां यदि वायुर्वहेत् तदा पञ्चदशवर्षान्ते मरणम् ॥८०॥ तथा–

श्रावणादेः समारभ्य पञ्चाहमनिलो वहन् । अन्ते द्वादशवर्षाणां मरणं परिसूचयेत् ॥८१॥

वहन् ज्येष्ठादिदिवसाद्दशाहानि समीरणः । दिशेन्नवमवर्षस्य पर्यन्ते मरणं ध्रुवम् ॥ ८२ ॥

आरभ्य चैत्राद्यदिनात् पञ्चाहं पवनो वहन् । पर्यन्ते वर्षषट्कस्य मृत्युं नियतमादिशेत् ॥८३॥

आरभ्य माघमासादेः पञ्चाहानि मरुद्वहन् । संवत्सरत्रयस्यान्ते संसूचयति पञ्चताम् ॥८४॥

अमी चत्वारः श्लोकाः पूर्ववद्व्याख्येयाः ॥ ८१ ॥ ८२ ॥ ८३ ॥ ८४ ॥ तथा—

सर्वत्र द्वित्रिचतुरो वायुश्चेद्दिवसान् वहेत् । अब्दभागैस्तु ते शोध्या यथावदनुपूर्वशः ॥८५॥

येषु पञ्चाहगमन वायोर्निर्दिष्टं तेषु द्वित्रिचतुर्दिवसवाहिनि मारुते पञ्चाहफलानुसारेण मरणवर्षमूह्य । अब्द-भागैस्तु ते शोध्या इति पञ्चाहवाहिनि वायौ किलाष्टादशाब्दानि ततो दिनचतुष्टयवाहिनि एकदिवसभागे वर्ष-त्रय मासाः सप्त दिनानि षट् अस्मिन् शोधिते लब्ध चतुर्दश वर्षाणि चत्वारो मासाः चतुर्विंशतिर्दिनानि । एव त्र्यहद्व्यहवाहिन्यपि वाच्य । शरदादिष्वप्येवमेव भागशुद्धि कार्या ॥ ८५ ॥

अथ प्रकारान्तरेण वायुनिमित्त कालज्ञानोपदेश प्रतिजानीते—

अथेदानीं प्रवक्ष्यामि कञ्चित् कालस्य निर्णयम्। सूर्यमार्गं समाश्रित्य स च पौष्णोऽवगम्यते ।८६।

स्पष्ट' ॥ ८६ ॥ पौष्ण इत्युक्त तस्य स्वरूपमाह—

जन्मर्क्षगते चन्द्रे समसप्तगते रवौ । पौष्णनामा भवेत्कालो मृत्युनिर्णयकारणम् ॥८७॥

यदा जन्मनक्षत्रे चन्द्र समसप्तगतश्च सूर्यो भवति तदा पौष्णः कालः ॥ ८७ ॥

तस्मिन् सूर्यनाडीप्रवाहेण कालज्ञानमाह—

दिनार्धं दिनमेक च यदा सूर्ये मरुद्वहन् । चतुर्दशे द्वादशेऽब्दे मृत्युवे भवति क्रमात् ॥८८॥

दिनार्धं सूर्यनाड्यां वहन् वायुश्चतुर्दशे वर्षे दिन तु वहन् द्वादशेऽब्दे मृत्यवे स्यात् ॥ ८८ ॥ तथा—

तथैव च वहन् वायुरहोरात्र द्व्यह त्र्यहम्। दशमाष्टमषष्ठाब्देष्वन्ताय भवति क्रमात् ॥८९॥

तथैव सूर्यनाड्यामहोरात्रं वहन् वायुर्दशमे वर्षे, द्व्यहं वहन्नष्टमे वर्षे, त्र्यहं वहन् षष्ठे वर्षे मृत्यवे भवति ॥ ८९ ॥ तथा—

वहन् दिनानि चत्वारि तुर्येऽब्दे मृत्यवे मरुत्। साशीत्यहःसहस्रे तु पञ्चाहानि वहन् पुनः ॥९०॥

तथैव सूर्यनाड्यां चत्वारि दिनानि वहन् वायुश्चतुर्थे वर्षे मृत्यवे। पञ्च दिनानि तथा वहन् वायुरशीत्यधिके दिनसहस्रे वर्षत्रये इत्यर्थः ॥ ९० ॥ तथा—

एकद्वित्रिचतुःपञ्चचतुर्विंशत्यहःक्षयात्। षडादीन् दिवसान् पञ्च शोधयेदिह तद्यथा ॥९१॥

साशीत्यहःसहस्रमध्यादेकस्या द्वयोस्तिसृणां चतसृणां पञ्चानां चतुर्विंशतीनां यथाक्रमं पातनेन षट् सप्ताष्टौ नव दश च दिनानि शोधयेत्, तद्गतं च कालं जानीयात्। तद्यथेति विवरणोपन्यासश्चतुर्भिः श्लोकैः ॥ ९१ ॥

षट्कं दिनानामध्यर्कं वहमाने समीरणे। जीवत्यह्नां सहस्रं षट्पञ्चाशद्दिवसाधिकम् ॥ ९२ ॥

षट् दिनान्यर्कनाड्यां वहमाने वायौ षट्पञ्चाशदधिकं दिनसहस्रं जीवति अशीत्यधिकसहस्रादेकचतुर्विंशत्यपनयने एतदेव भवति ॥ ९२ ॥ तथा—

सहस्रं साष्टकं जीवेद्वायौ सप्ताहवाहिनि। सषट्त्रिंशन्नवशतीं जीवेदष्टाहवाहिनि ॥ ९३ ॥

सप्ताहवाहिनि वायावष्टोत्तरं दिनसहस्रं जीवेत्, षट्पञ्चाशदधिकसहस्रात् द्वयोश्चतुर्विंशत्योरपनयने एतदेव

भवति । अष्टाहवाहिनि तु वायौ षट्त्रिंशदधिकां दिननवशतीं जीवेत्, अष्टोत्तरसहस्रात्तिसृणां चतुर्विंशतीनामपनयने एतदेव भवति ॥ ९३ ॥ तथा—

एकत्रैव नवाहानि तथा वहति मारुते । अह्नामष्टशतीं जीवेच्चत्वारिंशद्दिनाधिकाम् ॥ ९४ ॥

नव दिनानि वहति वायौ चत्वारिंशदधिकां दिनानामष्टशतीं जीवेत् षट्त्रिंशदधिकनवशतीमध्याच्चतसृणां चतुर्विंशतीनामपनयने एतदेव भवति ॥ ९४ ॥ तथा—

तथैव वायौ प्रवहत्येकत्र दश वासरान् । विंशत्यभ्यधिकामह्ना जीवेत्सप्तशतीं ध्रुवम् ॥ ९५॥

दश वासरान् वायौ वहति विंशत्यधिकां दिनसप्तशतीं जीवेत्। चत्वारिंशदधिकाष्टशतीमध्यात् पञ्चानां चतुर्विंशतीनामपनयने एतदेव स्यात् ॥ ९५ ॥ तथा—

एकद्वित्रिचतुःपञ्चचतुर्विंशत्यहःक्षयात् । एकादशादिपञ्चाहान्यत्र शोध्यानि तद्यथा ॥ ९६ ॥

स्पष्टं ॥ ९६ ॥ तद्यथेति एनमेव श्लोकं विवृणोति—

एकादश दिनान्यर्कनाड्या वहति मारुते । षण्णवत्यधिकान्यह्नां षट् शतान्येव जीवति ॥९७॥

एकादश दिनानि वहति वायौ षण्णवत्यधिकानि दिनानां षट् शतानि जीवति, विंशत्यधिकसप्तशतीमध्यादेकस्याश्चतुर्विंशतेरपनयने एतदेव भवति ॥ ९७ ॥ तथा—

तथैव द्वादशाहानि वायौ वहति जीवति। दिनानां षट्शतीमष्टचत्वारिंशत्समन्विताम् ॥९८॥

द्वादशाहानि वहति वायौ अष्टचत्वारिंशदधिकां दिनषट्शतीं जीवति, षण्णवत्यधिकषट्शतीमध्यात् द्वयोश्चतुर्विंशत्योरपनयने एतदेव भवति ॥ ९८ ॥ तथा—

त्रयोदश दिनान्यर्कनाडीचारिणि मारुते। जीवेत्पञ्चशतीमह्नां षट्सप्ततिदिनाधिकाम् ॥९९॥

त्रयोदश दिनानि वहति वायौ षट्सप्तत्यधिकां दिनपञ्चशतीं जीवेत्, अष्टचत्वारिंशदधिकषट्शतीमध्यात्तिसृणां चतुर्विंशतीनामपनयने भवत्येतदेव ॥ ९९ ॥ तथा—

चतुर्दश दिनान्येवं प्रवाहिणि समीरणे। अशीत्यभ्यधिकं जीवेदह्नां शतचतुष्टयम् ॥ १०० ॥

चतुर्दश दिनानि वहति वायौ अशीत्यधिकां दिनचतुःशतीं जीवेत्, षट्सप्तत्याधिकपञ्चशतीमध्याच्चतसृणां चतुर्विंशतीनामपनयने एतदेव स्यात् ॥ १०० ॥ तथा—

तथा पञ्चदशाहानि यावद्वहति मारुते। जीवेत् षष्टिदिनोपेतं दिवसानां शतत्रयम् ॥ १०१ ॥

पञ्चदश दिनानि वहति वायौ षष्ट्यधिकं दिनशतत्रयं जीवेत्, अशीत्यधिकचतुःशतीमध्यात् पञ्चानां चतुर्विंशतीनामपनयने एतदेव भवति ॥ १०१ ॥ तथा—

एकद्वित्रिचतुःपञ्चद्वादशाहक्रमचयात्। षोडशाद्यानि पञ्चाहान्यत्र शोध्यानि तद्यथा ॥१०२॥

एकद्वित्रिचतु'पञ्चसङ्ख्याता ये द्वादशाहास्तेषां क्रमेण वयस्तव' षोडशादीनि विंशत्यन्तानि पञ्च दिनानि शोध्यानि ॥ १०२ ॥

तथयेति विवृणोति—

प्रवहत्येकनासायां षोडशाहानि मारुते । जीवेत्सहाष्टचत्वारिंशत दिनशतत्रयीम् ॥ १०३ ॥

षोडश दिनानि पिङ्गलायां वहति वायावष्टचत्वारिंशदधिकां दिनशतत्रयीं जीवेत्, षष्ठ्यधिकशतत्रयीमध्यादेकस्य द्वादशाहस्यापनयने एतदेव भवति ॥१०३॥ तथा—

वहमाने तथा सप्तदशाहानि समीरणे । अह्नां शतत्रये मृत्युश्चतुर्विंशतिसंयुते ॥ १०४ ॥

सप्तदश दिनानि वहति वायौ चतुर्विंशत्यधिक दिनशतत्रय जीवति, अष्टचत्वारिंशदधिकशतत्रयाद् द्वयोर्द्वादशाहयोरपनयने एतदेव भवति ॥ १०४ ॥ तथा—

पवने विचरत्यष्टादशाहानि तथैव च । नाशोऽष्टाशीतिसयुक्ते गते दिनशतद्वये ॥१०५॥

अष्टादश दिनानि वहति वायौ अष्टाशीत्यधिके दिनशतद्वये मृत्यु', चतुर्विंशत्यधिकशतत्रयात्त्रयाणा द्वादशाहानामपनयने एतदेव भवति ॥ १०५ ॥ तथा—

विचरत्यनिले तद्वद्दिनान्येकोनविंशतिम् । चत्वारिंशयुते याते मृत्युर्दिनशतद्वये ॥१०६॥

एकोनविंशतिदिनवाहिनि वायौ चत्वारिंशदधिकदिनशतद्वये मृत्युः, अष्टाशीत्यधिकशतद्वयाच्चतुर्णां द्वादशाहानामपनयने एतदेव भवति ॥ १०६ ॥ तथा—

विंशतिदिवसानेकनासाचारिणि मारुते । साशीतौ वासरशते गते मृत्युर्न संशयः ॥१०७॥

विंशतिं दिनानि वहति वायौ अशीत्यधिके दिनशते मृत्युः, चत्वारिंशदधिकशतद्वयात् पञ्चानां द्वादशाहानामपनयने एतदेव भवति ॥ १०७ ॥ तथा—

एकद्वित्रिचतुःपञ्चदिनषट्कक्रमक्षयात् । एकविंशादिपञ्चाहान्यत्र शोध्यानि तद्यथा ॥१०८॥

एकद्वित्रिचतुःपञ्चानां दिनषट्कानां क्रमेण क्षयात् एकविंशत्यादि पञ्चविंशतिपर्यन्तानि पञ्च दिनानि शोधयेत् ॥ १०८ ॥

तद्यथेति पूर्ववत्—

एकविंशत्यहं त्वर्कनाडीवाहिनि मारुते । चतुःसप्ततिसंयुक्ते मृत्युर्दिनशते भवेत् ॥ १०९ ॥

एकविंशतिं दिनानि वहति वायौ चतुःसप्तत्यधिके दिनशते मृत्युः, अशीत्यधिकशतादेकस्य षट्कस्यापनयने एतदेव भवति ॥ १०९ ॥ तथा—

द्वाविंशतिं दिनान्येवं सद्विषष्ट्यावहःशते । षड्दिनोनैः पञ्चमासैस्त्रयोविंशत्यहानुगे ॥ ११० ॥

द्वाविंशतिं दिनानि वहति वायौ द्विषष्ट्यधिके दिनशते मृत्यु', चतु'सप्तत्यधिकशताद् द्वयो षट्कयोरपनयने एतदेव भवति । तथा त्रयोविंशतिं दिनानि वहति वायौ चतुश्चत्वारिंशदधिके दिनशते मृत्यु , द्विषष्ट्यधिकशता-त्रयाणां षट्कानामपनयने एतदेव भवति ॥ ११० ॥ तथा—

तथैव वायौ वहति चतुर्विंशतिवासरीम् । विंशत्यभ्यधिके मृत्युर्भवेद्दिनशते गते ॥ १११ ॥

चतुर्विंशतिं दिनानि वहति वायौ विंशत्यधिके दिनशते मृत्यु , चतुश्चत्वारिंशदधिकादिनशताच्चतुर्णां षट्कानामपनयने एतदेव भवति ॥ १११ ॥ तथा—

पञ्चविंशत्यह चैव वायौ मासत्रये मृति. । मासद्वये पुनर्मृत्यु षड्विंशतिदिनानुगे ॥ ११२ ॥

पञ्चविंशतिं दिनानि वहति वायौ मासत्रये मृत्यु , विंशत्यधिकशतात् पञ्चाना षट्कानामपनयने एतदेव भवति । षड्विंशतिं दिनानि वहति वायौ मासद्वये मृत्युः ॥ ११२ ॥ तथा—

सप्तविंशत्यहवहे नाशो मासेन जायते । मासार्धेन पुनर्मृत्युरष्टाविंशत्यहानुगे ॥ ११३ ॥

सप्तविंशतिं दिनानि वहति वायौ मासेन मृत्युः । अष्टाविंशतिं दिनानि वहति वायौ मासार्धेन मृत्युः ॥ ॥ ११३ ॥ तथा—

एकोनत्रिंशदहगे मृति स्याद्दशमेऽहनि । त्रिंशद्दिनीचरे तु स्यात्पञ्चत्व पञ्चमे दिने ॥११४॥

एकोनत्रिंशतं दिनानि वहति वायौ दशमे दिने मृत्युः । त्रिंशतं दिनानि वहति वायौ पञ्चमे दिने मृत्युः ॥ ११४ ॥

तथा—

**एकत्रिंशदहश्चरे वायौ मृत्युर्दिनत्रये । द्वितीयदिवसे नाशो द्वात्रिंशदहवाहिनि ॥ ११५ ॥**

एकत्रिंशतं दिनानि वहति वायौ दिनत्रये मृत्युः । द्वात्रिंशतं दिनानि वहति वायौ दिनद्वये मृत्युः ॥ ११५ ॥

इदानीं सूर्यनाडीचारमुपसंहरंश्चन्द्रनाडीचारमाचष्टे—

**त्रयस्त्रिंशदहश्चरे त्वेकाहेनापि पञ्चता । एवं यदीन्दुनाड्यां स्यात्तदा व्याध्यादिकं दिशेत् ॥ ११६ ॥**

त्रयस्त्रिंशतं दिनानि वहति वायावेकेन दिनेन मृत्युः । इन्दुनाड्यां यद्येवं वायुचारो भवति तदा न मृत्युर्भवति, किन्तु पूर्वोक्तविधिना व्याध्यादिकं स्यात्, आदिशब्दात्सुहृन्नाशमहाभयस्वदेशविरहधनपुत्रादिनाशराजविनाशदुर्भिक्षादयः संगृह्यन्ते ॥ ११६ ॥

उपसंहरति—

**अध्यात्मं वायुमाश्रित्य प्रत्येकं सूर्यसोमयोः । एवमभ्यासयोगेन जानीयात्कालनिर्णयम् ॥ ११७ ॥**

आत्मशब्देन शरीरमुच्यते, आत्मन्यधि अध्यात्मं शरीरान्तर्गतं वायुमाश्रित्य सोमसूर्ययोरभ्यासयोगेन कालनिर्णयं कालावधारणं जानीयात् ॥ ११७ ॥

बाह्यं काललक्षणं जिज्ञापयिषुः प्रस्तौति—

अध्यात्मिकविपर्यास सभवेद्व्याधितोऽपि हि। तन्निश्चयाय बध्नामि बाह्य कालस्य लक्षणम्॥११८॥

अध्यात्मिकस्य शरीरान्तर्गतस्य वायोर्व्याधिनाऽपि विपर्ययः सभवति, न ततः कालज्ञान स्फुट भवति, ततस्तन्निश्चयाय कालनिश्चयाय बाह्य कालस्य लक्षण बध्नामि ॥ ११८ ॥

नेत्रश्रोत्रशिरोभेदात् स च त्रिविधलक्षण । निरीक्ष्य सूर्यमाश्रित्य यथेष्टमपर. पुन· ॥ ११९ ॥

स च कालो नेत्रश्रोत्रशिरोभेदात्, त्रिविध लक्षण ज्ञापक यस्य स तथा, सूर्यमाश्रित्यालम्ब्य निरीक्षणीय. । अपरस्त्रिविधादन्यो यथेष्ट स्वेच्छया निरीक्षणीयः ॥ ११९ ॥

तत्र नेत्रलक्षणमाह—

वामे तत्रेक्षणे पद्मं षोडशच्छदमैन्दवम्। जानीयाद्भानवीय तु दक्षिणे द्वादशच्छदम् ॥ १२० ॥

वामे लोचने ऐन्दवं षोडशदल पद्म चिन्तयेत् । दक्षिणे तु नेत्रे भानवीय द्वादशदल पद्म चिन्तयेत् ॥१२०॥

खद्योतद्युतिवर्णानि चत्वारि च्छदनानि तु। प्रत्येक तत्र दृश्यानि स्वाङ्गुलीविनिपीडनात् ॥१२१॥

तत्र षोडशदले पद्मे चत्वारि दलानि खद्योतद्युतिवर्णानि गुरूपदेशेनाङ्गुलीनिपीडनात् दृश्यानि प्रत्येकमपि द्वयोरपि पद्मयो ॥ १२१ ॥ तत्र—

सोमाधो भ्रूलतापाङ्गघ्राणान्तिकदलेषु तु। दले नष्टे क्रमान्मृत्यु षट्त्रियुग्मैकमासत· ॥१२२॥

तत्र सोमस्याधो देशेऽदृश्यमाने दले षड्भिर्मासैर्मृत्युः। सोमस्यैवोपरिदेशे भ्रूलतासमीपवर्तिनि दलेऽदृश्यमाने त्रिभिर्मासैर्मृत्युः। अपाङ्गदेशवर्तिनि दलेऽदृश्यमाने मासद्वयेन मृत्युः। घ्राणान्तिकवर्तिनि दलेऽदृश्यमाने मासेन मृत्युः ॥ १२२ ॥

तथा—

**अयमेव क्रमः पद्मे भानवीये यदा भवेत्। दशपञ्चत्रिद्विदिनैः क्रमान्मृत्युस्तदा भवेत् ॥ १२३ ॥**

अयमेवाङ्गुलीनिपीडनादिलक्षणः क्रमो भानवीयेऽपि पद्मेऽदृश्यमाने तत्तद्दले यथासङ्ख्यं दशभिः पञ्चभिः त्रिभिः द्वाभ्यां च दिनाभ्यां मृत्युर्भवेत् ॥ १२३ ॥

तथा—

**एतान्यपीड्यमानानि द्वयोरपि हि पद्मयोः। दलानि यदि वीक्षेत मृत्युर्दिनशतात्तदा ॥ १२४ ॥**

एतान्येव दलानि सोमसूर्यसंबन्धीनि अङ्गुलीभिरपीड्यमानान्येव यदि पश्येत्तदा दिनशतान्मृत्युः ॥ १२४ ॥

अथ श्रोत्रलक्षणं श्लोकद्वयेनाह—

**ध्यात्वा हृद्यष्टपत्राब्जं श्रोत्रे हस्ताग्रपीडिते। न श्रूयेताग्निनिर्घोषो यदि स्वः पञ्च वासरान् ।१२५।**

**दश वा पञ्चदश वा विंशतिं पञ्चविंशतिम्। तदा पञ्चचतुस्त्रिद्व्येकवर्षैर्मरणं क्रमात् ।१२६।**

हृदयेऽष्टपत्रं कमलं ध्यात्वा हस्ताग्रपीडिते श्रोत्रे यदि स्वकीयोऽग्निनिर्घोषः पञ्च वासरान् यावन्न श्रूयते तदा पञ्चभिर्वर्षैः, यदि दश वासरान्न श्रूयेत तदा चतुर्भिर्वर्षैः, यदि पञ्चदश वासरान्न श्रूयेत तदा त्रिभिर्वर्षैः, यदि

विंशतिं वासरान् श्रूयेत तदा द्वाभ्यां वर्षाभ्यां, यदि पञ्चविंशतिं वासरान् श्रूयेत तदा वर्षेण मृत्युर्भवेत् ॥१२५॥
॥ १२६ ॥ तथा—

एकद्वित्रिचतुःपञ्चचतुर्विंशत्यह क्षयात् । षडादिषोडशदिनान्यान्तराण्यपि शोधयेत् ॥१२७॥

एकस्या द्वयोस्तिसृणां चतसृणां पञ्चानां च दिनचतुर्विंशतीनां क्षयात् षडादीनि षोडशदिनान्यान्तराणि शोधयेत् । तथाहि—पञ्च दिनानि अश्रूयमाणे श्रोत्रनिर्घोषे पञ्चभिर्वर्षैर्मृत्युर्भवतीत्युक्तम् । ततश्च षष्ठेऽपि दिनेऽश्रूयमाणे निर्घोषे पञ्चभ्यो वर्षेभ्य एकस्या दिनचतुर्विंशतेरपनयने षट्सप्तत्यधिकैः सप्तदशभिर्दिनशतैर्मृत्युर्भवेत् । सप्तमदिनेऽप्यश्रूयमाणे श्रोत्रनिर्घोषे प्राग्दिनेभ्यो द्वयोश्चतुर्विंशत्योरपनयनेऽष्टाविंशत्यधिकैः सप्तदशभिर्दिनशतैर्मृत्युर्भवेत् । अष्टमेऽपि दिनेऽश्रूयमाणे श्रोत्रनिर्घोषे प्राग्दिनेभ्यस्तिसृणां चतुर्विंशतीनामपनयने षट्पञ्चाशदधिकैः षोडशभिर्दिनशतैर्मृत्युः नवमेऽपि दिनेऽश्रूयमाणे निर्घोषे प्राग्दिनेभ्यश्चतसृणां चतुर्विंशतीनामपनयने षष्ट्यधिकैः पञ्चदशभिर्दिनशतैर्मृत्युः दशमेऽपि दिनेऽश्रूयमाणे निर्घोषे प्राग्दिनेभ्यः पञ्चानां चतुर्विंशतीनामपनयने चतुर्भिर्वर्षैर्मृत्युरित्युक्तमेव । एवमेकादशादिषु षोडशादिष्वेकविंशत्यादिष्वप्यूह्यम् ॥ १२७ ॥

अथ शिरोलक्षणमाह—

ब्रह्मद्वारे प्रसर्पन्तीं पञ्चाहं धूममालिकाम् । न चेत् पश्येत्तदा ज्ञेयो मृत्युः सवत्सरैस्त्रिभिः ॥१२८॥

ब्रह्मरन्ध्रे प्रसर्पन्तीं धूमरेखां गुरूपदेशदृश्यां यदि पञ्च दिनानि यावन्न पश्यति तदा त्रिभिर्वर्षैर्मृत्युः ॥१२८॥

प्रकारान्तरेण कालज्ञानं षड्भिः श्लोकैराह—

**प्रतिपद्दिवसे कालचक्रज्ञानाय शौचवान्। आत्मनो दक्षिणं पाणिं शुक्लपक्षं प्रकल्पयेत् ॥१२९॥**

प्रतिपद्दिवसे प्रथमतिथौ शुचिः कालचक्रं ज्ञातुमात्मनो दक्षिणं पाणिं शुक्लपक्षं प्रकल्पयेत् ॥ १२९ ॥ तथा—

**अधोमध्योर्ध्वपर्वाणि कनिष्ठाङ्गुलीगानि तु। क्रमेण प्रतिपत्षष्ठ्येकादशीः कल्पयेत्तिथीः॥१३०॥**

**अवशेषाङ्गुलीपर्वाण्यवशेषतिथीस्तथा । पञ्चमीदशमीराकाः पर्वाण्यङ्गुष्ठगानि तु ॥१३१॥**

कनिष्ठाङ्गुलेरधस्तनपर्वे प्रतिपदं, मध्यपर्वे षष्ठीं, ऊर्ध्वपर्वे एकादशीं कल्पयेत् । अङ्गुष्ठवर्जे शेषाङ्गुलीपर्वाणि शेषास्तिथीः कल्पयेत् । तथाहि—अनामिकापर्वसु द्वितीयातृतीयाचतुर्थीः, मध्यमापर्वसु सप्तम्यष्टमीनवमीः, तर्जन्यां द्वादशीत्रयोदशीचतुर्दशीः कल्पयेत्। अङ्गुष्ठपर्वाणि पञ्चमीदशमीपञ्चदशीः कल्पयेत् ॥१३०॥१३१॥ तथा—

**वामपाणिं कृष्णपक्षं तिथीस्तद्वच्च कल्पयेत् । ततश्च निर्जने देशे बद्धपद्मासनः सुधीः ॥१३२॥**

**प्रसन्नः सितसंव्यानः कोशीकृत्य करद्वयम्। ततस्तदन्तः शून्यं तु कृष्णं वर्णं विचिन्तयेत् ।१३३।**

स्पष्टौ ॥ १३२ ॥ १३३ ॥ तथा—

**उद्घाटितकराम्भोजस्ततो यत्राङ्गुलीतिथौ। *वीक्ष्याते कालबिन्दुः स काल इत्यत्र कीर्त्यते।**

---

* " वीक्षते कालबिन्दुं स " इति पाठः स्यात् ॥

स्पष्ट । नवरमत्रेति कालज्ञानप्रस्तावे ॥ १३४ ॥

कालज्ञाने उपायान्तराण्याह—

**क्षुतविण्मेदमूत्राणि भवन्ति युगपद्यदि । मासे तत्र तिथौ तत्र वर्षान्ते मरणं तदा ॥१३५॥**

क्षुत क्षवः, विड् विष्टा, मेदो रेतः, मूत्र प्रस्रावः, एतानि यदि युगपद्भवेयुस्तदा वर्षान्ते तत्रैव मासे तत्रैव दिने मृत्यु. स्यात् ॥ १३५ ॥ तथा—

**रोहिणीं शशभृल्लक्ष्म महापथमरुन्धतीम् । ध्रुव च न यदा पश्येद्वर्षेण स्यात्तदा मृतिः ॥१३६॥**

रोहिणीं नक्षत्रविशेष, शशभृतो लक्ष्म लाञ्छन, महापथ छायापथ, अरुन्धतीं वशिष्ठभार्या, ध्रुवमौत्तानपादिं, यदैकैक युगपद्वा पटुदृष्टिर्न पश्येत्तदा वर्षेण मृत्युः । लौकिका अप्याहु.—

अरुन्धतीं ध्रुव चैव विष्णोस्त्रीणि पदानि च । क्षीणायुषो न पश्यन्ति चतुर्थं मातृमण्डलम् ॥ १ ॥

अरुन्धती भवेज्जिह्वा ध्रुवो नासाग्रमुच्यते । तारा* विष्णुपद प्रोक्त भ्रुवौ स्यान्मातृमण्डलम् ॥ २ ॥ १३६ ॥

**स्वप्ने स्व भक्ष्यमाण श्वगृध्रकाकनिशाचरैः । उह्यमानं खरोष्ट्राद्यैर्यदा पश्येत्तदा मृति ॥१३७॥**

स्वमात्मानं श्वगृध्रकाकनिशाचरैर्भक्ष्यमाण, उपलक्षणात् कृष्यमाणमपि, खरोष्ट्राद्यैः आदिशब्दात् श्वराहादिभिश्चोह्यमान, उपलक्षणात् कृष्यमाण, यदा स्वप्ने पश्येत्तदा वर्षान्ते मृत्युः । वर्षेणेत्यनुवर्तते ॥१३७॥ तथा—

---

* " भ्रूमध्ये विष्णुपद ज्ञेय तारिका मातृमण्डलम् ॥ " इति मत्यन्तरम् ॥

रश्मिनिर्मुक्तमादित्यं रश्मियुक्तं हविर्भुजम् । यदा पश्येद्विपद्येत तदैकादशमासतः ॥१३८॥

रश्मयः किरणाः तद्धन्तमादित्यम् अन्येषु पश्यत्स्वपि यदा रश्मिहीनं पश्यति वह्निं च रश्मियुक्तं पश्यति तदैकादशे मासे मृत्युः ॥ १३८ ॥ तथा—

वृक्षाग्रे कुत्रचित् पश्येद्गन्धर्वनगरं यदि । पश्येत् प्रेतान् पिशाचान् वा दशमे मासि तन्मृतिः॥१३९॥

गन्धर्वनगरं सत्यनगरप्रतिबिम्बकं, तद्यदि वृक्षाग्रे पश्येत्, प्रेतान् पिशाचान् वा यदि साक्षात् पश्येत् तदा दशमे मासे मृत्युः ॥ १३९ ॥ तथा—

छर्दिं मूत्रं पुरीषं वा सुवर्णरजतानि वा । स्वप्ने पश्येद्यदि तदा मासान्नवैव जीवति ॥१४०॥

स्पष्टः ॥ १४० ॥ तथा—

स्थूलोऽकस्मात् कृशोऽकस्मादकस्मादतिकोपनः । अकस्मादतिभीरुर्वा मासानष्टैव जीवति १४१

अकस्मात् कारणाभावेन । शेषं स्पष्टम् ॥ १४१ ॥ तथा—

समग्रमपि विन्यस्तं पांशौ वा कर्दमेऽपि वा । स्याच्चेत्खण्डं पदं सप्तमास्यन्ते म्रियते तदा ॥१४२॥

स्पष्टः । नवरं सप्तमास्या अन्ते ॥ १४२ ॥ तथा—

तारां श्यामां यदा पश्येच्छुष्येदधरतालु च । न स्वाङ्गुलित्रयं मायाद्राजदन्तद्वयान्तरे ॥१४३॥

गृध्र काक कपोतो वा क्रव्यादोऽन्योऽपि वा खग ।
निलीयेत यदा मूर्ध्नि षण्मास्यन्ते मृतिस्तदा ॥ १४४ ॥

तारा कनीनिका, श्यामा अञ्जनवर्णा। शुष्येतामकस्मादधरौ दन्तच्छदौ तालु च काकुद। राजदन्तावध उपरि च द्वौ द्वौ दन्तौ। शेष स्पष्टम् ॥ १४३ ॥ १४४ ॥

प्रत्यह पश्यतानभ्रेऽहन्यापूर्य जलैर्मुखम्। विहिते पूत्कृते शक्रधन्वा तु तत्र दृश्यते ॥१४५॥
यदा न दृश्यते तत्तु मासै षड्भिर्मृतिस्तदा। परनेत्रे स्वदेह चेन्न पश्येन्मरण तदा ॥१४६॥

अनभ्रेऽहनि मुखमापूर्य जले पूत्कृतेन ऊर्ध्वं क्षिपन् शक्रधनुः पश्यतीति स्थितमेतत्। यदा तदिन्द्रधनुर्न पश्यति तदा षड्भिर्मासैर्मृति'। परकनीनिकायां स्वदेहो दृश्यते, यदा त न पश्येत्तदा षड्भिर्मासैर्मरणम् ॥ १४५॥ १४६॥ तथा—

कूर्परौ न्यस्य जान्वोर्मूर्ध्न्येकीकृत्य करौ सदा। रम्भाकोशनिभां छाया लक्षयेदन्तरोद्भवाम् १४७
विकासि च दल तत्र यदेकं परिलक्ष्यते। तस्यामेव तिथौ मृत्यु, षण्मास्यन्ते भवेत्तदा ॥१४८॥

अनभ्रेऽहनीति वर्तते। शेष स्पष्टम् ॥ १४७ ॥ १४८ ॥ तथा—

इन्द्रनीलसमच्छाया वक्रीभूता सहस्रश। मुक्ताफलालङ्करणा पन्नगा. सूक्ष्ममूर्त्तय ॥१४९॥
दिवा समुखमायान्तो दृश्यन्ते व्योम्नि सन्निधौ। न दृश्यन्ते यदा ते तु षण्मास्यन्ते मृतिस्तदा १५०

आतपस्थितेन सर्वैर्जनेनात्माभिमुखमायान्तः सूक्ष्ममूर्त्तयः सर्पा दृश्यन्ते इति स्थितमेतत्, ते पन्नगा यदा न दृश्यन्ते तदा षण्मास्या अन्ते मृत्युः ॥ १४९ ॥ १५० ॥ तथा—

स्वप्ने मुण्डितमभ्यक्तं रक्तगन्धस्रगम्बरम्। पश्येद् याम्यां खरे यान्तं स्वं योऽब्दार्धं स जीवति १५१

स्पष्टः ॥ १५१ ॥ तथा—

घण्टानादो रतान्ते चेदकस्मादनुभूयते। पञ्चता पञ्चमास्यन्ते तदा भवति निश्चितम् ॥१५२॥

स्पष्टः ॥ १५२ ॥ तथा—

शिरो वेगात्समारुह्य कृकलासो व्रजन् यदि। दध्याद्वर्णत्रयं पञ्चमास्यन्ते मरणं तदा ॥१५३॥

स्पष्टः ॥ १५३ ॥ तथा—

वक्रीभवति नासा चेद्वर्तुलीभवतो दृशौ। स्वस्थानाद्भ्रश्यतः कर्णौ चतुर्मास्यां तदा मृतिः॥१५४॥

स्पष्टः ॥ १५४ ॥ तथा—

कृष्णं कृष्णपरीवारं लोहदण्डधरं नरम्। यदा स्वप्ने निरीक्षेत मृत्युर्मासैस्त्रिभिस्तदा ॥१५५॥

स्पष्टः ॥ १५५ ॥ तथा—

इन्दुमुष्णं रविं शीतं छिद्रं भूमौ रवावपि। जिह्वां श्यामां मुखं कोकनदाभं च यदेक्षते ॥१५६॥
तालुकम्पो मनःशोको वर्णोऽङ्गे नैकधा यदा। नाभेश्चाकस्मिकी हिक्का मृत्युर्मासद्वयात्तदा १५७

स्पष्टौ। नवरं मन शोको हृदयमतिशयेन रोदितीत्यर्थः ॥ १५६ ॥ १५७ ॥ तथा—

जिह्वा नास्वादमादत्ते मुहु स्खलति भाषणे। श्रोत्रे न शृणुत. शब्दं गन्धं वेत्ति न नासिका ॥१५८
स्पन्देते नयने नित्य दृष्टवस्तुन्यपि भ्रम । नक्तमिन्द्रधनु. पश्येत् तथोल्कापतन दिवा ॥१५९॥
न च्छायामात्मन पश्येद्दर्पणे सलिलेऽपि वा। अनब्दा विद्युत पश्येच्छिरोऽकस्मादपि ज्वलेत् १६०
हसकाकमयूराणा पश्येच्च क्वापि संहतिम्। शीतोष्णखरमृद्वादेरपि स्पर्शं न वेत्ति च ॥१६१॥
अमीषा लक्ष्मणा मध्याद्यदेकमपि दृश्यते। जन्तोर्भवति मासेन तदा मृत्युर्न सशयः ॥१६२॥

पञ्चापि स्पष्टा. ॥ १५८—१६२ ॥ तथा—

शीते हकारे फुत्कारे चोष्णे स्मृतिगतिक्षये। अङ्गपञ्चकशैत्ये च स्याद्दशाहेन पञ्चता ॥१६३॥

व्यात्तमुखस्य वायुना सह हकारस्य निर्गच्छतो यदा शैत्य भवति, किञ्चिद्विवृतोष्ठद्वयस्य वायुना कृतः फुत्कारो यद्युष्णो भवति, स्मृतिगत्योश्च क्षयो भवति, अङ्गपञ्चकशैत्य च भवति, तदा दशाहेन मृत्युः ॥१६३॥ तथा—

अर्धोष्णमर्धशीतं च शरीर जायते यदा। ज्वालाकस्माज्ज्वलेद्वाङ्गे सप्ताहेन तदा मृति. ॥१६४॥

स्पष्ट ॥ १६४ ॥ तथा—

स्नातमात्रस्य हृत्पादं तत्क्षणाद्यदि शुष्यति। दिवसे जायते षष्ठे तदा मृत्युरसंशयम् ॥१६५॥

हृदयं च पादौ च हृत्पादम्। शेषं स्पष्टम् ॥ १६५ ॥ तथा—

जायते दन्तघर्षश्चेच्छवगन्धश्च दुःसहः। विकृता भवति च्छाया त्र्यहेण म्रियते तदा ॥१६६॥

स्पष्टः ॥ १६६ ॥ तथा—

न स्वनासां स्वजिह्वां न न ग्रहानामला दिशः। नापि सप्तऋषीन् यर्हि पश्यति म्रियते तदा ॥१६७॥

स्पष्टः ॥ १६७ ॥ तथा—

प्रभाते यदि वा सायं ज्योत्स्नावत्यामथो निशि। प्रवितत्य निजौ बाहू निजच्छायां विलोक्य च १६८

शनैरुत्क्षिप्य नेत्रे स्वच्छायां पश्येत्ततोऽम्बरे। न शिरो दृश्यते तस्यां यदा स्यान्मरणं तदा ॥१६९॥

नेक्ष्यते वामबाहुश्चेत् पुत्रदारक्षयस्तदा। यदि दक्षिणबाहुर्नेक्ष्यते भ्रातृक्षयस्तदा ॥ १७० ॥

अदृष्टे हृदये मृत्युरुदरे च धनक्षयः। गुह्ये पितृविनाशस्तु व्याधिरूरुयुगे भवेत् ॥ १७१ ॥

अदर्शने पादयोश्च विदेशगमनं भवेत्। अदृश्यमाने सर्वाङ्गे सद्यो मरणमादिशेत् ॥ १७२ ॥

स्पष्टाः ॥ १६८–१७२ ॥ प्रकारान्तरेण कालज्ञानमाह—

विध्यया दर्पणाङ्गुष्ठकुड्यासिष्ववतारिता। विधिना देवता पृष्टा ब्रूते कालस्य निर्णयम्॥१७३॥
सूर्येन्दुग्रहणे विधौ नरवीरठवेत्यसौ । साध्या दशसहस्र्याष्टोत्तरया जपकर्मत ॥ १७४ ॥
अष्टोत्तरसहस्रस्य जापात् कार्यक्षणे पुन । देवता लीयतेऽस्यादौ तत कन्याऽऽह निर्णयम् ।१७५।
सत्साधकगुणाकृष्टा स्वयमेवाथ देवता । त्रिकालविषयं ब्रूते निर्णय गतसशयम् ॥ १७६ ॥

स्पष्टा. ॥ १७३–१७६ ॥ अथ शकुनद्वारेण पञ्चभि श्लोकै कालज्ञानमाह—

अथवा शकुनाद्विन्द्यात्सज्जो वा यदिवाऽऽतुर । स्वतो वा परतो वाऽपि गृहे वा यदि्वा बहिः।१७७।
अहिवृश्चिककृम्याखुगृहगोधापिपीलिका । यूकामत्कुणलूताश्च वल्मीकोऽथोपदेहिका ॥१७८॥
कीटिका घृतवर्णाश्च भ्रमर्यश्च यदाऽधिका. । उद्वेगकलहव्याधिमरणानि तदा दिशेत् ॥१७९॥
उपानद्वाहनच्छत्रशस्त्रच्छायाङ्गकुन्तलान् । चञ्च्वा चुम्बेद्यदा काकस्तदाऽऽसन्नैव पञ्चता ॥१८०॥
अश्रुपूर्णदृशो गावो गाढ पादैर्वसुन्धराम् । खनन्ति चेत्तदानीं स्याद्रोगो मृत्युश्च तत्प्रभो ॥१८१॥

स्पष्टा ॥ १७७–१८१ ॥ प्रकारान्तरेण स्तौति—

अनातुरकृते ह्येतच्छकुन परिकीर्तितम् । अधुनाऽऽतुरमुद्दिश्य शकुन परिकीर्त्यते ॥ १८२ ॥

स्पष्टः ॥ १८२ ॥ आतुरशकुनेषु श्वगतशकुनानि त्रिभिः श्लोकैराह—

दक्षिणास्यां वलित्वा चेत् श्वा गुदं लेढ्युरोऽथवा। लाङ्गूलं वा तदा मृत्युरेकद्वित्रिदिनैः क्रमात् १८३
शेते निमित्तकाले चेत् श्वा संकोच्याखिलं वपुः। धूत्वा कर्णौ वलित्वाङ्गं धूनोत्यथ ततो मृतिः।१८४।
यदि व्यात्तमुखो लालां मुञ्चन् संकोचितेक्षणः। अङ्गं संकोच्य शेते श्वा तदा मृत्युर्न संशयः।१८५।

स्पष्टाः ॥ १८३-१८५ ॥ काकशकुनानि श्लोकद्वयेनाह—

यद्यातुरगृहस्योर्ध्वं काकपक्षिगणो मिलन्। त्रिसन्ध्यं दृश्यते नूनं तदा मृत्युरुपस्थितः ॥१८६॥
महानसे तथा शय्यागारे काकाः क्षिपन्ति चेत्। चर्मास्थि रज्जुं केशान् वा तदासन्नैव पञ्चता।१८७।

स्पष्टौ ॥ १८६-१८७ ॥ अथ नवभिः श्लोकैरुपश्रुत्या कालज्ञानमाह—

अथवोपश्रुतेर्विन्द्याद्विद्वान् कालस्य निर्णयम्। प्रशस्ते दिवसे स्वप्नकाले शस्तां दिशं श्रितः।१८८।
पूत्वा पञ्चनमस्कृत्याचार्यमन्त्रेण वा श्रुती। गेहाच्छन्नश्रुतिर्गच्छेच्छिल्पिचत्वरभूमिषु ॥१८९॥
चन्दनेनार्चयित्वा क्ष्मां क्षिप्त्वा गन्धाक्षतादि च। सावधानस्ततस्तत्रोपश्रुतेः शृणुयाद्ध्वनिम् १९०
अर्थान्तरापदेश्यश्च सरूपश्चेति स द्विधा। विमर्शगम्यस्तत्राद्यः स्फुटोक्तार्थोऽपरः पुनः ॥१९१॥

यथेष भवनस्तम्भः पञ्चषड्भिरय दिने * । पक्षैर्मासैरथो वर्षैर्भंक्ष्यते यदि वा न वा ॥१९२॥
मनोहरतरश्चासीत् किन्त्वय लघु भङ्क्ष्यते। अर्थान्तरापदेश्या स्यादेवमादिरुपश्रुति ॥१९३॥
एषा स्त्री पुरुषो वाऽसौ स्थानादस्मान्न यास्यति। दास्यामो न वय गन्तु गन्तुकामो न चाप्ययम्
विद्यते गन्तुकामोऽयमह च प्रेषणोत्सुकः। तेन यास्यत्यसौ शीघ्र स्यात्सरूपेत्युपश्रुति ॥१९५॥
कर्णोद्घाटनसजातोपश्रुत्यन्तरमात्मन.। कुशलाः कालमासन्नमनासन्न च जानते ॥ १९६ ॥

स्पष्ट ॥ १८८–१९६ ॥

अथ शनैश्चरपुरुषेण कालज्ञान श्लोकचतुष्टयेनाह—

शनिः स्याद्यत्र नक्षत्रे तद्दातव्य मुखे तत.। चत्वारि दक्षिणे पाणौ त्रीणि त्रीणि च पादयो. १९७
चत्वारि वामहस्ते तु क्रमश पञ्च वक्षसि। त्रीणि शीर्षे दृशोर्द्वे द्वे गुह्य एक शनौ नरे ॥१९८॥
निमित्तसमये तत्र पतित स्थापनाक्रमात्। जन्मर्क्ष नामऋक्ष वा गुह्यदेशे भवेद्यदि ॥१९९॥
दृष्ट श्लिष्ट ग्रहैर्दुष्टै सौम्यैरप्रेक्षितायुतम्। सज्जस्यापि तदा मृत्युः का कथा रोगिणः पुन.॥२००॥

* "तयेयद्भिरय दिने" इति प्रत्यन्तरम् ॥

स्पष्टाः । नवरं दृष्टमिति—

दशमतृतीये नवपञ्चमे चतुर्थाष्टमे कलत्रे च । पश्यन्ति पादवृध्ध्या फलं तथैव प्रयच्छन्ति ॥ १ ॥

इत्यनेन क्रमेण ग्रहदर्शनं वाच्यम् । श्लिष्टं यदि तत्रैव क्रूरग्रहो भवेत् तद्विपर्ययेण सौम्यग्रहैरदृष्टा-स्पृष्टम् ॥ १९७-२०० ॥

अथ पृच्छालग्नानुसारेण कालज्ञानमाह—

**पृच्छायामथ लग्नास्तचतुर्थदशमस्थिताः । ग्रहाः क्रूराः शशी षष्ठाष्टमश्चेत्स्यात्तदा मृतिः ॥२०१॥**

पृच्छायां प्रश्ने सति लग्ने तत्काललग्ने, अस्ते लग्नात्सप्तमे, चतुर्थे दशमे वा स्थाने स्थिताः क्रूरग्रहाश्चेत्, चन्द्रस्तु षष्ठोऽष्टमो वा यदि स्यात्तदा मृत्युः ॥ २०१ ॥ तथा—

**पृच्छायाः समये लग्नाधिपतिर्भवति ग्रहः । यदि वाऽस्तमितो मृत्युः सज्जस्यापि तदा भवेत् ॥२०२॥**

लग्नाधिपतयो मेषादिषु राशिषु—

कुजशुक्रज्ञेन्द्वर्कज्ञशुक्रकुजजीवसौरिशनिगुरवः । मेशा नवांशकानामजमकरतुलाकुलीराद्याः ॥ १ ॥

इतिशास्त्रादवगन्तव्याः ॥ २०२ ॥ तथा—

**लग्नस्थश्चेच्छशी सौरिर्द्वादशो नवमः कुजः । अष्टमोऽर्कस्तदा मृत्युः स्याच्चेन्न बलवान् गुरुः ॥२०३॥**

स्पष्टः ॥ २०३॥ तथा—

रवि षष्ठ तृतीयो वा शशी च दशमस्थितः। यदा भवति मृत्यु स्यात्तृतीये दिवसे तदा ॥२०४॥
पापग्रहाश्चेदुदयास्तुर्ये वा द्वादशेऽथवा। दिशन्ति तद्विदो मृत्यु तृतीये दिवसे तदा ॥२०५॥

स्पष्टौ ॥ २०४–२०५ ॥ तथा—

उदये पञ्चमे वाऽपि यदिपापग्रहो भवेत्। अष्टभिर्दशभिर्वा स्याद्दिवसैः पञ्चता तदा ॥२०६॥

स्पष्टः ॥ २०६ ॥ तथा—

धनुर्मिथुनयोः सप्तमयोर्यद्यशुभा ग्रहा। तदा व्याधिर्मृतिर्वा स्याज्ज्योतिषामिति निर्णयः ॥२०७॥

स्पष्टः ॥ २०७ ॥ यन्त्रद्वारेण कालज्ञानमष्टभिः श्लोकैराह—

अन्तस्थाधिकृतप्राणिनामप्रणवगर्भितम्। कोणस्थरेफमाग्नेयपुरं ज्वालाशताकुलम् ॥२०८॥
सानुस्वारैरकाराद्यै षट्स्वरैः पार्श्वतो वृतम्। स्वस्तिकाङ्कबहिःकोणं स्वाक्षरान्त प्रतिष्ठितम्॥२०९
चतुःपार्श्वस्थगुरुय यन्त्र वायुपुरावृतम्। कल्पयित्वा परिन्यस्येत् पादहृच्छीर्षसन्धिषु ॥२१०॥
सूर्योदयक्षणे सूर्यं पृष्ठे कृत्वा ततः सुधीः। स्वपरायुर्विनिश्चेतु निजच्छायां विलोकयेत् ॥२११॥
पूर्णां छायां यदीक्षेत तदा वर्षं न पञ्चता। कर्णाभावे तु पञ्चत्वं वर्षैर्द्वादशभिर्भवेत् ॥२१२॥
हस्ताङ्गुलिस्कन्धकेशपार्श्वनासाक्षये क्रमात्। दशाष्टसप्तपञ्चत्र्येकवर्षैर्मरणं दिशेत् ॥ २१३ ॥

षण्मास्या म्रियते नाशे शिरसश्चिबुकस्य वा। ग्रीवानाशे तु मासेनैकादशाहेन हक्क्षये ॥२१४॥
सच्छिद्रे हृदये मृत्युर्दिवसैः सप्तभिर्भवेत्। यदि च्छायाद्वयं पश्येद्यमपार्श्वं तदा व्रजेत् ॥२१५॥




अन्तस्थं मध्यगतमधिकृतप्राणिनाम यस्य, स चासौ प्रणवश्च तेन गर्भितं, आग्नेयपुरं, कोणस्थरेफं, ज्वालाशतैराकुलं, अनुस्वारसहितैः षड्भिः स्वरैः अकाराद्यैः पार्श्वतो वृतं, बहिःकोणेषु स्वस्तिकाङ्कं, स्वा इत्यक्षरस्य मध्यस्थितं आग्नेयपुरमेव, तथा चतुःपार्श्वस्थो गुरुर्विसर्गान्तो यकारो यस्य तत्तथा, एवंभूतं यन्त्रं वायुपुरेणावृतं कल्पयित्वा पादयोर्हृदि शीर्षे सन्धिषु च न्यसेत्। यन्त्रं च स्थापनानुसारेण द्रष्टव्यं। शेषाः श्लोकाः स्पष्टाः ॥२०८-२१५॥

यन्त्रप्रयोगमुपसंहरन् विद्यया कालज्ञानमाह—

इति यन्त्रप्रयोगेण जानीयात्कालनिर्णयम्।
यदि वा विद्यया विन्द्याद्वक्ष्यमाणप्रकारया ॥२१६॥

स्पष्टः ॥ २१६ ॥ विद्यामेव सप्तभिः श्लोकैराह—

प्रथमं न्यस्य चूडाया स्वाशब्दमों च मस्तके। क्षि नेत्रे हृदये पत्र नाभ्यब्जे हाक्षर तत.॥२१७॥

'ओं जुंस' ओं मृत्युजयाय ओं वज्रपाणिने शूलपाणिने हर हर दह दह स्वरूप दर्शय दर्शय हु फट् फट्॥

अनया विद्ययाऽष्टाग्रशतवार त्रिलोचने। स्वच्छायां चाभिमन्त्र्यार्कं पृष्ठे कृत्वाऽरुणोदये ॥२१८॥

परच्छायां परकृते स्वच्छायां स्वकृते पुन। सम्यक्कृतपूज सन्नुपयुक्तो विलोकयेत्॥२१९॥

सपूर्णां यदि पश्येत्तामावर्षं न मृतिस्तदा। क्रमजङ्घाजान्वभावे त्रिद्व्येकाब्दैर्मृति पुन ॥२२०॥

ऊरोरभावे दशभिर्मासैर्नश्येत्कटे॰ पुनः। अष्टाभिर्नवभिर्वापि तुन्दाभावे तु पञ्चषैः॥ २२१॥

ग्रीवाऽभावे चतुस्त्रिद्व्येकमासैर्म्रियते पुन॰। कक्षाभावे तु पक्षेण दशाहेन भुजक्षये ॥२२२॥

दिने स्कन्धक्षयेऽष्टाभिश्चतुर्याम्या तु हृत्क्षये। शीर्षाभावे तु यामाभ्यां सर्वाभावे तु तत्क्षणात्॥

स्पष्टाः॥ २१७-२२३॥ कालज्ञानोपायानुपसंहरति—

एवमाध्यात्मिकं काल विनिश्चेतुं प्रसङ्गत.। बाह्यस्यापि हि कालस्य निर्णय॰ परिभाषित ॥२२४॥

स्पष्टः॥ २२४॥ अथ जयपराजयपरिज्ञानोपायमाह—

को जेष्यति द्वयोर्युद्धे इति पृच्छत्यवस्थित.। जयः पूर्वस्य पूर्णे स्याद्रिक्ते स्यादितरस्य तु॥२२५॥

स्पष्टः ॥ २२५ ॥ रिक्तपूर्णयोर्लक्षणमाह—

यत्त्यजेत्संचरन् वायुस्तद्रिक्तमभिधीयते । संक्रमेद्यत्र तु स्थाने तत्पूर्णं कथितं बुधैः ॥२२६॥

स्पष्टः ॥ २२६ ॥ प्रकारान्तरेण कालज्ञानमाह—

प्रष्टाऽऽदौ नाम चेज्ज्ञातुर्गृह्णात्यन्वातुरस्य तु । स्यादिष्टस्य तदा सिद्धिर्विपर्यासे विपर्ययः ॥२२७॥

स्पष्टः ॥ २२७ ॥ तथा—

वामबाहुस्थिते दूते समनामाक्षरो जयेत् । दक्षिणबाहुगे त्वाजौ विषमाक्षरनामकः ॥२२८॥

स्पष्टः ॥ २२८ ॥ तथा—

भूतादिभिर्गृहीतानां दष्टानां वा भुजङ्गमैः । विधिः पूर्वोक्त एवासौ विज्ञेयः खलु मान्त्रिकैः ॥२२९॥

पूर्वोक्तो वामहस्ते पृच्छके समाक्षरो जीवेत्, दक्षिणस्थे विषमाक्षरः ॥ २२९ ॥ तथा—

पूर्णा संजायते वामा विशता वरुणेन चेत् । कार्याण्यारभ्यमाणानि तदा सिध्यन्त्यसंशयम् ॥२३०॥

स्पष्टः ॥ २३० ॥ तथा—

जयजीवितलाभादिकार्याणि निखिलान्यपि । निष्फलान्येव जायन्ते पवने दक्षिणास्थिते ॥२३१॥

स्पष्टः ॥ २३१ ॥ ततः—

ज्ञानी बुध्वाऽनिल सम्यक् पुष्पं हस्तात्प्रपातयेत्। मृतजीवितविज्ञाने तत कुर्वीत निश्चयम् ।२३२।

स्पष्ट ॥ २३२ ॥ निश्चयमेवाह—

त्वरितो वरुणे लाभश्चिरेण तु पुरन्दरे। जायते पवने स्वल्पसिद्धोऽप्यग्नौ विनश्यति॥२३३॥

स्पष्टः ॥ २३३ ॥ तथा—

आयाति वरुणे यात· तत्रैवास्ते सुखं क्षितौ। प्रयाति पवनेऽन्यत्र मृत इत्यनले वदेत् ॥२३४॥

स्पष्टः ॥ २३४ ॥ तथा—

दहने युद्धपृच्छायां युद्धभङ्गश्च दारुणः। मृत्युः सैन्यविनाशो वा पवने जायते पुन. ॥२३५॥

स्पष्टः ॥ २३५ ॥ तथा—

महेन्द्रे विजयो युद्धे वरुणे वाञ्छिताधिक। रिपुभङ्गेन सन्धिर्वा स्वसिद्धिपरिसूचकः॥२३६॥

स्पष्टः ॥ २३६ ॥ तथा—

भौमे वर्षति पर्जन्यो वरुणे तु मनोमतम्। पवने दुर्दिनाम्भोदा वह्नौ वृष्टिः कियत्यपि॥२३७॥

स्पष्टः ॥ २३७ ॥ तथा—

वरुणे सस्यनिष्पत्तिरतिश्लाघ्या पुरन्दरे। मध्यस्था पवने च स्यान्न स्वल्पाऽपि हुताशने ॥२३८॥

स्पष्टः ॥ २३८ ॥ तथा—

महेन्द्रवरुणौ शस्तौ गर्भप्रश्ने सुतप्रदौ । समीरदहनौ स्त्रीदौ शून्यं गर्भस्य नाशकम् ॥२३९॥

स्पष्टः ॥ २३९ ॥ तथा—

गृहे राजकुलादौ च प्रवेशे निर्गमेऽथवा । पूर्णाङ्गपादं पुरतः कुर्वतः स्यादभीप्सितम् ॥२४०॥

पूर्णं यदङ्गं वामं दक्षिणं वा तत्पादं पुरतः प्रथमं कुर्वतः, शेषं स्पष्टम् ॥ २४० ॥ तथा—

गुरुबन्धुनृपामात्या अन्येऽपीप्सितदायिनः । पूर्णाङ्गे खलु कर्तव्याः कार्यसिद्धिमभीप्सता ॥२४१॥

स्पष्टः ॥ २४१ ॥ तथा—

आसने शयने वाऽपि पूर्णाङ्गे विनिवेशिताः । वशीभवन्ति कामिन्यो न कार्मणमतः परम् ॥२४२॥

स्पष्टः ॥ २४२ ॥ तथा—

अरिचौराधमर्णाद्या अन्येऽप्युत्पातविग्रहाः । कर्तव्याः खलु रिक्ताङ्गे जयलाभसुखार्थिभिः ॥२४३॥

स्पष्टः ॥ २४३ ॥ तथा—

प्रतिपक्षप्रहारेभ्यः पूर्णाङ्गे योऽभिरक्षति । न तस्य रिपुभिः शक्तिर्बलिष्ठैरपि हन्यते ॥२४४॥

स्पष्टः ॥ २४४ ॥ तथा—

वहन्तीं नासिकां वामां दक्षिणां वाऽभिसस्थितः । पृच्छेद्यदि तदा पुत्रो रिक्तायां तु सुता भवेत् ॥
सुषुम्णावाहभागे द्वौ शिशू रिक्ते नपुंसकम् । सङ्क्रान्तौ गर्भहानिः स्यात् समे क्षेममसंशयम् २४६

स्पष्टौ ॥ २४५-२४६ ॥ मतान्तरमाह—

चन्द्रे स्त्री पुरुषः सूर्ये मध्यभागे नपुंसकम् । प्रश्नकाले तु विज्ञेयमिति कैश्चिन्निगद्यते ॥२४७॥

स्पष्ट ॥ २४७ ॥ पवननिश्चयोपायमाह—

यदा न ज्ञायते सम्यक् पवनः सचरन्नपि । पीतश्वेतारुणश्यामैर्निश्चेतव्य स बिन्दुभिः ॥२४८॥

स्पष्ट. ॥ २४८ ॥ बिन्दुनिरीक्षणोपाय श्लोकद्वयेनाह—

अङ्गुष्ठाभ्या श्रुती मध्याङ्गुलीभ्यां नासिकापुटे । अन्त्योपान्त्याङ्गुलीभिश्च पिधाय वदनाम्बुजम् ॥
कोणावक्ष्णोर्निपीड्याद्याङ्गुलीभ्यां श्वासरोधतः । यथावर्णं निरीक्षेत बिन्दुमव्यग्रमानसः ।२५०।

स्पष्टौ ॥ २४९-२५० ॥ बिन्दुज्ञानात् पवननिश्चयमाह—

पीतेन बिन्दुना भौम सितेन वरुण पुनः । कृष्णेन पवन विन्द्यादरुणेन हुताशनम् ॥२५१॥

स्पष्ट ॥ २५१ ॥ अनभिमता-नाडी निषेध्धुमुपायमाह—

निरुरुत्सेद्वहन्तीं या वामां वा दक्षिणामथ । तदङ्ग पीडयेत्सद्यो यथा नाडीतरा वहेत् ॥२५२॥

अग्रे वामविभागे हि शशिक्षेत्रं प्रचक्षते । पृष्ठौ दक्षिणभागे तु रविक्षेत्रं मनीषिणः ॥२५३॥
लाभालाभौ सुखं दुःखं जीवितं मरणं तथा। विदन्ति विरलाः सम्यग्वायुसंचारवेदिनः ॥२५४॥

निरुत्सेत् निरोद्धुमिच्छेत्, तदङ्गं निषेधनाड्यङ्गं पीडयेत् शयनादिना । शेषं स्पष्टम् ॥ २५२–२५४ ॥
नाडिशुद्धिश्च पवनसंचारेण ज्ञायते इति तामेव स्तौति—

अखिलं वायुजन्मेदं सामर्थ्यं तस्य जायते। कर्तुं नाडीविशुद्धिं यः सम्यग् जानात्यमूढधीः॥२५५॥

स्पष्टः ॥ २५५ ॥ इदानीं नाडीशुद्धिं श्लोकचतुष्टयेनाह—

नाभ्यब्जकर्णिकारूढं कलाबिन्दुपवित्रितम्। रेफाक्रान्तं स्फुरद्भासं हकारं परिचिन्तयेत् ।२५६।
तं ततश्च तडिद्वेगं स्फुलिङ्गार्चिशताञ्चितम् । रेचयेत्सूर्यमार्गेण प्रापयेच्च नभस्तलम् ॥२५७॥
अमृतैः प्लावयन्तं तमवतार्य शनैस्ततः। चन्द्राभं चन्द्रमार्गेण नाभिपद्मे निवेशयेत् ॥२५८॥
निष्क्रमं च प्रवेशं च यथामार्गमनारतम्। कुर्वन्नेवं महाभ्यासो नाडीशुद्धिमवाप्नुयात् ।२५९।

स्पष्टाः ॥ २५६–२५९ ॥ नाडीसंचारज्ञाने फलमाह—

नाडीशुद्धाविति प्राज्ञः संपन्नाभ्यासकौशलः। स्वेच्छया घटयेद्वायुं पुटयोस्तत्क्षणादपि ॥२६०॥

स्पष्टः ॥ २६० ॥ वामदक्षिणनाड्योराधिवसतः पवनस्य कालमानमाह—

द्वे एव घटिके सार्धे एकस्यामवतिष्ठते । तामुत्सृज्यापरां नाडीमधितिष्ठति मारुत. ॥ २६१ ॥

स्पष्टः ॥ २६१ ॥ तथा—

पट्शताभ्यधिकान्याहु. सहस्राण्येकविंशतिम् । अहोरात्रे नरि स्वस्थे प्राणवायोर्गमागमम् ॥२६२॥

स्पष्ट ॥ २६२ ॥ वायुसक्रमावेदिनस्तत्त्वनिर्णयेऽनधिकारमाह—

मुग्धधीर्य॰ समीरस्य सक्रान्तिमपि वेत्ति न । तत्त्वनिर्णयवार्ता स कथ कर्तुं प्रवर्तते ॥२६३॥

स्पष्टः ॥ २६३ ॥ इदानीं वेधविधिं श्लोकाष्टकेनाह—

पूरित पूरकेणाधोमुख हृत्पद्ममुन्मिपेत् । ऊर्ध्वश्रोतो भवेत्तच्च कुम्भकेन प्रबोधितम् ॥२६४॥

आक्षिप्य रेचकेनाथ कर्षेद्वायुं हृदम्बुजात् । ऊर्ध्वश्रोत पथग्रन्थि भित्त्वा ब्रह्मपुर नयेत् ॥२६५॥

ब्रह्मरन्ध्रान्निष्क्रमय्य योगी कृतकुतूहलः । समाधितोऽर्कतूलेपु वेध कुर्याच्छनैः शनै. ॥२६६॥

मुहुस्तत्र कृताभ्यासो मालतीमुकुलादिपु । स्थिरलक्ष(क्ष्य)तया वेधं सदा कुर्यादतन्द्रित॰ ॥२६७॥

दृढाभ्यासस्तत॰ कुर्याद्वेध वरुणवायुना । कर्पूरागरुकुष्ठादिगन्धद्रव्येपु सर्वत. ॥ २६८ ॥

एतेपु लब्धलक्षो(क्ष्यो)ऽथ वायुसंयोजने पटुः । पक्षिकायेपु सूक्ष्मेषु विदध्याद्वेधमुद्यत ॥२६९॥

पतङ्गभृङ्गकायेपु जाताभ्यासो मृगेष्वपि । अनन्यमानसो धीरः सचरेद्विजितेन्द्रियः ॥२७०॥

नराश्वकरिकायेषु प्रविशन्निःसरन्निति । कुर्वीत संक्रमं पुस्तोपलरूपेष्वपि क्रमात् ॥ २७१ ॥

स्पष्टाः ॥ २६४-२७१ ॥ उक्तमुपसंहरन् वाच्यशेषमाह—

एवं परासुदेहेषु प्रविशेद्वामनासया । जीवदेहप्रवेशस्तु नोच्यते पापशङ्कया ॥ २७२ ॥

पापशङ्कयेति जीवदेहप्रवेशे हि परस्य प्राणप्रहाणं स्यात्, तच्च पापं शस्त्रघातादिवन्नोपदेष्टव्यं । न च परोपघातमन्तरेण जीवत्परपुरप्रवेशः संभवति । तथाहि—

ब्रह्मरन्ध्रेण निर्गत्य प्रविश्यापानवर्त्मना । श्रित्वा नाभ्यम्बुजं यायात् हृदम्भोजं सुषुम्णया ॥ १ ॥

तत्र तत्प्राणसंचारं निरुन्ध्यान्निजवायुना । यावद्देहात्ततो देही गतचेष्टो विनिष्पतेत् ॥ २ ॥

तेन देहे विनिर्मुक्ते प्रादुर्भूतेन्द्रियक्रियः । वर्तेत सर्वकार्येषु स्वदेह इव योगवित् ॥ ३ ॥

दिनार्धं वा दिनं चेति क्रीडेत् परपुरे सुधीः । अनेन विधिना भूयः प्रविशेदात्मनः पुरम् ॥ ४ ॥ २७२ ॥

परपुरप्रवेशफलमाह—

क्रमेणैवं परपुरप्रवेशाभ्यासशक्तितः । विमुक्त इव निर्लेपः स्वेच्छया संचरेत् सुधीः ॥ २७३ ॥

स्पष्टः ॥ २७३ ॥

इति परमार्हतश्रीकुमारपालभूपालशुश्रूषिते आचार्यश्रीहेमचन्द्रविरचितेऽध्यात्मोपनिषन्नाम्नि संजातपट्टबन्धे श्री योगशास्त्रे स्वोपज्ञं पञ्चमप्रकाशविवरणम् ॥ ५ ॥

# अथ षष्ठ प्रकाशः

ओं अर्हं ॥ परपुरप्रवेशस्यापारमार्थिक्यमाह—

इह चाय परपुरप्रवेशश्चित्रमात्रकृत् । सिध्येन्न वा प्रयासेन कालेन महताऽपि हि ॥ १ ॥

स्पष्टः ॥ १ ॥ कुतः ?—

जित्वाऽपि पवन नानाकरणैः क्लेशकारणै । नाडीप्रचारमायत्त विधायापि वपुर्गतम् ॥ २ ॥

अश्रद्धेय परपुरे साधयित्वाऽपि सक्रमम् । विज्ञानैकप्रसक्तस्य मोक्षमार्गो न सिध्यति ॥ ३ ॥

स्पष्टौ ॥ २–३ ॥

" प्राणायामस्ततः कैश्चिदाश्रितो ध्यानसिद्धये " इति यदुक्त तत् श्लोकद्वयेन प्रतिक्षिपति—

तन्नाप्नोति मन स्वास्थ्य प्राणायामे कदर्थितम् । प्राणस्यायमने पीडा तस्या स्याच्चित्तविप्लव ४

पूरणे कुम्भने चैव रेचने च परिश्रम । चित्तसक्लेशकरणान्मुक्ते प्रत्यूहकारणम् ॥ ५ ॥

स्पष्टौ ॥ ४–५ ॥

प्राणायामानन्तरं प्रत्याहार कैश्चिदुक्तः स च न दुष्ट इति तमाह—

इन्द्रियैः सममाकृष्य विषयेभ्यः प्रशान्तधीः । धर्मध्यानकृते तस्मान्मनः कुर्वीत निश्चलम् ॥६॥

इन्द्रियैः सह मनो बाह्यविषयेभ्य आकृष्येत्यनेन प्रत्याहारकथनम् । यदुक्तमस्माभिरभिधानचिन्तामणौ—"प्रत्याहारस्त्विन्द्रियाणां विषयेभ्यः समाहृतिः" । मनः कुर्वीत निश्चलमिति प्रत्याहारानन्तरोपदिष्टाया धारणाया उपक्रमः ॥ ६ ॥

धारणास्थानान्येवम्—

नाभीहृदयनासाग्रभालभ्रूतालुदृष्टयः । मुखं कर्णौ शिरश्चेति ध्यानस्थानान्यकीर्तयन् ॥ ७ ॥

ध्यानस्थानानीति ध्याननिमित्तस्य धारणायाः स्थानानि ॥ ७ ॥

धारणायाः फलमाह—

एषामेकत्र कुत्रापि स्थाने स्थापयतो मनः । उत्पद्यन्ते स्वसंवित्तेर्बहवः प्रत्ययाः किल ॥ ८ ॥

प्रत्यया वक्ष्यमाणाः । शेषं स्पष्टम् ॥ ८ ॥

इति परमार्हतश्रीकुमारपालभूपालशुश्रूषिते आचार्यश्रीहेमचन्द्रविरचितेऽध्यात्मोपनिषन्नाम्नि संजातपट्टबन्धे श्रीयोगशास्त्रे स्वोपज्ञं षष्ठप्रकाशविवरणम् ॥ ६ ॥



## अथ सप्तम प्रकाश ।

ओं अर्हं ॥ अथ ध्यानविधित्सोः क्रममाह—

ध्यानं विधित्सता ज्ञेयं ध्याता ध्येयं तथा फलम् ।
सिध्यन्ति न हि सामग्रीं विना कार्याणि कर्हिचित् ॥ १ ॥

स्पष्टः ॥ १ ॥ अथ ध्यातारं षड्भिः श्लोकैराह—

अमुञ्चन् प्राणनाशेऽपि संयमैकधुरीणताम् । परमप्यात्मवत् पश्यन् स्वस्वरूपापरिच्युतः ॥ २ ॥
उपतापमसंप्राप्तः शीतवातातपादिभिः । पिपासुरमरीकारि योगामृतरसायनम् ॥ ३ ॥
रागादिभिरनाक्रान्तं क्रोधादिभिरदूषितम् । आत्मारामं मनः कुर्वन्निर्लेपः सर्वकर्मसु ॥ ४ ॥
विरतः कामभोगेभ्यः स्वशरीरेऽपि निःस्पृहः । संवेगह्रदनिर्मग्नः सर्वत्र समतां श्रयन् ॥ ५ ॥
नरेन्द्रे वा दरिद्रे वा तुल्यकल्याणकामनः । अमात्रकरुणापात्रं भवसौख्यपराङ्मुखः ॥ ६ ॥
सुमेरुरिव निष्कम्पः शशीवानन्ददायकः । समीर इव निःसङ्गः सुधीर्ध्याता प्रशस्यते ॥ ७ ॥

स्पष्टाः ॥ २–७ ॥ अथ भेदप्रतिपादनद्वारेण ध्येयस्य स्वरूपमाह—

पिण्डस्थं च पदस्थं च रूपस्थं रूपवर्जितम् । चतुर्धा ध्येयमाम्नातं ध्यानस्यालम्बनं बुधैः ॥ ८ ॥

पिण्डं शरीरं तत्र तिष्ठतीति पिण्डस्थं ध्येयम् ॥ ८ ॥

तद्धारणाभेदेनाह—

पार्थिवी स्यादथाग्नेयी मारुती वारुणी तथा । तत्रभूः पञ्चमी चेति पिण्डस्थे पञ्च धारणाः ॥ ९ ॥

स्पष्टः ॥ ६ ॥ तत्र पार्थिवीं धारणां श्लोकत्रयेणाह—

तिर्यग्लोकसमं ध्यायेत् क्षीराब्धिं तत्र चाम्बुजम् । सहस्रपत्रं स्वर्णाभं जम्बूद्वीपसमं स्मरेत् ॥ १० ॥

तत्केसरततेरन्तः स्फुरत्पिङ्गप्रभाञ्चिताम् । स्वर्णाचलप्रमाणां च कर्णिकां परिचिन्तयेत् ॥ ११ ॥

श्वेतसिंहासनासीनं कर्मनिर्मूलनोद्यतम् । आत्मानं चिन्तयेत्तत्र पार्थिवी धारणेत्यसौ ॥ १२ ॥

तिर्यग्लोकसमं तिर्यग्लोकप्रमाणं यावान् तिर्यग्लोकस्तावन्मात्रं रज्जुप्रमाणमिति यावत् । शेषं स्पष्टम् ॥ १०–१२ ॥

अथाग्नेयीं धारणां षड्भिः श्लोकैराह—

विचिन्तयेत्तथा नाभौ कमलं षोडशच्छदम् । कर्णिकायां महामन्त्रं प्रतिपत्रं स्वरावलिम् ॥ १३ ॥

रेफबिन्दुकलाक्रान्तं महामन्त्रे यदक्षरम् । तस्य रेफाद्विनिर्यान्तीं शनैर्धूमशिखां स्मरेत् ॥ १४ ॥

स्फुलिंगसततिं ध्यायेज्ज्वालामालामनन्तरम्। ततो ज्वालाकलापेन दहेत् पद्मं हृदि स्थितम् ।१५।
तदष्टकर्मनिर्माणमष्टपत्रमधोमुखम्। दहत्येव महामन्त्रध्यानोत्थ. प्रबलानल. ॥ १६ ॥
ततो देहाद्बहिर्ध्यायेत्र्यस्त्र वह्निपुरं ज्वलत्। लाञ्छितं स्वस्तिकेनान्ते वह्निबीजसमन्वितम्॥१७॥
देह पद्म च मन्त्रार्चिरन्तर्वह्निपुर बहिः। कृत्वाऽऽशु भस्मसाच्छाम्येत्स्यादाग्नेयीति धारणा ॥१८॥

स्पष्टाः। नवर महामन्त्र सिद्धचक्रवर्तिबीज अर्हं इति ॥ १३–१८ ॥

अथ वायवीं धारणां श्लोकद्वयेनाह—

ततस्त्रिभुवनाभोगं पूरयन्तं समीरणम्। चालयन्तं गिरीनब्धीन् क्षोभयन्तं विचिन्तयेत्॥१९॥
तच्च भस्मरजस्तेन शीघ्रमुद्धूय वायुना। दृढाभ्यास प्रशान्ति तमानयेदिति मारुती ॥२०॥

स्पष्टौ ॥ १९–२० ॥ अथ वारुणीं धारणां श्लोकद्वयेनाह—

स्मरेद्वर्षत्सुधासारैर्घनमालाकुल नभ । ततोऽर्धेन्दुसमाक्रान्त मण्डल वारुणाङ्कितम् ॥ २१ ॥
नभस्तल सुधाम्भोभिः प्लावयेत्तत्पुर तत । तद्रज कायसभूतं क्षालयेदिति वारुणी ॥२२॥

स्पष्टौ ॥ २१–२२ ॥ अथ तत्रभूधारणां सोपसहारा त्रिभि श्लोकैराह—

सप्तधातुविनाभूतं पूर्णेन्दुविशदद्युतिम्। सर्वज्ञकल्पमात्मानं शुद्धबुद्धिः स्मरेत्ततः ॥ २३ ॥
ततः सिंहासनारूढं सर्वातिशयभासुरम्। विध्वस्ताशेषकर्माणं कल्याणमहिमान्वितम् ॥२४॥
स्वाङ्गगर्भे निराकारं* संस्मरेदिति तत्रभूः। साभ्यास इति पिण्डस्थे योगी शिवसुखं भजेत् ॥२५॥

स्पष्टाः ॥ २३–२५ ॥ पिण्डस्थध्येयस्य माहात्म्यं त्रिभिः श्लोकैराह—

अश्रान्तमिति पिण्डस्थे कृताभ्यासस्य योगिनः। प्रभवन्ति न दुर्विद्या मन्त्रमण्डलशक्तयः ॥२६॥
शाकिन्यः क्षुद्रयोगिन्यः पिशाचाः पिशिताशनाः। त्रस्यन्ति तत्क्षणादेव तस्य तेजोऽसहिष्णवः २७
दुष्टाः करटिनः सिंहाः शरभाः पन्नगा अपि। जिघांसवोऽपि तिष्ठन्ति स्तम्भिता इव दूरतः ॥ २८ ॥

इति परमार्हतश्रीकुमारपालशुश्रूषिते आचार्यश्रीहेमचन्द्रविरचिते अध्यात्मोपनिषन्नाम्नि संजातपट्टबन्धे श्रीयोगशास्त्रे स्वोपज्ञं सप्तमप्रकाशविवरणम् ॥ ७ ॥

---

* ‘ नराकारं ’ इति प्रत्यन्तरम् ॥

## । अथाष्टमः प्रकाशः । ८

ॐ अर्हं ॥ अथ पदस्थस्य ध्येयस्य लक्षणमाह—

यत्पदानि पवित्राणि समालम्ब्य विधीयते । तत्पदस्थं समाख्यातं ध्यानं सिद्धान्तपारगैः ॥१॥

स्पष्टः ॥ १ ॥ विशेषं त्रिभिः श्लोकैराह—

तत्र षोडशपत्राढ्ये नाभिकन्दगतेऽम्बुजे । स्वरमालां यथापत्रं भ्रमन्तीं परिचिन्तयेत् ॥२॥

चतुर्विंशतिपत्रं च हृदि पद्मं सकर्णिकम् । वर्णान् यथाक्रमं तत्र चिन्तयेत् पञ्चविंशतिम् ॥३॥

वक्त्राब्जेऽष्टदले वर्णाष्टकमन्यत्ततः स्मरेत् । संस्मरन्मातृकामेवं स्याच्छ्रुतज्ञानपारगः ॥४॥

स्पष्टाः ॥ २-४ ॥ अस्य फलमाह—

ध्यायतोऽनादिसंसिद्धान् वर्णानेतान् यथाविधि । नष्टादिविषये ज्ञानं ध्यातुरुत्पद्यते क्षणात् ॥५॥

स्पष्टः । उक्तं च—" जापाज्जयेत्क्षयमरोचकमग्निमान्द्यं, कुष्ठोदरामकसनश्वसनादिरोगान् । प्राप्नोति चाप्रतिमवाग्महतीं महद्भ्यः, पूजां परत्र च गतिं पुरुषोत्तमाप्ताम् ॥ १ ॥ " इति ॥ ५ ॥

प्रकारान्तरेण पदमयीं देवतां ध्येयतया द्वादशभिः श्लोकैः निर्दिशति—

अथवा नाभिकन्दाधः पद्ममष्टदलं स्मरेत् । स्वरालीकेसरं रम्यं वर्गाष्टकयुतैर्दलैः ॥ ६ ॥
दलसन्धिषु सर्वेषु सिद्धस्तुतिविराजितम् । दलाग्रेषु समग्रेषु मायाप्रणवपावितम् ॥ ७ ॥
तस्यान्तरान्तिमं वर्णमाद्यवर्णपुरस्कृतम् । रेफाक्रान्तं कलाबिन्दुरम्यं प्रालेयनिर्मलम् ॥ ८ ॥
अर्हमित्यक्षरं प्राणप्रान्तसंस्पर्शि पावनम् । ह्रस्वं दीर्घं प्लुतं सूक्ष्ममतिसूक्ष्मं ततः परम् ॥९॥
ग्रन्थीन् विदारयन्नाभिकन्दहृद्घण्टिकादिकान् । सुसूक्ष्मध्वनिना मध्यमार्गयायि स्मरेत्ततः १०
अथ तस्यान्तरात्मानं प्लाव्यमानं विचिन्तयेत् । बिन्दुतप्तकलानिर्यत्क्षीरगौरामृतोर्मिभिः ॥११॥
ततः सुधासरःसूतषोडशाब्जदलोदरे । आत्मानं न्यस्य पत्रेषु विद्यादेवीश्च षोडश ॥ १२ ॥
स्फुटस्फटिकभृङ्गारक्षरत्क्षीरसितामृतैः । आभिराप्लाव्यमानं स्वं चिरं चित्ते विचिन्तयेत् ॥१३॥
अथास्य मन्त्रराजस्याभिधेयं परमेष्ठिनम् । अर्हन्तं मूर्धनि ध्यायेत् शुद्धस्फटिकनिर्मलम् ॥१४॥
तद्ध्यानावेशतः सोऽहं सोऽहमित्यालपन्मुहुः । निःशङ्कमेकतां विद्यादात्मनः परमात्मना ॥१५॥
ततो नीरागमद्वेषममोहं सर्वदर्शिनम् । सुरार्च्यं समवसृतौ कुर्वाणं धर्मदेशनाम् ॥ १६ ॥
ध्यायन्नात्मानमेवेत्थमभिन्नं परमात्मना । लभते परमात्मत्वं ध्यानी निर्धूतकल्मषः ॥ १७ ॥

स्पष्टः ॥ ६–१७ ॥ पुनरपि प्रकारान्तरेण पदमयीं देवता पञ्चभिः श्लोकैराह—

यद्वा मन्त्राधिप धीमानूर्ध्वाधोरेफसंयुतम् । कलाबिन्दुसमाक्रान्तमनाहतयुत तथा ॥ १८ ॥
कनकाम्भोजगर्भस्थ सान्द्रचन्द्रांशुनिर्मलम् । गगने सचरन्त च व्याप्नुवन्तं दिश स्मरेत् ॥१९॥
ततो विशन्त वक्त्राब्जे भ्रमन्त भ्रूलतान्तरे । स्फुरन्तं नेत्रपत्रेषु तिष्ठन्तं भालमण्डले ॥२०॥
निर्यान्त तालुरन्ध्रेण स्रवन्त च सुधारसम् । स्पर्धमान शशाङ्केन स्फुरन्त ज्योतिरन्तरे ॥२१॥
संचरन्तं नभोभागे योजयन्त शिवश्रिया । सर्वावयवसंपूर्णं कुम्भकेन विचिन्तयेत् ॥ २२ ॥

अर्हं । स्पष्टा । यदाहुः—" अकारादि हकारान्त रेफमध्य सबिन्दुकम् । तदेव परम तत्त्व यो जानाति स तत्त्ववित् ॥ १ ॥ " इति ॥ १८–२२ ॥

मन्त्रराजस्य ध्याने फलमाह—

महातत्त्वमिद योगी यदैव ध्यायति स्थिर. । तदैवानन्दसंपद्भूर्मुक्तिश्रीरुपतिष्ठते ॥ २३ ॥

स्पष्टः ॥ २३ ॥ अनन्तरविधिमाह—

रेफबिन्दुकलाहीन शुभ्र ध्यायेत्ततोऽक्षरम् । ततोऽनक्षरतां प्राप्तमनुच्चार्यं विचिन्तयेत् ॥२४॥

स्पष्टः ॥ २४ ॥ ततः—

निशाकरकलाकारं सूक्ष्मं भास्करभास्वरम्। अनाहताभिधं देवं विस्फुरन्तं विचिन्तयेत् ॥२५॥

स्पष्टः ॥ २५ ॥ ततः—

तदेव च क्रमात्सूक्ष्मं ध्यायेद्वालाग्रसन्निभम्। क्षणमव्यक्तमीक्षेत जगज्ज्योतिर्मयं ततः ॥२६॥

तदेव अनाहतमेव सूक्ष्मं ध्यायेत्, ततस्तदेवाव्यक्तं निराकारं जगज्ज्योतिर्ध्यायेत् ॥ २६ ॥ एवं च—

प्रच्याव्यमानसंलक्ष्यादलक्ष्ये दधतः स्थिरम्। ज्योतिरक्षयमत्यक्षमन्तरुन्मीलति क्रमात् ॥२७॥

स्पष्टः ॥ २७ ॥ प्रकृतमुपसंहरति—

इति लक्ष्यं समालम्ब्य लक्ष्यभावः प्रकाशितः। निषण्णमनसस्तत्र सिध्यत्यभिमतं मुनेः ॥ २८ ॥

स्पष्टः ॥ २८ ॥ इति मन्त्रराजोऽनाहतमव्यक्तं चोक्तं। प्रकारान्तरेण परमेष्ठिवाचकां पदमयीं देवतां श्लोकद्वयेन निर्दिशति—

तथा हृत्पद्ममध्यस्थं शब्दब्रह्मैककारणम्। स्वरव्यञ्जनसंवीतं वाचकं परमेष्ठिनः ॥ २९ ॥
मूर्धसंस्थितशीतांशुकलामृतरसप्लुतम्। कुम्भकेन महामन्त्रं प्रणवं परिचिन्तयेत् ॥ ३० ॥

स्पष्टौ ॥ २९-३० ॥ तस्य ध्येयत्वे प्रकारान्तराण्याह—

पीतं स्तम्भेऽरुणं वश्ये क्षोभणे विद्रुमप्रभम्। कृष्णं विद्वेषणे ध्यायेत् कर्मघाते शशिप्रभम् ॥३१॥

यद्यपि कर्मघातार्थिनां शशिप्रभस्यैव प्रणवस्य ध्यानमुचित, तथापि तत्तद्द्रव्यक्षेत्रकालभावसामग्रीवशेन पीतादिध्यानान्यपि कदाचिदुपकारीणीत्येतदुपदिष्टम् । ओं ॥ ३१ ॥

प्रकारान्तरेण पदमयीं देवतां प्रस्तौति—

तथा पुण्यतम मन्त्र जगत्त्रितयपावनम् । योगी पञ्चपरमेष्ठिनमस्कारं विचिन्तयेत् ॥ ३२ ॥

स्पष्ट ॥ ३२ ॥ ततश्च—

अष्टपत्रे सिताम्भोजे कर्णिकायां कृतस्थितिम् । आद्य सप्ताक्षर मन्त्र पवित्र चिन्तयेत्तत ॥३३॥

" नमो *अरिहताण " इति आद्य सप्ताक्षरो मन्त्र ॥ ३३ ॥ ततश्च—

सिद्धादिकचतुष्क च दिक्पत्रेषु यथाक्रमम् । चूलापादचतुष्कं च विदिक्पत्रेषु चिन्तयेत् ॥३४॥

दिक्पत्रेषु पूर्वादिदिग्व्यवस्थितेषु पत्रेषु सिद्धादिचतुष्टय-नमो सिद्धाण, नमो आयरियाण, नमो उवज्झायाण, नमो लोए सव्वसाहूण । विदिक्पत्रेषु आग्नेय्यादिविदिग्व्यवस्थितेषु दलेषु चूलापादचतुष्क-एसो पच नमुक्कारो, सव्वपावप्पणासणो, मगलाण च सव्वेसिं, पढम हवइ मगल । इति ध्यायेत् ॥ ३४ ॥

अस्य व्युष्टिमाह—

त्रिशुध्द्या चिन्तयस्तस्य शतमष्टोत्तर मुनि । भुञ्जानोऽपि लभेतैव चतुर्थतपसः फलम् ॥३५॥

---

* ' अरहताण ' इत्यपि प्रत्यन्तरे दृश्यते, एवमग्रेऽपि सर्वत्र दृश्यम् ॥

त्रिशुध्ध्या मनोवाकायशुध्ध्या चतुर्थं तप उपवासः ॥ ३५ ॥ तथा—

**एवमेव महामन्त्रं समाराध्येह योगिनः। त्रिलोक्याऽपि महीयन्तेऽधिगताः परमां श्रियम् ॥३६॥**

**कृत्वा पापसहस्राणि हत्वा जन्तुशतानि च। अमुं मन्त्रं समाराध्य तिर्यञ्चोऽपि दिवं गताः ॥३७॥**

तिर्यञ्चः कम्बलशम्बलादयः। शेषं स्पष्टम् ॥ ३६—३७ ॥

प्रकारान्तरेणैनां विद्यामाह—

**गुरुपञ्चकनामोत्था विद्या स्यात् षोडशाक्षरा। जपन् शतद्वयं तस्याश्चतुर्थस्याप्नुयात्फलम् ॥३८॥**

गुरुपञ्चकं परमेष्ठिपञ्चकं तन्नामानि विभक्त्या नमःपदेन च रहितानि "अरिहंतसिद्धआयरियउवज्झायसाहु" इत्येवंलक्षणानि। शेषं स्पष्टम् ॥ ३८ ॥ तथा—

**शतानि त्रीणि षड्वर्णं चत्वारि चतुरक्षरम्। पञ्चावर्णं जपन् योगी चतुर्थफलमश्नुते ॥३९॥**

षड्वर्णं 'अरिहंतसिद्ध' इति, चतुरक्षरं 'अरिहंत' इति, अवर्णं अकारमेव मन्त्रं जपन् चतुर्थफलं लभते, चतुर्थादिफलप्रतिपादनं तु मुग्धजनप्रतिपादनार्थं स्वल्पमेवोक्तं, मुख्यं तु स्वर्गापवर्गौ ॥ ३९ ॥

एतदेवाह—

**प्रवृत्तिहेतुरेवैतदमीषां कथितं फलम्। फलं स्वर्गापवर्गौ तु वदन्ति परमार्थतः ॥ ४० ॥**

स्पष्ट ॥ ४० ॥ प्रकारान्तरेण पदमयीं देवतामाह—

**पञ्चवर्णमयी पञ्चतत्त्वा विद्योद्धृता श्रुतात् । अभ्यस्यमाना सततं भवक्लेशं निरस्यति ॥४१॥**

श्रुतात् विद्याप्रवादाभिधानात् पूर्वात् उध्धृता, सा च " ह्राँ ह्रीँ ह्रूँ ह्रौँ ह्रः असिआउसा नमः " इत्येवलक्षणा। शेषं स्पष्टम् ॥ ४१ ॥ तथा—

**मङ्गलोत्तमशरणपदान्यव्यग्रमानसः । चतु समाश्रयाण्येव स्मरन् मोक्षं प्रपद्यते ॥४२॥**

तद्यथा—चत्तारि मङ्गल अरिहता मगल, सिद्धा मगल, साहू मगल, केवलिपन्नत्तो धम्मो मगल । चत्तारि लोगुत्तमा अरिहता लोगुत्तमा, सिद्धा लोगुत्तमा, साहू लोगुत्तमा, केवलिपन्नत्तो धम्मो लोगुत्तमो । चत्तारि सरण पवज्जामि अरिहते सरण पवज्जामि, सिद्धे सरण पवज्जामि, साहू सरण पवज्जामि, केवलिपन्नत्त धम्म सरणं पवज्जामि । चतुःसमाश्रयाणीति अर्हत्सिद्धसाधुधर्मसमाश्रयाणि ॥ ४२ ॥

अथ पूर्वार्धेन विद्यामपरार्धेन च मन्त्रमेकेनैव श्लोकेनाह—

**मुक्तिसौख्यप्रदा ध्यायेद्विद्यां पञ्चदशाक्षराम् । सर्वज्ञाभ स्मरेन्मन्त्रं सर्वज्ञानप्रकाशकम् ॥४३॥**

विद्या पञ्चदशाक्षरामिति "ओं अरिहन्तसिद्धसयोगिकेवली स्वाहा" इत्येवलक्षणा। सर्वज्ञाभ स्मरेन्मन्त्रमिति " ओं श्रीं ह्रीं अर्हं नमः " इत्येवंलक्षणम् ॥ ४३ ॥

सर्वज्ञाभमित्येतदेव भावयति—

वक्तुं न कश्चिदप्यस्य प्रभावं सर्वतः क्षमः । समं भगवता साम्यं सर्वज्ञेन बिभर्ति यः ॥४४॥

स्पष्टः ॥ ४४ ॥

यदीच्छेद्भवदावाग्नेः समुच्छेदं क्षणादपि । स्मरेत्तदादिमन्त्रस्य वर्णसप्तकमादिमम् ॥४५॥

नमो अरिहंताणं इति ॥ ४५ ॥ इदानीमेकेन श्लोकेन मन्त्रद्वयमाह—

पञ्चवर्णं स्मरेन्मन्त्रं कर्मनिर्घातकं तथा । वर्णमालाञ्चितं मन्त्रं ध्यायेत्सर्वाभयप्रदम् ॥४६॥

पञ्चवर्णं पञ्चाक्षरं " नमो सिद्धाणं " इतिलक्षणं इत्येको मन्त्रः । वर्णमालाञ्चितमिति द्वितीयः, स चायं— " ओं नमो अर्हते केवलिने परमयोगिने विस्फुरदुरुशुक्लध्यानाग्निनिर्दग्धकर्मबीजाय प्राप्तानन्तचतुष्टयाय सौम्याय शान्ताय मङ्गलवरदाय अष्टादशदोषरहिताय स्वाहा ॥ ४६ ॥

मन्त्रान्तरं व्युष्टिसहितं दशभिः श्लोकैराह—

ध्यायेत्सिताब्जं वक्त्रान्तरष्टवर्गी दलाष्टके । ओं नमो अरिहंताणमिति वर्णानपि क्रमात् ॥४७॥
केसरालीं स्वरमयीं सुधाबिन्दुविभूषिताम् । कर्णिकां कर्णिकायां च चन्द्रबिम्बात्समापतत् ॥४८॥
संचरमाणं वक्त्रेण प्रभामण्डलमध्यगम् । सुधादीधितिसंकाशं मायाबीजं विचिन्तयेत् ॥४९॥

ततो भ्रमन्तं पत्रेषु संचरन्त नभस्तले । ध्वसयन्त मनोध्वान्तं स्रवन्त च सुधारसम् ॥५०॥
तालुरन्ध्रेण गच्छन्त लसन्त भ्रूलतान्तरे । त्रैलोक्याचिन्त्यमाहात्म्यं ज्योतिर्मयमिवाद्भुतम्॥५१॥
इत्यमुं ध्यायतो मन्त्र पुण्यमेकाग्रचेतस । वाग्मनोमलमुक्तस्य श्रुतज्ञान प्रकाशते ॥ ५२ ॥
मासे षड्भि कृताभ्यास स्थिरीभूतमनास्तत॰। नि॰सरन्तीं मुखाम्भोजाच्छिखां धूमस्य पश्यति॥
सवत्सर कृताभ्यासस्ततो ज्वाला विलोकते । ततः सजातसवेग॰ सर्वज्ञमुखपङ्कजम् ॥५४॥
स्फुरत्कल्याणमाहात्म्यं सपन्नातिशय ततः । भामण्डलगतं साक्षादिव सर्वज्ञमीक्षते ॥५५॥
तत स्थिरीकृतस्वान्तस्तत्र सजातनिश्चयः । मुक्त्वा ससारकान्तारमध्यास्ते सिद्धिमन्दिर ॥५६॥

मायाबीज ह्रीँ इति । शेप स्पष्टम् ॥ ४७-५६ ॥ तथा—

शशिबिम्बादिवोद्भूतां स्रवन्तीममृत सदा। विद्यां क्ष्वीँ इति भालस्थां ध्यायेत्कल्याणकारणम्॥

स्पष्टः ॥ ५७ ॥ तथा—

क्षीराम्भोधेर्विनिर्यान्तीं प्लावयन्तीं सुधाम्बुभि । भाले शशिकला ध्यायेत् सिद्धिसोपानपद्धतिम्॥

स्पष्टः ॥ ५८ ॥ अस्या ध्याने फलमाह—

अस्याः स्मरणमात्रेण त्रुट्यद्भवनिबन्धनः । प्रयाति परमानन्दकारणं पदमव्ययम् ॥ ५९ ॥

स्पष्टः ॥ ५९ ॥ तथा—

नासाग्रे प्रणवः शून्यमनाहतमिति त्रयम् । ध्यायन् गुणाष्टकं लब्ध्वा ज्ञानमाप्नोति निर्मलम् ॥६०॥

ओं हं* । अष्टौ गुणा अणिमादयः ॥ ६० ॥ एतदेव विशिनष्टि—

शङ्खकुन्दशशाङ्काभांस्त्रीनमून् ध्यायतः सदा । समग्रविषयज्ञानप्रागल्भ्यं जायते नृणाम् ॥६१॥

स्पष्टः ॥ ६१ ॥ तथा—

द्विपार्श्वप्रणवद्वन्द्वं प्रान्तयोर्मायया वृतम् । सोऽहं मध्ये विमूर्धानं अर्ह्म्लीँकारं विचिन्तयेत् ॥६२॥

ह्रीँ ओं ओं सः अर्ह्म्लीँ हं ओं ओं ह्रीँ ॥ ६२ ॥ तथा—

कामधेनुमिवाचिन्त्यफलसंपादनक्षमाम् । अनवद्यां जपेद्विद्यां गणभृद्वदनोद्गताम् ॥ ६३ ॥

विद्या च ओं जोग्गे मग्गे तच्चे भूए भविस्से अंते पक्खे जिणपार्श्वे स्वाहा ॥ ६३ ॥ तथा—

षट्कोणेऽप्रतिचक्रे फडिति प्रत्येकमक्षरम् । सव्ये न्यसेद्विचक्राय स्वाहा बाह्येऽपसव्यतः ॥६४॥

भूतान्तं बिन्दुसंयुक्तं तन्मध्ये न्यस्य चिन्तयेत् । नमो जिणाणमित्याद्यैरोंपूर्वैर्वेष्टयेद्बहिः ॥६५॥

---

* " ओं हइ " इति प्रत्यन्तरम् ॥

ओं नमो जिणाण, ओं नमो ओहिजिणाण, ओं नमो परमोहिजिणाण, ओं नमो सव्वोसहिजिणाण, ओं नमो अनन्तोहिजिणाण, ओं नमो कुट्ठबुद्धीण, ओं नमो बीयबुद्धीण, ओं नमो पदानुसारीण, ओं नमो सभिन्नसोआण, ओं नमो उज्जुमदीण, ओं नमो विउलमदीण, ओं नमो दसपुव्वीण, ओं नमो चउदसपुव्वीण, ओं नमो अट्ठगमहानिमित्तकुसलाण, ओं नमो विउव्वणइड्ढिपत्ताण, ओं नमो विज्जाहराण, ओं नमो चारणाण, ओं नमो पण्णसमणाण, ओं नमो आगासगामीण, ओं ज्सौ ज्सौ श्रीह्रीधृतिकीर्तिबुद्धिलक्ष्मी स्वाहा, इतिपदैर्वलय पूरयेत् । पञ्चनमस्कारेण पञ्चाङ्गुलीन्यस्तेन सकलीक्रियते, तद्यथा—ओं नमो अरिहताण ह्रां स्वाहा अङ्गुष्ठे । ओं नमो सिद्धाण ह्रीं स्वाहा तर्जन्याम् । ओं नमो आयरियाण ह्रूं स्वाहा मध्यमाया । ओं नमो उवज्झायाण ह्रैं स्वाहा अनामिकाया । ओं नमो लोए सव्वसाहूण ह्रौं स्वाहा कनिष्ठाया । एव वारत्रयमङ्गुलीषु विन्यस्य मस्तकस्योपरि पूर्वदक्षिणापरोत्तरेषु भागेषु विन्यस्य जप कुर्यात् ॥ ६४–६५ ॥ तथा—

अष्टपत्रेऽम्बुजे ध्यायेदात्मान दीप्रतेजसम् । प्रणवाद्यस्य मन्त्रस्य वर्णान् पत्रेषु च क्रमात् ॥६६॥
पूर्वाशाभिमुख पूर्वमधिकृत्यादिमण्डलम् । एकादशशतान्यष्टाक्षर मन्त्र जपेत्तत ॥ ६७ ॥
पूर्वाशानुक्रमादेवमुद्दिश्यान्यदलान्यपि । अष्टरात्र जपेद्योगी सर्वप्रत्यूहशान्तये ॥६८॥
अष्टरात्रे व्यतिक्रान्ते कमलस्यास्य वर्तिन. । निरूपयति पत्रेषु वर्णानेताननुक्रमम् ॥६९॥

भीषणाः सिंहमातङ्गरक्षःप्रभृतयः क्षणात्। शाम्यन्ति व्यन्तराश्चान्ये ध्यानप्रत्यूहहेतवः ॥७०॥
मन्त्रः प्रणवपूर्वोऽयं फलमैहिकमिच्छुभिः। ध्येयः प्रणवहीनस्तु निर्वाणपदकाङ्क्षिभिः ॥७१॥

प्रणवाद्यो मन्त्रः ओं नमो अरिहंताणं। शेषं स्पष्टम् ॥ ६९–७१ ॥

अथ श्लोकेनैकेन मन्त्रं विद्यां चाह—

चिन्तयेदन्यमप्येनं मन्त्रं कर्मौघशान्तये। स्मरेत्सत्त्वोपकाराय विद्यां तां पापभक्षिणीम् ॥७२॥

अन्यमपीति श्रीमदृषभादिवर्धमानान्तेभ्यो नम इत्येवंरूपं। पापभक्षिणीमिति ओं अर्हन्मुखकमलवासिनि पापात्मक्षयंकरि श्रुतज्ञानज्वालासहस्रज्वलिते सरस्वति मत्पापं हन हन दह दह क्षाँ क्षीं क्षूँ क्षौँ क्षः क्षीरवरधवले अमृतसंभवे वं वं हूं हूं स्वाहा इत्येवंलक्षणम् ॥ ७२ ॥ अस्या व्युष्टिः—

प्रसीदति मनः सद्यः पापकालुष्यमुज्झति। प्रभावातिशयादस्या ज्ञानदीपः प्रकाशते ॥७३॥

स्पष्टः ॥ ७३ ॥ तथा—

ज्ञानवद्भिः समाम्नातं वज्रस्वाम्यादिभिः स्फुटम्। विद्यावादात्समुध्धृत्य बीजभूतं शिवश्रियः ॥
जन्मदावहुताशस्य प्रशान्तिनववारिदम्। गुरूपदेशाद्विज्ञाय सिद्धचक्रं विचिन्तयेत् ॥७५॥

स्पष्टौ ॥ ७४–७५ ॥ तथा—

नाभिपद्मे स्थित ध्यायेदकार विश्वतोमुखम्। सिवर्णं मस्तकाम्भोजे आकार वदनाम्बुजे ॥७६॥
उकार हृदयाम्भोजे साकार कण्ठपङ्कजे। सर्वकल्याणकारीणि बीजान्यन्यान्यपि स्मरेत् ॥७७॥

असिआउसा। बीजान्यन्यान्यपि नमः सर्वसिद्धेभ्यः इति ॥ ७६-७७ ॥ उपसहरति—

श्रुतसिन्धुसमुद्भूतमन्यदप्यक्षर पदम्। अशेष ध्यायमान स्यान्निर्वाणपदसिद्धये ॥ ७८ ॥

स्पष्टः ॥ ७८ ॥ उक्त च—

वीतरागो भवेद्योगी यत्किञ्चिदपि चिन्तयेत्। तदेव ध्यानमाम्नातमतोऽन्ये ग्रन्थविस्तरा ॥७९॥
एव च मन्त्रविद्याना वर्णेषु च पदेषु च। विश्लेष क्रमश कुर्याल्लक्ष्मीभावोपपत्तये ॥८०॥

स्पष्टौ ॥ ७९-८० ॥ आशिषमाह—

इति गणधरधुर्याविष्कृतादुध्दृतानि, प्रवचनजलराशेस्तत्त्वरत्नान्यमूनि।
हृदयमुकुरमध्ये धीमतामुल्लसन्तु, प्रचितभवशतोत्थक्लेशनिर्नाशहेतो ॥ ८१ ॥

इति परमार्हतश्रीकुमारपालभूपालशुश्रूषिते आचार्यश्रीहेमचन्द्रविरचितेऽध्यात्मोपनिषन्नाम्नि सजातपट्टबन्धे श्रीयोगशास्त्रे स्वोपज्ञमष्टमप्रकाशविवरणम् ॥ ८ ॥

---

× " लक्षा (क्ष्य) " इति प्रत्यन्तरम् ॥

## ॥ अथ नवमः प्रकाशः ॥ ९

ॐ अर्हं । अथ रूपस्थं ध्येयं सप्तभिः श्लोकैराह—

मोक्षश्रीसम्मुखीनस्य विध्वस्ताखिलकर्मणः । चतुर्मुखस्य निःशेषभुवनाभयदायिनः ॥१॥
इन्दुमण्डलसंकाशच्छत्रत्रितयशालिनः । लसद्भामण्डलाभोगविडम्बितविवस्वतः ॥२॥
दिव्यदुन्दुभिनिर्घोषगीतसाम्राज्यसंपदः । रणद्द्विरेफझङ्कारमुखराशोकशोभिनः ॥३॥
सिंहासननिषण्णस्य वीज्यमानस्य चामरैः । सुरासुरशिरोरत्नदीप्रपादनखद्युतेः ॥४॥
दिव्यपुष्पोत्कराकीर्णासङ्कीर्णपरिषद्भुवः । उत्कन्धरैर्मृगकुलैः पीयमानकलध्वनेः ॥ ५ ॥
शान्तवैरेभसिंहादिसमुपासितसन्निधेः । प्रभोः समवसरणस्थितस्य परमेष्ठिनः ॥ ६ ॥
सर्वातिशययुक्तस्य केवलज्ञानभास्वतः । अर्हतो रूपमालम्ब्य ध्यानं रूपस्थमुच्यते ॥ ७ ॥

स्पष्टाः ॥ १–७ ॥ प्रकारान्तरेण रूपस्थं ध्येयं त्रिभिः श्लोकैराह—

रागद्वेषमहामोहविकारैरकलङ्कितम् । शान्तं कान्तं मनोहारि सर्वलक्षणलक्षितम् ॥ ८ ॥

तीर्थिकैरपरिज्ञातयोगमुद्रामनोरमम् । अक्ष्णोरमन्दमानन्दनिस्यन्दं दददद्भुतम् ॥ ९ ॥
जिनेन्द्रप्रतिमारूपमपि निर्मलमानसः । निर्निमेषदृशा ध्यायन् रूपस्थध्यानवान् भवेत् ॥१०॥

स्पष्टा ॥ ८–१० ॥ ततश्च

योगी चाभ्यासयोगेन तन्मयत्वमुपागतः । सर्वज्ञीभूतमात्मानमवलोकयति स्फुटम् ॥ ११ ॥
सर्वज्ञो भगवान् योऽयमहमेवास्मि स ध्रुवम् । एवं तन्मयतां यातः सर्ववेदीति मन्यते ॥१२॥

स्पष्टौ ॥ ११–१२ ॥ कथमित्याह—

वीतरागो विमुच्येत वीतरागं विचिन्तयन् । रागिणं तु समालम्ब्य रागी स्यात्क्षोभणादिकृत् ॥१३॥

स्पष्टः ॥ १३ ॥ उक्तं च—

येन येन हि भावेन युज्यते यन्त्रवाहकः । तेन तन्मयतां याति विश्वरूपो मणिर्यथा ॥१४॥

स्पष्टः ॥ १४ ॥ एवं सद्ध्यानमुक्त्वाऽसद्ध्यानं निराकुर्वन्नाह—

नासद्ध्यानानि सेव्यानि कौतुकेनापि किन्त्विह । स्वनाशायैव जायन्ते सेव्यमानानि तानि यत् ।१५।

स्पष्टः ॥ १५ ॥ कुतः ?—

सिध्यन्ति सिद्धयः सर्वाः स्वयं मोक्षावलम्बिनाम्। संदिग्धा सिद्धिरन्येषां स्वार्थभ्रंशस्तु निश्चितः

स्पष्टः ॥ १६ ॥

इति परमार्हतश्रीकुमारपालभूपालशुश्रूषिते आचार्यश्रीहेमचन्द्रविरचितेऽध्यात्मोपनिषन्नाम्नि संजातपट्टबन्धे श्रीयोगशास्त्रे स्वोपज्ञं नवमप्रकाशविवरणम् ॥ ९ ॥



## । अथ दशमः प्रकाशः । १०

ओं अर्हं । अथ रूपातीतं ध्येयमाह—

अमूर्त्तस्य चिदानन्दरूपस्य परमात्मनः । निरञ्जनस्य सिद्धस्य ध्यानं स्याद्रूपवर्जितम् ॥ १ ॥

स्पष्टः ॥ १ ॥ एवं च—

इत्यजस्रं स्मरन् योगी तत्स्वरूपावलम्बनः । तन्मयत्वमवाप्नोति ग्राह्यग्राहकवर्जितम् ॥२॥

स्पष्टः ॥ २ ॥

अनन्यशरणीभूय स तस्मिन् लीयते तथा। ध्यातृध्यानोभयाभावे ध्येयेनैक्यं यथा व्रजेत् ॥३॥

स्पष्टः ॥ ३ ॥ तात्पर्यमाह—

सोऽयं समरसीभावस्तदेकीकरणं मतम् । आत्मा यदपृथक्त्वेन लीयते परमात्मनि ॥ ४ ॥

स्पष्टः ॥ ४ ॥ ऐदम्पर्यमुपदिशति—

अलक्ष्यं लक्ष्यसम्बन्धात् स्थूलात्सूक्ष्मं विचिन्तयेत् । सालम्बाच्च निरालम्बं तत्त्ववित्तत्त्वमञ्जसा ॥५॥

स्पष्टः ॥ ५ ॥ पिण्डस्थादिरूपं चतुर्विधं ध्येयमुपसंहरति—

एवं चतुर्विधध्यानामृतमग्नं मुनेर्मनः । साक्षात्कृतजगत्तत्त्वं विधत्ते शुद्धिमात्मनः ॥ ६ ॥

स्पष्टः ॥ ६ ॥ पिण्डस्थादिक्रमेण चतुर्विधं ध्येयमभिधाय प्रकारान्तरेण तस्य चातुर्विध्यमाह—

आज्ञापायविपाकानां संस्थानस्य च चिन्तनात् । इत्थं वा ध्येयभेदेन धर्म्यं ध्यानं चतुर्विधम् ॥७॥

ध्येयभेदाच्चातुर्विध्यं ध्यानस्य ॥ ७ ॥ अथाज्ञाध्यानमाह—

आज्ञां यत्र पुरस्कृत्य सर्वज्ञानामबाधिताम् । तत्त्वतश्चिन्तयेदर्थांस्तदाज्ञाध्यानमुच्यते ॥८॥

आज्ञाऽऽप्तवचनं प्रवचनमिति यावत् । अबाधिता प्रमाणान्तरैः परस्पराविरोधेन च तत्त्वत इति परमार्थवृत्त्या, अर्थान् पदार्थान् जीवादीन् चिन्तयेत् ॥ ८ ॥

आज्ञाया अबाधितत्वं भावयति—

सर्वज्ञवचनं सूक्ष्मं हन्यते यन्न हेतुभिः । तदाज्ञारूपमादेयं न मृषाभाषिणो जिनाः ॥ ९ ॥

स्पष्टः । अत्रान्तरश्लोकाः—

आज्ञा स्यादाप्तवचनं सा द्विधैव व्यवस्थिता । आगमः प्रथमा तावद्धेतुवादोऽपरा पुनः ॥ १ ॥ शब्दादेव पदार्थानां प्रतिपत्तिकृदागमः । प्रमाणान्तरसंवादाद्धेतुवादो निगद्यते ॥ २ ॥ द्वयोरप्यनयोस्तुल्यं प्रामाण्यमविगानतः । अदुष्टकारणारब्धं प्रमाणमिति लक्षणात् ॥ ३ ॥ दोषा रागद्वेषमोहाः संभवन्ति न तेऽर्हति । अदुष्टहेतुसंभूतं तत्प्रमाणं वचोऽर्हताम् ॥ ४ ॥ नयप्रमाणसंसिद्धं पूर्वापर्याविरोधि च । अप्रतिक्षेप्यमरैर्बलिष्ठैरपि शासनैः ॥ ५ ॥ अङ्गोपाङ्गप्रकीर्णादिबहुभेदापगाम्बुधिम् । अनेकातिशयप्राज्यसाम्राज्यश्रीविभूषितम् ॥६॥ दुर्लभं दूरभव्यानां भव्यानां सुलभं भृशम् । गणिपिटकतयोच्चैर्नित्यं स्तुत्यं नरामरैः ॥ ७ ॥ एवमाज्ञां समालम्ब्य स्याद्वादन्याययोगतः । द्रव्यपर्यायरूपेण नित्यानित्येषु वस्तुषु ॥८॥ स्वरूपपररूपाभ्यां सदसद्रूपशालिषु । यः स्थिरः प्रत्ययो ध्यानं तदाज्ञाविचयाह्वयम् ॥ ९ ॥ ९ ॥

अथापायविचयमाह—

रागद्वेषकषायाद्यैर्जायमानान् विचिन्तयेत् । यत्रापायांस्तदपायविचयध्यानमिष्यते ॥१०॥

रागद्वेषजनितानामपायानां विचयो विचिन्तनं यत्र तदपायविचयम् ॥ १० ॥ तस्य फलमाह—

ऐहिकामुष्मिकापायपरिहारपरायणः । ततः प्रतिनिवर्तेत समन्तात् पापकर्मणः ॥ ११ ॥

स्पष्टः । अत्रान्तरश्लोकाः—

अस्पृष्टजिनमार्गाणामविज्ञातपरात्मनाम् । अपरामृष्टपर्तीनामपायाः स्युः सहस्रशः ॥ १ ॥ मायामोहान्धतमसविवशीकृतचेतसा । किं किं नाकारि कलुषं कस्कोऽपायोऽप्यवापि न ॥ २ ॥ यद्यद्दुःखं नारकेषु तिर्यक्षु मनुजेषु च । मया प्रापि प्रमादोऽयं ममैव हि निचेतसः ॥ ३ ॥ प्राप्यापि परमां बोधिं मनोवाक्कायकर्मजैः । दुश्चेष्टितैर्मयैवाय शिरसि ज्वालितोऽनलः ॥ ४ ॥ स्वाधीने मुक्तिमार्गेऽपि कुमार्गपरिमार्गणैः । अहो आत्मस्त्वयैवैष स्वात्माऽपायेषु पातितः ॥ ५ ॥ यथा प्राप्तेऽपि सौराज्ये भिक्षां भ्राम्यति बालिशः । आत्मायत्ते तथा मोक्षे भवाय भ्रान्तवानसि ॥ ६ ॥ इत्यात्मनः परेषां च ध्यात्वाऽपायपरम्पराम् । अपायविचयं ध्यानमधिकुर्वीत योगवित् ॥७॥११॥

अथ विपाकविचयमाह—

**प्रतिक्षणसमुद्भूतो यत्र कर्मफलोदयः । चिन्त्यते चित्ररूपः स विपाकविचयो मतः ॥ १२ ॥**

स्पष्टः ॥ १२ ॥ एतदेव भावयति—

**या सम्पदाऽर्हतो या च विपदा नारकात्मनः । एकातपत्रता तत्र पुण्यापुण्यस्य कर्मणः ॥१३॥**

आ अर्हत आ नारकात्मन इति चाभिव्याप्तौ पञ्चमी शेषं स्पष्टम् । अत्रान्तरश्लोकाः —

विपाकः फलमाम्नातं कर्मणां स शुभाशुभः । द्रव्यक्षेत्रादिसामग्र्या चित्ररूपोऽनुभूयते ॥ १ ॥ शुभस्तत्राङ्गनामाल्यखाद्यादिद्रव्यभोगतः । अशुभस्त्वहिशस्त्राग्निविषादिभ्योऽनुभूयते ॥ २ ॥ क्षेत्रे सौधविमानोपवनादौ वसना-

च्छुभः । स्मशानजाङ्गलारण्यप्रभृतावशुभः पुनः ॥ ३ ॥ काले त्वशीतलानुष्णे वसन्तादौ रतः शुभः । उष्णे शीते ग्रीष्मे हेमन्तादौ भ्रमणतोऽशुभः ॥ ४ ॥ मनःप्रसादसन्तोषादिभावेषु शुभो भवेत् । क्रोधाहङ्काररौद्रत्वादिभावेष्वशुभः पुनः ॥ ५ ॥ सुदेवत्वभोगभूमिमनुष्यादिभवे शुभः । कुमर्त्यतिर्यङ्नरकादिभवेष्वशुभः पुनः ॥ ६ ॥ अपि च– उदयक्षयक्षयोपशमोपशमाः कर्मणां भवन्त्यत्र । द्रव्यं क्षेत्रं कालं भावं च भवं च संप्राप्य ॥ ७ ॥ इति द्रव्यादिसामग्रीयोगात्कर्माणि देहिनाम् । स्वं स्वं फलं प्रयच्छन्ति तानि त्वष्टैव तद्यथा ॥ ८ ॥ जन्तोः सर्वज्ञरूपस्य ज्ञानमाव्रियते सदा । येन चक्षुःपटेनेव ज्ञानावरणकर्म तत् ॥ ९ ॥ मतिश्रुतावधिमनःपर्यायाः केवलं तथा । यदाव्रियन्ते ज्ञानानीत्येतज्ज्ञानावृतेः फलम् ॥ १० ॥ पञ्चनिद्रा दर्शनानां चतुष्कस्यावृतिश्च या । दर्शनावरणीयस्य विपाकः कर्मणः स तु ॥ ११ ॥ यथा दिदृक्षुः स्वाम्यत्र प्रतीहारनिरोधतः । न पश्यति स्वमप्येवं दर्शनावरणोदयात् ॥ १२ ॥ मधुलिप्तासिधाराग्रास्वादाभं वेद्यकर्म यत् । सुखदुःखानुभवनस्वभावं परिकीर्तितम् ॥ १३ ॥ सुरापाणसमं प्राज्ञा मोहनीयं प्रचक्षते । यदनेन विमूढात्मा कृत्याकृत्येषु मुह्यति ॥ १४ ॥ तत्रापि दृष्टिमोहाख्यं मिथ्यादृष्टिविपाककृत् । चारित्रमोहनीयं तु विरतेः प्रतिषेधनम् ॥ १५ ॥ नृतिर्यङ्नारकामर्त्यभेदादायुश्चतुर्विधम् । स्वस्वजन्मनि जन्तूनां धारकं गुप्तिसन्निभम् ॥ १६ ॥ गतिजात्यादिवैचित्र्यकारि चित्रकरोपमम् । नामकर्मविपाकोऽस्य शरीरेषु शरीरिणाम् ॥ १७ ॥ उच्चैर्नीचैर्भवेद्गोत्रं कर्मोच्चैर्नीचगोत्रकृत् । क्षीरभाण्डसुराभाण्डभेदकारि कुलालवत् ॥ १८ ॥ दानादिलब्धयो येन न फलन्ति विबाधिताः । तदन्तरायं कर्म स्याद्भाण्डागारिकसन्निभम् ॥ १९ ॥ इति मूलप्रकृतीनां विपाकास्तान् विचिन्वतः । विपाकविचयं नाम धर्मध्यानं प्रवर्तते ॥ २० ॥ १३ ॥

अथ संस्थानविचयमाह—

**अनाद्यन्तस्य लोकस्य स्थित्युत्पत्तिव्ययात्मनः। आकृतिं चिन्तयेद्यत्र संस्थानविचयः स तु॥१४॥**

लोकशब्देन लोकस्तद्गतानि च चित्यादीनि द्रव्याणि परिगृह्यन्ते। शेषं स्पष्टम्॥ १४॥

लोकध्यानस्य फलमाह—

**नानाद्रव्यगतानन्तपर्यायपरिवर्तनात्। सदा सक्तं मनो नैव रागाद्याकुलतां व्रजेत्॥ १५॥**

स्पष्टः। अत्रान्तरश्लोकाः—

संस्थानविचयो लोकभावनायां प्रपञ्चितः। तन्नेह वर्ण्यते भूयः पुनरुक्तत्वभीरुभिः॥१॥ अथ लोकभावनायाः संस्थानविचयस्य च। को नाम भेदो येनोभौ विभिन्नौ परिकीर्तितौ॥ २॥ उक्तमेतद्यथा चिन्तामात्रकं लोकभावना। स्थिरा तु लोकादिमतिः संस्थानध्यानमुच्यते॥ ३॥ १५॥

धर्मध्यानस्यैव स्वरूपविशेषमाह—

**धर्मध्याने भवेद्भावः क्षायोपशमिकादिकः। लेश्याः क्रमविशुद्धाः स्युः पीतपद्मसिताः पुनः॥१६॥**

क्षायोपशमिकादिक इत्यादिग्रहणादौपशमिकस्य क्षायिकस्य च ग्रहणम्, न त्वौदयिकस्य। यदाह—धर्म्यमप्रमत्तसंयतस्य उपशान्तक्षीणकषाययोश्च। धर्मध्याने च क्रमेण विशुद्धास्तिस्रो लेश्या भवन्ति, तद्यथा—पीतलेश्या, ततो विशुद्धा पद्मलेश्या, ततोऽपि विशुद्धतरा शुक्ललेश्येति॥ १६॥



चतुर्विधस्य धर्मध्यानस्य फलमाह—

अस्मिन्नितान्तवैराग्यव्यतिषङ्गतरङ्गिते । जायते देहिनां सौख्यं स्वसंवेद्यमतीन्द्रियम् ॥१७॥

स्पष्टः । उक्तं च—

अलौल्यमारोग्यमनिष्ठुरत्वं, गन्धः शुभो मूत्रपुरीषमल्पम् । कान्तिः प्रसादः स्वरसौम्यता च, योगप्रवृत्तेः प्रथमं हि चिह्नम् ॥ १ ॥ १७ ॥

आमुष्मिकं फलं श्लोकचतुष्टयेनाह—

त्यक्तसङ्गास्तनुं त्यक्त्वा धर्मध्यानेन योगिनः । ग्रैवेयकादिस्वर्गेषु भवन्ति त्रिदशोत्तमाः ॥१८॥
महामहिमसौभाग्यं शरच्चन्द्रनिभप्रभम् । प्राप्नुवन्ति वपुस्तत्र स्रग्भूषाम्बरभूषितम् ॥ १९ ॥
विशिष्टवीर्यबोधाढ्यं कामार्तिज्वरवर्जितम् । निरन्तरायं सेवन्ते सुखं चानुपमं चिरम् ॥२०॥
इच्छासंपन्नसर्वार्थमनोहारि सुखामृतम् । निर्विघ्नमुपभुञ्जाना गतं जन्म न जानते ॥ २१ ॥
दिव्यभोगावसाने च च्युत्वा त्रिदिवतस्ततः । उत्तमेन शरीरेणावतरन्ति महीतले ॥२२॥
दिव्यवंशे समुत्पन्ना नित्योत्सवमनोरमान् । भुञ्जते विविधान् भोगानखण्डितमनोरथाः ॥२३॥

ततो विवेकमाश्रित्य विरज्याशेषभोगत.।ध्यानेन ध्वस्तकर्माणा प्रयान्ति पदमव्ययम् ॥२४॥

स्पष्टाः ॥ १८–२४ ॥

इति परमार्हतश्रीकुमारपालभूपालशुश्रूषिते आचार्यश्रीहेमचन्द्रविरचितेऽध्यात्मोपनिषन्नाम्नि सञ्जातपट्टबन्धे श्रीयोगशास्त्रे स्वोपज्ञ दशमप्रकाशविवरणम् ॥ १० ॥

## अथैकादश प्रकाश ॥ ११ ॥

ओं अर्ह ॥ धर्मध्यानमुपसहरन् शुक्लध्यान प्रस्तौति—

स्वर्गापवर्गहेतुर्धर्मध्यानमिति कीर्तित तावत्। अपवर्गैकनिदान शुक्लमत कीर्त्यते ध्यानम् ॥१॥

धर्मध्यानस्यापवर्गहेतुत्व पारम्पर्येण, अपवर्गस्यैकमसाधारण निदान कारण शुक्लध्यानम्, इदं चोत्तरशुक्लध्यानद्वयापेक्षया द्रष्टव्यम्। आद्ययोस्तु शुक्लध्यानभेदयोरनुत्तरविमानगमननिबन्धनताऽप्यस्ति। यदाह—

[1]होंति सुहासवसवरविणिज्जरामरसुहाइ विउलाइ। झाणवरस्स फलाइ सुहाणुबन्धीणि धम्मस्स ॥ १ ॥

(१) भवन्ति शुभाश्रवसवरविनिर्जरामरसुखानि विपुलानि। ध्यानवरस्य फलानि शुभानुबन्धीनि धर्म्यस्य ॥ १ ॥

तेयविसेसेण सुहासवादओणुत्तरामरसुहं च । दोण्हं सुक्काण फलं परिनिव्वाणं परिल्लाणं ॥ २ ॥ १ ॥

शुक्लध्यानस्याधिकारिणं निरूपयति—

**इदमादिमसंहनना एवालं पूर्ववेदिनः कर्तुम्। स्थिरतां न याति चित्तं कथमपि यत्स्वल्पसत्त्वानाम्।**

आदिमं वज्रर्षभनाराचसंहननं येषां ते तथा। सकलश्रुतात् पूर्वं प्रणयनात् पूर्वाणि तानि विदन्तीत्येवंशीलाः पूर्ववेदिनः पूर्वधराः । इदं च प्रायिकं, माषतुषमरुदेव्यादीनामपूर्वधराणामपि शुक्लध्यानसंभवात् । आदिमसंहनना इत्यस्य स्थिरतामित्यादिना हेतुरुक्तः ॥ २ ॥ इदमेव भावयति—

**धत्ते न खलु स्वास्थ्यं व्याकुलितं तनुमतां मनोविषयैः ।**
**शुक्लध्याने तस्मान्नास्त्यधिकारोऽल्पसाराणाम् ॥ ३ ॥**

स्पष्टम् । यदाह—

छिन्ने भिन्ने हते दग्धे देहे स्वमपि दूरगम् । प्रपश्यन् वर्षवातादिदुःखैरपि न कम्पते ॥ १ ॥

न पश्यति तदा किञ्चिन्न शृणोति न जिघ्रति । स्पष्टं किञ्चिन्न जानाति लेप्यनिर्वृत्तमूर्तिवत् ॥२॥ इति ॥३॥

ननु यद्यादिमसंहननानां शुक्लध्यानेऽधिकारस्तर्हीदानीं सेवार्तसंहननानां पुरुषाणां शुक्लध्यानोपदेशे कोऽवसरः ? इत्याह—

---

तेजोविशेषेण सुखास्वादतोऽनुत्तरामरसुखं च । द्वयोः शुक्लयोः फलं परिनिर्वाणं परयोः ॥ २ ॥

अनवच्छित्त्याम्नायः समागतोऽस्येति कीर्त्यतेऽस्माभि ।
दुष्करमप्याधुनिकैः शुक्लध्यानं यथाशास्त्रम् ॥ ४ ॥

यद्यप्यैदयुगीनानां न शुक्लध्यानेऽधिकारस्तथापि सम्प्रदायाविच्छेदार्थं तदुपदेश इत्यर्थः ॥ ४ ॥

शुक्लध्यानस्य भेदानाह—

ज्ञेय नानात्वश्रुतविचारमैक्यश्रुताविचारं च। सूक्ष्मक्रियमुत्सन्नक्रियमिति भेदैश्चतुर्धा तत्॥५॥

नानात्व पृथक्त्व श्रुत वितर्कः विचारोऽर्थव्यञ्जनयोगसक्रान्तिः इति पृथक्त्ववितर्क सविचार प्रथमम्। ऐक्यमपृथक्त्व एकत्ववितर्कमविचार च द्वितीयम्। सूक्ष्मक्रियमप्रतिपातीति तृतीयम्। उत्सन्नक्रियमनिवर्तीति चतुर्थम्। एव चतुर्विध शुक्लध्यानम् ॥ ५ ॥ अथाद्यभेद व्याचष्टे—

एकत्र पर्ययाणां विविधनयानुसरण श्रुताद्द्रव्ये। अर्थव्यञ्जनयोगान्तरेषु सक्रमणयुक्तमाद्य तत्॥

एकस्मिन् परमाण्वादौ द्रव्ये पर्यायाणामुत्पादस्थितिभङ्गमूर्तत्वामूर्तत्वादीनां विविधनयैर्द्रव्यार्थिकपर्यायार्थिकादिभिर्यदनुसरणमनुचिन्तन, श्रुतात् पूर्वविदां पूर्वगतश्रुतानुसारेण, इतरेषां त्वन्यथा, तदाद्य शुक्लमिति सबन्ध । कथभूत ? अर्थव्यञ्जनयोगान्तरेषु सक्रमणयुक्त, अर्थो द्रव्य तस्माद्व्यञ्जने शब्दे शब्दाच्चार्थे सक्रमण, योगाद्योगान्तरसक्रमण तु मनोयोगात् काययोगे वा वाग्योगे वा सक्रान्तिः, एव काययोगान्मनोयोगे वाग्योगे वा, वाग्योगान्मनोयोगे काययोगे वा सक्रमण, तेन युक्त। यदाहुः—

उप्पायठिईभंगाइपज्जवाणं जमेगदव्वम्मि । नाणानयानुसरणं पुव्वगयसुयाणुसारेण ॥ १ ॥
सवियारमत्थवंजणजोगंतरओ तयं पढमसुक्कं । होइ पुहुत्तवियक्कं सवियारमरागभावस्स ॥ २ ॥

ननु अर्थव्यञ्जनयोगान्तरेषु संक्रमणात् कथं मनःस्थैर्यं ? तदभावाच्च कथं ध्यानत्वं ? उच्यते—एकद्रव्यविषयत्वे मनःस्थैर्यसंभवाद्ध्यानत्वमविरुद्धम् ॥ ६ ॥

द्वितीयं भेदं व्याचष्टे—

**एवं श्रुतानुसारादेकत्ववितर्कमेकपर्याये । अर्थव्यञ्जनयोगान्तरेष्वसंक्रमणमन्यत्तु ॥ ७ ॥**

एवं श्रुतानुसारादिति पूर्वविदां पूर्वगतश्रुतानुसारादितरेषामन्यथापि एकपर्यायविषयमेकत्ववितर्कं नाम द्वितीयं शुक्लध्यानं, तच्चार्थव्यञ्जनयोगेष्वसंक्रमणरूपं । यदाहुः—

[२]जं पुण सुणिप्पयंपं निवायसरणप्पईवमिव चित्तं । उप्पायठिईभंगाइयाण एगम्मि पज्जाये ॥ १ ॥
अवियारमत्थवंजणजोगंतरओ तयं बीयसुक्कं । पुव्वगयसुयालंबणमेगत्तवियक्कमवियारं ॥ २ ॥ ७ ॥

---

(१) उत्पादस्थितिभङ्गादिपर्यवानां यदेकद्रव्ये । नानानयानुसरणं पूर्वगतश्रुतानुसारेण ॥ १ ॥
सविचारमर्थव्यञ्जनयोगान्तरतः तत् प्रथमशुक्लम् । भवति पृथक्त्ववितर्कं सविचारमरागभावस्य ॥ २ ॥

(२) यत्पुनः सुनिष्प्रकम्पो निवातशरणप्रदीप इव चित्तम् । उत्पादस्थितिभङ्गादिकानामेकस्मिन् पर्याये ॥ १ ॥
अविचारमर्थव्यञ्जनयोगान्तरतः तकं द्वितीयशुक्लम् । पूर्वगतश्रुतालम्बनमेकत्ववितर्कमविचारम् ॥ २ ॥

तृतीयभेदं व्याचष्टे—

> निर्वाणगमनसमये केवलिनो दरनिरुद्धयोगस्य ।
> सूक्ष्मक्रियाप्रतिपाति तृतीयं कीर्तितं शुक्लम् ॥ ८ ॥

निर्वाणगमनसमये मोक्षगमनप्रत्यासन्नसमये केवलिनः सर्वज्ञस्य मनोयोगवाग्योगद्वये निरुद्धे सति बादरे च काययोगे निरुद्धे सूक्ष्मा उच्छ्वासनिश्वासादिका कायक्रिया यत्र तत्तथा । अप्रतिपाति अनिवर्ति । दरशब्दः प्राकृतवत् संस्कृतेऽपि दृश्यते, यथा—" दरदलितहरिद्राग्रन्थिगौरं शरीरम् " ( इत्यादौ ) ॥ ८ ॥

चतुर्थं भेदं व्याचष्टे—

> केवलिनः शैलेशीगतस्य शैलवदकम्पनीयस्य । उत्सन्नक्रियमप्रतिपाति तुरीयं परमशुक्लम् ॥

स्पष्टः ॥ ९ ॥ चतुर्ष्वपि योगसङ्ख्यां निरूपयति—

> एकत्रियोगभाजामाद्यं स्यादपरमेकयोगानाम् । तनुयोगिनां तृतीयं निर्योगाणां चतुर्थं तु ॥ १० ॥

आद्यं पृथक्त्ववितर्कं सविचारं मनःप्रभृत्येकयोगभाजां योगत्रयभाजां वा, तच्च भङ्गिकश्रुतपाठकानां भवति । अपरमेकत्ववितर्कमविचारं मनःप्रभृत्यन्यतरैकयोगानां, योगान्तरे सङ्क्रमाभावात् । तृतीयं सूक्ष्मक्रियमनिवर्ति तत् तनुयोगे काययोगे सूक्ष्मे, न तु योगान्तरे । चतुर्थं व्युत्सन्नक्रियमप्रतिपाति निर्योगाणामयोगिकेवलिनां शैलेशीगतानां भवति । योगस्तु कायवाग्मनोभेदात्त्रिविधः । तत्रौदारिकवैक्रियाहारकतैजसकार्मणशरीरवतो जीवस्य

वीर्यपरिणतिविशेषः काययोगः । औदारिकवैक्रियाहारकशरीरव्यापाराहृतवाग्द्रव्यसमूहसाचिव्याज्जीवव्यापारो वाग्योगः । औदारिकवैक्रियाहारकशरीरव्यापाराहृतमनोद्रव्यसमूहसाचिव्याज्जीवव्यापारो मनोयोगः ॥ १० ॥

ननु शुक्लध्यानोपरितनभेदद्वये मनो नास्त्येव, अमनस्कत्वात्केवलिनः, ध्यानं च मनःस्थैर्यं, तदेतत्कथं ? इत्याह—

छद्मस्थितस्य यद्वन्मनः स्थिरं ध्यानमुच्यते तज्ज्ञैः ।
निश्चलमङ्गं तद्वत्केवलिनां कीर्तितं ध्यानम् ॥ ११ ॥

यथा छद्मस्थस्य मनः स्थिरं सत् ध्यानं भण्यते, तथा केवलिनोऽपि सुनिश्चलः कायो योगत्वाव्यभिचाराद् ध्यानशब्दाभिधेयो भवति ॥ ११ ॥

ननु चतुर्थे शुक्लध्याने काययोगस्य निरुद्धत्वात् असावपि न भवति, तथापि भावेऽतिप्रसङ्गः, तत्र कथं ध्यानशब्दवाच्यता ? इत्याह—

पूर्वाभ्यासाज्जीवोपयोगतः कर्मजरणाहेतोर्वा ।
शब्दार्थबहुत्वाद्वा जिनवचनाद्वाऽप्ययोगिनो ध्यानम् ॥ १२ ॥

यथा कुलालचक्रं भ्रमणनिमित्तदण्डादेरभावेऽपि पूर्वाभ्यासाद्भ्रमति, तथा मनःप्रभृतिसर्वयोगोपरमेऽप्ययोगिनो ध्यानं भवति । तथा यद्यपि द्रव्यतो योगा न सन्ति, तथापि जीवोपयोगरूपभावमनःसद्भावादयोगिनो ध्यानम् । यद्वा ध्यानकार्यस्य कर्मनिर्जरणस्य हेतोः हेतुत्वात् ध्यानं, यथा पुत्रकार्यकरणादपुत्रोऽपि पुत्र उच्यते ।

भवति चास्य भवोपग्राहिकर्मनिर्जरा। अथवा शब्दार्थबहुत्वाद्ध्यान, यथा हरिशब्दस्यार्कमर्कटादयो बहवोऽर्थाः, एव ध्यानशब्दस्यापि, तथाहि—ध्यै चिन्तायां, ध्यै काययोगनिरोधे, ध्यै अयोगित्वेऽपि। वदन्ति हि—

निपाताश्चोपसर्गाश्च धातवश्चेति ते त्रय। अनेकार्थाः स्मृताः सर्वे पाठस्तेषां निदर्शनम् ॥ १ ॥ इति।

जिनागमाद्वाऽयोगिनोऽपि ध्यान। यदाह—

आगमश्चोपपत्तिश्च सपूर्ण दृष्टिलक्षणम्। अतीन्द्रियाणामर्थानां सद्भावप्रतिपत्तये ॥ १ ॥ इति ॥ १२ ॥

उक्तमपि शुक्लध्यानचतुष्टय प्रपञ्चयति—

आद्ये श्रुतावलम्बनपूर्वे पूर्वश्रुतार्थसबन्धात्। पूर्वधराणां छद्मस्थयोगिनां प्रायशो ध्याने ॥१३॥

प्रायश इत्यपूर्वधराणामपि मापतुषमरुदेव्यादीनां शुक्लध्यानसद्भावादित्युक्तप्रायम् ॥ १३ ॥ तथा—

सकलालम्बनविरहप्रथिते द्वे त्वन्तिमे समुद्दिष्टे। निर्मलकेवलदृष्टिज्ञानाना क्षीणदोषाणाम् ॥१४॥

स्पष्ट' ॥ १४ ॥ तथा—

तत्र श्रुताद्गृहीत्वैकमर्थमर्थाद्व्रजेच्छब्दम्। शब्दात् पुनरप्यर्थं योगाद्योगान्तर च सुधीः ॥१५॥

सक्रामत्यविलम्बितमर्थप्रभृतिषु यथा किल ध्यानी। व्यावर्तते स्वयमसौ पुनरपि तेन प्रकारेण ॥१६॥

इति नानात्वे निशिताभ्यासः संजायते यदा योगी। आविर्भूतात्मगुणस्तदैकताया भवेद्योग्यः ।१७।
उत्पादस्थितिभङ्गादिपर्ययाणां यदेकयोगः सन्। ध्यायति पर्ययमेकं तत्स्यादेकत्वमविचारम् ।१८।

त्रिजगद्विषयं ध्यानादणुसंस्थं धारयेत् क्रमेण मनः।
विषमिव सर्वांगगतं मन्त्रबलान्मान्त्रिको दंशे ॥ १९ ॥
अपसारितेन्धनभरः शेषः स्तोकेन्धनोऽनलो ज्वलितः ।
तस्मादपनीतो वा निर्वाति यथा मनस्तद्वत् ॥ २० ॥

स्पष्टाः ॥ १५–२० ॥ द्वितीयध्यानस्य फलमाह—

ज्वलति ततश्च ध्यानज्वलने भृशमुज्ज्वले यतीन्द्रस्य ।
निखिलानि विलीयन्ते क्षणमात्राद् घातिकर्माणि ॥ २१ ॥

स्पष्टः ॥ २१ ॥ घातिकर्माण्याह—

ज्ञानावरणीयं दृष्ट्यावरणीयं च मोहनीयं च। विलयं प्रयान्ति सहसा सहान्तरायेण कर्माणि ॥२२॥

स्पष्टः ॥ २२ ॥ घातिकर्मक्षये फलमाह—

सम्प्राप्य केवलज्ञानदर्शने दुर्लभे ततो योगी । जानाति पश्यति तथा लोकालोक यथावस्थम् ॥२३॥

ध्यानान्तरे वर्तमान इति शेष । शेष स्पष्टम् ॥ २३ ॥

अथोत्पन्नकेवलज्ञानस्य तीर्थकृतोऽतिशयान् चतुर्विंशत्याऽऽर्याभिराह—

देवस्तदा स भगवान् सर्वज्ञ. सर्वदर्श्यनन्तगुण· । विहरत्यवनीवलयं सुरासुरनरोरगैः प्रणतः॥२४॥

वागूज्योत्स्नयाऽखिलान्यपि विबोधयति भव्यजन्तुकुमुदानि ।
उन्मूलयति क्षणतो मिथ्यात्व द्रव्यभावगतम् ॥ २५ ॥

तन्नामग्रहमात्रादनादिससारसभव दु खम् । भव्यात्मनामशेषं परिक्षय याति सहसैव ॥२६॥

अपि कोटीशतसङ्ख्या समुपासितुमागता. सुरनराद्या ।
क्षेत्रे योजनमात्रे मान्ति तदाऽस्य प्रभावेण ॥ २७ ॥

त्रिदिवौकसो मनुष्यास्तिर्यञ्चोऽन्येऽप्यमुष्य बुध्यन्ते ।
निजनिजभाषानुगत वचनं धर्मावबोधकरम् ॥ २८ ॥

आयोजनशतमुग्रा रोगाः शाम्यन्ति तत्प्रभावेण ।
उदयिनि शीतमरीचाविव तापरुजः क्षितेः परितः ॥ २९ ॥
मारीतिदुर्भिक्षातिवृष्ट्यनावृष्टिडमरवैराणि । न भवन्त्यस्मिन् विहरति सहस्ररश्मौ तमांसीव ।३०।
मार्त्तण्डमण्डलश्रीविडम्बि भामण्डलं विभोः परितः ।
आविर्भवत्यनुवपुः प्रकाशयत्सर्वतोऽपि दिशः ॥ ३१ ॥
संचारयन्ति विकचान्यनुपादन्यासमाशु कमलानि ।
भगवति विहरति तस्मिन् कल्याणीभक्तयो देवाः ॥ ३२ ॥
अनुकूलो वाति मरुत् प्रदक्षिणं यान्त्यमुष्य शकुनाश्च ।
तरवोऽपि नमन्ति भवन्त्यधोमुखाः कण्टकाश्च तदा ॥ ३३ ॥
आरक्तपल्लवोऽशोकपादपः स्मेरकुसुमगन्धाढ्यः । प्रकृतस्तुतिरिव मधुकरविरुतैर्विलसत्युपरि तस्य
षडपि समकालमृतवो भगवन्तं तं तदोपतिष्ठन्ते । स्मरसाहाय्यककरणे प्रायश्चित्तं ग्रहीतुमिव ३
अस्य पुरस्तान्निनदन् विजृम्भते दुन्दुभिर्नभसि तारम् । कुर्वाणो निर्वाणप्रयाणकल्याणमिव सद्यः

पश्चापि चेन्द्रियार्थां चणान्मनोज्ञीभवन्ति तदुपान्ते। को वा न गुणोत्कर्षं सविधे महतामवाप्नोति
अस्य नखा रोमाणि च वर्धिष्णून्यपि न हि प्रवर्धन्ते। भवशतसंचितकर्मच्छेदं दृष्ट्वेव भीतानि ३८
शमयन्ति तदभ्यर्णे रजांसि गन्धजलवृष्टिभिर्देवाः।
उन्निद्रकुसुमवृष्टिभिरशेषत सुरभयन्ति भुवम् ॥ ३९ ॥
छत्रत्रयी पवित्रा विभोरुपरि भक्तितस्त्रिदशराजैः। गङ्गाश्रोतस्त्रितयीव धार्यते मण्डलीकृत्य ॥४०॥
अयमेक एव न. प्रभुरित्याख्यातुं विडौजसोन्नमित ।
अङ्गुलिदण्ड इवोच्चैश्चकास्ति रत्नध्वजस्तस्य ॥ ४१ ॥
अस्य शरदिन्दुदीधितिचारूणि च चामराणि धूयन्ते। वदनारविन्दसपातिराजहसभ्रमं दधति४
प्राकारास्त्रय उच्चैर्विभान्ति समवसरणस्थितस्यास्य ।
कृतविग्रहाणि सम्यक्चारित्रज्ञानदर्शनानीव ॥ ४३ ॥
चतुराशावर्तिजनान् युगपदिवानुग्रहीतुकामस्य। चत्वारि भवन्ति मुखान्यङ्गानि च धर्ममुपदिशत

अभिवन्द्यमानपादः सुरासुरनरोरगैस्तदा भगवान् ।
सिंहासनमधितिष्ठति भास्वानिव पूर्वगिरिशृङ्गम् ॥ ४५ ॥

तेजःपुञ्जप्रसरप्रकाशिताशेषदिक्कमस्य तदा । त्रैलोक्यचक्रवर्तित्वचिह्नमग्रे भवति चक्रम् ॥४६॥

भुवनपतिविमानपतिज्योतिःपतिवानमन्तराः सविधे ।
तिष्ठन्ति समवसरणे जघन्यतः कोटिपरिमाणाः ॥ ४७ ॥

स्पष्टाः ॥ २४-४७ ॥ तीर्थकरकेवलिनोऽतिशयस्वरूपमुक्तम्, इतरकेवलिनः स्वरूपमाह—

तीर्थकरनामसंज्ञं न यस्य कर्मास्ति सोऽपि योगबलात् ।
उत्पन्नकेवलः सन् सत्यायुषि बोधयत्युर्वीम् ॥ ४८ ॥

स्पष्टः ॥ ४८ ॥ उत्तरकरणीयमाह—

संपन्नकेवलज्ञानदर्शनोऽन्तर्मुहूर्त्तशेषायुः । अर्हति योगी ध्यानं तृतीयमपि कर्तुमचिरेण ॥४९॥

अन्तर्मुहूर्त्तं मुहूर्त्तस्य मध्ये । शेषमायुर्यस्य स तथा । शेषं स्पष्टम् ॥ ४९ ॥

तत्किमविशेषेण सर्वोऽपि योगी तृतीयं ध्यानमारभते उतास्ति कश्चिद्विशेषः ? इत्याह—

आयु कर्मसकाशादधिकानि स्युर्यदाऽन्यकर्माणि। तत्साम्याय तदोपक्रमेत योगी समुद्घातम्॥

यावत्यायुःकर्मण. स्थिति' शेषा तावत्येव वेदनीयस्य कर्मणो यदि स्यात्तदा तृतीय ध्यानमारभते। अथायुःस्थितेः सकाशाद्द्राघीयसी स्थितिर्वेदनीयस्य भवति तदा स्थितिघातरसघातार्थं समुद्घात प्रयत्नविशेषं करोति । यदाह–

यस्य पुन केवलिन कर्म भवत्यायुषोऽतिरिक्ततरम्। स समुद्घात भगवानथ गच्छति तत्समीकर्तुम् ॥१॥ इति।

समुद्घात इति सम्यगपुनर्भावेन उत् प्राबल्येन हनन घातः शरीराद्बहिर्जीवप्रदेशाना निःसारणम् ॥ ५० ॥

तस्य विधिमाह–

दण्डकपाटे मन्थानकं च समयत्रयेण निर्माय। तुर्ये समये लोकं निःशेष पूरयेद्योगी ॥५१॥

इह प्रथमसमय एव स्वदेहतुल्यविष्कम्भमूर्ध्वमधश्चायत लोकान्तगामिन जीवप्रदेशसघात दण्डाकार केवली करोति। द्वितीयसमये च तमेव दण्ड पूर्वापरदिग्द्वयप्रसारणात् पार्श्वतो लोकान्तगामि कपाटमिव कपाट करोति। तृतीयसमये तु तदेव कपाट दक्षिणोत्तरदिग्द्वयप्रसारणान्मन्थानमिव मन्थान करोति लोकान्तप्रापिणमेव। एव च लोकस्य प्रायो बहु पूरित भवति। चतुर्थसमये तु मन्थान्तराण्यपूरितानि अनुश्रेणिगमनात् सह लोकनिष्कुटैः पूरयति। ततश्च सकलो लोको जीवप्रदेशैः पूरितो भवति। लोकपूरणश्रवणाच्च परेषामात्मविभुत्ववादः समुद्भूत.। तथा चार्थवादः–" विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वत पात् " इत्यादि ॥ ५१ ॥

अथ पञ्चमादिसमयेषु कर्तव्यमाह–

समयैस्ततश्चतुर्भिर्निवर्तते लोकपूरणादस्मात्। विहितायुःसमकर्मा ध्यानी प्रतिलोममार्गेण ५२

ततः पञ्चमसमये पूर्वक्रमात् प्रतिलोमं मन्थान्तराणि जीवप्रदेशरूपाणि सकर्मकाणि संकोचयति। षष्ठे समये मन्थानमुपसंहरति, घनतरसंकोचात्। सप्तमे समये कपाटमुपसंहरति, दण्डात्मनि संकोचात्। अष्टमे समये दण्डमुपसंहृत्य शरीरस्थ एव भवति। समुद्घातकाले च मनोवाग्योगयोरव्यापार एव, प्रयोजनाभावात्। काययोगस्यैव केवलस्य व्यापारः। तत्रापि प्रथमाष्टमसमययोरौदारिककायप्राधान्यादौदारिककाययोग एव। द्वितीयषष्ठसप्तमेषु समयेषु पुनरौदारिकाद्बहिर्गमनात् कार्मणवीर्यपरिस्पन्दादौदारिककार्मणमिश्रः। तृतीयचतुर्थपञ्चमेषु औदारिकाद्बहिर्बहुतरप्रदेशव्यापारादसहायकार्मणयोग एव। यदाह—

औदारिकप्रयोक्ता प्रथमाष्टमसमययोरसाविष्टः। मिश्रौदारिकयोक्ता सप्तमषष्ठद्वितीयेषु ॥ १ ॥

कार्मणशरीरयोगी चतुर्थके पञ्चमे तृतीये च। समयत्रयेऽपि तस्मिन् भवत्यनाहारको नियमात् ॥ २ ॥

परित्यक्तसमुद्घातश्च कारणवशाद्योगत्रयमपि व्यापारयति, यथा—अनुत्तरसुरः पृष्टो मनोयोगं सत्यं वाऽसत्यामृषं वा प्रयुङ्क्ते। एवमामन्त्रणादौ वाग्योगमपि, नेतरौ द्वौ भेदौ। द्वयोरपि काययोगमप्यौदारिकं फलकप्रत्यर्पणादाविति। ततोऽन्तर्मुहूर्तमात्रेण कालेन योगनिरोधमारभते। इह त्रिविधोऽपि योगो द्विविधः—सूक्ष्मो बादरश्च। तत्र केवलोत्पत्तेरुत्तरकालो जघन्येनान्तर्मुहूर्त्तम्, उत्कर्षेण च देशोना पूर्वकोटिः, तां विहृत्यान्तर्मुहूर्त्तावशेषायुष्कः सयोगिकेवली प्रथमं बादरकाययोगेन बादरौ वाङ्मनसयोगौ निरुणद्धि। ततः सूक्ष्मकाययोगेन बादरकाययोगं

निरुणद्धि। सति तस्मिन् सूक्ष्मयोगस्य रोद्धुमशक्यत्वात्। न हि धावन् वेपथु वारयति। ततश्च सर्वबादरयोगनिरोधानन्तरं सूक्ष्मेण काययोगेन सूक्ष्मौ वाङ्मनसयोगौ निरुणद्धि। ततः सूक्ष्मक्रियमनिवर्ति शुक्लध्यानं ध्यायन् स्वात्मनैव सूक्ष्मकाययोगं निरुणद्धि ॥ ५२ ॥

एतदेवार्यात्रयेणाह—

श्रीमानचिन्त्यवीर्यः शरीरयोगेऽथ बादरे स्थित्वा।
अचिरादेव हि निरुणद्धि बादरौ वाङ्मनसयोगौ ॥ ५३ ॥
सूक्ष्मेण काययोगेन काययोगं स बादरं रुन्ध्यात्।
तस्मिन्ननिरुद्धे सति शक्यो रोद्धुं न सूक्ष्मतनुयोगः ॥ ५४ ॥
वचनमनोयोगयुगं सूक्ष्मं निरुणद्धि सूक्ष्मात्तनुयोगात्।
विदधाति ततो ध्यानं सूक्ष्मक्रियमसूक्ष्मतनुयोगम् ॥ ५५ ॥

स्पष्टा ॥ ५३-५५ ॥

तदनन्तरं समुत्सन्नक्रियमाविर्भवेदयोगस्य। अस्यान्ते क्षीयन्ते त्वघातिकर्माणि चत्वारि ॥

स्पष्टं ॥ ५६ ॥ ततश्च—

लघुवर्णपञ्चकोद्गिरणतुल्यकालामवाप्य शैलेशीम् ।
क्षपयति युगपत् परितो वेद्यायुर्नामगोत्राणि ॥ ५७॥

लघुवर्णपञ्चकं अइउऋऌलक्षणं तस्योद्गिरणमुच्चारणं तेन तुल्य· कालो यस्याः। शैलेशो मेरुस्तस्येयं शैलेशी तद्वत् स्थिरावस्थेत्यर्थः, तामवाप्य। युगपदेककालं परितः सामस्त्येन क्षपयति वेदनीयायुर्नामगोत्रलक्षणानि कर्माणि ॥ ५७ ॥ ततश्च—

औदारिकतैजसकार्मणानि संसारमूलकरणानि ।
हित्वेह ऋजुश्रेण्या समयेनैकेन याति लोकान्तम् ॥ ५८ ॥

औदारिकतैजसकार्मणलक्षणानि शरीराणि संसारमूलभूतानि करणानि साधकतमानि, इह देहत्यागभूमौ हित्वा एकया ऋज्व्या श्रेण्या विग्रहरहितया प्रदेशान्तराण्यस्पृशन्नेकेन समयेन समयान्तरमस्पृशन् लोकान्तं सिद्धिक्षेत्रं याति साकारोपयोगोपयुक्त इति शेषः। यदाह—"इह बोंदिं चइत्ताणं तत्थ गंतूण सिज्झइ" इति ॥५८॥

ननूपरि गच्छन् लोकान्तादुपर्यपि किं न गच्छति ? देहत्यागभूमेरधस्तिर्यग्वा किं न गच्छति ? इत्याह—

---

१ इह शरीरं त्यक्त्वा तत्र गत्वा सिध्यति ॥

नोर्ध्वमुपग्रहविरहादधोऽपि वा नैव गौरवाभावात् ।
योगप्रयोगविगमात् न तिर्यगपि तस्य गतिरस्ति ॥ ५९ ॥

उपग्रहो गत्युपष्टम्भकारी धर्मास्तिकायलक्षणो मत्स्यानामिव जलं, लोकान्तात् परतस्तस्याभावान्नोर्ध्वं याति । गौरवमधोगमनहेतुस्तस्याभावान्नाधो याति । योगः काययोगादिः प्रयोगः परप्रेरणं तयोर्विगमादभावान्न तिर्यग् यातीति ॥ ५९ ॥

इह च कर्ममुक्तस्योर्ध्वदेशनियमेन गतिर्नोपपद्यत इतिवादिनं प्रत्याह—

लाघवयोगाध्धूमवदलाबुफलवच्च सङ्गविरहेण ।
बन्धनविरहादेरण्डवच्च सिद्धस्य गतिरूर्ध्वम् ॥ ६० ॥

लाघवं गौरवप्रतिपक्षभूतः परिणामस्तद्योगात् धूमस्येव सिद्धस्योर्ध्वं गतिर्भवति । तथा सङ्गविरहेण तथाविधपरिणामत्वादष्टमृत्तिकालेपविलिप्तजलाधोनिमग्नक्रमापनीतमृत्तिकालेपजलतलमर्यादोर्ध्वगामितथाविधालाबुफलस्येव सिद्धस्योर्ध्वं गतिः, तथा बन्धनस्य कर्मलक्षणस्य विरहादभावात्तथाविधपरिणतेः कोशबन्धनविमुक्तैरण्डफलवत् सिद्धस्योर्ध्वं गतिः ॥ ६० ॥ ततश्च—

सादिकमनन्तमनुपममव्याबाधं स्वभावजं सौख्यम् ।
प्राप्तः सकेवलज्ञानदर्शनो मोदते मुक्तः ॥ ६१ ॥

सहादिना वर्तत इति सादिकं, संसारे कदाचिदप्यभावात् । नास्यान्तोऽस्तीत्यनन्तं, क्षयाभावात् । सादेः कथमनन्तत्वमिति चेत् घटादिप्रध्वंसे तथा दर्शनात्, घटादिप्रध्वंसो हि सादिः, मुद्गरादिव्यापारजन्यत्वात्, अनन्तश्च, क्षयाभावात्, तत्क्षये हि घटस्य पुनरुन्मज्जनप्रसङ्गः । अनुपममुपमानस्य कस्यचिदभावात् सांसारिकसुखानां सर्वजीववर्तिनामतीतानामनागतानां वर्तमानानां च सिद्धसुखापेक्षयाऽनन्तभागत्वात् । नास्य व्याबाधाऽस्तीत्यव्याबाधं, शरीरमनसोराबाधाहेत्वोरभावात् । स्वभावजं स्वभावादात्मस्वरूपमात्राज्जायते, न पुनः कुतश्चित्कारणान्तरात्, एवंविधं सुखं प्राप्तः, केवलज्ञानदर्शनाभ्यां युक्तो मुक्तः सन् मोदते परमानन्दवान् भवति । अनेन सुखादिगुणविकलो ज्ञानदर्शनरहितश्च मुक्त इति मतमपास्तं, यदाहुर्वैशेषिकाः—“बुद्ध्यादीनां नवानामात्मविशेषगुणानामत्यन्तोच्छेदो मोक्ष” इति, ये वा प्रदीपनिर्वाणकल्पमभावैकरूपं मोक्षमाहुस्तेऽपि निरस्ताः, बुद्ध्यादिगुणोच्छेदरूपस्यात्मोच्छेदरूपस्य वा मोक्षस्यास्पृहणीयत्वात्, को हि सचेतनः स्वगुणोच्छेदमात्मोच्छेदं चार्थयेत् ? तस्मादनन्तज्ञानदर्शनसुखवीर्यमयस्वरूपो मोक्षः सर्वप्रमाणसिद्धो युक्तः ॥ ६१ ॥

इति परमार्हतश्रीकुमारपालभूपालशुश्रूषिते आचार्यश्रीहेमचन्द्रविरचितेऽध्यात्मोपनिषन्नाम्नि संजातपट्टबन्धे श्रीयोगशास्त्रे स्वोपज्ञं एकादशप्रकाशविवरणम् ॥ ११ ॥

## ॥ अथ द्वादश प्रकाश ॥

ॐ अर्हं ॥ शास्त्रारम्भे यदुक्त " स्वसंवेदनतश्चापि " इति तत्प्रपञ्चयितु प्रस्तावनामाह—

श्रुतसिन्धोर्गुरुमुखतो यदधिगत तदिह दर्शित सम्यक् ।
अनुभवसिद्धमिदानीं प्रकाश्यते तत्त्वमिदममलम् ॥ १ ॥

अत्र पूर्वार्धेन वृत्तकीर्तन उत्तरार्धेन तु वर्तिष्यमाणतत्त्वप्रकाशनम् ॥ १ ॥

अथोत्तमपदवीमारोढु चित्तस्य चातुर्विध्यमाह—

इह विक्षिप्त यातायात श्लिष्टं तथा सुलीन च ।
चेतश्चतु प्रकार तज्ज्ञचमत्कारकारि भवेत् ॥ २ ॥

इह योगाभ्यासप्रक्रमे चत्वारि चित्तानि भवन्ति, तद्यथा–विक्षिप्त, यातायात, श्लिष्ट, सुलीन चेति ॥ २ ॥

क्रमेण व्याचष्टे—

विक्षिप्त चलमिष्ट यातायात च किमपि सानन्दम् ।
प्रथमाभ्यासे द्वयमपि विकल्पविषयग्रहं तत्स्यात् ॥ ३ ॥

विक्षिप्तं चलमितस्ततो भ्राम्यदिति यावत् । यातं च बहिः आयातं चान्तरिति यातायातं, तत् किमपि सानन्दं, स्वात्मन्यभिनिवेशात् । तच्च चेतोद्वयमपि विक्षिप्तं यातायातं च प्रथमाभ्यासवर्तिनां भवति । विकल्पेन च बाह्यार्थग्रह उभयस्मिन् ॥ ३ ॥ तथा—

श्लिष्टं स्थिरसानन्दं सुलीनमतिनिश्चलं परानन्दम् ।
तन्मात्रकविषयग्रहमुभयमपि बुधैस्तदाम्नातम् ॥ ४ ॥

स्थिरत्वात् सानन्दं स्थिरसानन्दं श्लिष्टमुच्यत इति । निश्चलं परमानन्दयुक्तं च सुलीनं । एतच्च द्वयमपि तन्मात्रकमेव चित्तमात्रकमेव विषयं गृह्णाति, न तु बाह्यम् ॥ ४ ॥

ततश्च—

एवं क्रमशोऽभ्यासावेशाद्ध्यानं भजेन्निरालम्बम् ।
समरसभावं यातः परमानन्दं ततोऽनुभवेत् ॥ ५ ॥

क्रमशोऽभ्यासावेशादिति विक्षिप्ताच्चेतसः स्वाभाविकाद्यातायातं चित्तमभ्यस्येत्, ततोऽपि विश्लिष्टं, ततोऽपि च सुलीनं, एवं पुनः पुनरभ्यासान्निरालम्बं ध्यानं भवेत् । ततः समरसभावप्राप्तः परमानन्दमनुभवति ॥ ५ ॥

समरसभावप्राप्तिर्यथा भवति तथाऽऽह—

वाह्यात्मानमपास्य प्रसत्तिभाजान्तरात्मना योगी ।
सततं परमात्मानं विचिन्तयेत्तन्मयत्वाय ॥ ६ ॥

स्पष्टा ॥ ६ ॥ बहिराद्यात्मनां स्वरूपमार्याद्वयेनाह—

आत्मधिया समुपात्त. कायादिः कीर्त्यतेऽत्र वहिरात्मा ।
कायादे समधिष्ठायको भवत्यन्तरात्मा तु ॥ ७ ॥

चिद्रूपानन्दमयो नि शेषोपाधिवर्जित. शुद्ध । अत्यक्षोऽनन्तगुणः परमात्मा कीर्तितस्तज्ज्ञैः ॥८॥

स्पष्टे ॥ ७-८ ॥ बहिरात्मान्तरात्मनोर्भेदज्ञाने यद्भवति तदाह—

पृथगात्मान कायात्पृथक् च विद्यात्सदात्मन कायम्। उभयोर्भेदज्ञातात्मनिश्चये न स्खलेद्योगी ।९।

स्पष्टा ॥ ९ ॥ तथाहि—

अन्त पिहितज्योति. संतुष्यत्यात्मनोऽन्यतो मूढ· ।
तुष्यत्यात्मन्येव हि वहिर्निवृत्तभ्रमो ज्ञानी ॥ १० ॥

स्पष्टा ॥ १० ॥ तदेवाह—

पुंसामयत्नलभ्यं ज्ञानवतामव्ययं पदं नूनम् । यद्यात्मन्यात्मज्ञानमात्रमेते समीहन्ते ॥११॥

अव्ययं पदं परमात्मरूपता । शेषं स्पष्टम् ॥ ११ ॥ एतदेव स्पष्टयति—

श्रयते सुवर्णभावं सिद्धरसस्पर्शतो यथा लोहम् ।
आत्मध्यानादात्मा परमात्मत्वं तथाऽऽप्नोति ॥ १२ ॥

स्पष्टा ॥ १२ ॥ एतच्च सुज्ञानमेवेत्याह—

जन्मान्तरसंस्कारात्स्वयमेव किल प्रकाशते तत्त्वम् ।
सुप्तोत्थितस्य पूर्वप्रत्ययवन्निरुपदेशमपि ॥ १३ ॥

येन जन्मान्तरे आत्मज्ञानमभ्यस्तं तस्य सुप्तप्रबुद्धस्य पूर्वार्थप्रत्यय इवात्मज्ञानं भवति ॥१३॥ इतरस्य तु—

अथवा गुरुप्रसादादिहैव तत्त्वं समुन्मिषति नूनम् ।
गुरुचरणोपास्तिकृतः प्रशमजुषः शुद्धचित्तस्य ॥ १४ ॥

इहैव इहजन्मन्येव जन्मान्तरसंस्कारं विनापीत्यर्थः ॥ १४ ॥ उभयत्रापि गुरुमुखप्रेक्षित्वमनिवार्यमेवेत्याह—

तत्र प्रथमे तत्त्वज्ञाने संवादको गुरुर्भवति । दर्शयिता त्वपरस्मिन् गुरुमेव सदा भजेत्तस्मात् ॥१५॥

प्रथमे जन्मान्तराभ्यस्ते तत्त्वज्ञाने । अपरस्मिन् गुरूपदर्शिते तत्त्वज्ञाने ॥ १५ ॥ गुरुमेव स्तौति—

यद्वत्सहस्रकिरणः प्रकाशको निचिततिमिरमग्नस्य । यद्वद्गुरुरत्र भवेदज्ञानध्वान्तपतितस्य ॥१६॥

निचिततिमिरमग्नस्य अर्थस्येति शेषः । अज्ञानध्वान्तपतितस्य तत्त्वस्येति शेषः ॥ १६ ॥ ततश्च—

प्राणायामप्रभृतिक्लेशपरित्यागतस्ततो योगी । उपदेशं प्राप्य गुरोरात्माभ्यासे रतिं कुर्यात् ॥१७॥

स्पष्टा ॥ १७ ॥ ततश्च—

वचनमनःकायानां क्षोभं यत्नेन वर्जयेच्छान्तः । रसभाण्डमिवात्मानं सुनिश्चलं धारयेन्नित्यम् १८

स्पष्टा ॥ १८ ॥

औदासीन्यपरायणवृत्तिः किञ्चिदपि चिन्तयेन्नैव । यत्सङ्कल्पाकुलितं चित्तं नासादयेत् स्थैर्यम् ॥१९॥

स्पष्टा ॥ १९ ॥ व्यतिरेकमाह—

यावत्प्रयत्नलेशो यावत्सङ्कल्पकल्पना काऽपि । तावन्न लयस्यापि प्राप्तिस्तत्त्वस्य का नु कथा ॥२०॥

स्पष्टा ॥ २० ॥ औदासीन्यस्य फलमाह—

यदिदं तदिति न वक्तुं साक्षाद्गुरुणाऽपि हत शक्येत ।
औदासीन्यपरस्य प्रकाशते तत्स्वयं तत्त्वम् ॥ २१ ॥

स्पष्टा ॥ २१ ॥ यथोदासीनस्य परे तत्त्वे लयो यथा चोन्मनीभावो भवति तथा कलापकेनाह—

एकान्तेऽतिपवित्रे रम्ये देशे सदा सुखासीनः ।
आ चरणाग्रशिखाग्राच्छिथिलीभूताखिलावयवः ॥ २२ ॥
रूपं कान्तं पश्यन्नपि शृण्वन्नपि गिरं कलमनोज्ञाम् ।
जिघ्रन्नपि च सुगन्धीन्यपि भुञ्जानो रसान् स्वादून् ॥ २३ ॥
भावान् स्पृशन्नपि मृदूनवारयन्नपि च चेतसो वृत्तिम् ।
परिकलितौदासीन्यः प्रणष्टविषयभ्रमो नित्यम् ॥ २४ ॥
बहिरन्तश्च समन्ताच्चिन्ताचेष्टापरिच्युतो योगी ।
तन्मयभावं प्राप्तः कलयति भृशमुन्मनीभावम् ॥ २५ ॥

कलापकं स्पष्टम् ॥ २२–२५ ॥ अथ कथमिन्द्रियप्रसरो न प्रतिषिध्यते ? इत्याह—

गृह्णन्ति ग्राह्याणि स्वानि स्वानीन्द्रियाणि नो रुन्ध्यात् ।
न खलु प्रवर्तयेद्वा प्रकाशते तत्त्वमचिरेण ॥ २६ ॥

स्पष्ट ॥ उक्त चास्माभिर्वीतरागस्तोत्रे—

सयतानि न चावाक्षि नैवोच्छृङ्खलितानि च। इति सम्यक् प्रतिपदा त्वयेन्द्रियजय. कृत ॥ १ ॥ २६ ॥

मनोजयमप्यकृच्छ्रप्राप्यमार्याद्वयेनाह—

चेतोऽपि यत्र यत्र प्रवर्तते नो ततस्ततो वार्यम्।
अधिकीभवति हि वारितमवारितं शान्तिमुपयाति ॥ २७ ॥
मत्तो हस्ती यत्नान्निवार्यमाणोऽधिकीभवति यद्वत्।
अनिवारितस्तु कामान् लब्ध्वा शाम्यति मनस्तद्वत् ॥ २८ ॥

स्पष्टे ॥ २७–२८ ॥ यथा मनः स्थिर भवति तथाऽऽर्याद्वयेनाह—

यर्हि यथा यत्र यत. स्थिरीभवति योगिनश्चल चेत ।
तर्हि तथा तत्र ततः कथञ्चिदपि चालयेन्नैव ॥ २९ ॥
अनया युक्त्याऽभ्यास विदधानस्यातिलोलमपि चेत ।
अङ्गुल्यग्रस्थापितदण्ड इव स्थैर्यमाश्रयति ॥ ३० ॥

स्पष्टे ॥ २९–३० ॥ इन्द्रियजयविधिमार्याद्वयेनाह—

निःसृत्यादौ दृष्टिः संलीना यत्र कुत्रचित्स्थाने। तत्रासाद्य स्थैर्यं शनैः शनैर्विलयमाप्नोति ॥३१॥
सर्वत्रापि प्रसृता प्रत्यग्भूता शनैः शनैर्दृष्टिः। परतत्त्वामलमुकुरे निरीक्षते ह्यात्मनाऽऽत्मानम् ॥३२॥

स्पष्टे ॥ ३१–३२ ॥ मनोविजये विधिमार्यात्रयेणाह—

औदासीन्यनिमग्नः प्रयत्नपरिवर्जितः सततमात्मा ।
भावितपरमानन्दः क्वचिदपि न मनो नियोजयति ॥ ३३ ॥
करणानि नाधितिष्ठत्युपेक्षितं चित्तमात्मना जातु ।
ग्राह्ये ततो निजनिजे करणान्यपि न प्रवर्तन्ते ॥ ३४ ॥
नात्मा प्रेरयति मनो न मनः प्रेरयति यर्हि करणानि ।
उभयभ्रष्टं तर्हि स्वयमेव विनाशमाप्नोति ॥ ३५ ॥

स्पष्टाः ॥ ३३–३५ ॥ मनोविजयस्य फलमाह—

नष्टे मनसि समन्तात्सकले विलयं च सर्वतो याते ।
निष्कलमुदेति तत्त्वं निर्वातस्थायिदीप इव ॥ ३६ ॥

नष्टे भस्मच्छन्नाग्निवत्समन्ततस्तिरोहिते मनसि । तथा सह कलाभिश्चिन्तास्मृत्यादिरूपाभिर्वर्तते यचत्सकल तस्मिन् जलप्रवाहप्लावितवह्निवद्विलय चयमुपगते सति तत्त्वमात्मज्ञानरूप निष्कल कर्म कलाविनिर्मुक्तमुदेति ॥ ३६ ॥ तत्त्वज्ञानस्य प्रत्ययमाह—

अङ्गमृदुत्वनिदान स्वेदनमर्दनविवर्जनेनापि ।
स्निग्धीकरणमतैलं प्रकाशमान हि तत्त्वमिदम् ॥ ३७ ॥

स्पष्टा ॥ ३७ ॥ प्रत्ययान्तरमाह—

अमनस्कतया सजायमानया नाशिते मन:शल्ये ।
शिथिलीभवति शरीर छत्रमिव स्तब्धतां त्यक्त्वा ॥ ३८ ॥

स्पष्टा ॥ ३८ ॥ व्यतिरेकमाह—

शल्यीभूतस्यान्त करणस्य क्लेशदायिन सततम् ।
अमनस्कता विनाऽन्यद्धिशल्यकरणौषध नास्ति ॥ ३९ ॥

स्पष्टा ॥ ३९ ॥ अमनस्कत्वस्य फलमाह—

कदलीवच्चाविद्या लोलेन्द्रियपत्रला मन कन्दा । अमनस्कफले दृष्टे नश्यति सर्वप्रकारेण ॥४०॥

स्पष्टा ॥ ४० ॥ मनोजयेऽमनस्कतां परमं कारणमाह—

अतिचञ्चलमतिसूक्ष्मं दुर्लक्ष्यं वेगवत्तया चेतः । अश्रान्तमप्रमादादमनस्कशलाकया भिन्द्यात् ४१

अमनस्कमेव शलाका प्रहरणविशेषः । शेषं स्पष्टम् ॥ ४१ ॥

पुनरमनस्कोदये योगिनः फलमाह—

विश्लिष्टमिव प्लुष्टमिवोड्डीनमिव प्रलीनमिव कायम् ।
अमनस्कोदयसमये योगी जानात्यसत्कल्पम् ॥ ४२ ॥

स्पष्टा ॥ ४२ ॥ तथा—

समदैरिन्द्रियभुजगै रहिते विमनस्कनवसुधाकुण्डे ।
मग्नोऽनुभवति योगी परामृतास्वादमसमानम् ॥ ४३ ॥

स्पष्टा ॥ ४३ ॥ तथा—

रेचकपूरककुम्भककरणाभ्यासक्रमं विनाऽपि खलु ।
स्वयमेव नश्यति मरुद्विमनस्के सत्ययत्नेन ॥ ४४ ॥

स्पष्टा ॥ ४४ ॥ तथा—

चिरमाहितप्रयत्नैरपि धर्तुं यो हि शक्यते नैव। सत्यमनस्के तिष्ठति स समीरस्तत्क्षणादेव ॥४५॥

स्पष्टा ॥ ४५ ॥ तथा—

जातेऽभ्यासे स्थिरतामुदयति विमले च निष्कले तत्त्वे ।
मुक्त इव भाति योगी समूलमुन्मूलितश्वासः ॥ ४६ ॥

स्पष्टा ॥ ४६ ॥ तथा—

यो जाग्रदवस्थायां स्वस्थः सुप्त इव तिष्ठति लयस्थः ।
श्वासोच्छ्वासविहीनः स हीयते न खलु मुक्तिजुषः ॥ ४७ ॥

स्पष्टा ॥ ४७ ॥ तथा—

जागरणस्वप्नजुषो जगतीतलवर्तिनः सदा लोकाः ।
तत्त्वविदो लयमग्ना नो जाग्रति शेरते नापि ॥ ४८ ॥

स्पष्टा ॥ ४८ ॥ तथा—

भवति खलु शून्यभावः स्वप्ने विषयग्रहश्च जागरणे ।
एतद्द्वितयमतीत्यानन्दमयमवस्थितं तत्त्वम् ॥ ४९ ॥

स्पष्टा ॥ ४६ ॥ सोपालम्भमुपदेशसर्वस्वमाह—

कर्माण्यपि दुःखकृते निष्कर्मत्वं सुखाय विदितं तु। न ततः प्रयतेत कथं निष्कर्मत्वे सुलभमोक्षे ॥५०॥

स्पष्टा ॥ ५० ॥ यदिवा—

मोक्षोऽस्तु मास्तु यदिवा परमानन्दस्तु वेद्यते स खलु।
यस्मिन्निखिलसुखानि प्रतिभासन्ते न किञ्चिदिव ॥ ५१ ॥

स्पष्टा ॥ ५१ ॥ तथाहीत्यादिना एतदेव प्रपञ्चयति—

मधु न मधुरं नैताः शीतास्त्विषस्तुहिनद्युतेरमृतममृतं नामैवास्याः फले तु मुधा सुधा।
तदलमसुना संरम्भेण प्रसीद सखे मनः, फलमविकलं त्वय्येवैतत्प्रसादमुपेयुषि ॥ ५२ ॥

स्पष्टः ॥ ५२ ॥ स्वसंविदितामनस्कोपदेशदायिनो गुरून् व्यतिरेकभङ्ग्या स्तौति—

सत्येतस्मिन्नरतिरतिदं गृह्यते वस्तु दूरा-दप्यासन्नेऽप्यसति तु मनस्याप्यते नैव किञ्चित्।
पुंसामित्यप्यवगतवतामुन्मनीभावहेता-विच्छा बाढं न भवति कथं सद्गुरूपासनायाम् ॥ ५३ ॥

एतस्मिन्मनसि सति दूरादपि अरतिरतिकारणं वस्तु गृह्यते, अरतिकारणं व्याघ्रादि रतिकारणं वनितादि। आसन्नदेशवर्त्यप्यसति तु मनसि न अरतिरतिदं वस्तु गृह्यते। सुखदुःखे मनःसंबन्धनिबन्धने, न तु विषयसंपर्क-

जनिते इत्यर्थ । इत्यप्यवगतवता पुसा सद्गुरूपासनायां कथमिच्छा न भवति ? । किंविशिष्टाया ? उन्मनीभावहेतौ उन्मनस्त्वकारणभूतायाम् ॥ ५३ ॥

इदानीममनस्कतोपायभूतामात्मप्रसादना वृत्तेनाह—

> तांस्तानापरमेश्वरादपि परान् भावै. प्रसाद नयन्,
> तैस्तैस्तत्तदुपायमूढ भगवन्नात्मन् किमायस्यसि ।
> हंतात्मानमपि प्रसादय मनाग् येनासतां सपद ,
> साम्राज्य परमेऽपि तेजसि तव प्राज्य समुज्जृम्भते ॥ ५४ ॥

तान् तान् उच्चनीचभेदेन बहुप्रकारान् परान् आत्मव्यतिरिक्तान् , किमपर ? परमेश्वर परमात्मानमप्यभिव्याप्य प्रसाद नयन् अनुग्रहपरान् कुर्वन् , कै ? तैस्तैर्भावैरभिप्रायैर्धनयशोविद्याराज्यस्वर्गाद्यर्थप्रार्थनारूपै रोगदारिद्र्यक्षुद्रोपद्रवाद्यनर्थपरिहारेच्छारूपैश्च हेतुभूतैः, किं कुतो हेतो' ? हे आत्मन् आयस्यसि आयासमनुभवसि ? तत्तदुपायमूढेत्यात्मनो विशेषण, ते च ते उपायनसेवादानपूजादय उपायास्तेषु मूढ केनोपायेनायमय च परः प्रसादनीय इत्यत्र भ्रान्तः ( न्त ) भगवन्निति भाविप्रसादयुक्ततया आत्मन. पूज्यत्वमाह । हंतेति प्रत्यक्षीकृतस्यात्मन' सबोधन । आत्मानमपि स्वमपि प्रसादय रजस्तमोमलापनयनेन प्रसादवन्त कुरु । मनागिति क्षणमात्र, आस्ता चिरकाल । येनात्मप्रसादनेन, आसतामन्याः सपदः अर्थप्राप्त्यनर्थपरिहाररूपा यावत् परमेऽपि तेजसि परम-

ज्योतीरूपेऽपि प्रकाशे साम्राज्यं परमाधिपत्यं प्राज्यं प्रचुरं तव समुज्जृम्भते आविर्भवति । अयमर्थः—निखिलजगत्प्रसादनप्रयासमन्तरेणापि आत्मप्रसादमात्रेण ईप्सितकरा परमैश्वर्यसंपदिति वृथाऽन्यः सकलः प्रयासः । तस्यां च साम्राज्यसंपदि सुलभ उन्मनीभाव इति ॥ ५४ ॥

इदानीं श्रुताम्भोधेरधिगमादिति यन्मुखे प्रतिज्ञातं तन्निर्वहणेऽनूद्योपसंहरति—

या शास्त्रात्सुगुरोर्मुखादनुभवाच्चाज्ञायि किञ्चित् क्वचित्,
योगस्योपनिषद्विवेकिपरिषच्चेतश्चमत्कारिणी ।
श्रीचौलुक्यकुमारपालनृपतेरत्यर्थमभ्यर्थना—
दाचार्येण निवेशिता पथि गिरां श्रीहेमचन्द्रेण सा ॥ ५५ ॥

या योगस्योपनिषद्रहस्यमज्ञायि ज्ञाता । कुतः ? शास्त्रात् द्वादशाङ्गादागमात्, सुगुरोः सदागमव्याख्यातुः मुखात् साक्षादुपदेशात्, अनुभवाच्च स्वसंवेदनरूपात् । किञ्चिदिति स्वप्रज्ञानुसारेण । क्वचिदिति एकत्र सर्वस्य ज्ञातुमशक्यत्वात् प्रदेशभेदे क्वचन । उपनिषदमेव विशिनष्टि—विवेकिनां योगरुचीनां या परिषत् सभा, तस्या यच्चेतः, तच्चमत्करोतीत्येवंशीला । सा योगस्योपनिषत्, श्रीचौलुक्यो यः कुमारपालनृपतिः तस्यात्यर्थमभ्यर्थनया, स हि योगोपासनप्रियो दृष्टयोगशास्त्रान्तरश्च इति स पूर्वेभ्यो योगशास्त्रेभ्यो विलक्षणं योगशास्त्रं

शुश्रूषमाणोऽत्यर्थमभ्यर्थितवान्, ततस्तदभ्यर्थनतो वचनस्यागोचरामपि उपनिषद गिरा पथि निवेशितवान् आचार्यश्रीहेमचन्द्रः । इति शुभम् ।

श्री चौलुक्यक्षितिपतिकृतप्रार्थनाप्रेरितोऽहं, तत्त्वज्ञानामृतजलनिधेर्योगशास्त्रस्य वृत्तिम् ।

स्वोपज्ञस्य व्यरचयमिमां तावदेषा च नन्द्या-द्यावज्जैनप्रवचनवती भूर्भुवःस्वस्त्रयीयम् ॥ १ ॥

सम्प्रापि योगशास्त्रात्तद्विवृतेश्चापि यन्मया सुकृतम् । तेन जिनबोधिलाभप्रणयी भव्यो जनो भवतात् ॥ २ ॥

इति श्रीपरमार्हतश्रीकुमारपालभूपालशुश्रूषिते आचार्यश्रीहेमचन्द्रविरचितेऽध्यात्मोपनिषन्नाम्नि सञ्जातपट्टबन्धे श्रीयोगशास्त्रे स्वोपज्ञ द्वादशप्रकाशविवरणम् ॥ १२ ॥

। इति योगशास्त्रे द्वितीयो विभाग

। इति संपूर्णं योगशास्त्र सविवरणम्

